रूपितजीवस्य ये चिदंशत्वातिरिक्ता धर्मा उत्क्रान्त्यादयस्ते सर्वैतिदिश्यन्ते । ततो **द्वितीये** ननु प्राणेषु नित्यत्वाश्रवणादुत्क्रान्त्यादिश्रुतिर्गौणी भविष्यतीत्याशंक्य, एकैव श्रुतिर्जीवे मुख्या, प्राणादौ गौणीति वक्तुं न शक्यत इत्युक्तम् । ततस्तृतीये सृष्टेः ,पूर्वमपि प्राणादीनां स्थितिः श्रूयते । 'असद्वा इदमग्र आसी'दित्यारभ्य, 'प्राणा वा ऋषय' इत्यन्तेन तन्निगमनात् । ततश्चतुर्थे मनःपूर्वो वागुत्तर' इतिश्रुतेर्मनसो वाक्पूर्वरूपत्वात् । वाचश्च वेदरूपाया 'वाचा विरूपनित्यये'ति श्रुत्या नित्यत्वश्रावणात्तत्पूर्वरूपस्य मनसः कथमनित्यत्वं भवेत् । ततः पञ्चमे 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'तिश्रुतौ सप्तानां गतिभिर्जीवगतिर्विशेष्यते । अतो जीवसमानयोगक्षेमत्वात्तेपामपि जीवतुल्यत्वमित्युक्तम् ॥१॥

ततो **द्वितीये एकसूत्रे हस्तादय इत्यधिकरणे** उत्क्रान्तिश्रुतौ प्राणानां जीवेन सहोत्क्रमणकथनात् तेषां नित्यत्वमंशत्वं चांगीकृतम् । अतः परं ते कतीति विचार्यते । श्रुतौ क्वचित् सप्तोक्ताः, क्वचिदष्टौ, क्वचिन्नव, क्वचिद्दश, क्वचिदेकादशेति नानापक्षाः श्रूयन्ते । तद्विप्रतिषेधपरिहारार्थं विचारः । तत्र 'हस्तौ चादातव्यं चे'ति श्रुतौ हस्तोपस्थपायुपादानां सप्तभ्योधिकानां कथनात् चक्षुस्त्वग्घ्राणरसनश्रवणमनोवाचां सप्तानां पूर्वं कथनाच्चैकादश, न तु सप्तैवेत्युक्तम् । तेषु पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, उभयनायकमन्तःकरणं मन इत्येवं तेषां विभागो ज्ञेयः ॥ २ ॥

ततस्तृतीये **एकसूत्रे अणवश्चेत्यधिकरणे** तेषां जीववत् परमाणुपरिमाणं विचारितम् ।

ततश्चतुर्थे **द्विसूत्रे श्रेष्ठश्चेत्यधिकरणे** मुख्यप्राणस्याणुत्वं विचारितम् । 'आनीदवातं स्वधया तदेक'मितिश्रुत्या अननात्मकत्वेन सृष्टेः पूर्वं सत्ता च प्रदर्शिता । ततो द्वितीयसूत्रे वायुर्वा, इन्द्रियक्रिया वा, मुख्यः प्राणोस्त्वित्याशंक्य, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च, खं वायुर्ज्योतिरापः पृथ्वी विश्वस्य धारिणी'तिश्रुतौ वायुभिन्नत्वेन पृथगुपदेशात् । वृत्तिवृत्तिमतोरभेदेन क्रियाया इन्द्रियान्तःपातित्वे सिद्धे तेभ्योपि प्राणस्य पृथक्त्वात् भिन्न एवासन्य इति साधितम् ॥ ४ ॥

ततः पञ्चमे **चतुःसूत्रे चक्षुरादिवत्त्वित्यधिकरणे** प्राणः स्वतन्त्रः, परतन्त्रो वेति शंकायाम्, मुख्यः प्राणोपि आसन्यत्वाद्भगवदधीनः । व्यवहारे तु जीवाधीनः । श्वेताश्वतरे इन्द्रियादिजयवत् तज्जयस्याप्यनुशासनादित्युक्तम् । ततो द्वितीये प्राणश्चेज्जीवाधीनः, तदा करणवत् किञ्चिद्व्यापारं कुर्वन् जीवोपकरणरूपो भवेत् । तत्तु न करोतीति कथं तस्य जीवोपकरणत्वमित्याशंक्य, मुख्यप्राणस्य यः व्यापाराभावः सः करणत्वाभावात् । उपकरणत्वं तु देहस्थितिरूपकार्यस्य करणात् । अतो व्यापाराभावेपि तस्य जीवोपकरणत्वं न विरुद्धमित्युक्तम् । ततस्तृतीये ननु व्यापाराभावे तस्य जीवोपकारित्वमसमञ्जसमित्याशंक्य, श्रुतौ 'अहमेवैतत् पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामी'ति व्यपदिश्यते । अतो यथा मनसो द्वारभेदेन स्वरूपत एकादशवृत्तयस्तथा प्राणेपि पञ्चवृत्तयो व्यपदेशप्रामाण्यादंगीक्रियन्ते ।

ताभिरेव देहं स्थापयञ्जीवस्योपकरणं संभवतीत्युक्तम्। ततश्चतुर्थे तस्याप्यणुत्वं साधितम् ॥५

ततः **षष्ठे एकसूत्रे ज्योतिराद्यधिष्ठानं त्वित्यधिकरणे** वागादयः किं देवताधिष्ठानेन स्वस्वकार्ये प्रवर्तन्ते, स्वत एवेत्याशंक्य, आधिभौतिकाः आध्यात्मिकास्ते स्वस्वाधिदैविकाधीना इत्यग्न्यादिस्वस्वदेवताधिष्ठानेनैव प्रवर्तन्ते, न तु स्वत इति निर्णीतम् ॥ ६॥

ततः **सप्तमे द्विसूत्रे प्राणवतेत्यधिकरणे** अग्न्यादिदेवताः किं स्वत एव केवला वागादीनधितिष्ठन्ति, मुख्यप्राणसहिता वेत्याशङ्क्य, मुख्यप्राणसहिता एवाधितिष्ठन्ति। 'सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यत' इतिश्रुतेरित्युक्तम्। ततो द्वितीये प्राणस्य तत्संबन्धस्य च नित्यत्वमुक्तम्। तेन प्राणसहिता एव देवा वागादीनधितिष्ठन्ति। तेनैव जीवस्य भोगसिद्धिः, तेषां जीवोपकारकत्वं च सिद्धमित्युक्तम् ॥ ७ ॥

ततोऽष्टमे **त्रिसूत्रे इन्द्रियाणि तद्व्यपदेशादित्यधिकरणे** इन्द्रियाणां प्राणाधीनसर्वव्यापारत्वात् प्राणशब्दवाच्यत्वाच्च प्राणवृत्तिरूपाणीन्द्रियाणीत्याशंक्य, तत्त्वान्तराणीति सिद्धान्तितम्। 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च'ेति तत्त्वोत्पत्तिबोधकश्रुतौ प्राणाद्भिन्नतयेन्द्रियत्वेन व्यपदेशात्। नन्वेवं व्यपदेशमात्रेण भेदे सति प्राणापानादिव्यपदेशभेदादासन्योपि प्राणादिभ्यो भिन्नः स्यादिति नाशङ्कनीयम्। प्राणादिशब्दानां पाचकपाठकादिवदासन्ये यौगिकत्वान्न तद्भेदकत्वम्। इन्द्रियशब्दस्य तु न यौगिकत्वम्। अतो नैतद्दृष्टान्तेनाशंकनीयमित्युक्तम्। ततोऽग्रिमसूत्रद्वये हेत्वन्तरमित्युक्तम्। यत्रापि प्राणशब्दप्रयोगस्तत्रापि भेदेन श्रूयते। 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामती'ति 'प्राणमुत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति। वैलक्षण्यं च, प्राणस्य चेन्द्रियाणां च। 'सुप्तेषु वागादिषु प्राणो जागर्ति। स्वामिसेवकत्वञ्चानेक वैलक्षण्यम्' ॥ ८ ॥

ततो **नवमे एकसूत्रे संज्ञामूर्तिक्लृप्तिरित्यधिकरणे** भूतभौतिकसृष्टिः परमेश्वरादेवेति निर्णीय, नामरूपव्याकरणमपि परमेश्वरादेवेति निर्णीयते। तत्र नामरूपव्याकरण लोके जीवनानामेन दृष्टमिति हिरण्यगर्भादेव तद्व्याकरणमित्याशङ्क्य, नामरूपव्याकर्ता परमेश्वर एव। छान्दोग्ये 'हन्ताहमिमास्तिस्रो देवताः अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'तिश्रुतौ नामरूपव्याकर्तृत्वेन त्रिवृत्कुर्वतः परमेश्वरस्यैवोक्तत्वात्। नामव्याकरणं हि वाक्साध्यम्। रूपव्याकरण क्रियासाध्यम्। वाक्क्रिये च शरीरं विना जीवस्य न संभवतः। शरीर नामरूपव्याकरणोत्तर भावि। तस्मान्न जीवस्तत्कर्ता, किन्तु परमेश्वर एव तत्कर्तेत्युक्तम् ॥ ९ ॥

ततो **दशमे द्विसूत्रे मांसादि भौममित्यधिकरणे** 'एतस्माज्जायते प्राण' इतिश्रुतौ प्राणस्येन्द्रियाणां च भगवतः सकाशात्सृष्टिरुक्ता। छान्दोग्ये तु 'अन्नमशितं त्रेधा विधीयत' इतिश्रुतौ मनःप्राणवाचां भौतिकत्वं श्राव्यते। 'अन्नमयं हि सौम्य मनः, आपोमयः प्राणः, तेजोमयी वागि'त्यनेन, 'एतस्माज्जायत' इतिश्रुत्युक्ताया उत्पत्तेः परम्पर-

याप्युपपद्यमानत्वात् । 'अन्नमय'मित्यादिश्रुतेस्तु मांसादिसाहचर्येण विशेषबोधकत्वात् । मनआदीनां भौतिकत्वमेवेति **प्रथमसूत्रेणाशंक्य, द्वितीयसूत्रे** तेषां तत्त्वान्तरत्वमेवेति स्थापितम् । मनःप्रभृतीनामन्नमयत्वादिकं तु अन्नादिपोषितत्वेनाप्युपपद्यते । 'पञ्चदशाहानि माशी'रित्याद्युपपादकदर्शनात् । सर्ववाक्ये साक्षात्सृष्टेरुक्तत्वेन तत्र परम्परायाः प्रवेष्टुमशक्यत्वात् । तस्मात्तत्त्वरूपाणि तानि भगवत एवेति सिद्धान्तितम् । एवमस्मिन्नध्याये सर्वोपि विरोधः परिहृतः ॥ १० ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां द्वितीयाध्यायस्य चतुर्थः पादः ।**

**द्वितीयाध्यायः समाप्तः ।**

---

## तृतीयोध्यायः ।

तृतीयाध्यायस्याधिकरणार्थसंग्रहः । ततस्तृतीयेऽध्याये जघन्यमध्यमाधिकारिणां साधनसंपत्त्यापुपनिषदां विद्याजनकता, अन्यथा तु सत्संप्रदायेपि परोक्षज्ञानजनकतैवेत्यतः **प्रथमे** पादेऽधिकारिणो जन्मनिर्धारः क्रियते । तत्र पञ्चाग्निविद्यया निष्पन्नदेहः स्वरूपतोऽधिकारीति तदर्थं तद्विद्यास्थाः पञ्चाप्याहुतयो विचार्यन्ते । तत्र ब्रह्मसंबन्धिविचारविशेषरूपत्वाच्छास्त्रसंगतिः । साधनविचारशेषत्वादध्यायसंगतिः । तत्राद्यावधिकरणानि ।

तत्र **प्रथमेऽधिकरणे** जीवेन्द्रियाणां होमाभावेनाशुद्धिमाशङ्क्य, तेषामपि शुद्ध्यर्थं जीवस्यैतो लोकान्तरगमनावसरे संस्कृतभूतसूक्ष्मेन्द्रियसाहित्यं सप्तभिः सूत्रैः साध्यते । तत्र **प्रथमसूत्रे** संस्कृतभूतसूक्ष्मैः संपरिष्वक्त एव परलोकं गच्छतीत्युच्यते । ततो **द्वितीये सूत्रे** श्रुत्युक्तप्रश्ननिरूपणाभ्यामद्भिः संपरिष्वक्त एव गच्छतीति ज्ञायते, नतु भूतान्तरसंपरिष्वक्त इत्याशंक्य, अपां भूतत्रयात्मकत्वं साध्यते । ततस्तृ**तीयसूत्रे**, प्राणस्यापि गमनं बोध्यते । ततश्चतुर्थे प्राणगमनस्याग्न्यादिभावश्रुत्या बाधमाशंक्य, तन्निवारणेन प्राणानां परलोकगतिः साध्यते । ततः **पञ्चमे** श्रुतौ श्रद्धापदान्नापां होम इत्याशङ्क्य, श्रद्धापदेनाप एवोच्यन्ते इति निर्धार्यते । ततः **षष्ठे** सूत्रे, सर्वे जीवास्तया गच्छन्ति, उत ज्ञानोपयोगिन एवेत्याशंक्य, ज्ञानोपयोगिनो यज्ञादिकृतो गच्छन्तीति निर्णीयते । ततः **सप्तमे** तेषां होमेन सोमभावेऽनिष्टमाशंक्य, तन्निवार्यत इति । एवं प्रथमाहुतिः सफला विचारिता भवति ॥ १ ॥

ततो **द्वितीये चतुःसूत्रे कृतात्ययाधिकरणे**ऽवसरसंगत्या सोमभावोत्तरं वृष्टिभावं प्राप्नोतीति द्वितीयाहुतिर्विचार्यते । तत्र **प्रथमसूत्रे** सानुशयो वृष्टिभावं प्राप्नोतीति बोधनार्थमनुशयो विचार्यते । अनुशयो द्विविधः । 'यद्यत्र नः स्वर्गसुखावशेषित'मिति श्रीभागवतवाक्याद्भोगसाधकसामग्रीशेषरूपं यत् फलं तदात्मकः सुखलेशरूप एकः, कर्मशेषरूपो द्वितीय इति निर्णीतम् । ततो **द्वितीयसूत्रे** आचरणात्तत्तद्योनिप्राप्तिमाशंक्य,

चरणस्य पूर्वजन्मीनकर्मोपलक्षकत्वम्, नत्वग्रिमजन्मनि समीचीनकरणाहेतुत्वम्। तस्मादग्रिमार्थं कर्मशेषरूपोऽनुशयोऽवश्यमपेक्षणीय इत्युच्यते । ततस्तृतीयसूत्रे चरणस्य पूर्वजन्मीनकर्मोपलक्षकत्वे प्रयोजनाभावेन चरणश्रुतेरानर्थक्यप्राप्तौ तस्याः जन्मविधायकत्वमङ्गीकर्तव्यम् । तथा सति कर्मशेषरूपानुशयवैयर्थ्यमित्याशंक्य, निष्कामसकामभेदेन द्विविधानां कर्मिणां मध्ये निष्कामस्य पूर्वोक्तफलशेषरूपोनुशयः । द्वितीयस्य तु सुकृतदुःकृतकर्मशेषरूप इति तस्य दुःशरीरप्राप्तिः, 'सुखानन्तरं दुःख'मितिन्यायेनोपपद्यते, तन्निवारणार्थं चरणश्रुत्या शरीरप्राप्तिरिति बोध्यत इति दुःशरीरनिषेधार्थं सा धूममार्गमुपक्रम्योक्ता । अतो धूममार्गस्य तदपेक्षत्वान्न सा कर्मशेषरूपानुशयप्रतिषेधिका । तस्मान्न सोमभावापन्नस्य वृष्टिभावबाधः, अन्यथा तादृशशरीरप्राप्तेराकस्मिकता स्यात्, अतोनुशय आवश्यक इति निर्णीयते । ततश्चतुर्थे द्विविधकर्मशेषरूप एवानुशय इति बादरिमतम्। तेन मोक्षपर्यन्तमनुशयानुवृत्तिरिति बोध्यते । एवं द्वितीयाहुतिः सफला विचारिता ॥ २ ॥

ततोऽनिष्टादिकारिणामिति पञ्चसूत्रे तृतीयाधिकरणे इष्टादिकारिव्यतिरिक्तानां पञ्चाहुतिधूममार्गयोः संबन्ध इति प्रथमसूत्रे आशंक्यते। तेन सर्वेषां सोमभावप्राप्त्यनन्तरं जन्मेत्याशंक्यते । ततो द्वितीयसूत्रे तन्निषिध्यते। यदि सर्वेषां सः स्यात्तदा यमगतिश्रुतिर्विरुध्येत। तस्मान्न सर्वेषां सोमभावः । ततः सूत्रद्वयेन स्मृत्यापि यमगतिः स्थाप्यते। ततः पञ्चमे सूत्रे चित्रगुप्तादीनामपि यमसेवकत्वं निर्णीयते । तेन यमगतेरपि सत्त्वान्न सर्वेषां सोमभावः, किन्तु मार्गद्वयस्थानामेवेत्युपोद्घातप्रसङ्गाभ्यां निर्णीयते ॥ ३ ॥

ततश्चतुर्थे चतुःसूत्रे विद्याकर्मणोरित्यधिकरणे । सर्वेषां चन्द्रलोकप्राप्तिः श्रुता । पञ्चाग्निविद्याप्रस्तावे यमगतिस्तु नोक्ता । अतो विद्यया कर्मणा सोममार्ग इति न यममार्ग इति आशंक्य, वेदान्ते गौणमुख्यफलभेदार्थं तत्कारणत्वेन विद्याकर्मणोरुक्तत्वान्न तृतीयमार्गबाधकत्वमिति प्रथमसूत्रे निर्णीयते। ततो द्वितीये सूत्रे 'जायस्व म्रियस्वे'तिश्रुत्युक्तस्य तृतीयमार्गत्वमाशंक्य,तस्मिन्मार्गे पुण्यपापभोगस्यातिस्वल्पत्वान्न तेन यममार्गबाध इत्युक्तम्। अयं च पञ्चाहुतिनियमो मर्यादामार्गे एव, न सर्वत्र चेति निर्णीतम् । ततः सूत्रद्वये स्मृतिलौकिकदर्शनाभ्यां यममार्गसत्ता साधिता। तेन 'जायस्वे'ति मार्गो विवेचकसापेक्षत्वात् यममार्गे एव प्रविशतीति साधितम् ॥ ४ ॥

ततः पञ्चमे त्रिसूत्रे तृतीयशब्दावरोध इत्यधिकरणे। वृष्टेरन्नभावस्तृतीयाहुतेः फलम्। तत्र बीजावापं विना केवलवृष्टेरन्नासंभवात्प्रत्यक्षविरोधमाशङ्क्य, तृतीयाहुतौ देवहोमात्कारणभूतमेव जलं वर्षतीत्युच्यते । तस्माद्यन्नं श्रुतावेवोक्तम्। 'ता आप अन्नमसृजन्ते'ति । तस्मात्प्रत्यक्षस्य लौकिकत्वात्तद्विरोधो न दोषायेत्युक्तम् । ततो द्वितीयसूत्रे, 'वायुर्भूत्वा धूमो भवती'तिश्रावणात्ते वाय्वादयो जन्या इति तदनन्तरभाविनी वृष्टिरपि जन्या, अपामिवेति कारणभूतं जलं न वक्तुं शक्यत इत्याशक्य, वाय्वाद्याकृतिमानेण स्वरूपान्य-

थाभावाभावाद्वायुभवनाद्युक्तिर्गौणी। अतस्तदनुरोधेन वृष्टौ जन्या आपो वक्तुमशक्याः। तस्मात्कारणभूता एव ता आप इति निर्बाधमित्युक्तम्। ततस्तृतीये सूत्रे, शीघ्रमेव वृष्टेः सकाशादन्नरूपो भवतीत्युक्तम्। तेन तृतीयाहुतिः सफला विचारिता॥ ५॥

ततः **षष्ठे द्विसूत्रे, अन्याधिष्ठित** इत्यधिकरणे, अन्नाद्रेतोभवनरूपा चतुर्थी आहुतिर्विचार्यते। तत्रान्नस्य कण्डनपाकादौ क्रियमाणे जीवस्यापगमात्कथं जीवस्य रेतोभाव इत्याशंक्य, उप्ते बीजे पापिजीवान्तराधिष्ठितेऽन्नरूपेण जायमाने पश्चाद्वृष्टौ देवहुतौ जीवोऽन्ने प्रविश्यातिथिवन्निरभिमानस्तत्र तिष्ठतीति न तस्य कण्डनादिक्लेशः, किन्तु पापिन एव सः। न च तस्यापगमः शंकनीयः। सिद्धान्नादेर्बहुकालपर्युषितत्वे कृमिभावदर्शनात्। एवं तस्यान्नस्य भक्षणेपि पापिन एवान्नभूतस्य जरणादिक्लेशः, नास्य निरभिमानस्येति तस्य रेतोभावो युक्त इत्युक्तम्। ततो **द्वितीये सूत्रे** तस्मिन्नन्ने पापिजीवसहभावादन्नस्याशुद्धौ कथं तेन योग्यदेहसंपत्तिरित्याशंक्य, यथा वैदिकेन प्रोक्षणादिसंस्कारेण लौकिकव्रीहीणां शुद्धिः, तथा वैदिकेन देवकृतहोमरूपसंस्कारेण तस्यान्नस्य शुद्धिरिति। तेन योग्यदेहनिष्पत्तिः निष्प्रत्यूहेत्युक्तम्॥ ६॥

ततः **सप्तमे एकसूत्रे रेतःसिगधिकरणे**, रेतसः पुरुषभावो विचारितः॥ ७॥

**ततोष्टमे एकसूत्रे योनेःशरीरमित्यधिकरणे**, गर्भस्य न पुरुषत्वम्, किन्तु बहिर्निर्गतस्यैव पुरुषत्वमिति निर्णीतम्। अत्र सर्वत्रावसर एव संगतिरिति बोध्यम्॥ ८॥

तेन जघन्याधिकारिणो देहनिष्पत्तिविचारः, मध्यमस्य च योगादिना देहसंपत्तौ पुनर्विचालनाभावाय वैराग्यविचारः पादार्थत्वेन सिध्यति। मुख्याधिकारिणां तु वरणादेव तत्सिद्धिरिति नात्र तद्विचार इति बोध्यम्॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां तृतीयाध्यायस्य प्रथमः पादः।**

---

अथ **द्वितीये पादे** जीवस्य स्वरूपतो मुक्तियोग्यता विचार्यते। प्रथमपादोक्ताया योग्यताया ज्ञानोक्तिरूपे साधने एव पर्यवसानात्। तदुत्तरं विषयनिश्चयश्च क्रियते। तेनाधिकारसिद्ध्यनन्तरं विषयस्य निश्चयो वेदान्तार्थरूपब्रह्मस्वरूपस्य शाब्दं परोक्षज्ञानं हृदि स्थिरीभवतीत्येतदर्थं पादारम्भः। तथा सति पादयोरेककार्यत्वं सङ्गतिः। आनन्तर्यनियामक उपजीव्योपजीवकभावश्चेति बोध्यम्। **अत्रैकादशाधिकरणानि**। तत्र प्रथमैस्त्रिभिः जीवस्य स्वप्नसुषुप्तिजाग्रदवस्था मुक्तियोग्यताज्ञापनार्थमुपोद्घातेन विचार्यन्ते। अन्तिमैरष्टभिः ब्रह्मस्वरूपम्।

तत्र **प्रथमे षट्सूत्रे सन्ध्याधिकरणे** द्वाभ्यां स्वप्नसृष्टेर्भगवतस्तत्कर्तृत्वं च यद्बृहदारण्यके काठके च श्रावितं तत्सृष्टिसंबन्धो जीवस्य भवतीति निरूपिता शुद्धिर्य्यथैत्या-

शंक्य, तृतीये तस्याः सृष्टेः मायामात्रत्वेन मिथ्यात्वं साध्यते । तेन जीवस्य तत्कृतगुणदोषसंबन्धाभावान्न पूर्वोक्तशुद्धिनिरूपणस्य वैयर्थ्यम् । ततश्चतुर्थे स्वप्नसृष्टेर्मिथ्यात्वे तत्करणस्य किं प्रयोजनमित्याकांक्षाया स्वप्नस्य कचित् शुभाशुभसूचकत्वात्फलतः सत्यत्वम्, अन्यत्र तु तादृशभगवल्लीलाप्रदर्शनमात्रं प्रयोजनमित्युच्यते, तच्च वैराग्याय फलिष्यति । ततः पञ्चमे जीवस्यापि भगवदंशत्वात्कथं स्वप्ने दुःखसंबन्धः, दुःखाद्यभिमानो वेत्याकांक्षायां भगवदभिध्यानात् जीवस्यैश्वर्यादिषड्धर्मतिरोभावेन जीवस्य बन्धो भगवद्धर्मविपरीतधर्मवत्त्वं च भवति । तेन दुःखित्वादिकं तदभिमानश्च । ततो भगवदिच्छया कथञ्चिन्मोक्षश्चेति स्वमतमुक्तम् । ततः षष्ठे देहयोगाद्वा ऐश्वर्यादितिरोभावो बन्धदुःखादिकं चेति मतान्तरमुक्तम् । अस्मिन्पक्षे देहवियोगे सत्येवैश्वर्याद्याविर्भावः, पूर्वस्मिन्पक्षे तु देहसद्भावेऽपि भगवदिच्छया ऐश्वर्याद्याविर्भावो बन्धाभावश्चेत्यैश्वर्याद्याविर्भावदशायां दुःखित्वादिसर्वदोषाभावाद्[1] मुक्तियोग्यता निष्प्रत्यूहेति सिद्धम् ॥ १ ॥

ततः द्वितीये **एकसूत्रे तदभावो नाडीष्वित्यधिकरणे** जीवस्य द्विविधा सुषुप्तिः । एका नाडीषु, द्वितीया सत्संपत्तौ । तत्र प्रथमायां दुःखाभावमात्रम्, द्वितीयायां तु सुखमपीति द्विविधायामपि सुषुप्तौ न प्रपञ्चसृष्टिरिति प्रसंगाद्विचारितम् ॥ २ ॥

ततस्तृतीये **त्रिसूत्रे अतःप्रबोध इत्यधिकरणे** प्रथमसूत्रे जाग्रदवस्थापि भगवत एव भवतीति, यत्र स्वपिति तत्रैव जागर्ति, पश्चाद्धृदयं समागच्छति चेति निरूपितम् । ततो द्वितीये सूत्रे स एव जीवः समायाति, अन्यो वेत्याशंक्य, कर्मानुस्मृत्यादिभिर्हेतुभिः स एव समायातीति निर्णीतम् । ततस्तृतीये सूत्रे मूर्च्छाविशेषेऽतिमुग्धे कर्मानुस्मृत्यादयो न संभवन्ति । तत्र स एवान्यो वेत्याशंक्य, तत्र स वाऽन्यो वेति संदेह एव पर्यवस्यतीति सिद्धान्तितम् । अयं च विचारः प्रसंगानुप्रसंगायात एव ।

एवमधिकरणत्रयेण स्वप्नसुषुप्तिजाग्रद्रूपावस्थात्रयं भगवत्कृतमेव । तत्र जाग्रति जीवस्य माय्यासंसर्गवारणार्थमुपनिषदर्थनिश्चय आवश्यक इति सूचितम् । एताश्च गुणतो बुद्ध्यवस्थाः । तत्र स्वप्नो राजसः, सुषुप्तिः तामसी, जाग्रदवस्था सात्त्विकी । जीवस्तु देहयोगेन स्वस्मिन्नभिमन्यते, तस्मादेक एव जीवः स्वप्नादिदोषसंबन्धरहितस्तादृशजन्मयुक्तो भगवज्ज्ञानरहितो ज्ञानाधिकारीति त्रिभिरधिकरणैः सिद्धमिति ज्ञेयम् ॥ ३ ॥

ततश्चतुर्थे **त्रिसूत्रे उभयलिङ्गाधिकरणे** ब्रह्मणः साकारत्वं निराकारत्वं चेत्युभयं सर्वत्र श्रूयत इति स्थानोपाधिकं तत्तदवच्छेदभेदेन च न वक्तुं शक्यत इत्युच्यते । न चोक्तप्रकारेण ब्रह्मभेदेऽङ्गीकृते न दोष इति वक्तुं शक्यम्, सर्वत्र ब्रह्मण एकस्यैव कथनात्, भेददर्शने दोषकथनाच्च । एवमुभयलिङ्गविरोधे सिद्धे उपनिषदां पूर्वाध्यायद्वयोक्ता ब्रह्मबोधकता वक्तुं न शक्यत इत्याक्षेपसंगत्योक्तम् ॥ ४ ॥

[1] दोषसंबन्धाभावादमृतत्वादिति पाठः ।

ततः पञ्चमे पञ्चसूत्रे अरूपवदेव हीत्यधिकरणे एकदेशिमतेन समाधानमुच्यते । सत्यमुभयलिंगविरोधस्तथापि 'सर्वकामः सर्वगन्धः' इत्यादयो जडजीवधर्मा ब्रह्मण्युपदिश्यमाना उपसनार्था भवन्ति । न च जडस्य भगवत्कार्यत्वाज्जीवस्य भगवदंशत्वात्तद्धर्मा अपि भगवद्धर्मा एवेति कथमुपासनार्थत्वमिति शंक्यम् । 'बहु स्या'मितीच्छया भगवत एव कार्यरूपतयांशरूपतया चैकदेशेन भवनात्कारणरूपस्य, ततो भिन्नतया तस्मिन् रूपे जडजीवधर्मनिषेध एव युक्तः । तथा चाद्वैतपक्षे, जडजीवधर्माणामपि ब्रह्मात्मकत्वाद् ब्रह्मत्वमेव, न तु ब्रह्मधर्मत्वम्, अतः सर्वकर्मत्वादीनां ब्रह्मण्युपचार एष, अरूपवतः सर्वप्रपञ्चविलक्षणस्यैवास्थूलादिवाक्यैः प्रधानत्वेन निरूपणात् । ततो द्वितीयसूत्रे एवं ब्रह्मणः सर्वव्यवहारातीतत्वे शास्त्रवैफल्यम्, 'मनसैवैतदाप्तव्य'मित्यादिश्रुतिविरोधश्चेत्याशंक्य, यथा सौरः प्रकाशो व्यवहार्योऽव्यवहार्यश्च स्वतो न कर्तुं शक्यते, आगते तु सूर्ये मेघाद्यभावेन सान्निध्यात् व्यवहर्तुं शक्यते, तथा लौकिकवाङ्मनोभिर्ब्रह्म स्वतो न व्यवहर्तुं शक्यते, ईश्वरसंनिधाने तु शक्यते, अतोऽसन्निधाने सर्वव्यवहारातीतत्वम्, सन्निधाने तु धर्मवत्त्वेन व्यवहार्यत्वमिति न शास्त्रवैफल्यम् । नापि श्रुतिविरोधः । अन्यथा 'तं त्वौपनिषदं पुरुषं पृच्छामि' 'यतो वाचो निवर्तन्ते' इत्यादिष्वन्यतरवैयर्थ्यं स्यात् । अतः सन्निधानासन्निधानाभ्यां सधर्मकत्वनिर्धर्मकत्वबोधनव्यवस्था मन्तव्येत्युक्तम् । ततस्तृतीयसूत्रे 'आसीनो दूरं व्रजति,' 'अपाणिपादो जवनो ग्रहीते'त्यादौ परस्परविरुद्धा अलौकिकधर्माः अकारणककार्यवचनान्नित्याः श्राव्यन्त इत्यव्यवहार्येपि तादृशधर्मसिद्ध्या शास्त्रवैफल्यनिरास इति किमर्थं सन्निधानासन्निधानाभ्यां व्यवस्थांगीक्रियते, अलौकिकानीन्द्रियाण्येव कुतो नांगीक्रियन्त इत्याशंक्य, बृहदारण्यके 'स यथा सैन्धवघन' इत्यादिना कृत्स्नस्य ब्रह्मणः प्रज्ञानघनत्वश्रावणान्नेन्द्रियाणि कल्पयितुं शक्यानि । नच क्रियाभावोपि । तत्रैव वेदानां निःश्वसितत्वस्य भूतसमुत्थानादेश्च श्रावणेन, तत्रैव निःश्वासोत्थानक्रिययोरुक्तत्वात् । अतो ब्रह्मैव सर्वाकारस्वरूपं, कृत्स्नत्वश्रावणात् । तस्मादिन्द्रियकल्पनया विरोधपरिहारो न युक्त इत्युक्तम् । ततश्चतुर्थे सूत्रे नन्वभिन्ननिमित्तोपादानतया ब्रह्म जगत्कारणत्वेन सिद्धम्, कारणधर्मा एव च कार्ये भवन्ति, कामादयस्तु श्राव्यन्ते निषिध्यन्ते च, वेदवादिभिस्त्वण्वप्यन्यथा न कल्पनीयम्, अतः कथं विरोधपरिहार इत्याशंक्य, मूर्तामूर्तब्राह्मणे ब्रह्मणो रूपद्वयमुक्त्वा, 'अथात आदेशो नेति नेती'तिवाक्यद्वयं कथनेन कार्यकारणयोः समानप्रकारनिषेधः, कारणस्य ब्रह्मण एव त्वनिषेधश्च क्रियते । एवं रूपं निरूप्य 'सत्यस्य सत्य'मिति नाम च श्राव्यते, तेन प्रपञ्चातिरिक्तस्य ब्रह्मणो विद्यमानत्वात् तस्मिन् जडजीवधर्माणामौपचारिकत्वमेव युक्तम् । गीतास्मृतावपि 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जित'मिति 'अनादिमत्परं ब्रह्म न सत् तन्नासदुच्यते' इति चोच्यते । तेन श्रुतिस्मृतिभ्यां जडजीवधर्मरहितं ब्रह्मेति सिध्यतीत्युक्तम् । ततः पञ्चमे प्रपञ्चधर्मा ब्रह्मण्यौपचारिका इत्यत्र

निदर्शनान्तरमप्युच्यते, 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्, उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोयमात्मे'तिस्मृतौ उपाधिना रूपभेदकथनात्, 'सम सुषिणे'त्यादावपि निरुपमस्य भगवतो यत्र सुष्यादिकमुपमानं तदप्युपाधिसंबन्धादेव जलसूर्यन्यायेन संभवति । तस्मात् साकारेपि ब्रह्मणि ते धर्मा न सन्तीत्यौपचारिका मन्तव्याः, उपासनार्थमिति नोभयलिंगविरोध इत्येकदेशिमतेन समाधानम् । एतस्य मतस्य किञ्चिदंशेनोपादेयत्वाय प्रसंगादुक्तम् ॥ ५ ॥

ततः षष्ठे चतुःसूत्रे अम्बुवदग्रहणादित्यधिकरणे एकदेशिमतं दूषयित्वा स्वमतेन विरोधः समाधीयते । यदुक्तं समवाय्यतिरिक्तस्य ब्रह्मणः समवेतजडजीवसंबन्धात् सर्वकामत्वादयः प्रतिबिम्बे बिम्बधर्मवत् प्रतीयन्ते, तस्मादौपचारिका इति । तदयुक्तम् । तथाहि । समवाय्यतिरिक्तस्य ब्रह्मणो जडजीवेषु प्रतिबिम्बो न वक्तुं शक्यः, तेषामस्वच्छत्वेन प्रतिबिम्बाग्राहकत्वात् । ब्रह्मणो व्यापकत्वेन तत्र विद्यमानत्वाच्च । यदि ह्यस्वच्छे व्यापकस्य प्रतिबिम्बः स्यात्, दारुण्याकाशस्य स्यात्, स तु न दृश्यत इति । तस्मादुक्तरीत्यौपचारिकत्वमंगीकृत्य समाधानमसंगतमिति प्रथमसूत्रे उक्तम् । ततो द्वितीयसूत्रे यथा व्यापकस्याप्याकाशस्य करकादिप्रवेशे वृद्धिह्रासभाक्त्वं, महानाकाशः स्वल्प आकाश इत्याद्यभ्रमप्रतीतेः । नच महत्त्वाल्पत्वादीनामौपाधिकत्वम् । करकादीनां व्यञ्जकत्वेन जनकत्वानङ्गीकारात् । तथा च यथाकाशे सदोदितव्यंग्यभेदेन व्यापकत्वाल्पत्वयोः सामञ्जस्यम्, तथा ब्रह्मणि निर्धर्मकत्वसधर्मकत्वयोरपि सामञ्जस्यात् ब्रह्मगता एव सर्वकामत्वादयो जडजीवाभ्यामभिव्यज्यन्ते । तस्मात्ते ब्रह्मगता एवेति आकाशधर्मवदुभयलिङ्गत्वविरोधपरिहारः । ततस्तृतीये सूत्रे दर्शनादपि विरोधपरिहारः क्रियते । न हि दृष्टेऽनुपपन्नं नाम, व्याघातात्, अतो विरुद्धधर्माश्रयमेव ब्रह्मेत्यवगन्तव्यम् । दर्शनं च मृत्स्नाभक्षणोलूखलबन्धनादिषु स्पष्टमिति परमार्थतः स्वरूपविचारेण ब्रह्मस्वभावादेव विरोधपरिहारः । ततश्चतुर्थे युक्त्यापि विरोधः परिह्रियते । प्रकृते ब्रह्मणि लौकिका जडजीवधर्माः निषिध्यन्ते । अस्थूलादिवाक्येषु स्थूलादिपर्युदासस्यैव दर्शनात् । तथा च पर्युदासः सदृग्ग्राहीति स्थूलसदृशं ब्रह्मेत्येवं सर्वत्र ब्रह्मस्वरूपं ग्राहयति । तथा सति सदोदितमेव तत् । न च व्यंग्यमेव तदिति वाच्यम् । यतो यत्रैव धर्मान् निषेधति, तत्रैवालौकिकान् वक्ति, यथाऽस्थूलादिवाक्ये 'एतस्यैवाक्षरस्य प्रशासने गार्गी'त्यादिनालौकिकं प्रशासितृत्वादिकं वदति, तथा सति तत्सहचरितत्वात् स्थूलत्वादयोप्यलौकिका एव सदोदिताः सेत्स्यन्तीति लौकिकानां निषेधः, अलौकिकानां सत्ता, इति युक्त्या विरोधपरिहार इति मतेन शब्दबलविचारेण द्वेधा समाधानम् ॥ ६ ॥

ततः सप्तमे द्विसूत्रे तदव्यक्तमाह हीत्यधिकरणेऽर्थबलविचारेण विरोधः परिह्रियते, अन्यथा अर्थबलेन विचारकाणामृषीणामाक्षेप उत्तिष्ठेदिति तन्निवारणायायमारंभः ।

तत्र सर्वाणि विरुद्धवाक्यान्युदाहृत्य चिन्त्यन्ते, 'न चक्षुषा गृह्यते,' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत,' 'अपाणिपादः,' 'विश्वतश्चक्षु'रित्यादीनि विरुद्धवाक्यानि श्रौतत्वात् प्रमाणानि । वस्तुविचारे तु एकं वस्तु द्विरूपं न संभवति । अतः प्रमाणान्तरानुरोधेन एकस्य स्वार्थे प्रामाण्यमन्यस्योपचरितार्थत्वं वक्तव्यम् । तत्र कस्य स्वार्थत्वं, कस्योपचरितार्थत्वमित्याकांक्षायां 'अगृह्यो नहि गृह्यते,' इति श्रुतिः प्रत्यक्षानुरोधिनी । नहि ब्रह्म केनचित् चक्षुषा वा मनसा वा दृष्टमस्ति, सर्व(स्व)रूपत्वे तु सर्वैर्द्रष्टुं शक्येत, तस्मात् सर्वधर्मवत्त्वेन प्रतिपादकानि वचनान्युपचरितार्थानि, अनुभवविरोधात्, अव्यक्तत्वबोधकानि तु स्वार्थप्रतिपादकानि, अनुभवसंवादादिति **प्रथमसूत्रे** पूर्वपक्षमुक्त्वा,**अपि संराधन** इति **द्वितीयेन** समाधानमाह । 'श्रद्धाभक्तिज्ञानयोगादवैहि,' 'यमेवैष वृणुते' इत्यादिश्रुतिभिः, '*भक्त्या त्वनन्यया शक्य*' *इत्यादिस्मृतिभिश्च साकारब्रह्मणो* दर्शनमुच्यते । 'ततस्तु तं पश्यते निष्कलं ध्यायमान' इत्यनेन निष्कलस्यापि दर्शनमुच्यते । अतः प्रत्यक्षस्य रूपद्वयसाधारणत्वात् साकारमनन्तगुणपरिपूर्णं निर्गुणं विरुद्धधर्माश्रयं ब्रह्मेति साक्षात्क्रियमाणार्थबलेन साक्षात्काररूपार्थबलेन वा निर्णय इति साधितम् ॥ ७ ॥

ततोऽष्टमे त्रिसूत्रे **प्रकाशादिवचेत्यधिकरणे** पूर्वोक्त एवार्थः प्रकारान्तरेण स्थिरीक्रियते । तत्र यथा सूर्यचन्द्रमणिप्रकाशादिषूष्णशीतौ उभयरूपाः स्पर्शाः प्रतीयमाना अपि तेजसि तावन्तो नाङ्गीक्रियन्ते, किन्तूष्ण एव स्पर्शोंगीक्रियते, एवं हिमतप्तकुण्डादिषु प्रतीयमाना अपि जले तावन्तो नांगीक्रियन्ते, किन्तु शीतस्पर्श एवाङ्गीक्रियते, एवं सुवर्णे वर्णभेदा अपि, अतो न ते स्वाभाविकाः, तेजस्त्वादिस्वभावहानिप्रसङ्गात्, तथा ब्रह्मणोऽपि निर्विशेषत्वमेवाङ्गीकर्तव्यं, सर्वत्र निर्विशेषं ब्रह्मेत्येव प्रसिद्धेः । अत एव 'अगृह्यो नहि गृह्यते' इत्यादिश्रुतयोऽपि सङ्गच्छन्ते। न च पूर्वोक्तश्रुतिप्रत्यक्षादेः का गतिरिति शंकनीयम्। तपःप्रणिधानादिकर्मणि यथा तेषामुपासकानां कामस्तथा प्रकटीभवतीति तत्कामहेतुकं तादृशप्रत्यक्षम् । अतएव क्वचित्प्रत्यक्षं क्वचिदन्यथाप्रत्यक्षं च। यद्येकवारमेकरूप एव प्रकटः स्यात्तादृशरूपमङ्गीक्रियेतापि, किन्तु वारंवारं किञ्चिद्वैलक्षण्येन प्रकटीभवति । अतः प्रकाशोऽपि कृत्रिम एव, दीपप्रकाशवदित्येका शंका । तस्मान्न भक्तप्रत्यक्षेण निर्णय इति **प्रथमसूत्रे** उक्तम् । ततो **द्वितीयसूत्रे** एकस्य वस्तुनः निमित्तं विना प्रतिक्षणमन्यान्यादृशत्वं न वक्तुं शक्यते, अतोनन्तरूपेणाविर्भावे भक्तकाम एव निमित्तम् । तथा सति तद्विग्रह एव, न तु ब्रह्मस्वरूपम् । अतएव 'यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये'ति तृतीयस्कन्धे ब्रह्मणाप्युक्तम् । अतस्तच्छरीरमेव, न तु ब्रह्मस्वरूपमिति द्वितीया शंका । तस्मान्न श्रुत्या निर्णयः, नापि भक्तप्रत्यक्षेणेति सूत्रद्वयेनाशंक्य, **तृतीयसूत्रेण** सिद्धान्तमाह । नैवं केवलयुक्त्या लौकिकदृष्टान्तेन निर्णयः कर्तुं शक्यः,

१ विरुद्धधर्माश्रयत्वरूपप्रत्यक्षप्रामाण्यं स्वीक्रियते । २ शीतानुभवस्या इति पाठः ।

शास्त्रवैयर्थ्यप्रसंगात् । अत्र हि वेदादेव ब्रह्मस्वरूपमवगम्यते, तत्कथं स्वरूपशक्त्यैकतरनिर्णयः, वेदे निर्गुणत्वेनानन्तगुणपूर्णत्वेन च व्यपदेशात् । तर्ह्येकस्यानेकधाभानं कथमिति तु न शंक्यम् । यथा एक एव सर्प ऋजुरनेकाकारः कुण्डलश्च भवति, तद्वदुभयरूपताया उपपत्तेः । न चैवं यथाश्रुताङ्गीकारे शास्त्रवैफल्यं शङ्क्यम्, नानास्वभावैः सूरिव्यामोहे तन्निवारणार्थत्वेन शास्त्रसाफल्यात् । तस्माच्छ्रुतिप्रत्यक्षाभ्यां यत्पूर्वं निर्णय उक्तः, स एव सिद्धान्त इत्युक्तम् ॥ ८ ॥

ततो नवमे त्रिसूत्रे **प्रकाशाश्रयवद्वेत्यधिकरणे** धर्मस्वरूपविचारेण ब्रह्म सगुणं निर्गुणमिति पक्षद्वयमपि स्थाप्यते । तत्र धर्मा यदि ब्रह्मस्वरूपाद्भिन्नास्तदा कार्याः, यद्यभिन्नास्तदा ब्रह्मैवेत्याशंक्य, प्रकाशाश्रयवत् भिन्नाभिन्ना इति सिद्धान्त उक्तः । यथा प्रकाशाश्रयाः सूर्यादयस्तेजःप्रकाशाद्भिन्नाः प्रकाशधर्मकत्वात्, अभिन्नाश्च तेजस्त्वात्, एवं 'परास्य शक्ति'रित्यादौ षष्ठीनिर्देशाद्भिन्नाः, सच्चिदानन्दरूपत्वेनाभिन्नाश्च । तथा च धर्माणां भिन्नत्वेन ब्रह्मणोनन्तगुणपूर्णत्वं, तेषामपि सच्चिदानन्दरूपत्वेन ब्रह्माभिन्नत्वाद्ब्रह्मणो निर्गुणत्वमित्युभयमप्युपपन्नमिति स्वमतम् । ततः पूर्वं ब्रह्म निर्गुणमेव, पश्चादिच्छारूपेण, ततो धर्मरूपेण, ततः प्रपञ्चरूपेणाविर्भवतीत्युत्पत्तिविचारेण धर्माणां पश्चाद्भिन्नत्वेपि कार्यत्वाद्ब्रह्मत्वं कटककुण्डलादीनां सुवर्णत्ववदित्येकदेशिमतमपि सूत्रद्वयेनांगीकृतम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अत्राप्युपपत्तेरिति । एतयोः प्रथममेव न्याय इति भाष्यप्रकाशादवगन्तव्यम् । एतेषां पञ्चानामप्यधिकरणानामेककार्यकारित्वं संगतिरवगन्तव्या । पञ्चभिरपि श्रुतेर्बोधकताप्रकारस्यैव निश्चायनात् ॥ ९ ॥

ततो दशमे सप्तसूत्रे **परमतः सेतून्मानेत्यधिकरणे**, 'य आत्मा स सेतुर्विधरण' इत्यादिभिः श्रुतिभिर्ब्रह्मणः सेतुत्वादिकमुक्तम्, ब्रह्मणस्तथात्वे परत्वं न संगच्छते, सेत्वादीनां साधनादिरूपत्वात् । अतो देशकालवस्तुस्वरूपकृतचतुर्विधपरिच्छेदरहितं ब्रह्मणोऽन्यदेव किञ्चित्परं वक्तव्यमिति **प्रथमसूत्रे** आशंक्य, द्वितीये 'सेत्वादिसामान्यात्सेत्वादिव्यपदेशार्थः । संसारसागरतरणोपायत्वात्सेतुत्वम्, निर्लेपत्वायाकाशत्वमित्यादिकं गौण्या व्यपदिश्यते । यथा कुण्डपायिनामयने 'मासमग्निहोत्रं जुहोती'ति, तस्मात् गुणार्थमेव तदुक्तिः, न तु सर्वप्रकारकसाम्यार्थम् । अतः सेत्वादिदोषाभावात् ब्रह्मैव परम्, नान्यदिति समाहितम् । ततस्तृतीये यथा भूतादि पादवत्त्वेनोपासनीयम्, तथा गौण्यान्यसमानधर्मवत्त्वव्यपदेशस्य किंप्रयोजनमित्याकांक्षायां सेत्वादिधर्मवत्त्वेनोपासनीयमित्युपासनार्थत्वं प्रयोजनमुक्तम् । ततश्चतुर्थे स एवायमित्यतिदेशेप्युपासनासंपत्तेः किमर्थो धर्मातिदेश इत्याशंक्य, यथा चन्द्रादित्यामितेजसां तेजस्त्वेनैक्येपि स्थानविशेषान्न समानप्रकाशकत्वम्, तथा स एवायमित्यतिदेशेऽपि न समानधर्मवत्त्वमिति ज्ञानसंभवात्, तन्निवृत्त्यर्थं धर्मातिदेश इति प्रयोजनमित्युक्तम् । तेन ब्रह्मैव सर्वत्रोत्कृष्ट-

मिति साधितम् । ततः **पञ्चमे** ब्रह्मणोऽन्यत् परमितिमतस्य दूषणार्थं, यदि हि सत्यज्ञानाद्युक्तधर्मविशिष्टब्रह्मणोऽन्यत्किञ्चित्परं स्यात्, तदा येनकेनचित्प्रमाणेन प्रमितं स्यात्, यतो नैवमतो नैवमितिप्रमाणाभावरूपा युक्तिरुक्ता । ततः **षष्ठे** यथा ब्रह्मणि सेतुत्वादिकं श्रुत्योक्तम्, तथा 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुत्या समाभ्यधिकनिषेधोप्युक्तः । यदि ब्रह्मणः सकाशादधिकं परमन्यत्स्यात्तदा तन्ननिषेधेत्, यत एवमतो नैवमिति युक्त्यन्तरमुक्तम् । तस्मात्सेत्वाद्युक्तिर्गौण्येवेति साधितम् । ततः **सप्तमे** ब्रह्मणोन्यस्य परत्वनिरासेन 'आकाशवत्सर्वगतश्च नित्य' इत्यादिश्रुतिभ्य एव ब्रह्मणः सर्वगतत्वम्, नत्वनुमानैकशरणम् । अनुमानं तु श्रुतिसंवादित्वात्प्रमाणमस्त्विति फलितमुक्तम् । तेन ब्रह्मण एव परत्वम्, नान्यस्य । यद्यपि समन्वयविचार एवैताः श्रुतीः विचार्य दोषाः परिहृताः, तथापि स्वरूपविरोधपरिहारप्रस्तावात्पुनरुच्यन्ते । सर्ववाक्यप्रतिपाद्यमेकमेव ब्रह्मेत्यपि अर्थबलविचारेण न सिद्धम्, अतो विशिष्टज्ञानोत्पादनार्थं पुनः अर्थबलेन विचारितम्; अतो न दोष इति ज्ञेयम् । अर्थबलं च समाभ्यधिकरहितं यत्स्वरूपं तद्बलम् । एवं सर्वोत्तमत्वनिरूपणेनोत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपं वक्ष्यमाणोपोद्घाततया निरूपितम् । एवमग्रेऽपि ॥ १० ॥

तत **एकादशे चतुःसूत्रे फलमत इत्यधिकरणे** जघन्यमध्यमानामर्थे ब्रह्मणः फलदत्वं सूत्रद्वयेनोच्यते । ततस्तृतीये श्रुत्युपपत्तिभ्यां जैमिनिमतेन धर्मस्य फलदातृत्वमाशंक्य, चतुर्थेन *भगवत एव* कर्मकारयितृत्वान्न धर्मस्य फलदाने स्वातन्त्र्यम्, किन्तु ब्रह्मण एव इत्येवं तन्मतं दूष्यते ॥ ११ ॥

एवमष्टभिरधिकरणैः श्रुतीनां बोधकताप्रकारविचारेण तत्तदधिकारिणं प्रति श्रुतीनां तादृशतादृशबोधजनकत्वमित्यस्मिन्पादे निर्णीतमिति बोध्यम् ।

## इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां तृतीयाध्यायस्य द्वितीयः पादः ।

---

अत्र पूर्वपादे श्रुतीनां बोधकताप्रकारनिरूपणेन यथा परोक्षज्ञानजनकत्वं तथा निरूपितम् । अतःपरं यथा साक्षात्कारो भवति, तथा तत्साधनमुपासनारूपं वक्तव्यम् । उपासनायां च क्रियमाणायां धारणासिद्धौ मानसी मूर्तिरभिव्यक्ता भवति । तत उपासनापरिपाके साक्षात्कार इति तदर्थमस्मिन्पादे गुणोपसंहारोन्तरङ्गविचारेण कर्तव्यतया विचार्यते । तत्र किमन्तरङ्गमित्याकांक्षायां *'योगास्त्रयो मया प्रोक्ता'* इति भगवदुक्तेषु त्रिषु साधनेषु ज्ञानभक्ती अन्तरङ्गे । तत्र निर्विण्णाधिकारकत्वात् ज्ञानस्यान्तरङ्गता । निर्वेदाभावेपि लौकिकात्यासक्तिरहिताधिकारकत्वाद्भक्तेरन्तरङ्गतेति भेदः । कर्म तु कामाधिकारकत्वाद्बहिरङ्गसाधनम् । अतः कर्मोपसंहारात्पूर्वं ज्ञानभक्त्युपयोगित्वात् पूर्वं गुणोपसंहारो विचार्यते ।

स कथं कर्तव्य इत्याकांक्षायां ज्ञानभक्त्योः सविषयत्वात् पूर्वं विषयो विचारणीयः। तत्र विषयः पूर्वसिद्धं ब्रह्म, तदेव च फलदाने समर्थमिति द्वितीयपादान्ते स्थितम्। तदेतत्स्मारयितुमुपसंहारोपोद्घातत्वेन ज्ञानभक्त्योर्विषयतया ब्रह्मणः ज्ञानभक्तिषु युक्ततयोपासनायाश्च सर्ववेदान्तप्रत्ययत्वं सूत्रद्वयेन विचारितम्। तेन ज्ञानाधिकारिभिस्तथैवोपासना कार्येति सेत्स्यति ॥ १ ॥

तत इदानीन्तनानां सर्वशाखाज्ञानाभावेन सर्ववेदान्तप्रत्ययत्वस्यावधारयितुमशक्यत्वात्तेषामुपकाराय भक्तिमार्गीयोपासनोपकाराय काम्योपासनोपकाराय च तत्तच्छाखानुरुद्धशिष्टाचारमनुरुध्य, तत्तद्भक्तिमनुरुध्य, तत्तत्काममनुरुध्य च स्वाध्यायादिसूत्रद्वयेऽनुपसंहारहेतुकथनेन तत्तद्गुणोपसंहाररूपः संकोचो विचारितः ॥ २ ॥

ततो गुणोपसंहार एवास्य पादस्यार्थ इति बोधयितुमुपसंहारसूत्रेण सर्वोपसंहारतत्संकोचयोः काम्योपासनोपयुक्तोपसंहारस्य च बीजमुक्तम्। ततोऽन्यथात्वादिसूत्रत्रयमध्ये प्रथमेन सर्वोपसंहारपक्षेऽब्रह्मत्वरूपं बाधकं निवारितम्। ततो द्वाभ्यां संकोचपक्षे तदेव बाधकान्तरेण भक्तिमार्गीयोपासकानामर्थे निवारितम्। ततश्च अनित्यत्वेन प्रतीयमानानां स्वरूपधर्माणामेकेन नित्यत्वं, तदग्रिमे तदुपपत्त्यर्थं भक्तनित्यत्वं, लीलापदार्थानां भगवदभेदश्चोपपादितः। एवं लीलापदार्थानां भगवदभेदे सति भगवत्तुल्यत्वं स्यादिति तन्निवृत्त्यर्थं पूर्णानन्दत्वादीनां भगवदसाधारणधर्माणां तेष्वभाव आनन्दादिसूत्रेण प्रतिपादितः। तेन भक्तेषु तदनुपसंहारः सिध्यति। ततः प्रियशिरस्त्वसूत्रे अधिकारिभेदेन स्वरूपोपासकस्य प्रियत्वादीनां शिरस्त्वादिरूपेणानुपसंहारस्तदुपसंहारश्च प्रतिपादितः। तत एकेनोपसंहारपक्षे बीजमुक्तम्। तत आध्यानादिसूत्रद्वये उपसंहारसंकोचे बीजमुक्तम्। एवमस्मिन्नधिकरणे पादार्थरूप उपसंहारप्रकारः सपरिकरो विचारितः। भगवतः कैवल्यरूपं मुख्यत्वरूपमैक्यं च समर्थितम्। ततोग्रे एतस्यैव प्रपञ्चः ॥ १ ॥

ततोग्रे चतुर्भिरधिकरणैरुपासनानियामकसंबन्धिभेदे रूपात्मकः संबन्धो विचार्यते। तत्रादौ द्वितीये द्विसूत्रे आत्मगृहीत्यधिकरणे तद्गुणोपसंहारनियमनाय तत्तद्विभूतिद्वारा ब्रह्मण एव फलदातृत्वसमर्थनाय भक्तिज्ञानमार्गोपकारकशान्त्युत्पादनाय विभूतीनां ब्रह्मात्मकत्वभावनाय च अन्नमयादिषु विभूतिष्वानन्दमयस्यैव शरीराभिमानित्वं विचारितम्।

ततस्तृतीये षट्सूत्रे कार्याख्यानादित्यधिकरणे प्रथमसूत्रवर्णकद्वयमध्ये प्रथमवर्णकेन विभूत्युपासनेषु आनन्दमयस्याध्यात्मिकरूपेणैव फलदातृत्वरूपविशेषसमर्थनाय पूर्वोक्तविभूतीनामन्नमयादीनां चतुर्णां पुरुषाणामाधिभौतिकत्वनिराकरणेनाध्यात्मिकत्वं समर्थितम्। द्वितीयेन वर्णकेन सर्वगुणोपसंहारायानाविर्भूतपुरुषोत्तमविग्रहस्यैवात्मत्वं ज्ञानभक्तिमार्गीयसाधारण्येन विचारितम्। ततो द्वितीयसूत्र आविर्भूतस्य श्रीकृष्णा-

---

१ प्रथमेति मूलपाठः। २ सर्ववेदान्तप्रत्ययत्वेन।

दिरूपस्याप्यात्मत्वमेवेति व्यापकत्वैकरसत्वसच्चिदानन्दत्वादयः सर्वे धर्मा उपसंहर्तव्या इति केवलभक्तार्थं विचारितम् । ततस्तृतीयसूत्रे आवेशिनि गुर्वादावाविष्टे रूपे सर्वभगवद्गुणोपसंहारः ज्ञानिभक्तार्थं विचारितः । ततस्त्रिभिरावेशिनि गुरुप्रतिमादावाविष्टे रूपे तदनुपसंहारः केवलभक्तार्थं विचारितः ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे पुरुषविद्यायामित्यधिकरणे उत्तमाधिकारिभिरशेषगुणपूर्णं परं ब्रह्मैवोपास्यम्, न विभूतिरूपमिति साधितम् । आध्यात्मिकेषु विभूतिरूपेषु सर्वगुणानुपसंहारेऽसाधारणगुणानाज्ञानरूपो हेतुश्चोक्तः ॥ ४ ॥

ततः पञ्चमे द्विसूत्रे वेधाद्यधिकरणे पूर्वसूत्रेणासन्यरूपे चेतनविभूतौ भगवत्संबन्धाद्दोषाभावनिरूपणात्कैमुतिकन्यायेन मूलरूपस्य निर्दोषत्वं समर्थितम्, आधिभौतिकरूपाणां जीवानां सदोषत्वं च बोधितम् । ततो द्वितीये सूत्रे तत्सदोषत्वं भगवत्सकाशात् विभागदशायामेव, तथा सति मुक्तिदशायां तारतम्याभावे प्राप्ते भगवत्तुल्यतापि स्यादिति तन्निवारणार्थं तदापि न्यूनगुणकत्वं स्थापितम् । तेनाध्यात्मिकरूपेषु कतिपयगुणोपसंहारः, मूलरूपे सर्वगुणोपसंहारः । लौकिकरूपेषु मुक्तिदशायामेव निर्दोषत्वपरिमितगुणोपसंहारौ, न संसारदशायामिति निर्णीतम् । एवं चतुर्भिरधिकरणैः रूपभेदः प्रपञ्चितः ॥ ५ ॥

ततः षष्ठाधिकरणमारभ्य पञ्चदशभिरधिकरणैरुपसंहारनियामकस्तत्तन्मार्गरूपः संबन्धिभेदस्तत्तदधिकारनियामकं मार्गतारतम्यं च निरूप्यते ।

तत्र षष्ठे द्विसूत्रे संपरायाधिकरणे अन्तरङ्गसाधनयोर्ज्ञानभक्त्योर्मूलरूपोपासनासंभवादविशेषे प्राप्तेवसरसङ्गत्या स्वरूपतो मर्यादाभक्तेर्ज्ञानाज्ज्यायस्त्वस्य भक्तौ दोषाभावस्य च निरूपणेनान्तरङ्गतरत्वं निरूपितम् ॥ ६ ॥

ततः सप्तमे एकसूत्रे गतेरर्थवत्त्वमित्यधिकरणे हेतुबोधनेन तदेव दृढीकृतम्, मार्गभेदेन पुष्टिभक्तेरन्तरङ्गतमत्वं च निरूपितम् ॥ ७ ॥

*ततोऽष्टमे उपपन्नाधिकरणे पुष्टिभक्तेरन्तरङ्गतमत्वं दृढीकृतम् । एवं त्रिभिरधिकरणै*रन्तरङ्गसाधनानां त्रैविध्ये निर्णीते पूर्वं 'इतरे त्वर्थसामान्या'दित्यादिसूत्रत्रयेणोपसंहारानुपसंहारबीजबोधने कृते किंमार्गीयोपासनायां के के गुणा उपसंहार्या इत्याकांक्षापि पूरिता । ज्ञानमार्गीयोपासनायां तदुपयोगिनः सर्वे, तत्तद्भक्तिमार्गीयोपासनायां तु तत्तदुपयोगिनस्ते ते इत्यर्थादेव सिद्धेरिति ॥ ८ ॥

ततो नवमेऽनियमाधिकरणे ज्ञानापेक्षयान्तरङ्गाणां भक्तीनां मुक्तिसाधने समुच्चयविकल्पयोरनियमः प्रसङ्गेन विचारितः । पादार्थसङ्गतिस्तु पूर्वसिद्धैवात्रापि ॥ ९ ॥

ततो दशमे आधिकारिकाधिकरणे आधिकारिकाणां मुक्तिसाधने प्रवृत्त्यर्थमाधिकारिकाणां भगवद्धर्माणां मुक्तिसाधनत्वाभाव उपोद्घातगर्भप्रसक्तसङ्गत्या प्रतिपादितः ।

---

१ भौतिक इति पाठः । २ भक्ति इति पाठः ।

अविकारिकाणां धर्माणां भगवत्संबन्धितया साधनत्वप्राप्तावपवादसङ्गत्या उपोद्घातगर्भप्रसङ्गसङ्गत्या वा मुक्तिसाधनत्वाभावः प्रतिपादितः । उपसंहारस्तु ज्ञानादिमार्गानुरोधीति तदनुसारेणायातीति पादार्थेनापि संगतिः ॥ १० ॥

ततः पूर्वं संपरायाद्यधिकरणेषु ज्ञानभक्त्योः स्वरूपतस्तारतम्यसाधनेपि विषयफलयोरविशेषादन्तरङ्गतरत्वादिकस्याप्रयोजकत्वं प्राप्तमिति तन्निवारणार्थमेकादशे द्विसूत्रेऽक्षरधियामित्यधिकरणे ज्ञानभक्तिसंबन्धिविषयफलयोर्भेदबोधनात् भक्त्यपेक्षया ज्ञानस्यापकर्षबोधनेन भक्तावन्तरङ्गतरत्वादिकं तयैव सङ्गत्या दृढीकृतम् । उपसंहारस्तु तत्तदुपयोगी प्रागेव सिद्धः ।

ततो द्वादशे त्रिसूत्रेन्तरा भूतग्रामवदित्यधिकरणे श्रुतावहंग्रहोपासनस्य मुख्यत्वकथनात् ज्ञाने भक्तौ च तस्य तुल्यत्वादुभयोस्तौल्यस्य ज्ञानाधिक्यस्य वा प्राप्तौ तस्या उपासनाया भक्त्येकदेशत्वकथनेन ज्ञानापेक्षया मुख्यभक्तेर्विरहरूपान्तरङ्गसाधनत उत्कर्षः पूर्वोक्तसङ्गत्या प्रतिपादितः ॥ १२ ॥

ततस्त्रयोदशे द्विसूत्रे सैव हीत्यधिकरणे प्रथमसूत्रेण विहिताविहितरूपाया द्विविधाया अपि मध्यमभक्तेः पूर्वोक्तसङ्गत्या साधनत उत्कर्षः प्रतिपादितः । द्वितीयसूत्रेण भगवद्विषयककामादीनामपि मुक्तिफलकत्वकथनेन मुक्तौ भगवद्विषयकत्वरूपसाक्षात्संबन्धस्यैव मुक्तिसाधनतावच्छेदकत्वम्, न तु ज्ञानत्वं भक्तित्वं वेति निरूपितम् ॥ १३ ॥

ततश्चतुर्दशे द्विसूत्रे आदरादित्यधिकरणे कैमुतिकन्यायेन कर्मापेक्षया भक्तिसाधनानामुत्कर्षः कर्मिप्रत्यवस्थाननिवृत्त्यर्थं प्रतिपादितः ॥ १४ ॥

ततः पञ्चदशे एकसूत्रे तन्निर्धारणाधिकरणे स्वकृतवेदमर्यादारक्षार्थं विहिताविहितभक्तिमार्गीयस्य कर्मकरणाकरणयोर्हेतुफले बोधिते । द्वितीयपक्षेपि मुख्यभक्तेः पूर्वोक्तभक्तिद्वयादुत्कर्षः साधनतः फलतश्च प्रसङ्गात् प्रतिपादितः ॥ १५ ॥

ततः षोडशे प्रदानवदित्यधिकरणे सर्वात्मभावात्मकमुख्यभक्तेर्विहितयावत्साधनसाध्यत्वनिराकरणेन वरदानवत्प्राप्तिरित्युक्तम् ॥ १६ ॥

ततः सप्तदशे दशसूत्रात्मके लिङ्गभूयस्त्वाधिकरणे सर्वात्मभावात्मकमुख्यभक्तेः स्वरूपमन्तरङ्गतमत्वकाष्ठाबोधनार्थं श्रुतिवाक्यैः प्रपञ्चितम् ॥ १७ ॥

ततोऽष्टादशे त्रिसूत्रे व्यतिरेकाधिकरणे ज्ञानिनां पूर्णाक्षरज्ञानाभावस्य प्रतिपादनेन अग्रिमसूत्रद्वये निदर्शनकथनेन च भक्तानां पूर्णतज्ज्ञानकथनात्सर्वात्मभावरूपमुख्यभक्तिफलस्य भोग्यस्य पुरुषोत्तमज्ञानमध्यमभक्तिफलरूपपुरुषोत्तमसायुज्यादाधिक्यमर्थतः प्रतिपादितम् ।

तत ऊनविंशे एकसूत्रे भूम्न इत्यधिकरणे फलविचारेण सर्वात्मभावस्य साधनदशायां दुःखरूपदोषः परिहृतः ॥ १९ ॥

एवम् एभिरधिकरणैः संबन्धिरूपमार्गस्तत्तारतम्यं च निरूपितम् । एवं स्वरूपपरास्वुपासनासु तारतम्यबोधनेन तासु तासु तत्तद्ध्यानोपयोगिनो गुणा उपसंहार्या इति पादार्थसङ्गतिः ।

ततो विंशे एकसूत्रे नानाशब्दादिभेदादित्यधिकरणे ततो न्यूनासु सत्त्वोपहितावताररूपोपासनासु नानात्वं विचारितम् ॥ २० ॥

ततोऽग्रिमे एकसूत्रे एकविंशे तासां तासां विकल्पो विचारितः । गुणोपसंहारस्तु तत्तद्ध्यानोपयोग्येवेति पूर्वोक्तैव व्यवस्था ॥ २१ ॥

ततो द्वाविंशे काम्योपासनासु समुच्चयविकल्पौ यथाकामं विचारितौ, तेन तासु तत्तत्कामोपयोगी गुणोपसंहारो बोधितः ॥ २२ ॥

ततस्त्रयोविंशे द्विसूत्रे अङ्गेष्वित्यधिकरणे उपासनाङ्गानां व्रतानामाश्रयनित्यत्वं प्रसङ्गाद्विचारितम् ॥ २३ ॥

ततोऽग्रिमे द्विद्विसूत्रे समाहारादित्यधिकरणद्वये ज्ञानमार्गीयोपासनासु सर्वगुणोपसंहारानुपसंहारावधिकारिभेदेन विचारतौ । तेन ज्ञानमार्गीयो विचार एवात्र मुख्यो, भक्तिमार्गविचारस्तु भक्तौ भगवत्कृपारूपसाधिकस्य साधनस्य प्रवेशात्र सर्वोपयोगी यद्यपि, तथापि शास्त्रारंभे ब्रह्मसंबन्धिजिज्ञासाप्रतिज्ञानुरोधात्क्रमः, तत्प्रयोजनं त्वग्रिमपादे 'भक्तिमार्गप्रचारैकहृदयो बादरायण' इति श्लोकेन वक्तव्यमिति ॥ २४,२५ ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां तृतीयाध्यायस्य तृतीयः पादः ।**

---

वेदान्तेषु कर्माङ्गभूता उद्गीथाद्युपासना उक्ताः । आचार्येणापि अङ्गेषु यथाश्रयभाव इत्यादिना पूर्वपादान्ते ता विचारिताः । भाष्यकारैरपि प्राचीनवृत्तिकारादिसंमतं पूर्वोत्तरकाण्डयोरैकशास्त्र्यमङ्गीकृतम् । तृतीयाध्यायारम्भे च चतुर्थपादस्य कर्मोपसंहारोर्थ उक्तः । तथा सति ज्ञानेपि कर्मापेक्षास्तीति सिद्धम् । प्रकृतपादारम्भे च प्रथमसूत्रेण स्वमतमुक्त्वा, ततः पद्सूत्रैरीश्वरस्य ज्ञानस्य च कर्मशेषबोधकं जैमिनिमतं पूर्वपक्षत्वेनोपन्यस्य, अधिकोपदेशादित्यादिभिर्नवभिः सूत्रैर्ज्ञानस्येश्वरस्य च यज्ञादिकर्मशेषत्वं निराकृतम् । ततः ऊर्ध्वरेतःसु चेति सूत्रेण ज्ञानस्य संन्यासाश्रमिणः कर्मशेषत्वमपि निराकृतम् । तेन ज्ञानस्य न कर्मशेषत्वम् । तेन पूर्वकाण्डवैयर्थ्यापत्तौ यज्ञादिकर्मणां यथाकथञ्चित्परंपरया मोक्ष एव फलत्वेन परामृश्यत इति नैकशास्त्र्यादिहानिरित्यभिसंहितम् । ततः परामर्शसूत्रे तदपवादं पूर्वपक्षीकृत्य, अनुष्ठेयसूत्रे ज्ञानसाधनत्वेन तत्करणमंगीकृत्य कर्मस्वातन्त्र्यं निवारितम् । अग्रिमैः पञ्चभिः सूत्रैस्तदेव समर्थयित्वा ज्ञानस्योत्कृष्टत्वं साधितम् । एवं पञ्चविंशतिसूत्रात्मकेनाद्याधिकरणेन उपसंहारोपोद्घातत्वेन कर्मणः स्वातन्त्र्यास्वातन्त्र्ये विचारिते । तत्र भगवत्प्राप्तिरूपस्य पुरुषार्थस्य सर्वात्मभावरूपपुरुषोत्तमज्ञानैकलभ्यत्वमिति स्थितम् ॥ १ ॥

ततः कर्मणः किं परोक्षज्ञानसाधनत्वमपरोक्षज्ञानसाधनत्वं वेत्यपेक्षायां सर्वापेक्षेति षट्सूत्रे द्वितीयाधिकरणे साक्षात्कारस्य स्वरूपोपकारार्थं कर्मज्ञानभक्त्यपेक्षां प्रति-

ज्ञाय तत्तन्मार्गोक्तकर्मसापेक्षत्वं साधितम् । पूर्वपाद एवान्तरङ्गसाधनविचारे ज्ञानभक्त्यावश्यकताया निरूपितत्वात् । ततो द्वितीयसूत्रे शमदमादीनां सत्त्वशोधकत्वे तैरेव ज्ञानसिद्ध्या यज्ञादिकर्मनिरपेक्षत्वमाशंक्य, तेषां विशेषानुष्ठेयत्वम्, न तु कर्मनिवारकत्वमिति तदानीमपि यज्ञादिकर्म कर्तव्यमेवेति सिद्धान्तितम् । ततः ज्ञानिनः सर्वान्नभक्षणस्यानुज्ञानात्कामतः सर्वभक्षणे प्राप्ते आहारशुद्ध्यभावेन शमाद्यसंभवात् पयोव्रताद्यभावेन यज्ञादेरप्यसंभवाद्यज्ञशमदमादीनां साक्षात्कारजनकत्वमसङ्गतमित्याशंक्य, सर्वान्नानुमतेः प्राणात्ययाद्यापत्तिविषयत्वेनान्यदा तदप्राप्त्या तदानीं कामचाराभावात् यज्ञशमदमादिसम्भवेन तेषां ज्ञानप्रतिबन्धनिवर्तकतया कारणत्वं निर्बाधम् । यद्यपि पूर्णस्य ज्ञानस्य कर्मनाशकत्वम्, तथापि साधनदशायां तदपेक्षास्तीत्युपसंहारहेतुतया सर्वान्नानुमत्यादिसूत्रचतुष्टये साधितम् ॥ २ ॥

ततस्तृतीयेऽष्टसूत्रे विहितत्वाच्चाश्रमकर्मेत्यधिकरणे प्रथमसूत्रद्वयेन जातज्ञानस्यापि ज्ञानमार्गीयस्याश्रमधर्माणां नित्यत्वेन प्रत्यवायपरिहारकतया शमदमादिसहकारितया च कर्तव्यत्वं निर्णीतम् । तेनैव कर्ममार्गीयस्य निष्कामतायामपि तदावश्यकत्वमित्यर्थादेव बोधितम् । ततोऽग्रिमैः सर्वथापीत्यादिभिः षड्भिः सूत्रैर्विहितानां भगवच्छ्रवणादीनां पूर्वोक्तेभ्यः सर्वेभ्य आधिक्यं, तदविरोधेनैवाश्रमधर्माणां कर्तव्यत्वं, भगवद्धर्मकर्तुरनभिभवं, आश्रमधर्माणां फलसिद्धावन्तरायरूपत्वादविरोधेनैव कार्यत्वं, भगवद्धर्माणां भक्तेस्तत्फलस्य च ज्ञानादिफलाज्ज्यायस्त्वमन्तरङ्गतरविचारेण निरूपितम्, तेन भगवद्धर्माविरोधेनैव ते कर्तव्या इत्युपसंहारप्रकारो दर्शितः ॥ ३ ॥

ततस्तत्फलं किं, कथं च तस्य ज्ञानफलादाधिक्यमित्याकांक्षायां चतुर्थे एकसूत्रे तद्भूतस्येत्यधिकरणे भगवद्धर्माणां साधनदशायामुत्कृष्टत्वेपि फलदशायां मुक्तिभवने फलतो न कश्चिद्विशेष इत्याशंक्य, नियमादिभिर्हेतुभिस्तस्य नित्यत्वं, भक्तानां मुक्त्यनिच्छया तत आधिक्यं च मुख्यभक्तिमार्गस्योत्कर्षार्थं प्रसङ्गात्प्रतिपादितम् ॥ ४ ॥

ततः पञ्चमे द्विसूत्रे न चाधिकारिकमित्यधिकरणे मर्यादापुष्ट्यापि यत् भगवदीयत्वरूपमन्तर्निष्ठारूपं यत्फलं तन्नित्यं, ज्ञानमार्गीयमुक्तेः सकाशादधिकमित्यनुप्रसङ्गेन निरूपितम् । एवमधिकरणद्वयेन पूर्वोक्तकर्मोपसंहारप्रकारे बीजं बोधितम् ॥ ५ ॥

ततः षष्ठे चतुःसूत्रे बहिस्तूभयथेत्यधिकरणे सर्वविधस्य पुष्टिमार्गीयस्य आश्रमरूपसंन्यासधर्मानुपसंहारार्थं साधनत उत्कर्षबोधनायानुप्रसङ्गेन गृहत्यागो विचारितः । स च मध्यमाधिकारे एवेति फलति ॥ ६ ॥

ततः सप्तमे एकसूत्रे सहकार्यन्तराधिकरणे गृहत्यागिनो मर्यादापुष्टिमार्गीयस्य शमादिकं भावनासहकारित्वेन कर्तव्यम्, पुष्टयंशबाहुल्ये तु तेनापि भावनामात्रमेव कर्तव्यमिति साधनव्यवस्थानुप्रसङ्गाद् दर्शिता ॥ ७ ॥

ततोऽष्टमे **चतुःसूत्रे** गृहिणोपसंहाराधिकरणे, प्रथमसूत्रेण पूर्वोक्तेभ्यो जघन्याधिकारिणां त्यागानुकल्परूपं गृहे स्थित्वा भगवद्भजनं कर्तव्यमिति विचार्य, द्वितीयादिभिस्तस्य करणप्रकारस्तदाधिक्यं, भगवद्भावस्य लोकेष्वप्रकटन, भगवद्भजनव्यतिरिक्तसमये लौकिककरणं, गृहिणोपसंहारश्रुतिमनुसृत्यानुप्रसङ्गाद्विचारितम् । तेन **विहितत्वाच्चाश्रमकर्मापीत्यनेन** यत्पूर्वमुक्तं तस्य प्रकारो बोधितः ॥ ८ ॥

ततः **नवमे एकसूत्रे एवं मुक्तिफलानियम** इत्यधिकरणे तादृशस्य देहपातोत्तरं मुक्तिर्वा भगवदीयत्वं वेति संशये मुक्तिस्तु नियतैव, भगवदीयत्वं तु भगवत्कृपाधीनमित्यनियमो निर्णीतः । तेनानुकल्पोपि मर्यादामार्गादधिकः, निरवध्यानन्दपुरुषोत्तमसायुज्यादिति ॥ ९ ॥

एवमस्मिन्पादे बहिरङ्गविचारेण सप्रकारः कर्मोपसंहारो दर्शितः । एवमस्मिन्नध्याये चतुर्भिः पादैः सर्वसाधनं सप्रकारमुपदिष्टम् ॥

**इति श्रीवल्लभाचार्यचरणदासस्य पीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां तृतीयाध्यायस्य चतुर्थः पादः समाप्तः ।**

**तृतीयाध्यायः समाप्तः ।**

---

## चतुर्थोध्यायः ।

अथ **चतुर्थोध्यायेवसरसङ्गत्या** फलं निरूप्यते । तच्च फलं ब्रह्मविद इति चतुर्भिः पादैर्जीवतो म्रियमाणस्य गच्छतः प्राप्तफलस्य च क्रमेण तस्य यथाधिकारमवस्था निरूप्यन्ते ।

तत्र **प्रथमपादस्य द्विसूत्रे प्रथमेधिकरणे** प्रथमवर्णकेन श्रवणादीनामवान्तरफलत्वाय तेषामावृत्तिः कर्तव्येत्युच्यते । तेन पूर्वपादान्ते गृहिणोपसंहारे सर्वेन्द्रियाणामात्मनि प्रतिष्ठापनमुक्तम्, तत्प्रकारोत्र दर्शित इति पूर्वेण सह प्रकारप्रकारिभावः सङ्गतिरिति बोध्यम् । द्वितीयवर्णकेन तु ज्ञानभक्त्योः फलत उत्कृष्टत्वाय कर्ममार्गे आवृत्तिव्युत्पादनेन फलजघन्यत्वमपि बोधितम् । तेन कर्मणि तत्फले चानासक्तिरपि तत्प्रकारत्वेन बोध्यत इति सैव पूर्वेण सह सङ्गतिरिति बोध्यम् ॥ १ ॥

ततो **द्वितीये त्रिसूत्रे आत्मेतीत्यधिकरणे** प्रथमवर्णकेन ज्ञानफलं द्विविधं विचार्यते । मुख्यं त्वात्मप्रवेशरूपमनश्वरम्, द्वितीयं त्वधिकारिषूपस्थितेषु तेभ्यो ज्ञानोपदेशरूपमवान्तरफलम्, भगवदाज्ञापरिपालनात्मकम्, न त्वाचार्यत्वकामनाकृतमित्युच्यते । द्वितीये ननु 'न स पुनरावर्तते' इतिश्रुत्युक्तो ज्ञानभक्त्योः फलरूपः पुनरावृत्त्यभावः किं सावधिक उत निरवधिक इत्याशङ्कायाम्, निरवधिक इति सिद्धान्त उच्यते । नित्ये भगवद्रूप आत्मनि ब्रह्मविदो जीवात्मनः शुद्धजले जलस्येव प्रवेशेन तादृक्त्वस्यैव श्रुतावुक्तत्वादिति, भक्तिमार्गे च भगवतो मुक्तोपसृप्यत्वेन सेवार्थं तन्निकटस्थितेरपि

नित्यत्वादिति । एवमात्मोपदेशस्यावान्तरफलत्वं त्वत्रापि समानम् । ततो द्वितीयसूत्रे प्रतीकोपासकानां न मोक्षः, अतद्रूपे तत्त्वेनोपासनादिति । अतः सा न कर्तव्येति बोधितम् । तृतीये सर्वत्र ब्रह्मदृष्टिः कर्तव्येति बोधितम् । तथा च सर्वत्रात्मभावनात् तथा स्फुरणाच्च दुःखस्य निवृत्तेस्तस्याप्यवान्तरफलत्वम् । पूर्वपाद उक्तानां गृहत्यागिनां यदान्तरं बाह्यं च साधनं तदत्रोपदिश्यत इत्यत्रापि तेन सह प्रकारप्रकारिभाव एव सङ्गतिरिति बोधितम् ॥२॥

- ततस्तृतीये पञ्चसूत्रे आदित्यादिमतय इत्यधिकरणे प्रथमसूत्रे प्रतीकोपासना न कर्तव्या एव चेत्, ताः किमर्थमुपदिश्यन्ते, (नन्वेवमङ्गोपासना एव?) सिद्धान्ते प्रतीकोपासना इत्याकांक्षायाम्, अवसरसङ्गत्या सिद्धान्ते अङ्गोपासना एव प्रतीकोपासना इति तत्स्वरूपमुच्यते । ताश्चोपासना जघन्याधिकारिणां फलदानद्वारा माहात्म्यज्ञापनेन भक्तिद्वारा आधिभौतिकसर्वात्मभावरूपज्ञान एवोपकुर्वन्तीत्युच्यते, अग्रिमसूत्रैस्तथैव प्रतिपादनात् । ततो द्वितीयसूत्रे भावनौत्कट्ये बहिर्भगवदध्यासरूपं प्राकट्यं फलमुच्यते । ततस्तृतीये ध्यानात्मनो मानसीमूर्तिसिद्धिरूपं फलमुच्यते । ततश्चतुर्थे लीला अपि भगवान् तथा प्रकटयतीत्युच्यते । ततः पञ्चमे अधिकारौत्कर्ष्येण तेषां तत्रैव फलत्वं भासत इति श्रीभागवतोक्तस्मृतिबलेनोच्यते । तस्मात् तासां ज्ञानोपकार एव फलमिति सिध्यति ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे यत्रैकाग्रतेत्यधिकरणे बहिरन्तर्भगवत्प्राकट्यवतोरुपासकयोर्न तारतम्यमिति सिद्धान्तः प्रसङ्गेन क्रियते ॥ ४ ॥

ततः पञ्चमे एकसूत्रे आप्रायणेत्यधिकरणे भगवत्प्राप्तिरूपपरमफलपर्यन्तं तस्यैवावस्था तिष्ठति । परमफलं च तस्य साक्षाद्भगवत्सेवनरूपं सिध्यतीत्यनुप्रसङ्गेन पुष्टिमार्गीयस्योक्तम् । इदमेव च पूर्वं तद्भूताधिकरणे प्रतिपादितमत्राङ्गोपासनाविषयेऽपि स्मार्यते । तेन पुष्टिमार्गीयस्य जीवत इदमवान्तरफलमिति बोधितम् ॥ ५ ॥

ततः षष्ठे चतुःसूत्रे तदधिगम इत्यधिकरणे मर्यादामार्गीयस्यावान्तरफलमवसरसङ्गत्योच्यते । तत्र प्रथमसूत्रे (चित्तशुद्धौ) ज्ञानोदये सति पूर्वपापनाशः, तदनन्तरं पापस्यानुत्पत्तिः । द्वितीयसूत्रे पूर्वपुण्यस्य नाशः, तदनन्तरं तदनुत्पत्तिः । कदाचित् प्रारब्धवशाद्भगवदाज्ञाश्रुतौ उत्तरकर्मण उत्पत्तिरित्युक्तम् । ततस्तृतीये ज्ञानात् कर्मनाशे सति कर्मजन्यदेहस्यापि नाशादाचार्याभावेन ज्ञानादिसंप्रदायोच्छेद इत्याशंक्य, अनारब्धकार्याणामेव तेषां नाशः, न प्रारब्धकार्याणामिति, तेषां भोगैकनाश्यत्वादित्युक्तम् । ततश्चतुर्थे ब्रह्मविदोऽग्निहोत्रादिकरणमपि प्रारब्धभोगरूपकार्यायैव, येषामग्निहोत्रकरणरूपं प्रारब्धमस्ति तेषां तत्करणरूपेण भोगेन तन्निवृत्तेः, न तु तस्य कर्मणः संश्लेष इत्युक्तम् । तेन मर्यादामार्गीयस्य कर्मसंसर्गाभाव इत्यनेनाधिकरणेनावसराद्वा प्रसङ्गाद्वा साधितम् ॥६॥

ततः सप्तमे त्रिसूत्रे अतोन्यापीत्यधिकरणे पुष्टिमार्गीयस्य 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्याम् द्विषन्तः पापकृत्या'मिति श्रुतिबलात् विनैव भोगं प्रारब्ध-

निवृत्तिरिति **प्रथमसूत्र** उच्यते। ततो **द्वितीये** 'यदेव विद्यये'ति श्रुत्या ब्रह्मविदः कर्मकरणप्राप्तौ तत्संश्लेषमाशङ्क्य, इदं वाक्यं कर्माङ्गभूतोद्गीथोपासनाविषयम्, न तु ब्रह्मविद्याविषयम्, अतो न तस्य आपादयितुं शक्यते कर्मसंश्लेषो ब्रह्मविदः। किञ्च, यद्यनया कर्मकरणं प्रसक्तं क्रियते, तदा ब्रह्मवित्कर्ममोक्षायैव कर्म करोतीति तच्छ्लेषाभावायैव तत् फलिष्यतीति तु मर्यादामार्गरीत्या समाधानम्। पुष्टिमार्गीयस्तु केवलं भगवदासक्तः, भगवद्गुणानां च जीवगुणाः अंशाः, जीवनिष्ठं विद्यारूपं यज्ज्ञानं तद्भगवज्ज्ञानस्य अंश इति सिध्यति। तथा सति जीवनिष्ठविद्ययापि चेत् न मर्यादामार्गीयस्य कर्मश्लेषः, तदा भगवत्स्वरूपासक्तस्य पुष्टिमार्गीयस्य कर्मश्लेषः कैमुतिकन्यायेनैवापास्त इत्युक्तम्। ततस्तृतीये पुष्टिमार्गीयः पूर्वोक्तप्रकारेण स्थूललिङ्गशरीरे क्षपयित्वा ततो यथाधिकारं भगवत्साक्षात्कारादिरूपेण फलेन सम्पद्यत इति परमफलमुक्तम्। अत्र क्षपणं च कुरुक्षेत्रप्रसङ्गे व्रजभक्तानां जीवकोशध्वंसरूपम्। भोगश्च तदनन्तरदर्शनादिरूपो जीवद्दशायामेव भवतीत्यवान्तरफलपरिसमाप्तिरिति मम प्रतिभाति।

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां चतुर्थाध्यायस्य प्रथमः पादः।**

---

अथ **द्वितीयपादे** म्रियमाणस्य ब्रह्मविदोऽवान्तरफलव्यवस्था अवसरसङ्गत्योच्यते।

तत्र **प्रथमे चतुःसूत्रे वाङ्मनसीत्यधिकरणे** तत्र **प्रथमसूत्रे** 'अथाकामयमान' इति वाजसनेयिश्रुतिमालम्ब्य म्रियमाणस्य पुष्टिमार्गीयस्य म्रियमाणदशायां बहिर्मनसि वा दर्शनं वेणुनादश्रवणं वा भवति, तदा तस्य वाङ्मनसि संपन्ना भवतीत्युक्तम्। ततो **द्वितीयसूत्रे** पूर्वोक्तेनैव हेतुना अन्यान्यपीन्द्रियाणि मनसा सह सङ्गतानि भवन्तीत्युक्तम्। ततस्तृतीये सर्वेन्द्रियविशिष्टं मनः प्राणे सङ्गतं भवतीत्युच्यते। ततश्चतुर्थे तत्सर्वविशिष्टप्राणो हृदि वा बहिर्वा प्रकटे भगवति लीनो भवतीत्युच्यते। तथा चानेन क्रमेण तस्येन्द्रियाणि भगवति लीयन्ते, आत्मापि लीयते, 'न तस्मात्प्राणा उत्क्रामन्ति, अत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतेरित्युच्यते। तस्यालौकिकदेहप्राप्तिश्चतुर्थे पादे वक्ष्यते ॥१॥

ततो **द्विसूत्रे द्वितीये भूतेष्वित्यधिकरणे** म्रियमाणस्य मर्यादामार्गीयस्य व्यवस्था अवसरगर्भेण प्रसङ्गेनोच्यते। तत्र **प्रथमसूत्रे** तस्येन्द्रियाणि भूतेषु लीयन्त इत्युच्यते, स्वयं तु हृद्येवं भगवन्तं प्राप्य मुक्तो भवतीत्यपि तेन सूच्यते। ततो **द्वितीये सूत्रे** भक्तो ज्ञानी च मर्यादामार्गीयौ भवतः। तत्रोभयोरियं व्यवस्था, उत भक्तस्य पुष्टिमार्गे प्रवेश इत्याशङ्क्य, द्वयोरपीयं व्यवस्थेत्युच्यते ॥ २ ॥

ततस्तृतीये **नवसूत्रे समाना चासृत्युपक्रमादधिकरणे** उभयोर्मुच्यमानत्वेपि प्राणादिलयप्रकारे पुष्टिमर्यादास्थयोः कुत एवं (विशेषादेव) विशेष इति वक्तुं पुष्टिमार्गीयस्य मर्या-

दामार्गादाधिक्यमुपोद्घातेन विचारितम् । तत्र **प्रथमसूत्रे** साधनद्वारा मोचनेच्छा हि मर्यादामार्गीया मर्यादा, विहितसाधन विनैव मोचनेच्छा पुष्टिमार्गमर्यादा । अतस्तयो सकर कदापि न भवतीति विशिष्टेच्छया आधिक्यमुक्तम् । ततो **द्वितीये** पुष्टिमार्गीयमुक्तिदशाया मर्यादामार्गीयमुक्ते ससारतौल्यव्यपदेश इत्युक्तम्, तेन पुष्टिमार्गस्याधिक्य सूच्यते । ततस्तृतीये यदि तस्या ससारतुल्यत्व तदा तस्या हेयत्व स्यात्, तद्बोधकश्रुते प्रतारकत्व चेत्याशङ्कायाम्, पुष्टिमार्गीय तत्त्व दुर्ज्ञेयम् । अतस्तदज्ञानान्मर्यादामार्गीय मुक्तिर्यैपामीप्सिता तान् प्रति तामेवोपादेयत्वेन श्रुतिर्वदति, रागिण प्रति स्वर्गादि उपदिश्यते (तद्वत् । ततश्चतुर्थे तर्हि ब्रह्मविदामिव तादृशाना भक्तानामपि स्वमार्गोपदेशन क्वचिच्छ्रूयेत ), यतो नैवम्, अतो नैवमित्याशङ्कायाम्, तदनुपदेशने बीजमाह । पुष्टिमार्गीयाणा हि अवस्थाद्वयम्, विरह प्रियसङ्गो वा । तत्राद्ये स्वास्थ्याभावान्नोपदेश । द्वितीये तु भगवत्सनिधानेन तदग्रे धार्ष्ट्यस्य कर्तुमशक्यत्वान्नोपदेश । अत उपदेशाभावान्न तस्यासत्ता वक्तु शक्येत्युक्तम् । तत **पञ्चमे** भगवदीयाना विरह एव कथमित्याशङ्कायाम्, पुष्टिमार्गं भगवतो रसात्मकत्वस्यैव प्राकट्यात् तेनैव तदुपपत्तिरिति युक्त्या समाहितम् । तत **षष्ठे** विरहाङ्गीकारे श्रुतिविरोधमाशक्य, श्रुतौ शरीरसबन्धिन एव दु खस्य निषेधो, न भगवद्विरहजन्यस्येत्येव समाहितम् । तत **सप्तमे** श्रुत्या, **अष्टमे** च स्मृत्या तद्दृढीकृतम् । ततो **नवमे** सर्वासा रसावस्थाना सत्ता श्रीगोकुल एव विधत इति श्रुत्या व्यवस्थापितम् । एव पञ्चभि सूत्रै प्रमाणपूर्वक रसावस्थास्थापनेन पुष्टिमार्गस्य सर्वोत्कृष्टत्व व्यवस्थापितम् । अत पुष्टिमर्यादायामुपदेशेपि न कश्चिद् दोष इत्यर्थात् सूचित भवति ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे **अविभागो वचनादित्यधिकरणे** प्रसङ्गात् पुष्टिमार्गीयस्य नित्यलीलारूपफलानुभवस्य नित्यत्व मर्यादामार्गात् फलतो विशेषप्रतिपादनाय विचारितम् ।

तत **पञ्चमे एकसूत्रे तदोकोग्रज्वलनाधिकरणे** मर्यादामार्गीयस्य ब्रह्माण्डमध्ये सद्यो मुक्तिप्रकारो विचारित । तदग्रिमे च अवसरसङ्गत्या मर्यादामार्गीयस्य जीवोत्क्रान्त्यनन्तर क्रममुक्तिप्रकार उच्यते । तत्र साधारणस्यापि जीवस्य इन्द्रियरूपाभिस्तेजोमात्राभि सहैव येन केनचिद्द्वारेण निर्गमनम्, तथापि यस्य साधनेन ( परमात्मा तुष्ट , ) स जीवस्तु एकशतनाडीषु या शताधिका मूर्धन्या नाडी, तया ऊर्ध्व स्थ 'क्त्वा' निष्क्रामति, साधनेन तुष्टो यो हृदयवर्ती परमात्मा तदनुग्रहाद्विद्यासामर्थ्याच्च या भगवत्स्मृतिपरपरा, तया तस्यानुग्रह , तेन मूर्धन्यनाड्या निष्क्रमणमित्युक्तम् ॥ ५ ॥

तत **षष्ठे चतुःसूत्रे रश्म्यनुसार्यधिकरणे** । तत्र **प्रथमसूत्रे** य क्रमेण मोक्षाधिकारी रश्म्यनुसारी मूर्धन्यनाड्या नि सरति तस्यापि हृदयाग्रे प्रकाश इत्युक्तम् । ततो **द्वितीये तृतीये** च रात्रिकृतोऽयनकृतो विशेषश्च नास्तीत्युक्तम् । ततश्चतुर्थे

१ विद्यान्तर्गतपङ्क्तिका त्रुटितेति प्रतिभाति । २ इत पर सूत्रत्रय भिन्नाधिकरणत्वेन श्रीगपेश्वरा इष्टेश्व, भावप्रकाशिकाकारा श्रीकृष्णचन्द्राश्च ।

स्मृतौ धूममार्गस्याप्युक्तत्वात् तत्र च रात्रिदक्षिणायनादीनामुक्तत्वादर्चिरादिमार्गे च ज्योतिरुत्तरायणादीनामुक्तत्वान्मुच्यमानस्य कथं न विशेष इत्याशंक्य, स विशेषो योगिन एव, गती च ते स्मार्ते, अतो न ज्ञानिनः, तेन ज्ञानिन उत्क्रमणे सर्वोपि कालः समान इत्युक्तम्। एतस्य करणग्रामनिष्पत्तिस्तु यत्र प्रारब्धसमाप्तिस्तत्र भूतेष्वेव भविष्यतीति ज्ञेयम् । उपक्रमे तथैवोक्तत्वादिति ॥ ६ ॥

एवमस्मिन् पादे पुष्टिमर्यादामार्गीययोर्म्रियमाणावस्था विचारिता ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां चतुर्थाध्यायस्य द्वितीयः पादः ।**

---

अथ **तृतीयपादे** क्रममुक्त्यधिकारिणो ब्रह्मविदोर्चिरादिमार्गेण गच्छतो व्यवस्थावसरप्राप्तोच्यते ।

**तत्र प्रथमे चतुःसूत्रे अर्चिरादीत्यधिकरणे** ज्ञानमार्गीयस्य भक्तस्य चेत्युभयोरर्चिरादिमार्गेण गमनम्, उत सद्योमुक्तिरितिसंशये, यथा ज्ञानिनो नियमाभावस्तथा भक्तस्यापीति पूर्वपक्षे, पञ्चाग्निविद्यायां ज्ञानमार्गीयाणामेवोपक्रान्तत्वात्तेषामेव तेन मार्गेण गतिः, न तु भक्तस्यापीति निश्चीयते । ततस्त्रिभिः सूत्रैस्तन्मार्गपर्वनिर्धारः क्रियते । श्रुतिभेदेन पर्वभेदानामनेकधोक्तत्वात् मार्गभेदे प्राप्ते देवयानस्य मार्गस्य श्रुत्यन्तरे यदैक्यमुक्तं तद्विरोधसंभवात् । पर्वसु निर्धारितेषु तु यस्य यत्पर्वभोगो भावी तं प्रति तत् पर्व, अन्यंप्रत्यन्यत्। यथा महामार्गे नानाग्रामेषु सत्स्वपि कस्यचित् कस्मिंश्चिद् ग्रामे अवान्तरनिवासः, अन्यस्यान्यस्मिन् ग्रामे सः, तद्वत् । एवं पर्वभेदेप्युपपत्तौ ब्रह्मलोकगमनस्यैक एवार्चिरादिमार्गो देवयानाख्यः सिध्यतीति निर्णीतम् ॥ १ ॥

ततो **द्वितीये त्रिसूत्रे आतिवाहिकाधिकरणे** तेन मार्गेण कथं गच्छतीत्याकांक्षायामवसरगर्भेण प्रसङ्गेन गमनप्रकारो निर्धार्यते । तत्र पर्वभूतविद्युल्लोकपर्यन्तं विद्यासामर्थ्येनैव गच्छति । ततो विद्युल्लोके अमानवः पुरुषो ब्रह्मलोकगमयिता तत्रागत्य तं विद्युल्लोकस्थं गन्तारं ब्रह्मलोकं प्रापयतीति श्रावितम् । एवं सति येषां विद्युल्लोकभोगोस्ति ते वरुणादिलोकं गच्छन्ति । तत्र सः ब्रह्मलोकप्रापयिता आयाति न वेति संशये, तत्राप्यायाति, श्रुत्यन्तरे प्रजापतिलोकानन्तरमपि ब्रह्मलोकस्योक्तत्वात्, ब्रह्मलोकप्रापयितॄणां पुरुषाणां च बहुत्वात्, यस्य यल्लोकभोगेन प्रारब्धसमाप्तिस्तं तत एव लोकाद्ब्रह्म प्रापयन्तीति **प्रथमसूत्रे** निर्णीतम् । तेषां ब्रह्मलोकप्रापका ये पुरुषास्ते आतिवाहिकशब्देनोच्यन्त इत्यपि । ततो **द्वितीये** सूत्रे अपुनरावृत्तिश्रुत्या देवयानं पन्थानं प्राप्तानां ब्रह्मवित्त्वात्तेषां सद्योमुक्तिरेवोचितेति तेषामवान्तरलोकभोगजनिका कामनैव कुतः । किञ्च, 'यत्कर्मभिर्यत्तपसे'ति भगवद्वाक्ये मर्यादाभक्तस्य या लोकान्तरकामनोक्ता सापि कुतः । तेषां

सद्योमुक्तेरेव प्रथमाधिकरणे निर्धारादित्याशङ्क्य, केपाञ्चित् ज्ञानिनां मर्यादाभक्तानां व्यामोहितत्वात् सा । व्यामोहश्च लीलासिद्ध्यर्थं, येऽवान्तर्लोकाः कृतास्तत्सृष्टिसार्थ-कत्वाय भगवतैव क्रियते । अतो नानुपपत्तिरित्युक्तम् । ततस्तृतीयसूत्रे ये वरुणादि-लोकं गतास्तेषां स्वत एव ब्रह्मप्राप्तिरस्तु । आतिवाहिकस्य विद्युल्लोकीयत्वश्रावणेन तेषु लोकेषु तदभावादित्याशङ्क्य, श्रुतावातिवाहिकस्य न विद्युल्लोकीयत्वमभिप्रेतम् । 'पुरुषोऽ-मानव एत्ये'ति श्रावणाद्ब्रह्मलोकीयत्वम् । वैद्युतत्वं तु तस्य विद्युल्लोकपर्यन्तमागमनात् । अतो लोकान्तरादपि ब्रह्मलोकप्राप्तावातिवाहिकापेक्षास्तीत्युक्तम् । किञ्च, वाजसनेयके 'ब्रह्म-लोकान् गमयती'ति श्रावितम् । छान्दोग्ये तु 'ब्रह्म गमयती'ति श्रावितम् । तेन मर्यादा-मार्गीयं भक्तं वैकुण्ठलोकान् गमयति । ज्ञानमार्गीयं त्वक्षरब्रह्म गमयतीत्यपि तत्र निर्णीतम् । एवमेतेन गमनप्रकारो निर्णीतः ॥ २ ॥

ततस्तृतीये अष्टसूत्रे **कार्यं बादरिरित्यधिकरणे** पूर्वसूत्राधिकरणश्रुत्युक्तस्य प्राप्तव्यस्य ब्रह्मणः किमविकृतब्रह्मत्वम् , उत कार्यब्रह्मलोकत्वमिति संशये, प्रथमं पञ्च-सूत्रैर्बादरिमतमुक्तम् , तत्राविकृतस्य परब्रह्मणो व्यापकत्वादत्रोक्तं गमनं न सङ्गच्छते तस्मात् । किञ्च, श्रुत्यन्तरे 'ब्रह्मलोका'निति 'तेषु वसन्ती'ति च बहुत्वेन वासाधिकरणत्वेन च विशेषितत्वादपि तथा । तत्र ब्रह्मत्वव्यपदेशस्तु ब्रह्मसामीप्यात् । कल्पसमाप्तौ कार्यब्रह्मलोकस्य नाशे चतुर्मुखेन ब्रह्मणा सह तस्यापि चतुर्मुखवत् परब्रह्मप्राप्तेः श्रुतौ स्मृतौ चाभिधानादपि प्राप्यब्रह्मलोकोऽपर एव, न तु परब्रह्मेति पूर्वपक्षत्वेनोक्तम् । ततस्त्रिभिः सूत्रैर्जैमिनिमतं सिद्धान्तत्वेनोक्तम् । तत्र **प्रथमसूत्रे** ब्रह्मशब्दस्य बृहत्त्वा-दिगुणविशिष्टत्वेन परस्मिन्नेव मुख्यवृत्तत्वात् गौण्याऽपरब्रह्माङ्गीकारो न युक्त इत्यु-क्तम् । ततो **द्वितीये** कौषीतकिश्रुतौ प्रजापतिलोकाद्ब्रह्मलोकस्य पार्थक्येनोक्तत्वात् छा-न्दोग्ये अर्चिरादिमार्गप्राप्यत्वेन समाप्तौ 'ब्रह्म गमयती'त्युक्तत्वात् प्रजापतिलोकादन्यस्य कार्यब्रह्मलोकस्य कुत्राप्यश्रवणाद्गमनस्य प्रारब्धहेतुकत्वेन विलम्ब्यप्राप्तेः संभवाच्च न गमना-दिश्रुतिस्मृतिविरोध इत्युक्तम् । ततस्तृतीये 'ब्रह्मविदाप्नोति पर'मिति श्रुतौ परप्राप्तिर्या उक्ता सैवाग्निमर्चा विनीयते । तस्यां च ब्रह्मणा सह सर्वकामभोगलक्षणा या प्रतिपत्तिरुच्यते, सा परेणैव सह । कुत्रापि श्रुतौ कार्यरूपे प्रतिपत्तेरनभिप्रेतत्वात् । अतो ब्रह्मशब्देन परब्रह्मैवो-च्यत इति सिद्धान्तितम् । एवमष्टभिः सूत्रैः गन्तव्यब्रह्मस्वरूपं प्रसङ्गान्निरूपितम् ॥ ३ ॥

ततश्चतुर्थे एकसूत्रे **अप्रतीकालम्बनाधिकरणे** पूर्वोक्तप्रकारेणातिवाहिकप्रा-पिता ब्रह्मप्राप्तिः किं सर्वेषामुपासकानाम्, उत केषाञ्चिदेवेति संशये, अप्रतीकालम्बनाने-यानिवाहको नयतीति निश्चीयते । तत्र प्रतीकोपासका द्विधा । केचिदतस्मिंस्तत्त्वेनोपास-काः, अन्ये तु तदङ्गेषु तत्त्वेनोपासकाः । तत्राद्यानामुपासनैव व्यङ्गा । 'योऽन्यथा मन्तमात्मान'मिति वाक्योक्तदोषप्रसङ्गात् । द्वितीयानां तूपासनाव्यङ्गत्वाभावेपि 'याव-

न्मनसो गतं तत्रास्य कामचारो भवती'त्यादिश्रावणेन तत्क्रतुन्यायतस्तत्रैव पर्यवसानेन तेषां ब्रह्मप्राप्तेरनभिप्रेतत्वात्। पञ्चाग्निविद्यायास्तु ब्रह्मोपासनात्वेन प्रतीकत्वेपि वाचनिकत्वात् तेषां नयनम्। तस्मात् ये परब्रह्मोपासकास्तानेव नयतीति ज्ञानमार्गीया व्यवस्था। भक्तिमार्गीयस्तु निष्कामाङ्गोपासनकर्ता भक्तः सन् भक्तिबलादेवातिवाहिकं विनैव स्वयं गच्छतीति तत्क्रतुश्चेति सूत्रशेषेण निश्चीयत इत्युक्तम्। एवमत्र चतुर्भिरधिकरणैः सप्रकारा गच्छद्ब्रह्मविद्व्यवस्थोक्ता। सङ्गतिस्तत्रावसर एव ॥ ४ ॥

ततः **पञ्चमे एकसूत्रे विशेषं च दर्शयतीत्यधिकरणे** भक्तिमार्गीयाणां ज्ञानमार्गीयाणां चाविशेषेणैव ब्रह्मप्राप्तिः, उत गमने विशेषात् फलप्राप्तावपि कश्चिद्विशेषोस्तीति सन्देहे, 'ब्रह्मविदाप्नोति पर'मिति यजुर्व्याख्यानरूपायां 'सत्यं ज्ञान'मित्यस्यामृचि ज्ञानमार्गीयस्य अक्षरप्राप्तिरेव, भक्तिमार्गीयस्य तु 'यमेवैष वृणुते' इति श्रुत्युक्तवरणेन भक्त्या हृदि अक्षरब्रह्मप्रादुर्भावात्तत्र स्थितेन पुरुषोत्तमेन सह भोग उच्यते। तत्र भक्तिमार्गः पुष्टिमर्यादाकेवलपुष्टिभेदेन द्विविधः। तत्राद्यस्य यथाधिकारं पुरुषोत्तमानुभवरूपो भोगः। द्वितीयस्य तु यथाधिकारं ब्रह्मणा सह सर्वकामाशनरूप इति विशेषं श्रुतिर्दर्शयति। तस्मात् ब्रह्मप्राप्तावस्ति तयोर्विशेष इति प्रसङ्गगर्भया पूर्वोक्तसङ्गत्यैव निर्णीतम् ॥ ५ ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां चतुर्थाध्यायस्य तृतीयः पादः।**

---

ततश्चतुर्थे **पादे** पञ्चभिरधिकरणैः प्राप्तफलस्य ब्रह्मविदो व्यवस्था वक्तव्या। तत्र ब्रह्मविदो भक्तिज्ञानमार्गभेदेन द्विविधाः। भक्तिमार्गीया अपि मर्यादापुष्टिकेवलपुष्टिभेदेन द्विविधाः। अवान्तरभेदास्त्वनेके। तत्र ज्ञानमार्गीयाः पुष्टिमर्यादामार्गीयाश्च प्रायशः क्रमेणैव मुच्यन्ते। अतिकृपया तु केचित् सद्योऽपि। पुष्टिमार्गीयास्तु सद्य एव। एवमेतेषु ब्रह्मवित्सु ज्ञानमार्गीया अक्षरोपासकत्वात्तत्रैव पर्यवसन्नाः सद्यः क्रमेण वा तमेव प्रविशन्ति। पुष्टिमर्यादामार्गीयास्तु सद्यः क्रमेण वा नित्यं ब्रह्मलोकं प्राप्नुवन्ति। तेषां लौकिक्यामेव गुहायामक्षरम्। तत्र स्थितं पुरुषोत्तमं चानुभूय पुरुषोत्तमस्वरूपे प्रविशन्तीत्येतावत्पूर्वपादान्ते सिद्धम्। ये पुनः क्रमेण नित्यं भगवल्लोकं प्राप्नुवन्ति, ते तत्रैव भगवन्तं भिन्नमीश्वरत्वेनानुभवन्तो यथाधिकारं सेवौपयिकदेहं प्राप्नुवन्तीत्यर्थात् सिध्यति। तदपि तृतीयस्कन्धे 'अथो विभूतिं मम मायाविनस्ता'मिति कपिलदेववाक्यादवसीयते।

अतःपरं पुष्टिमार्गीयस्य प्राप्तफलस्य 'सोऽश्नुते सर्वान् कामान्' इति श्रुत्युक्ता व्यवस्थावशिष्यते। सा विशेषदर्शनसूत्रे संक्षेपेण सिद्धास्मिन्पादे प्रपञ्च्यते।

ततः **सम्पद्याविर्भाव इति चतुःसूत्रे प्रथमाधिकरणे प्रथमसूत्रे** भगवत्स्वरूपे लीनस्य पुष्टिमार्गीयस्य स्वलीलानुभवनार्थं भगवता बहिराविर्भावः क्रियते, ननुगृ-

द्वीतत्वात् । स चाविर्भावो भगवत्स्वरूपबलेनैव लीलाधिकरणे भवति, न तु प्रपञ्च इति श्रुतिबलादुक्तम् । ततो द्वितीये तस्यैवमाविर्भावेपि मुक्तत्वं नापैतीत्युक्तम् । ततस्तृतीये एवं फलदातुः परमात्मत्वमेवेत्युक्तम् । ततश्चतुर्थे 'सत्यं ज्ञान'मित्यस्या ऋचः 'ब्रह्मविदाप्नोती' त्यनेनैकवाक्यत्वं व्याख्यानव्याख्येयभावादस्ति, तस्मादयमेवार्थ इति निर्धारितम् ॥

ततो द्वितीये अष्टसूत्रे ब्राह्मेणेत्यधिकरणे येन देहेनायं जीवो लीलानुभवं करोति तादृशो देह उपोद्घातेनावसरेण वा विचारितः । तत्र प्रथमसूत्रे सच्चिदानन्दात्मकेनैव देहेन ब्रह्मणा सह भोगान् भुङ्क्त इति स देहस्तादृशो ब्रह्मणा सम्पादित इति साधितम् । तत्प्रकरणे ब्रह्मात्मकानामेवान्नमयादिविभूतीनामुपन्यासादिति जैमिनिमतकथनमुखेन तत्सम्मतिश्च प्रदर्शिता । ततो द्वितीयसूत्रे प्रज्ञानघनश्रुत्या केवलज्ञानात्मको ब्रह्मणो विग्रहो बोध्यते । अतस्तादृशेन सह भोगकर्त्रा ज्ञानात्मकेनैव भवितव्यम् । नचैवमानन्दानुभवेन सर्वकामाशनबाधः शङ्कनीयः । भगवतः पूर्णानन्दत्वात् तत्सम्बन्धेनैवानन्दानुभवः सिद्धः । तस्माद्विग्रहं विनैव केवलस्वरूपेण भुङ्क्त इत्यौडुलोमिमतमुक्तम् । ततस्तृतीये सूत्रे 'सत्यं ज्ञान'मित्यस्यामृचि गुहाया उक्तत्वात् तस्याश्च विग्रह एव संभवात् श्रुतौ विग्रहत्वेनैवोपन्यासः । ते च विग्रहा भगवद्धाम्नि पूर्वमेव वर्तन्ते भगवद्धर्मरूपाः । तेषु कस्मिंश्चिदयं चिन्मात्र एवाविश्याभिमानं कृत्वा भगवदिच्छानुरूपलीलात्मकान् भोगान् भुङ्क्ते । तस्मान्न चिन्मात्रत्वस्य नित्यविग्रहवत्वस्य च विरोध इति मतद्वयं संगृह्य तादृशविग्रहेणैव भुङ्क्त इति स्वमतमुक्तम् । ततश्चतुर्थे सूत्रे तादृशदेहप्राप्तौ भक्ते भगवदनुग्रह एव हेतुरित्युक्तम् । तेन तादृशो भोगो न सर्वेषाम्, किन्त्वत्यन्तभगवदनुगृहीतानामेवेति वरणश्रुत्या सिध्यति । ततः पञ्चमसूत्रे अतो हेतोः भगवाननन्याधिपतिः । अनन्याश्च त एव ये साधनत्वेन (फलत्वेन) च भगवन्तमेव जानन्ति । तस्मात्तदर्थमेवं भगवतः सङ्कल्प इत्युक्तम् । तेन तदेकतानतया तदाश्रयतया च ते सर्वदा तिष्ठन्तीति सिध्यति । ततः षष्ठे सूत्रे मुक्तस्य देहाद्याकारप्रतिकूलं बादरिमतमाह । 'यत्र हि द्वैतमिव भवती'त्यादिश्रुतिरमुक्तिदशायां द्वैतदर्शनमुक्त्वा 'यत्र त्वस्य सर्वमात्मैवाभू'दित्यादिना मुक्तस्य द्वैतदर्शनं निषेधति । तथा सति द्वितीयदर्शनाभावे कामभोगवार्तैव दूरेति तदाक्षेप्यो देहोपि दूरतरः । एतन्मते 'ब्रह्मविदाप्नोति परं'मित्यादिश्रुतिः पूर्वकक्षाविश्रान्ता । ततः सप्तमे बादरिविरुद्धं जैमिनिमतमाह । जैमिनिस्तु मुक्तस्य देहसत्तां मन्यते । 'ब्रह्मविदाप्नोती'ति श्रुतिः पूर्वकक्षाविश्रान्तेत्यत्र मानाभावान्न बादरिमतं साधीयः । अनेन श्रुतिविरोधापत्तेः । श्रुतौ हि 'ब्रह्मविदाप्नोती'त्यत्र ज्ञानस्य तत्प्राप्तिसाधनत्वमुच्यते, 'नायमात्मे'त्यत्र वरणैकप्राप्यत्वम् । अतः साधनबोधकश्रुत्योः परस्परविरोधः । 'सोऽश्नुत' इत्यादिना परप्राप्तिरुपन्यस्यते । 'ब्रह्मैव सन् ब्रह्माप्येती'त्यत्र भवति जीवस्य लय उच्यते । अतः फलबोधकश्रुत्योर्विरोधः । एवं विरोधे सति तदभावाय

गतिरवश्यं कल्पनीया । तत्र पुष्टिमर्यादाभ्यां मार्गभेदस्य सिद्धत्वात् तत्तन्मार्गीयस्य तत्तदेव फलं परममिति व्यवस्थितविकल्प एव ज्यायानिति नैकतरादरणं युक्तमिति । ततोऽष्टमे भगवान् व्यासः स्वसिद्धान्तमाह । लोके हि शरीरं भूतजन्यं भोगायतनं च दृष्टम् । मुक्तस्य तु शरीरतदभावावाक्षेपलभ्यौ न निवारयितुं शक्यौ । अतः शरीरमेव तादृश कल्पनीयं येन श्रुत्यविरोधः । तत्र भूमविद्याया 'आत्मतः प्राण' इत्युपक्रम्य 'आत्मत एवेदं सर्व'मित्यन्तेन भगवत एव सकाशाद्भोगोपयोगिसर्वसामग्रीश्रावणान्मुक्तस्य शरीरं न भूतजन्यम्, तस्मादशरीरम् । तत्रैव 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द' इति श्रावणात्तच्छरीरं भोगायतनम् । तस्माच्छरीरमपि । एवमुभयविधत्व आस्थिते श्रुतीनां न कश्चिद्विरोधः ॥

ततस्तृतीये द्विसूत्रे तत्त्वभावाधिकरणे गुणोपसंहारपादोक्तं निर्दोषपूर्णगुणं भगवत्स्वरूपमेव फलमिति विचारितम् । तत्र पूर्वसूत्रे दोषरूपाणामज्ञत्वादीनां भगवति या प्रतीतिः, सा भ्रान्ता, स्वप्नवदर्थाभावेपि प्रतीयते । तस्माद् ब्रह्म निर्दोषमित्युक्तम् । ततो द्वितीये सूत्रे याः पौगण्डादयोवस्थाः, ये च गुणास्ते सर्वे सन्त एव मायापसारणाद्भक्तानां प्रतीयन्ते । तस्माद् ब्रह्मानन्तगुणपूर्णमवतारेपीत्युक्तम् । तथा चावसर एव सङ्गतिरित्यर्थः ॥३॥

ततश्चतुर्थे द्विसूत्रे प्रदीपवदित्यधिकरणे फलानुभवोपकरणं प्रकृतत्वाद्विचार्यते । पूर्वाधिकरणयोः फलप्राप्त्युपकरणस्य फलस्वरूपस्य च विचारितत्वात् । अतोवसरोत्र सङ्गतिः । तत्र प्रथमसूत्रे मुक्तस्य भगवत्कृपयाभिव्यक्ताभ्यां जैवज्ञानक्रियाभ्यां योगेपि न ताभ्यां भगवता सह कामभोगकरणसमर्थो भवति, किन्तु यथा प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायामर्वाचीनायां वर्त्यां प्रविष्टस्तां समानकार्यक्षमां करोति, तथा भगवानपि स्वदत्ते मुक्तदेहे जीवेन सह प्रविष्टस्तं देहं स्वभोगरूपकार्यक्षमं करोति । यतो 'भर्ता स' न्निति भर्तृसूक्तारम्भमन्त्रे भगवतः क्रीडार्थं बहुधा आवेश उक्तः । तेनैवं ज्ञायते क्रीडोपयोगिभगवदावेश एव फलानुभवोपकरणमिति । ततो द्वितीयसूत्रे अस्थूलादिश्रुतेः सर्वकामभोगश्रुतेश्च यो विरोधः स सुषुप्तिमोक्षभेदेन भगवदाविर्भावप्रकारभेदात् परिहृतः ॥

ततः पञ्चमे षट्सूत्रे जगद्व्यापाराधिकरणे भोगप्रकारो विचारितः । तत्र प्रथमसूत्रे 'सोश्नुते सर्वान् कामा'निति श्रुतिर्मुक्तिप्रकरणस्था । तस्मात्तत्र न जगत्संबन्धः । किञ्च, भगवल्लीला कालमायाद्यतीता । तेन प्राकृतं जगत् ततो दूरतरमिति न तत्संबन्धः । अतो लौकिकव्यापाररहितमेव मुक्तस्य भोगकरणमित्युक्तम् । ततो द्वितीयसूत्रे 'सर्वं हि पश्यः पश्यती'तिश्रुत्युक्तप्रत्यक्षोपदेशेन तस्य जगद्व्यापारसाहित्यमाशङ्क्य, श्रुतौ सर्वपदेन न जगदुच्यते, किन्तु लीलास्थाः पदार्था एवोच्यन्ते । तेषामेव दर्शनम् । अतो न श्रुतिविरोधः । किञ्च, पूर्वोक्तश्रुत्यनन्तरं 'स एकधा भवती'ति भक्तस्य नानारूपबोधिका श्रुतिः पठ्यते । तेन नानारूपैर्नानालीलां भगवदनुभावितामनुभवतीति न लीलानामनित्यत्वम्, नापि काचिदन्यानुपपत्तिरित्युक्तम् । ततस्तृतीये सूत्रे 'आयास' इत्यागमन-

भविष्यत्त्वबोधकभगवद्वाक्यालीलानां भक्तरूपाणां चानित्यत्वमाशङ्क्य, भगवल्लीला प्राकृतविलक्षणा भगवदिच्छयैवोपपद्यमाना न कुतर्कैरन्यथा भाव्या, किन्तु श्रुत्या नित्यत्वेनोक्तत्वादलौकिकानुसरणमेव कर्तव्यमित्युक्तम् । ततश्चतुर्थसूत्रे अस्मिन् सूत्रे कुतर्केणान्यथाभानं न कर्तव्यमिति यदुक्तं तदेव श्रुतिप्रत्यक्षाभ्यां साधितम् । ततः पञ्चमसूत्रे जीवस्य भोगमात्र एव भगवत्साम्यम्, न तु सर्वथेति 'न तत्समश्चाभ्यधिकश्च दृश्यते' इतिश्रुतेर्न विरोध इत्युक्तम् । एवमत्र पञ्चसूत्र्या भगवतः परमफलत्वमर्थादुक्तं भवति । ततः षष्ठे ईदृशं परमफलं प्राप्य भक्तानां ज्ञानिनां चावृत्तिर्नास्ति । तत्र प्रमाणं च शब्दः श्रुतिरूपः स्मृतिरूपश्चेत्युक्तम् । एवं षड्भिः सूत्रैर्फलभोगप्रकारो विचारितः ॥ ५ ॥

वेदान्तीयन्यायमालामणुभाष्यानुसारिणीम् । सौकर्यायार्थबोधस्य चकार पुरुषोत्तमः ॥ १ ॥

**इति श्रीवल्लभाचार्यचरणदासस्य श्रीपीताम्बरात्मजपुरुषोत्तमस्य कृतौ वेदान्ताधिकरणमालायां चतुर्थाध्यायस्य चतुर्थः पादः ।**

**चतुर्थोध्यायः समाप्तः ॥**

---

## परिशिष्टम् ।

### श्रीगोपेश्वरकृता चतुर्थाध्यायाधिकरणमाला ।

पूर्वाध्याये साधनं निरूपितम्, इदानीं मुख्यमवान्तरं चेति द्विविधं फलमत्र निरूप्यते, कार्यकारणभावसङ्गत्यावसरसङ्गत्या च । तेन ब्रह्मणस्तत्सम्बन्धिप्राप्तेर्वा फलत्वेन ब्रह्मविचाराद्ब्रह्मसम्बन्धिन्या विचाराद्वा शास्त्रसङ्गतिर्विषयविषयिभावः । अध्यायसङ्गती तूक्ते । सूत्रपादाधिकरणानां सङ्गतयोऽग्रे स्फुटाः । तत्र प्रथमे द्विसूत्रे आवृत्त्यधिकरणे अवान्तरफलमुच्यते । तत्र प्रथमसूत्रे 'आत्मा वा अरे द्रष्टव्यः श्रोतव्य' इत्यादिवाक्यैर्विहितं श्रवणादिकं किं सकृदेव कर्तव्यमुतासकृदिति संशये, सकृदेव कर्तव्यम्, तावतैव शास्त्रार्थस्य कृतत्वसिद्धेरिति पूर्वपक्षे, छान्दोग्ये 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति वाक्येन जडजीवयोर्ब्रह्मात्मकत्वस्य नवकृत्व उपदेशाच्छ्रवणादीनामावृत्तिः कर्तव्येति सिद्धान्तः । ततो द्वितीयसूत्रे 'यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः । तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्तम्' इति स्मृतिरप्युक्तार्थे लिङ्गम् । श्रुत्यनुमापकत्वात्स्मृतिर्लिङ्गम् । अत्र च परिमार्गस्य दृष्टद्वारता क्षतदृष्टान्तेन बोध्यत इत्युक्तम् । तेनात्र श्रवणादीनां स्वेन स्वरूपेण साधनत्वेपि तेषामावर्त्यमानत्वेन रूपेण फलत्वम् । 'आत्मा वा अरे' इति वाक्ये दर्शनकथनानन्तरं श्रवणादिकथनात् । तेनात्मनः परोक्षज्ञानमप्यवान्तरं फलमिति सिध्यति । ततो द्वितीयवर्णके श्रुतौ कर्मज्ञानभक्तीनामुक्तत्वेऽपि न त्रयाणां फलतस्तौल्यम्, किन्तु ज्ञानभक्ती फलतः

उत्कृष्टे इति ज्ञापयितुं कर्मफलजाघन्यमप्यत्र बोध्यत इत्याशयेन आवृत्तिः पुनः पुनर्जन्म कर्मफलं तत्सकृदसकृद्वेति संशये, सकृदिति पूर्वपक्षे, बृहदारण्यके 'तद्यथा तृणजलायुके'त्युपक्रम्य 'एवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं तनुते, पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्यः' इत्युक्त्वा 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययं, तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण' इत्येवं पुनरुपदेशादसकृदिति सिद्धान्तः । द्वितीयसूत्रे च 'त्रैविद्या मां सोमपाः पूतपापा' इत्यारभ्य 'एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त' इत्यादिस्मृतिर्लिङ्गमित्युक्तम् ॥१॥ ततो द्वितीये त्रिसूत्रे **आत्माधिकरणे** प्रथमसूत्रे ज्ञानभक्त्योरनावृत्तिसाधकत्वेनोत्तमत्वाय यत्कर्मणो जाघन्यमावृत्तिसाधकत्वादुक्तं, ज्ञानाद्यङ्गकर्मणस्तच्छेषत्वादनावर्तकत्वं च, तच्च 'न स पुनरावर्तत' इति श्रुतिबलेनोक्तम् । सा श्रुतिः ज्ञानिनां सर्वथानावृत्तिमाहोत सावधिकींताममरशब्देन तन्निवृत्तिमिवेति संशये, सावधिकीमेवेति पूर्वपक्षे, सर्वथाऽनावृत्तिमाहेति सिद्धान्तः । एवं विद्याया अवान्तरं फलं स्वतन्त्रकर्मफलं च विचार्य ज्ञानभक्त्योः आत्मत्वेन ज्ञानान्मोक्षरूपं फलं विचारितम् । अगृह्यत्वस्य गृह्यत्वस्य च विरोधपरिहारस्तु जीवसामर्थ्येश्वरेच्छाभ्यां पुरैव कृत इति नाधिकमत्र निरूप्यम् । सर्वधर्माश्रयत्वेपि यदा यं धर्मं पुरस्कृत्य लीलां करोति तत्कार्यमेव तदा सम्पद्यते, आत्मत्वेन हितकारिस्वभावात्तस्य । ततो द्वितीयसूत्रे आत्मत्वेन ज्ञानस्य न मोक्षसाधकत्वं, आत्मेत्येवोपासीतेत्यत्र तस्योपासनार्थत्वावगतेरित्याशङ्क्य, तदाशय उच्यते । अतद्रूपे तत्त्वेनोपासनं हि प्रतीकमित्युच्यते । तथा च तादृशेन तेन मोक्षो न भवतीति श्रुत्या बोध्यते, न तु आत्मत्वेन ज्ञानान्मोक्षो न भवतीत्युच्यते । ततस्तृतीयसूत्रे 'आत्मैवेदं सर्व'मिति प्रपञ्चे आत्मदृष्टेर्मोक्षफलमुक्तम्, सा च प्रतीकरूपैव कार्यविषयककारणदृष्टित्वेनातस्मिंस्तद्दृष्टिरूपत्वादित्याशङ्क्य, प्रपञ्चस्य ब्रह्मात्मकत्वेन न सा प्रतीकरूपेत्युक्तम् ॥ २ ॥ ततस्तृतीये **आदित्याद्यधिकरणे पञ्चसूत्रे** अङ्गोपासनफलमुच्यते । तत्र प्रथमसूत्रे छान्दोग्ये 'अथ होवाच सत्ययज्ञं पौलुषि'मित्यादौ आदित्यवायुप्रभृतीनामात्मत्वेनोपासना उक्ता । तत्र प्रतीकोपासनत्वमस्ति न वेति संशये, आदित्यादीनां प्रत्येकमुपास्यश्रुतेस्तद्द्वारान्योक्तमुपासनं प्रतीकं भवितुं युक्तम् । न च सर्वत्र ब्रह्मदृष्टेर्न प्रतीकत्वमिति पूर्वमुक्तं तद्विरोधः शङ्क्यः । उक्तश्रुतिविरोधात् । न च तच्छ्रुत्यनुरोधेनेदमेवायुक्तमिति वाच्यम्, ब्रह्मण एकत्वादेकप्रकारकेणाप्युपासनेन सर्वेषां फलसिद्धेः पृथक्पृथगुक्तौ गौरवात् प्रयोजनविशेषाभावाच्च । अतः सर्वस्य ब्रह्मत्वं नाभिमतम्, किन्तु यथा आदित्यादीनां प्रतीकत्वम्, तथा सर्वस्यापीति प्रतीकोपासनादेव तत्तत्फलमिति पूर्वपक्षे, वैश्वानरविद्यायां 'तस्य मूर्धैव सुतेजा' इत्यादिनादित्यादीनामङ्गतोक्ता । अङ्गस्य च ब्रह्मत्वान्नेयं प्रतीकोपासनेति । तेनात्र फलदानोपपादनेन भक्त्यङ्गभूतमाहात्म्यं ज्ञापितात्फलदात् भगवत एव फलत्वमिति दृढीकृतम् । द्वितीयसूत्रे च बहिःप्राकट्यबोधनेन

पूर्वोक्त एव सिद्धान्तः ससाधनः प्रकाशितः । ततस्तृतीये भावनौत्कट्यदशायां सततस्मृतिरूपध्यानादपि हृदि प्रकट सन्नासीनो भवतीत्युक्तम् । तेन स्थैर्यमुक्त भवति । ततश्चतुर्थसूत्रे भक्तेच्छामपेक्ष्याचलत्व चकाराचलत्वमपीत्युक्तम् । तथा च पूर्व भक्तेच्छया प्राकट्य निरूपितम्; अत्र तु तदिच्छानुसारेण लीलानामपि तदुक्तम् । ततः पञ्चमे सूत्रे 'अथ ह वाव तव महिमे'ति स्मृत्युक्तमपवर्गान्तविस्मरणरूप फलान्तरमप्युक्तम् । अथवा 'अह भक्तपराधीन' इत्यादिस्मृतिः पूर्वोक्ते प्रमाणमित्युक्तम् । तेनाङ्गोपासनफलं निर्णीतम् ॥ ३ ॥ तत **एकसूत्रे यत्रैकाग्रताधिकरणे** बहिराविर्भावो येभ्यो येभ्यश्चान्तस्तेषा तेषा भावद्वैविध्य सूचितम्, पूर्वनाधिकरणे तत्र तयोर्द्वैविध्ये भावभेद एव हेतुरिति तयोर्मिथस्तारतम्यमस्ति, किंवा भावविषयस्य रूपस्यैक्यात्तत् न वेति सशये, विषयैक्येपि प्राकट्यप्रकारभेदस्य भावभेदकृतत्वादस्तीति पूर्वपक्षे, उक्तभक्तयोर्मध्ये यस्यैकाग्रता तत्र भक्तेन्तस्त्वबहिष्कृतविशेषाभावात्तयोर्भक्तयोरपि न तारतम्यम्, किन्तु तौल्यमेव । तेनानैकाग्र्ये एव भावतारतम्यम्, तेन तयोस्तारतम्यम्, न तु प्राकट्यप्रकारभेदादिति साधितम् ॥४॥ ततो **ह्येकसूत्रे पञ्चमे आप्रायणाधिकरणे** उक्तेर्थे एव अन्त प्राकट्यवतो यदा बहि सवेदने सत्यपि पूर्वानुभूतभगवत्स्वरूपानुभवस्तदा पूर्वमन्तरन्वभूवमधुना बहिरनुभवामीत्यनुव्यवसायो भवति न वेति सशये, देशकालात्मकविशेषणप्रयुक्तवैलक्षण्याद्भवितुमर्हतीति पूर्वपक्षे, एकैवावस्था सार्वदिकी, न तु बहि प्राकट्येपि बहिष्ट्वानुसन्धानमिति सिद्धान्त । तत प्रायणरूपे परमफले सायुज्यमवश्य भविष्यतीति सशये, प्रभुणा समभालापावलोकनश्रीचरणनलिनस्पर्शादिक दृष्टमेव फलम्, नत्वदृष्ट सायुज्यमिति अनुप्रसङ्गान्निर्णीतम् । तेन पुष्टिमार्गीयस्य फल निरूपितम् ॥५॥ ततः **षष्ठे चतुःसूत्रे तदधिगमाधिकरणे** प्रथमसूत्रे मर्यादामार्गे ज्ञानानन्तर भक्तिरिति तादृशज्ञानार्थं चित्तशुद्धि । चित्तशुद्ध्यर्थ कर्म । तत्र 'नाभुक्त क्षीयते कर्मे'ति वाक्यादभुक्त न क्षीयत इति भोगो वक्तव्य । एव च भोगानुकूलकर्मणा स्वसजातीयकर्मजननात्तत्सन्ताने चित्तशुद्ध्यभाव , तेन च ज्ञानाभावाद्भक्त्यभावे मुक्त्यभाव इति पूर्वपक्षे, ज्ञानेनैवोत्तराघस्यानुत्पाद , पूर्वाघस्य च नाशः, तेन मुक्तिरिति सिद्धान्तः । ततो द्वितीयसूत्रे पुण्यस्याप्यसश्लेष उक्त । ततस्तृतीयसूत्रे उभयकर्मनाशे देहनाशापत्त्या प्रवचनानुपपत्तिस्तदभावे च ज्ञानभक्त्योरप्यनुत्पाद इत्याशङ्क्य, अनुत्पादितशरीरे एव पुण्यपापे ज्ञानेन नाश्येते । तेन देहजनककर्मसद्भावान्न तदनुपपत्ति । यद्यपि सर्वकर्मनाशः श्रुत्युक्तस्तथापि भगवदिच्छातोऽय सङ्कोचः । ततश्चतुर्थसूत्रे वशिष्ठादिभिर्ब्रह्मविद्भिः कर्मकरणादुत्तरस्य कर्मण सश्लेषमाशङ्क्य, तेषा तत्तु प्रारब्धनाशायैवेति । येषामग्निहोत्रादिकारक प्रारब्धमस्ति तैरेव भोगमत्तन्नियते, न तु सनकादितुल्यैरतो न तेनादृष्टान्तरसश्लेष इत्युक्तम् ॥ ६ ॥ तत **सप्तमे त्रिसूत्रे अतोन्याधिकरणे** प्रथमसूत्रे पुष्टिमार्गीयस्य विनैव भोग प्रारब्ध नश्यत्युत भोगेन वेति सशये, प्रारब्धस्य भोगैकनाश्यस्वभावत्वात्त विना न नश्यतीति

पूर्वपक्षे, पुष्टिमार्गीयाणां आरब्धाप्रारब्धे 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति श्रुतेर्भोगं विनैव नश्यतीति सिद्धान्तः। ततो द्वितीयसूत्रे 'यदेव विद्यये'ति श्रुतौ ज्ञानिना कृतस्य कर्मणो वीर्यवत्तोक्त्या ज्ञानिनोपि कर्मफलस्यावश्यं वाच्यत्वेन कर्मश्लेषमाशङ्क्य, अन्यकृतात्कर्मणस्तत्कृतकर्म वीर्यवत्तरमतः कर्मान्तरं निवार्य स्वयमपि निरिन्धनवह्निवन्नश्यतीति न तेन श्लेष इत्युक्तम्। ततस्तृतीयसूत्रे पुष्टिमार्गीयफलप्राप्तिप्रतिबन्धाभावमुक्त्वा तत्प्राप्तिप्रकार उच्यते। इतरे अग्रे आप्यालौकिकदेहाद्भिन्ने स्थूललिङ्गशरीरे क्षपयित्वा पूर्वोक्तरीत्या कर्मनिवर्तनेन दूरीकृत्य अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन सम्पद्यते इत्युक्तम्। तेनास्मिन्पादे ब्रह्मज्ञानवतस्तत्तन्मार्गभेदात्प्रकारभेदेन कर्मक्षये स्थूलसूक्ष्मशरीरक्षपणोत्तरं ब्रह्मप्राप्तिरुक्ता भवति ॥ ७ ॥

## इति श्रीविठ्ठलमण्डनगोकुलोत्सवात्मजगोपेश्वरविरचितायामधिकरणमालायां चतुर्थाध्यायस्य प्रथमः पादः ॥

---

इदानीं स्थूलशरीरत्यागस्य स्फुटत्वात्सूक्ष्मशरीरत्यागप्रकारोऽस्मिन्पाद उच्यते। तत्र **प्रथमे चतुःसूत्रे वाङ्मनोधिकरणे** प्रथमसूत्रे भगवत्कृपारूपस्य साधनद्वारा तद्रूपस्य वा साधनस्य भेदात् द्विधा सद्योमुक्तिः। तत्र प्रथमायां किं प्राणा युगपल्लीयन्त उत क्रमेणेति संशये विलंबे हेत्वभावाद्युगपदेवेति प्राप्ते क्रमेणेति वक्तुं वाङ्मनसि लीयत इत्युक्तम्। ततो द्वितीयसूत्रे अन्येन्द्रियाणां मनसि लय उक्तः। ततस्तृतीयसूत्रे सर्वेन्द्रियविशिष्टमनसः प्राणे लय उक्तः। ततश्चतुर्थेसूत्रे सर्वेन्द्रियविशिष्टमनोविशिष्टस्य प्राणस्य हृदि प्रत्यक्षविषये भगवति लय उक्तः। एवं पुष्टिमार्गीयवागादिलयप्रकार उक्तः ॥ १ ॥ ततो **द्वितीये द्विसूत्रे भूताधिकरणे** ननु मर्यादामार्गीयाणामपि एवमेव वागादिलय उतान्यथेति संशये एवमेवेति पूर्वपक्षे तेषां ते भूतेषु लीयन्ते न तु भगवति। ततो द्वितीयसूत्रे ननु मर्यादामार्गीयो भक्तो ज्ञानी च भवतः, उक्तनिर्णयस्तु ज्ञानमार्गीयविषय एव। भक्तं तु तादृशमपि कदाचित्पुष्टावपि प्रवेशयतीति आशङ्क्य एकस्मिन् ज्ञानिनि भक्ते वा मर्यादानियमो न किन्तूभयोरपि ॥२॥ ततस्तृतीये **नवसूत्रे समानाधिकरणे** अतीताधिकरणद्वयेन पुष्टिमर्यादास्थयोः क्रमेण वागादिलयव्युत्पादनात्तद्दार्ढ्यार्थं तास्ताः शङ्का निराक्रियन्ते। तत्र प्रथमे सूत्रे पुष्टिमर्यादयोर्न कदाचिदन्यथाभाव इत्यत्र हेतुः क इत्याशङ्का निराक्रियते। साधनक्रमेण मोचनेच्छा हि मर्यादामार्गीया मर्यादा। विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्यादा। तथा सति सदैकरूपत्वं तयोर्युक्तमिति। एवं च 'एष उ एवे'ति श्रुत्युक्तेच्छाविषय'स्ते नाधीतश्रुतिगणा' इति वाक्यविषयस्तत्तन्मार्गस्वरूपमेव हेतुः, यथैकनगरप्रापकयोर्मार्गयोस्तत्प्रापकत्वे मार्गत्वे च समानेपि कस्यचित्केवलपान्थप्रापकत्वं कस्यचित्सपरिकरपान्थप्रापकत्वं तद्वदित्युक्तम्। ततो द्वितीयसूत्रे पुष्टिमार्गीयमुक्तिदशायां मर्यादामार्गीयाया मुक्तेः संसार इत्येव

व्यपदेशो भजनानन्दानुभवाभावात्, 'नारायणपराः सर्वे न कुतश्चन बिभ्यति। स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इति वाक्यात्। ततस्तृतीयसूत्रे एतादृशवाक्यानां पुष्टिमार्गस्तुतिपरत्वमाशङ्क्य तत्र 'यतो वे'ति श्रुतिरपि प्रमाणमित्युक्तम्। ततश्चतुर्थे तर्हि ब्रह्मविदामिव तादृशानां भक्तानामपि स्वमार्गोपदेशकत्वं क्वचित् श्रूयेत, न चैवमतः पूर्वोक्तं न साधीय इति भातीत्युत्सूत्रमाशङ्क्य तत्र हेतुरुच्यते। ज्ञानिनामिव भक्तानां स्वास्थ्याभावान्नोपदेश' सम्भवति। यतस्तेषां विरहिदशा प्रियसङ्गमदशा चेति दशाद्वयमेव। तत्र पूर्वस्यास्तस्यास्तु अतिदुःसहत्वेन सर्वेषां भावानामुपमर्देन तिरोधानात् उपदेशो न सम्भवति। सङ्गमे तु पुरःप्रकटपरमानन्दस्वरूपाद्भगवत एव अन्यस्मै उपदेशो न सम्भवति। न हि भगवदग्रे उपदेश सम्भवतीत्युक्तम्। ततः पञ्चमे सूत्रे आनन्दप्राप्त्यनन्तरं विरहस्य दुःसहत्वेनाशक्यवचनत्वं, किञ्च तदानन्दतिरोभाव एव सिद्ध इति नित्यनिरतिशयसुखाभिव्यक्तिरूपादक्षरैक्यरूपाद्वा मोक्षात्कथं तस्याधिक्यमित्याशङ्क्यानन्दस्यैवाय धर्मो विरहतापरूपः इत्युक्तम्। ततः षष्ठे सूत्रे 'न पश्यो मृत्यु पश्यति न रोग नोत दुःखना'मिति दुःखनिषेधकश्रुतिविरोधमाशङ्क्य तत्र कर्मजन्यतापस्यैव निषेधो न तु कर्माजन्यविरहस्य। यदि चास्य दुःखत्वेन कर्मजन्यत्वमनुमीयते, तदा मोक्षसुखस्यापि सुखत्वेन कर्मजन्यत्वशङ्कया मोक्षसुखस्यापि विप्लव इत्युक्तम्। ततः सप्तमे लौकिकत्वस्य उपाधित्वसमर्थनाय विरहस्य कर्माजन्यस्य श्रुतिमूलकमित्युक्तम्। ततोऽष्टमे सूत्रे 'धारयन्त्यतिकृच्छ्रेणे'ति वाक्येनोपष्टम्भ च तदित्युक्तम्। ततो नवमे सूत्रे तादृशरसानुभवस्य फलत्व क्वापि न श्रुतमिति साधनत्वमस्त्वित्याशङ्क्य 'ता वा वास्तूनी'ति श्रुतावुरुमसीति काम्यत्वलिङ्गात्फलत्वमित्युक्तम्। तेन मर्यादामार्गीयतत्त्वात्पुष्टिमार्गीय तत्त्वमुत्कृष्टमिति साधितम्॥ ३॥ ततश्चतुर्थे **एकसूत्रे अविभागाधिकरणे** तादृशलीलाया नित्यत्वेन तन्मध्यपातिनां तद्दर्शनं यथा नित्य तथा तादृक्साधनाभावेपि निजानुकम्पया कदाचित्कमपि भक्त तत्र नयति चेत् तदा कंचित्काल स्थापयित्वा ततस्तं वियोजयति न वेति संशये, तोषस्य कादाचित्कत्वात् तत्साध्या स्थितिरपि तथैवेति नियोजयतीति पूर्वपक्षे, नैव वियोजयतीति सिद्धान्तः। एतेनापि लीलानित्यत्व सिध्यति। एतद्यथा तथा रश्मिमाध्यप्रकाशाभ्यामनुगन्तव्यम्॥ ४॥ तत पञ्चमे **एकसूत्रे तदोकोधिकरणे** पुष्टिमार्गीयत्रयध्यायां द्विविध सद्यो मुक्तिप्रकार च दर्शयित्वा ज्ञानमार्गीयस्य क्रममुक्तौ निर्गमनप्रकार उच्यते। हृदयाग्रप्रद्योतनपर्यन्त विद्वदविद्वतोस्तुल्य। निर्गमनमार्गः प्रकारश्च विदुषो भिन्नः। तथा हि। जीवस्थानस्य हृदयस्य यदग्र नाडीमुख तस्य ज्वलन प्रकाशन क्रियते। चक्षुरादिभिरिन्द्रियैः स्वस्वकार्यं विहाय पराडावर्तनेनैकीभूतैः, अन्यथा श्रुतिस्तेषां तेजोमात्रान्न वदेत्। तदा जीवस्तत्प्रकाशितनिर्गमनमार्ग सन् देहान्निर्गच्छति चक्षुषो वा अन्येभ्यो वा शरीरप्रदेशेभ्यः। इद च सकलजीवसाधारणम्। विदुषस्त्वेतावान्विशेषः। उपासनासामर्थ्यात् संन्यासाङ्गभगवदनुस्मृतिनैरन्तर्याच्च हृदि स्थितेन परमात्मनानुगृहीतः

सन् एकशततम्या मूर्धन्यया नाड्या निष्क्रामतीति ॥ ५ ॥ ततः षष्ठे एकसूत्रे रश्म्यधिकरणे छान्दोग्ये 'या एता हृदयस्य नाड्य' इत्यारभ्य पठ्यते 'असौ वा आदित्यः पिङ्गल' इत्यादि। अग्रे च 'अथैतैरेव रश्मिभिरूर्ध्वमाक्रमत' इति। अत्र ज्ञानिनो यथा विलक्षणा गतिरुक्ता, तथा रश्म्यनुसारित्वमपि लोकसाधारणं वा विदुष एवेति संशये, रश्म्यनुसारी विद्वानेव निःक्रामतीति निर्णयः ॥ ६ ॥ ततः सप्तमे त्रिसूत्रे निश्यधिकरणे विदुष उत्क्रमणे हार्दानुग्रहकृतविशेषवत्कालकृतविशेषोस्ति न वेति संशयेस्तीति पूर्वपक्षे, पूर्वोक्तभगवदनुस्मृतिसम्बन्धस्य देहस्थितिपर्यन्तं सत्त्वात्तत्कार्यस्यानुग्रहस्यापि तथात्वेन कालोऽप्रयोजको नापेक्षणीय इत्युक्तम्। ततो द्वितीयसूत्रे दक्षिणायनं कृष्णपक्षश्च न बाधकमित्युक्तम्। ततस्तृतीये सूत्रे ननु गीतायामुत्तरायणादिकं गत्यनुकूलत्वेनोच्यते इत्याशङ्क्य ज्ञानमार्गाद्योगमार्गो भिन्नः। तथा च योगिनमुद्दिश्यैव कालविशेषस्य गतिविशेषहेतुत्वं स्मर्यतेऽतः कालप्रतीक्षावत्यौ गती स्मार्ते स्मार्तस्यैव, न तु ज्ञानमार्गीयस्य श्रौतस्य, इतरनिरपेक्षत्वात्। तेन विद्यावतः क्रमेण मुक्तिं प्राप्नुवतोपि न साधनान्तरापेक्षेत्युक्तम्। तेनास्मिन्पादे पुष्टिमार्गीयस्य ततो मर्यादामार्गीयस्य सद्योमुक्तिप्रकारः क्रममुक्तौ निर्गमनप्रकारादिकं च दर्शितम् ॥ ७ ॥

## इति श्रीविद्वन्मण्डनगोकुलोत्सवात्मजगोपेश्वरविरचितायामधिकरणमालायां चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

अस्मिन्पादे तु तेन द्वारेण निर्गतस्य ब्रह्मप्राप्तिमार्गः तल्लोकः तत्प्राप्तिप्रकारश्चोच्यते। तत्र प्रथमे चतुःसूत्रे अर्चिराद्यधिकरणे प्रथमसूत्रे ज्ञानमार्गीयस्यैव मर्यादामार्गीयभक्तस्याप्यर्चिरादिमार्गेणैव गमनमुत सद्योमुक्तिरेव भवतीति संशयः। तत्र यथा ज्ञानिनो नियमाभावस्तथाऽत्रापीति पूर्वपक्षे ज्ञानी एव तेन मार्गेण गच्छति, भक्तस्तु प्रायशः सद्य एव मुच्यत इति सिद्धान्तः। ततश्च क्रममुक्तिबोधकतत्तदुपासनावाक्ये 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोक'मित्येवं भिन्नभिन्नपर्वकथनान्नानामार्गतास्वित्याशङ्काऽर्चिरादिनैकवचनेन नानापर्वविशिष्ट एको मार्ग इति ज्ञापनात् एक एव मार्ग इति बोधनान्निरस्तेति च। ततो द्वितीयसूत्रे वायोरप्रवेशेन मार्गभेदमाशङ्क्य संवत्सरलोकानन्तरं वायुलोको निवेशनीय इति न मार्गभेद इत्युक्तम्। ततस्तृतीयसूत्रे पूर्ववदाशङ्कायां तडिल्लोकोपरि वरुणलोको निवेशनीय इत्युक्तम्। ततश्चतुर्थेपि पूर्ववदेवाशङ्क्य वरुणलोकोपरि इन्द्रप्रजापतिलोको निवेशनीय इत्युक्तम् ॥ १ ॥ ततो द्वितीये त्रिसूत्रे आतिवाहिकाधिकरणे प्रथमसूत्रे विद्युदनन्तरं 'तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयती'त्यत्र भवति संशयः। उक्तश्रुतेर्गमयित्रैव ब्रह्मप्राप्तिरिति निश्चीयते। एवं सति यस्य वरुणादिलोकगमनं तस्य वचनाभावेन गमयितृप्राप्त्यभावात् ब्रह्मप्राप्तिर्भवति नवेति। वचनाभावेन

प्रापकाभावात् सा न भवतीति पूर्वपक्षे तत्राप्यातिवाहको भगवदीय एव ब्रह्म प्रापयति । प्रजापतिलोकोत्तर ब्रह्मलोकस्य सत्त्वात्तत्प्राप्तिरपि मार्गैक्यात् प्रापकममानव पुरुषमपेक्षतेऽतो यत्र स नोक्तस्तत्रापि सोवगन्तव्य इति । ततो द्वितीये सूत्रे अर्चिरादिमार्गगतानामपुनरावृत्तिश्रवणात् देवयाने पथि ब्रह्मविदामेवाधिकाराच्च तादृशब्रह्मज्ञानेन सद्योमुक्तिसम्भवे क्षिपिष्णूना लोकानां परप्राप्तिविलम्बजनकाना वाञ्छायां 'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च य'दित्युपक्रम्य 'सर्वं मद्भक्तियोगेन मद्भक्तो लभतेञ्जसा । स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छती'ति वाक्योक्तभक्तिसुख हित्वान्यवाञ्छायां को हेतुरित्याकाङ्क्षायां स्वसृष्टदेवयानमार्गानर्थक्यपरिजिहीर्षया काश्चिज्ज्ञानिनो भक्तांश्च व्यामोहयतीति व्यामोह एव हेतुरित्युक्तम् । ततस्तृतीये तडिल्लोकाद्वरुणलोकादिप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिस्तस्य तल्लोकसम्बन्धी ब्रह्मप्रापकः पुरुषोस्ति न वेत्याशङ्काया विद्युल्लोकस्य ब्रह्मपुरुषेणैव वरुणादिलोकगतस्यापि ब्रह्मप्राप्ति' न तु तल्लोकस्यात्, नापि पुरुष विना 'तान् वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयती'ति श्रुतेरित्युक्तम् । वृत्तो त्वितरलोकन्यायेन विद्युल्लोकस्यातिक्रान्तत्वाद्वरुणलोकादिस्थस्यैव प्राप्यत्वेनास्तीति पूर्वपक्षोप्युक्तस्तेनाधिकरणान्तरत्व सूचितम् । भाष्ये तु पूर्वपक्षो न दृश्यते । इय च वाजसनेयके ब्रह्मलोकान् गमयतीति पठ्यते । छान्दोग्ये तु ब्रह्मेति पाठभेदेन पठ्यते । तत्रायं भावः । भक्त तु वैकुण्ठलोक नयति, ते वैकुण्ठा बहुविधा इति ब्रह्मलोकानित्युक्तम् । ज्ञानमार्गीय त्वक्षरब्रह्म प्रापयतीति ब्रह्मेत्युक्तम् । तेन क्रममुक्तये मार्गो विचारितः ॥ २ ॥ ततस्तृतीये ष्टसूत्रे **कार्याधिकरणे** क्रममुक्तौ फल चिन्त्यते । तत्र प्रथमे सूत्रे 'स एतान् ब्रह्म गमयती'त्यत्र ब्रह्मपदेनाविकृत परब्रह्मोच्यत उत कार्यरूपो ब्रह्मलोक इति सशये ब्रह्मपदेन परब्रह्म नोच्यते, तस्य व्यापकत्वेन देशविशेषगमयितृत्वानपेक्षितत्वात्कार्यब्रह्मलोकोत्र वक्तव्य इति बादरिराचार्यो मन्यते इत्युक्तम् । ततो द्वितीयसूत्रे 'ब्रह्मलोकान्गमयति तेषु तेषु लोकेषु परा परावतो वसन्ती'ति श्रुतौ बहुत्वेन वासाधिकरणत्वेन च विशेषितत्वादपि कार्यरूप इत्युक्तम् । ततस्तृतीयसूत्रे उपासनाप्राप्यस्य कार्यत्वे ब्रह्मपदव्याकोपमाशङ्क्य ब्रह्मसामीप्याद्ब्रह्मत्वव्यपदेशः । तल्लोकस्थिताना ब्रह्मप्राप्तावन्यलोकाव्यवधानात्सामीप्य, तेन लक्षणया ब्रह्मपदप्रयोग इत्युक्तम् । ततश्चतुर्थसूत्रे तस्य कार्यत्वे 'आब्रह्मभवनाल्लोका' पुनरावर्तिनोऽर्जुने'ति वाक्यात्तत पुनरावर्तन्ते । यत्र तु 'न तेषामिह पुनरावृत्तिरस्ती'त्युच्यत इति कथ तस्य कार्यत्वमित्याशङ्क्य कल्पसमाप्तौ कार्यस्य ब्रह्मलोकस्य नाशे चतुर्मुखेन ब्रह्मणा सह ततोऽपि पर ब्रह्म प्राप्नुवन्ति । 'वेदान्तविज्ञानसुनिश्चितार्था सन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति श्रुतेरित्युक्तम् । तत पञ्चमे 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मान प्रविशन्ति पर पदमि'ति स्मृतिरपि प्रमाणत्वेनोक्ता । एव पञ्चसूत्र्या पूर्वपक्ष । तत षष्ठे सूत्रे गौण्या मुख्यवृत्त्यपेक्षया निर्बलत्वेन

मुख्यया वृत्त्या परमेव ब्रह्मात्रोच्यत इति 'जैमिनिसिद्धान्त उक्तः । ततः सप्तमे सूत्रे कौशीतकिश्रुतौ अग्न्यादिलोकवत्प्रजापतिलोकप्राप्तिमुक्त्वाग्रे स ब्रह्मलोकमिति ब्रह्मलोकस्य चतुर्मुखलोकातिरेकेण दर्शनान्न ब्रह्मलोकः प्रजापतिलोक इत्युक्तम्। तेन 'वेदान्तविज्ञाने'ति श्रुतेः 'ब्रह्मणा सह ते सर्वे' इति स्मृतेश्च प्रलयविषयत्वेनात्र तद्विषयाभावान्न ताभ्यां 'न स पुनरावर्तत' इति श्रुतिविरोध इति सिद्धम्। ततोऽष्टमे 'ब्रह्मविदाप्नोति पर'मित्यस्य विवरणर्चि परेणैव ब्रह्मणा सह कामभोगलक्षणा प्राप्तिः फलत्वेन सिद्धा, अतः परप्राप्तावेव श्रुतितात्पर्यमित्यस्या अपि श्रुतेर्न कार्यलोके तात्पर्यम्, किन्तु नित्यलोक इति युक्तिरुक्ता । बादरिमतं पूर्वपक्षत्वेनोक्त्वा सिद्धान्तत्वेन जैमिनिमतकथनादयमेव पक्षो वेदव्याससम्मतः।तेनादावर्चिषं ततोऽहस्ततः सितं पक्षं तत उदगयनं ततः संवत्सरं ततो वायुं ततो देवलोकं तत आदित्यं ततश्चन्द्रमसं ततो विद्युतं ततो वरुणं तत इन्द्रं ततः प्रजापतिं ततश्चामानवेन पुरुषेण ब्रह्मप्राप्तिरिति निर्णयः सम्पद्यते ॥३॥ ततश्चतुर्थे **एकसूत्रे अप्रतीकाधिकरणे** अर्चिरादिलोकप्राप्तिर्हि उपासनाफलम्। एवं सत्यमानवः पुरुषस्तान् सर्वान् ब्रह्म प्रापयत्युत कांश्चिदेवेति संशये अविशेषेण सर्वानेवेति पूर्वपक्षे, ये हि उपास्येषु भगवद्विभूतित्वं ज्ञात्वोपासते तान्नयति, न तु श्रुतिर्ब्रह्मत्वेनोपासनायाः फलसाधनत्वमाह, न तूपास्येषु ब्रह्मत्वमित्येवं ज्ञात्वोपासते तान्न वाऽसत्त्वमनुसन्धायाप्युपासनायाः फलत्वाय ब्रह्मत्वेन भावकान्नयतीति बादरायण आचार्यो मन्यते । भक्तस्य तु अमानवपुमपेक्षाभावात् स्वयमेव ब्रह्मलोकान् प्राप्नोति इत्युक्तम्। तेनात्रोपास्यानां लिङ्गबलेन ब्रह्मत्वं, तथा तदुपासने परम्परया साक्षाद्वा ब्रह्मप्राप्तिरिति सिद्धम् ॥४॥ ततः **पञ्चमे एकसूत्रे विशेषाधिकरणे** ज्ञानमार्गीयाणां भक्तिमार्गीयाणां चाविशेषेणैव परप्राप्तिरुत कश्चिद्विशेषोऽस्तीति संशये, विशेषो नास्ति, उभयोरपि परब्रह्मोपासकत्वादिति पूर्वपक्षे, 'ब्रह्मविदाप्नोति परं सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति श्रुतिर्विशेषं दर्शयति । तथा हि ब्रह्मविदक्षरब्रह्मविदाप्नोति सान्निध्यादक्षरमेवाप्नोति एतावानर्थो यो वेदेत्यन्तर्चैवोक्तः । अथ परमाप्नोतीत्यस्यार्थ उच्यते निहितमित्यादिना । अत एव मध्ये क्रियापदमुभयसम्बन्धित्वज्ञापकमुक्तम् । तत्प्राप्तिश्च मर्यादापुष्टिभेदेन द्वेधा । तत्रादौ मर्यादायामुच्यते । इहायमाशयो ज्ञेयः । 'नायमात्मा प्रवचनेने'ति श्रुत्या भगवद्वरणातिरिक्तसाधननिरासः क्रियते पुरुषोत्तमप्राप्तौ । एवं सत्यक्षरब्रह्मज्ञानस्य तत्साधनत्व उच्यमाने तद्विरोधः स्यात्, तेनैवमर्थो निरूप्यते । ज्ञानमार्गीयाणामक्षरज्ञानेनाक्षरप्राप्तिस्तेषां तदेकपर्यवसायित्वात् । भक्तानामेव पुरुषोत्तमपर्यवसायित्वात् । तथा च ब्रह्मविदं चेद्भगवान् वृणुते तदा भक्तिरुदेति । तत्प्रचुरभावे सति स्वयं तद्धृदि प्रकटीभविष्णुः स्वस्थानभूतं व्यापिवैकुण्ठं तद्गुहायां हृदयाकाशे प्रकटीकरोति तत्परमव्योमशब्देनोच्यते । तथा च गुहायां परमे व्योम्नि निहितं यो वेद स परमाप्नोतीत्यर्थः सम्पद्यते । अथ शुद्धपुष्टिमार्गेऽङ्गीकृतस्य व्यवस्थामाह—सोऽश्नुत इत्यादिना । अत्रायमभिसन्धिः । यथा स्वयम्प्रकटी-

भूय लोके लीलां करोति, तथात्यनुग्रहवशात् स्वान्तःस्थितमपि भक्तं प्रकटीकृत्य तत्स्नेहातिशयेन तद्वशः सन् स्वलीलारसानुभवं कारयतीति स भक्तो ब्रह्मणा परब्रह्मणा पुरुषोत्तमेन सह सर्वान्कामानश्नुत इति । चकारा'देवं सततयुक्ता ये' इति प्रश्ने 'मय्यावेश्य मनो ये मां' 'ये त्वक्षरमनिर्देश्यमि'त्यादिस्मृतिसङ्ग्रहः । एवं सति ज्ञानमार्गीयाणामक्षरप्राप्तिरेव, भक्तानामेव पुरुषोत्तमप्राप्तिरिति सिद्धम् ॥ ५ ॥

**इति श्रीविद्वन्मण्डनगोकुलोत्सवात्मजगोपेश्वरविरचितायामधिकरणमालायां चतुर्थाध्यायस्य तृतीयः पादः ॥**

---

द्वितीयपादे सद्योमुक्तिक्रममुक्त्योः प्रकारं दर्शयित्वा तृतीये प्राप्यस्वरूपं प्राप्तिप्रकारश्च क्रममुक्तौ दर्शितः । समासौ च ज्ञानमार्गीयभक्तिमार्गीययोः सद्योमुक्तावपि तत्क्रतुन्यायादक्षरप्राप्तिपुरुषोत्तमप्राप्तिरूपो विशेषः फले दर्शितः । इदानीं तादृशफलानुभवे प्रकारश्चिन्त्यते । तत्र **प्रथमे चतुःसूत्रे सम्पद्याविर्भावाधिकरणे** 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'त्यत्रेदं सन्दिह्यते । किमन्तःस्थित एवाश्नुत उत पुनर्जन्म प्राप्येति । 'न स पुनरावर्तत' इति श्रुतेरन्तःस्थित एवेति पूर्वपक्षे प्रभोरत्यनुग्रहवशात् स्वरूपात्मकभजनानन्ददित्सायां तत्कृत आविर्भावो मुक्तानामपि भवत्येव । भूमविद्यायां आत्मत आविर्भावतिरोभावावितिश्रावणात् । न चापुनरावृत्तिश्रुतिविरोधः । तत्रेहेतिपदेन प्रपञ्च एव तन्निषेधात् । लीलायाश्च प्रपञ्चातीतत्वात् । तेनास्यां श्रुतौ ब्रह्मणा सह भोगो जीवस्य शरीरमन्तरानुपपद्यमानस्तदाक्षिपतीत्युक्तम् । ततो द्वितीयसूत्रे आविर्भूतस्य सृष्ट्यादाविव बन्धसम्भवमाशङ्क्य 'ब्रह्मविदाप्नोति पर'मित्यत्र मुक्तिप्रतिज्ञानादाविर्भूतो मुक्त एवेत्युक्तम् । ततस्तृतीयसूत्रे ब्रह्मणा सहेत्यत्र ब्रह्मपदं सगुणपरमेव युक्तं, भोगस्य गुणसाध्यत्वादित्याशङ्क्य 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य तत्पाठाद्गुणातीतस्यैव प्रकरणमिति ब्रह्मपदं गुणातीततत्परमेव । ततश्चतुर्थसूत्रे ब्रह्मविदिति भिन्नं वाक्यं सत्यं ज्ञानमनन्तमिति भिन्नं वाक्यमतः कथं साकाङ्क्षत्वमित्याशङ्क्यैतयोर्मध्ये तदेषाभ्युक्तेति श्रुतिदर्शनादस्ति साकाङ्क्षत्वमित्युभयोरैकार्थ्यमविवादमित्युक्तम् । तेन ब्रह्मसायुज्यं प्राप्तोऽप्यतिकृपया बहिराविर्भूतो ब्रह्मणा सह सर्वान्कामानश्नुत इति पूर्वसूत्रद्वये सिद्धम् । अग्रिमसूत्रद्वये च तद्ब्रह्म न सगुण किन्तु परमेवेति सिद्धम् ॥१॥ ततो **द्वितीयेऽष्टसूत्रे ब्राह्माधिकरणे** प्रथमसूत्रे आविर्भूतो जीवः प्राकृतेन शरीरेण भजनानन्दं भुङ्क्ते उताप्राकृतेनेति संशये, भोगस्य लौकिकत्वात्तदायतनमपि प्राकृतमेव युक्तमतः प्राकृतेनेति पूर्वपक्षे, अप्राकृतेनैव सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तानश्नुते इति जैमिनिराचार्यो मन्यते । अक्षरब्रह्मणः पुरुषोत्तमायतनरूपत्वात् तदात्मकमेव शरीरं तस्य वक्तुमुचितं, न तु प्राकृतम् । ततो द्वितीयसूत्रे चिन्मात्रेण रूपेण कामान् भुङ्क्ते, न तु विग्रहेणेति औडुलो-

१ विषयवाक्यं पूर्वोक्तमेव । २ माप्योपन्यस्तश्रुत्या तथेत्यर्थं नविदं विषयवाक्यम् ।

भिराचार्यो मनुते । ततस्तृतीयसूत्रे 'कृत्स्नः प्रज्ञानघनः' 'ब्रह्मविदाप्नोति परम्' इति श्रुत्योरविशेषेण प्रामाण्याद्ब्राह्मत्वचिन्मात्रत्वाभ्यां युक्तेन शरीरेणेति बादरायणाचार्यो मन्यत इति सिद्धान्त उक्तः । ततश्चतुर्थे तादृशविग्रहप्राप्तौ ब्रह्मसङ्कल्परूपो हेतुरुक्तः । तथा च यस्य तादृशसङ्कल्पविषयत्वं तस्य तादृशविग्रहप्राप्तिर्न सर्वस्य, 'यमेवैष वृणुते तेन लभ्य' इति श्रुतेरित्युक्तम् । ततः पञ्चमे सूत्रे पुष्टिमार्गीयस्यैव तादृशविग्रहदाने अनन्याधिपतित्वरूपो हेतुरुक्तः । ततः षष्ठे सूत्रे 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्'दिति श्रुतिर्ब्रह्मविदो द्वितीयज्ञाननिषेधमाहेति कामभोगासम्भवात्तदाक्षेप्यो देहोपि न सम्भवतीति बादरिराचार्यो मनुत इत्युक्तम् । ततः सप्तमसूत्रे 'ब्रह्मविदाप्नोति परम्' इति श्रुत्या ब्रह्मज्ञानं परप्राप्तिसाधनमित्युच्यते, 'नायमात्मे'ति श्रुत्या तु वरणं तत्प्राप्तिसाधनमित्युच्यते । तथे'हैव समवनीयन्ते ब्रह्मैव सन्ब्रह्माप्येती'ति श्रुत्या लयः फलमुच्यते, सोश्नुत इत्यत्र कामभोगः फलमुच्यते । एवं सति श्रुतिविरोधपरिहाराय ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरप्राप्तिः सा लयरूपा । पुष्टिमार्गीयस्य तु भक्तस्य 'सोश्नुत' इत्यादिनोक्ता पुरुषोत्तमप्राप्तिरूपा । सा च वरणेन तत्सहितया भक्त्या वेति श्रुतिव्यवस्थया पुष्टिमार्गीयस्य भक्तस्य भोगसाधनभूतविग्रहो निष्प्रत्यूहः । 'तत्केन कं पश्ये'दिति श्रुतिस्तु मर्यादामार्गीयस्य ब्रह्मज्ञानसामयिकीमवस्थामाहेति जैमिनिः शरीरसद्भावं मनुते । ततोष्टमे सूत्रे तच्छरीरं कीदृशमित्यपेक्षायां 'आत्मतः प्राण आत्मत आशे'त्यादिना प्राणाशास्मराकाशतेजोआविर्भावतिरोभावान्नबलविज्ञानध्यानचित्तसङ्कल्पमनोवाग्नामग्रकर्मैतत्सर्वान्तानामुक्तत्वाद्ब्रह्मजन्यं केवलानन्दप्रधानमिति बादरायणाचार्यो मन्यते । तथा च मुक्तस्य यच्छरीरं तदेवात्मजन्यत्वेन भूताजन्यत्वादशरीरं, विषयश्रुतौ तदायतनत्वाच्च शरीरमित्युभयविधमिति न पूर्वोक्तश्रुतिविरोधः । नन्वेकस्य मुक्तजीवदेहस्य विरुद्धोभयधर्मवत्त्वं कथमिति चेन्न । द्वादशाहस्य 'यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेते'ति यजतिचोदनया द्विरात्रादिवदहीनत्वं, 'द्वादशाहमृद्धिकामा उपेयु'रित्युपैतिचोदनया च सत्रत्वं तद्वदविरोधादित्युक्तम् । तेनास्मिन्नधिकरणे सम्पद्याविर्भावसूत्रोक्तो मुक्तस्याविर्भावो विचारितः ॥२॥ ततस्तृतीये **द्विसूत्रे तत्त्वभावाधिकरणे** आत्माप्रकरणादिति सूत्रद्वयोक्तब्रह्मस्वरूपं विचार्यते । तत्र प्रथमसूत्रे भगवच्छरीरे अप्राकृतत्वं निर्णीयते । स्वप्ने यथा वासनावशादविद्यमानानामप्यर्थानां दर्शनं भवति तथा भगवदिच्छावशात्तत्रापि प्राकृतानां व्रणश्रमादीनां दर्शनमिति ज्ञेयम् । भगवान् आसुराणां प्राकृतगुणे तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन् प्राकृतत्वबुद्धिसम्पादनाय तादृशीमिव लीलां प्रदर्शयत्यतो न प्राकृतत्वशङ्कागन्धोप्यत्र । भगवति विपरीतलीलादर्शनं तु आसुरव्यामोहाय । 'निर्दोषश्चेत्कथं विष्णुर्मनुष्येषु प्रजायते । चिन्ताश्रमव्रणाज्ञानदुःखयुग्दृश्यते कथम् । एवं मे संशयो ब्रह्मन् हृदि शल्य इवार्पित' इति नारदप्रश्ने 'स्त्रीपुंमलानुपङ्कात्मा देहो नास्य विजायते । किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ।

तथाप्यासुरमोहार्थं परेषां च क्वचित् क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क्व व्रणादि क्व चाज्ञानं स्वतश्चाचिन्त्यसद्गुणे । दौर्लभ्याचैव मोक्षस्य दर्शयेत्तानजो हरिः । कृष्णो ह्यत्यक्तदेहोपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृतिम्' इति ब्रह्माण्डपुराणे ब्रह्मवाक्येभ्य इत्युक्तम् । ततो द्वितीयसूत्रे एवमन्येषामपि धर्माणां दर्शनमस्त्वित्याशङ्क्य 'लोकवत्तु लीलाकैवल्य'मिति न्यायेन ते सन्त एव प्रतीयन्ते, ये रिंगणादिलीलासु परिच्छिन्नत्वादयः तेपां कैवल्य एव प्रवेशश्चेत्युक्तम् ॥ ३ ॥ ततश्चतुर्थे द्विसूत्रे प्रदीपाधिकरणे प्रथमसूत्रे ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा सह अतादृशस्य भक्तस्य भोगकरणं सम्भवति नवेति संशये 'न तत्सम' इति श्रुत्या ब्रह्मसाम्यस्य क्वाप्यभावान्न सम्भवतीति पूर्वपक्षे भगवांस्तस्मिन्नाविशति यदा तदाऽयमपि तथैव भवतीति ब्रह्मावेशेन तौल्यसम्पादनात्सर्वमुपपद्यते । यथा प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायां वर्त्यामर्वाचीनायामाविष्टः स्वसमानकार्यक्षमां तां करोति, स्नेहाधीनस्थितिश्च भवति स्वयं तथात्रापीत्यर्थः । तथा च श्रुतिः 'भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधा निविष्ट' इति । न चात्रान्तर्यामिरूपेण प्रवेशः शङ्कनीयः । तस्यैकविधत्वेन बहुधेतिपदव्याकोपात् । अतः 'सोश्नुत' इति श्रुत्युक्तफलभोगो यथा भवति तदनुरूपो यः प्रवेशः सोत्र बहुधेति पदेन अभिप्रेयते । अत एव देवपदम् । स्वरूपानन्ददानाद्भावोद्दीपनात् पूतनादिमुक्तिदानेन स्वमाहात्म्यद्योतनाद्वैकुण्ठादिस्थितेश्च । तदुक्तं निरुक्ते 'देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देव' इति । किञ्च, भक्तानां कामभोजनार्थं क्रीडाकरणात्क्रीडायामेव जयेच्छाकरणाद्भक्तैः सह व्यवहारकरणाद्भक्तेषु स्वमाहात्म्येच्छादिद्योतना'न्न पारयेहं स्वादृशीं प्रणयिनी'मित्यादिभिः स्तुतिकरणाद्भक्तप्रतिपत्तिदर्शनेन कालीयदमनादौ मोदकरणात् तेष्वेव भक्तिमदकरणात् ते स्वप्नेपि प्रियमेव पश्यन्तीति स्वप्नकरणात्तेषां कान्तिकरणादिच्छाकरणाद्वा तन्निकटे गमनादपि देवः । तदुक्तं धातुपाठे 'दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु' इति । ततो द्वितीयसूत्रे तादृशभोगाङ्गीकारे 'न तदश्नोति कश्चन न तदश्नोति कश्चन' इति श्रुतौ भोगाभावकथनात्तद्विरोधमाशङ्क्य सुषुप्तौ ब्रह्मप्राप्तौ च ब्रह्माविर्भावात् सुषुप्तिरस्या विषयः, न तु ब्रह्मप्राप्तिरिति विषयभेदान्न श्रुत्योर्विरोध इत्युक्तम् ॥ ४ ॥ ततः पञ्चमे षट्सूत्रे **जगद्व्यापाराधिकरणे** प्रथमसूत्रे ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुतमुत नेति संशये भोगस्य सर्वत्र लौकिकव्यापारयुतत्वादिदमपि तद्युतमिति पूर्वपक्षे 'ब्रह्मविदाप्नोति परम्' इति मुक्तेः प्रकरणात् 'न यत्र कालोनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान्प्रधान'मिति वाक्याज्जगतोसन्निहितत्वाच्च लोकसम्बन्धिव्यापाररहितमित्युक्तम् । ततो द्वितीयसूत्रे 'सर्वं ह पश्यः पश्यती'ति मुक्तिप्रकरणे सर्वविषयकदर्शनमुच्यते इति मुक्तस्य जगद्व्यापाराराहित्यं नोपपद्यते इत्याशङ्क्यात्र सर्वपदं लीलासम्बन्धि यत्सर्वं तत्परं,

सर्वे ब्राह्मणा भोजयितव्या इतिवदिति जगद्व्यापारराहित्यं सूपपन्नम्। तेन मुक्तिप्रकरणप्रवेशाल्लीलानामपि नित्यत्वं सूचितम्। ततस्तृतीयसूत्रे लीलाविशेषणीभूतानां तत्तद्देशतत्तत्कालतत्तद्भक्तदेहानां नित्यत्वेन 'श्वस्त्वद्गृहमायास' इति प्रभुणोक्ते तदाशया तस्य भक्तस्य स्थितिर्नोपपद्यते। लीलानां नित्यत्वेन द्वितीयदिनरूपस्य कालस्य तदागमनस्य पूर्वदिवस उक्तिसमयेपि सत्त्वात्। तथा श्व इति प्रभूक्तिरपि तत एव नोपपद्यत इत्याशङ्क्य 'सर्वमाप्नोति सर्वशः' इति श्रुतिरेकस्यैव भक्तस्य सर्वैः प्रकारैः सर्वलीलारसाप्तिं वदति। तथा चैतच्छ्रुतिप्रामाण्याधरस्वरूपं प्रति 'श्वस्त्वद्गृहमायास' इति वदति तस्य स्वगेहे प्रथमदिने भगवत्स्थितिज्ञानं न भवति। यथा नित्यव्यापकशब्दवादिजैमिनीयमते व्यञ्जकस्य वायोर्ध्वनेर्वाऽभावेन न वर्णात्मकशब्दस्य सर्वत्र सदा ज्ञानं, तथात्र लीलादिव्यञ्जकभगवदिच्छाभावेन न भगवत्स्थित्यादिज्ञानं भवतीत्युक्तम्। ततश्चतुर्थे सूत्रे एतद्रूपे युक्तिगम्यत्वाभाव इत्याशङ्क्य 'नैषा तर्केण मतिरपनेया, परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च'त्यादिश्रुतिः 'अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत्' 'न हि विरोध उभयं भगवती'ति स्मृतिश्च तमेवार्थमाहेतीष्टप्राप्तिरित्युक्तम्। तेन लीलाविशिष्टमेव ब्रह्म परमफलं 'रसो वै सः रसꣳह्येवायं लब्ध्वानन्दी भवती'ति श्रुतेश्चेति साधितम्। ततः पञ्चमे सूत्रे लीलाविशिष्टस्यैव परमफलत्वे हेत्वन्तरमुच्यते। सोऽश्नुत इति श्रुतौ भक्तस्य सर्वकामभोगे ब्रह्मणः सहभावः श्राव्यते। स च भोगमात्रे, भोग एव यत्साम्यं भक्तानुरूपत्वेन तत्तौल्यं तस्य ज्ञापकम्। अतोपि फलं लीलाविशिष्टं ब्रह्मैवेति सिद्धम्। मात्रपदेन 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुतिविरोधोपास्तः। ततः षष्ठे सूत्रे कर्मफलभोगानन्तरमावृत्तिवदत्राप्यावृत्तिर्भविष्यतीत्याशङ्क्य 'न तेषां पुनरावृत्तिरस्ती'ति श्रुतेर्ज्ञानिनां न सा, 'यमेवैष वृणुत' इति श्रुतेर्वरणलभ्यः पुरुषोत्तमः फलं, स चाक्षरात्परतः पर इति श्रुतेरक्षरात्परस्तत्प्राप्तिर्ब्रह्मविदित्यनेन बोध्यते। अत इदं वाक्यं परप्राप्तिप्रकाशनसामर्थ्येन भक्तानामनावृत्तिं बोधयतीत्युक्तम्।

अत्र मायावादिनो मोक्षे भोगं नाङ्गीकुर्वन्ति, ते त्वेवं निरसनीयाः। 'ससम्बोधं मोक्षं श्रुतिसिद्धं निश्चित्याचार्येणायं विभागो दर्शितस्तमिमं नास्तिक्यमवलम्ब्य भ्रान्त्या वा सूत्रार्थान्यथाकरणेन मान्यथन्तु। श्रुतीनां नार्थवादत्वम्, सर्वत्रार्थवादत्वप्रसङ्गात्। निःसम्बोधे तु मोक्षे न प्रेक्षापूर्वकारी प्रवर्तते। संसारावस्थायां तावद्देवलोकादिषु पर्यायेण सुखतारतम्यं लभन्ते, मुक्तः पुनः सुषुप्तवन्न किञ्चित्। स्वरूपचैतन्यं तु विद्यमानमप्यसत्समेव। न हि तच्चैतन्यान्तरेण संवेद्यते। तस्यैवाभावात्। न च स्वचैतन्यतः संविदस्तु। चैतन्यव्यतिरिक्तसंविदनभ्युपगमात्। अभ्युपगमे च भेदप्रसङ्गेन मायावादहानिरेव स्यात्। ससम्बोधे तु मोक्षे सर्वमाविर्भूतं सल्लक्षणं बोधस्य रूपम्। मनः सर्वज्ञं सर्वशक्तिभिन्नाभिन्नरूपं च। तेन तदवगतिर्नातोन्यथेति'। 'अत्रैतत्सिद्धम्। ज्ञानमार्गीयाणां तद्रीत्याऽदृश्यत्वादिगुणकाक्षरोपासने तत्क्रतुन्यायेन तादृशेऽक्षरे ब्रह्मैव सन् ब्रह्माप्येतीति श्रुत्यु-

क्तौ लयः। अक्षरस्य 'तद्धाम परमं मम' इति वाक्योक्तभगवद्धामत्वज्ञानपूर्वकं नित्यभगवल्लोकत्वेन भगवदभिन्नत्वेन दहराद्युक्तरीत्योपासने यथाधिकारं सालोक्यादिचतुष्टयप्राप्तिः। आदित्याद्युपासनानामङ्गोपासनात्वादर्चिरादिक्रमेण गत्याऽमानवेन पुरुषेण भगवल्लोकप्राप्तिरैश्वर्यादिभोगश्च। उपासनायां मर्यादाभक्तिसाहित्ये वैकुण्ठादिलोकेषु भगवत्सेवकत्वमधिकम्। तदा भगवदनुभवः। तत्रापि भक्तेरुत्कटत्वे तु भगवच्चरणे कौस्तुभादौ वा प्रवेशेन भगवत्सायुज्यम्। अनुग्रहविशेषेण पुष्टिभक्तौ तु 'भक्त्या मामभिजानाति' इत्युक्तरीत्या स्वस्मिन्प्रवेश्य भूमविद्योक्तरीत्या पुनः पृथगाविर्भाव्य भजनानन्दानुभावने 'सोऽश्नुत' इति श्रुत्युक्तरीतिकं भोगं कारयतीति'।

आचार्यकृपयैवायमध्यायार्थः प्रकाशितः। अतो विशेषजिज्ञासा प्रकाशेन प्रपूर्यताम् ॥ १ ॥
फलमालामलब्ध्वास्य रचितां पुरुषोत्तमैः। कृता गोपेश्वरेणेयं नातो व्यर्थः परिश्रमः ॥ २ ॥

इति श्रीविद्वन्मण्डनगोकुलोत्सवात्मजगोपेश्वरविरचितायामधिकरणमालायां चतुर्थाध्यायस्य चतुर्थः पादः ॥



# मुद्रितपुस्तकानि ।

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १- ०-० |
| २ | निरोधलक्षणम् । पञ्चविवरणसमेतम् । | रु. १- ०-० |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । | रु. १- ०-० |
| ४ | जलभेदः । चतुर्विवरणसमेतः ।<br>पञ्चपद्यानि । विवरणद्वयसमेतानि ।<br>सेवाफलम् । विवरणत्रयम् । | रु. १- ०-० |
| ५ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| ६ | तैत्तिरीयोपनिषद्भाष्यम् । जयगोपालभट्टकृतम् । | रु. १- ०-० |
| ७ | शृङ्गाररसमण्डनम् । श्रीविट्ठलेश्वरप्रकटितम् । | रु. २- ८-० |
| ८ | श्रीमधुराष्टकम् । पञ्चविवरणसमेतम् । | अमूल्यम् । |
| ९ | प्रेमामृतम् । श्रीविट्ठलेश्वरकृतविवृतिसमेतम् ।<br>परिवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०- ८-० |
| १० | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १- ०-० |
| ११ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २- ०-० |
| १२ | त्रिविधनामावली । टीकासमेता । | रु. १- ४-० |
| १३ | श्रीमती टिप्पणी । श्रीमद्विट्ठलेश्वरप्रणीता । | रु. २- ०-० |
| १४ | रासपञ्चाध्यायीमकाशः । | रु. १- ०-० |
| 15 | Discuss how far S'aṅkaracharya truly represents the view of the author of the Brahma-Sûtras. ( Zala Vedanta prize Essay ) | Rs. 1 0 0 |

प्रापणस्थानम्—

१. चुनीलाल बुकसेलर, बडामंदिर भूलेश्वर, मुंबई.

२. नडीयाद पुष्टिमार्गीय पुस्तकालयः, नडीयाद.

३. पंडित मुख्याजी गोकुलदासजी, श्रीविट्ठलनाथ पाठशाला, कोटा, राजपुताना.

४. पंडित गट्टूलालजी पाठशाला, फेणिवाडीस्ट्रीट भूलेश्वर, मुंबई

Printed by Ramchandra Yesu Shedge, at the 'Nirnaya sagar' Press, 23, Kolbhat Lane, Bombay.

Published by Mulachandra Tulsidas Telivala B. A., LL. B., Vakil, High Court, Khakkar Buildings, C. P. Tank Road, Girgaon, Bombay

श्रीकृष्णाय नमः ।

# श्रीमद्भागवतप्रथमस्कन्ध-
# श्रीसुबोधिनीप्रकाशः ।

श्रीमद्गोस्वामिश्रीमत्पुरुषोत्तमचरणविरचितः ।

सुरतिस्थश्रीमद्गोस्वामिश्रीव्रजरत्नचरणप्रेरणया 'सुरतना शेठ गंगाराम
व्रजदास भरतीआ' इत्यस्य द्रव्येण 'भृगुपुरस्य मूलचन्द्र
तुलसीदास तेलीवाला बी. ए., एल्. एल्. बी.
वकील हाइ कोर्ट' इत्यनेन संशोध्य
'गुजराती न्यूस' मुद्रणालये
मुद्रयित्वा प्रकटीकृत ।

श्रीवल्लभाब्दा ४४८. संवत् १९८३.

मूल्यमेकमुद्रिका।

# मुद्रितपुस्तकानि ।

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १- ०-० |
| २ | निरोधलक्षणम् । पञ्चविवरणसमेतम् । | रु. १- ०-० |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । | रु. १- ०-० |
| ४ | जलभेदः । चतुर्विवरणसमेतः ।<br>पञ्चपद्यानि । विवरणद्वयसमेतानि ।<br>सेवाफलम् । विवरणत्रयम् । | रु. १- ०-० |
| ५ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| ६ | तैत्तिरीयोपनिषद्भाष्यम् । जयगोपालभट्टकृतम् । | रु. १- ०-० |
| ७ | शृङ्गाररसमण्डनम् । श्रीविठ्ठलेश्वरप्रकटितम् । | रु. २- ८-० |
| ८ | श्रीमधुराष्टकम् । पञ्चविवरणसमेतम् । | अमूल्यम् । |
| ९ | प्रेमामृतम् । श्रीविठ्ठलेश्वरकृतविवृतिसमेतम् ।<br>परिवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०- ८-० |
| १० | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १- ०-० |
| ११ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २- ०-० |
| १२ | त्रिविधनामावली । टीकासमेता । | रु. १- ४-० |
| १३ | श्रीमती टिप्पणी । श्रीमद्विठ्ठलेश्वरप्रणीता । | रु. २- ०-० |
| १४ | रासपञ्चाध्यायीप्रकाशः । | रु. १- ०-० |
| 15 | Discuss how far S'ankaracharya truly represents the view of the author of the Brahma-Sûtras. ( Zala Vedanta prize Essay ) | Rs. 1 0 0 |

प्रापणस्थानम्—

१. चुनीलाल बुकसेलर, बडामंदिर भूलेश्वर, मुंबई.

२. नडीयाद पुष्टिमार्गीय पुस्तकालयः, नडीयाद.

३. पंडित मुख्याजी गोकुलदासजी,
श्रीविट्ठलनाथ पाठशाला, कोटा, राजपुताना.

४. पंडित गट्टूलालजी पाठशाला, फेणिवाडस्ट्रीट भूलेश्वर, मुंबई.

Printed by Ramchandra Yesu Shedge, at the 'Nirnaya sagar' Press, 23, Kolbhat Lane, Bombay

Published by Mulachandra Tulsidas Telivala B A , L L B , Vakil, High Court, Khakhar Buildings, C. P. Tank Road, Girgaon, Bombay

दीनां साधनभक्तीनां साक्षान्मोक्षसाधनत्वं ज्ञात्वा तान्त्रिकीदीक्षापूर्वकं विहितत्वेन कृतं यदुपासनामार्गीयं श्रवणादिनवकं तत्पूर्वोक्तयज्ञवत् भूतसंस्कारकमेव जातमिति तस्य यज्ञस्य स्वव्यापारभूतदेवाधीनानि देहजनकानि भूतानीति विचार्यायोग्यदेहनिष्पादनार्थं देवसम्बन्धं प्राप्य पञ्चाग्निविद्योक्तहोमरूपेण स यज्ञस्तिष्ठति, तथा पूर्वोक्तनवकमपि सम्बन्धिनां निषेक्तृपोषकरूपाणां पित्रादीनां भक्तत्वे सति तद्द्वारा भगवदीयशरीरनिष्पादनार्थं चरणामृतचरणरेणुरूपेण भूतानि संस्कुर्वत् भगवच्चरणे सम्बन्धं प्राप्य तिष्ठतीति भक्तानां तादृशपुण्यश्रवणादिकृतं तत्सम्बन्धि तादृशशरीरं निष्पादयितुं चरणामृतचरणरेणुसम्बन्धिनं साक्षात्सेवायोग्यं निष्पादयितुं स्थितस्य नवकस्य चरणप्राप्तेः पूर्वमेव तत्प्राप्तिसाधकत्वं चरणामृतचरणरेणुसम्बन्धप्राप्तिसाधकत्वं गङ्गाया व्यासः सूतश्च वदति, तेन तस्याः तादृशसामर्थ्यमित्यर्थः । भक्त्योरिति । विहिताविहितभक्त्योः । सेशानिति । अस्मिन् पक्षे उभयत्रेत्यस्य स्थितिदशायां संहारदशायां चेत्यर्थो बोध्यः ॥ ६ ॥

इत्थं व्यवच्छिद्येत्यत्र । अन्यथा स्यादिति । आधिदैविकरूपानाविर्भावेन स्वविचारितकार्यानुपयोगि स्यात् । आध्यात्मिकस्येत्यादि । अन्तः-

१-१९-७

करणनिष्ठपापादेर्बलिष्ठत्वेन पूर्वोक्तं प्रायोपवेशनमित्यर्थः । ग्रहवदित्यादि । यथा 'ग्रहं सम्मार्ष्टी'ति सम्मार्गवाक्ये श्रूयमाणाप्येकत्वसङ्ख्या, ग्रहान्तराणामुत्तरत्र होमादिकर्मणि विनियोगार्थं उद्देश्यगतत्वादविवक्षितेत्याद्रियते, तथात्रापि चरणान्तरस्य ध्यानोपयोगार्थमविवक्षितेत्यर्थः । अविवक्षितत्वस्य फलमाहुः तेनेत्यादि । पूर्वशेषत्वमिति । सेवायोग्यशरीरप्राप्तिशेषत्वम् । अनन्यभावत्वकथनप्रयोजनमाहुः प्रायेत्यादि । अपेक्षितत्वादिति । पूर्वश्लोकद्वये कर्मत्वेन शुद्धिजनकत्वादिना च तथात्वात् । आज्ञयेति । गृहमेधे पुत्रादीनामाज्ञादानेन ॥ ७ ॥

तत्रेत्यत्र । कालसामीप्यमिति । यस्मिन् काले प्रायोपवेशं कृतवान्, तदैवेत्यर्थः । पुनर्बोधनव्यावृत्त्यर्थमिति । एवं कथाकरणार्थं यत्पुनर्बोधनं

१-१९-८

तद्व्यावृत्त्यर्थम् । शिष्टाचारदर्शनादेव तत्सिद्धेरिति ॥ ८ ॥

अत्रिरित्यत्र । अन्यो वेति । कृपस्य शारद्वतत्वेन प्रसिद्धेर्गौतमस्याग्रे उक्तत्वाच्च तथेत्यर्थः । भगवद्भक्तान्ता इति । नारदान्ताः । तेष्ववान्तरविभाग-

१-१९-९

माहुः अथेत्यादि ॥ ९ ॥

अहो इत्यत्र । हेतुत्वादिति । भगवत्कृपाहेतुत्वात् । अतो हीत्यादि । अतो हेतोः ब्रह्म क्षत्रं चेति द्वे अन्योन्यमात्मानं रक्षत इत्यन्वयः । तद्वि-

१-१९-१३

परीतमिति । उत्तमोत्तमम् ॥ १३ ॥

तस्यैवेत्यत्र । अन्यथेति । ब्रह्मरूपत्वेन अभवने । एतस्यैव विवरणं अन्यथा

१-१९-१४ अवरेयामित्यादि । समयाभाव इति । शास्त्रश्रवणेऽवकाशाभावः । न तस्येति । इदं पञ्चमस्कन्धे जडवाक्यम् । 'न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् । स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्या'दिति । अर्थस्तु । यस्य गृहमेधिसौख्यं स्वप्नदृष्टान्तेन हेयतया अनुमितं स्वतो न स्यात् । तस्य वरीयसः शास्त्रीया वाचोपि तस्य तत्त्वनिश्चयाय न बभूवुरिति । तथ्यायादित्यर्थः । तथा जातमिति । गृहे मोचनं न जातमित्यर्थः ॥ १४ ॥

१-१९-१५ तं मोपयान्तमित्यत्र । तयोरिति । भगवदीयभगवतोः ॥ १५ ॥

१-१९-१६ पुनश्चेत्यत्र । ननु प्रवृत्तिपराणां स्वर्गस्येव निवृत्तिपराणां सर्वेषां मुक्तेरेवाभीष्टत्वात्तस्यैवात्र कुतो न प्रार्थ्यते इत्याकाङ्क्षायामाहुः मुक्तिरित्यादि । अपराधित्वान्न सम्भाविता, भगवदीयत्वान्नापेक्षिता, अतो न प्रार्थ्यते इत्यर्थः । तर्हि भक्तिः कुतः प्रार्थ्यते इत्यत आहुः राज्येत्यादि । विरुद्धधर्माश्रयत्वादिति । भक्तौ बन्धरूपत्वेप्यबन्धरूपत्वस्य तृतीयस्कन्धे व्युत्पादनाद्द्वयोर्धर्मयोस्तत्र सत्त्वेन तथात्वात् । तर्हि जनकादेरिव दोषाजनकं राज्यमेव कुतो न प्रार्थ्यते इत्याकाङ्क्षायां कैमुतिकेनाहुः जन्मेत्यादि । ननु सकृदुत्पन्नायामपि रतौ कार्यसिद्धेरव्याहतत्वाद्रतिकारणप्रार्थनस्य किं प्रयोजनमत आहुः अन्यथेत्यादि । अन्यथेति । साधनप्रार्थनाभावे । साधनमिति । रतिदानवररूपं महत्सङ्गरूपं वा । उपक्षिप्तमित्यत्र उपक्षीणमिति पाठः प्रतिभाति । तथा चाक्षिप्तस्य साधनस्यैवोपक्षीणत्वे पुनर्जन्मान्तरे रत्यभावान्महदेवानिष्टमापद्येतेत्यतः कारणप्रार्थनं युक्तमित्यर्थः । नन्वेवं रतेरावश्यकत्वे सैव सर्वदास्त्विति प्रार्थनीयम्, तथा सति सकृज्जातेनैव साधनेन सर्वदा तस्याः सिद्धिरित्यत आहुः न चेत्यादि । अपिना सेवानिर्वाहः सङ्ग्राह्यः । ननु 'अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यह'मिति भगवद्वाक्याद्भगवतैव देहादिनिर्वाहसम्भवान्न तदनुपपत्त्या असार्वदिकतत्प्रार्थनं युक्तमिति चेत्, तत्राहुः तादृशेत्यादि । सार्वदिकरतेः प्रमेयैकसाध्यत्वेन प्रमाणस्य साधनत्वाभावात् । यद्वा । राजा हि भगवदनुभावानुभवात्तत्साक्षात्कारार्थं प्रयतते । स हि वाक्ययोग्यव्यतिरिक्तज्ञानत्वेन प्रमाणम्, यथा 'आकाशवदन्तरं बहिर्भूतेषु सन्तं पुरुष'मिति शुकस्य ज्ञानम्, तच्च कदाचित्कयैव सत्सङ्गजन्यया रत्या, न तु व्रजरत्नानामिव सार्वदिक्या, तस्या विरहसहायत्वेन तदजनकतया तत्साधनत्वाभावात् । अतो न तत्प्रार्थनमित्यर्थः । ननु मास्तु सार्वदिकरतिप्रार्थनम्, तथापि प्रतिजन्मीनतत्साधनप्रार्थनमयुक्तम्, त्रिशङ्कूपाख्याने त्रिशङ्कोः स्वर्गसाधनीभूतपुण्याभावेपि सकृद्वाद्विश्वामित्रवरादेव फलसिद्धेरुक्तत्वादत्रापि वरस्यैव विवक्षितरतिसाधनत्वस्य शक्यवचनत्वेन तत एव नानाजन्मसु रतिसम्भवादिति

शङ्कायामाहुः चरस्येत्यादि। एतज्जन्मीनचरस्यैव तादृशतत्साधनत्वेऽङ्गीकृते त्रिशङ्क्वादिवदत्रापि फलं भविष्यतीति सम्भावनायाः प्रमाणत्वेऽङ्गीकृते सति रत्यधिकरणस्य स्वस्य शापेन लौकिकतुल्यतया प्रकारान्तरे त्रिशङ्कुन्यायेनोभयाभावे च प्रसक्ते युक्तिबाधात् उत्प्रेक्षायां प्रमाणत्वकल्पनस्यानपेक्षिताभ्यागमस्यापातेन त्रिशङ्क्वादिवरन्यायबाधात् भगवच्चरेण सायुज्यं पर्यवस्यति। तच्च भक्तानां भगवदीयत्वेनैव परिसमाप्तसर्वार्थानामनपेक्षितम्, अतः प्रतिजन्मीनरत्यर्थं प्रतिजन्मीनरतिकारणप्रार्थनं युक्तमेवेत्यर्थः। एवं वरस्वरूपविचारेण प्रतिजन्मीनसाधनप्रार्थनस्य युक्तत्वमुपपाद्य रतिस्वरूपविचारेणोपपादयन्ति रतिश्चेत्यादि। स्नेहत्वादिति। 'प्रेमाना प्रियता हार्दं प्रेमस्नेह'इतिकोशेन प्रियतारूपत्वात्। तथा चान्तःकरणधर्मत्वेन सिद्धेऽनित्यत्वे प्रतिजन्मनि तत्कारणप्रार्थनं युक्तमित्यर्थः। ननु रतेः सविषयत्वेनेच्छारूपत्वात्तस्याश्चानुकूल्यबुद्धिवेद्यात्वप्रियादेव सिद्धेस्तत्साधनप्रार्थनमनर्थकमित्याकाङ्क्षायां रतेः स्वरूपं विवेक्तुं विकल्पयन्ति न वेत्यादि। पुत्रादिषु तदभावप्रसङ्गादिति। पुत्रादिविषयिण्या रतेः इच्छारूपत्वाभावेन रतित्वाभावप्रसङ्गादित्यर्थः। एतेनैव ज्ञानरूपतापि वारिता। यत्नरूपता च। अनुकूलबुद्धिवेद्यत्वेन द्वेषादिरूपतापि तथा। प्रीणाम्यनुरज्यामीत्यनुव्यवसायगम्यत्वाददृष्टरूपतापि निवारिता। सविषयत्वाच्च न सुखरूपता। तदेतदभिसन्धायाहुः अत इत्यादि। अत अनुकूल्यबुद्धिवेद्यत्वेपि सविषयत्वरूपाद्विशेषात्प्रीणाम्यनुरज्यामि स्निह्यामीत्यादिबुद्धिगम्यत्वाच्च रत्याद्यपरनामा स्नेहः पदार्थान्तरमेवेत्यर्थः। नन्वस्तु पदार्थान्तरत्वम्, तथापि प्रियत्वापरपर्यायस्य तस्य निरुपधेरेव मुख्यत्वात्तादृशस्य च तस्य मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती'त्यादिना आत्मधर्मत्वेनैव व्यवस्थापनाद्भगवद्विषयकस्य सोपाधेरेवान्तःकरणधर्मत्वमित्यात्मविषयकतदपेक्षया जघन्यत्वात् किं तत्प्रार्थनेन किं वा तत्साधनप्रार्थनेनेत्याशङ्कायामाहुः स इत्यादि। तथा च यथा चतुःश्लोकीस्थं ज्ञानमैश्वर्यं च भगवद्दत्तं तत्सम्बन्धाच्चतुर्मुखे तन्नैकट्यात्पार्षदादिषु च भासते, तावतापि न तस्य भगवद्धर्मत्वहानिः, तथा स्नेहस्यापि तस्य मनोधर्मप्रतीतावप्यागन्तुकत्वेन भगवत्सम्बन्धार्थं तत्साधनप्रार्थनं युक्तम्, भगवद्धर्मत्वेनाजघन्यत्वाच्च तत्प्रार्थनमपि युक्तमेवेत्यर्थः। नन्वेमागन्तुकत्वे सर्वत्र तुल्य एव स्यात्, न तु न्यूनाधिक इत्यत आहुः उष्णस्पर्शवदित्यादि। तथा च वह्निनैकट्ये उष्णस्पर्शस्येव तस्यापि भगवन्नैकट्याच्चयेत्यर्थः। एतदेव निगमयन्ति शारीर इत्यादि। परमस्नेहत्वमिति। सप्तम्यर्थे बहुव्रीहिः। परमस्नेहविषयत्वमित्यर्थः। ननु परमस्नेहः श्रुतौ शारीरविषयक एव मैत्रेयीब्राह्मणे सिद्ध इति कथं तस्य भगवन्नैकट्यात्परमस्नेहविषयत्वमित्यत आहुः चान्यत्वादि। इदमधिकरणं समन्वयाध्यायचतुर्थपादेऽस्ति। तत्र मैत्रेयीब्राह्मणं जीवबोधकं ब्रह्मबोधकं वेति संशयः। तत्रो-

पक्रमे अमृतत्वायात्मदर्शनतत्साधनयोरुपदेशार्थं स्वप्रतीत्या पत्यादिसर्वापेक्षया प्रियत्वलिङ्गकः स्वात्मैवाभ्यस्यते, उपसंहारे च 'एतावदरे खल्वमृतत्व'मित्यनेन तस्यैव ज्ञानस्यामृतत्वं वदतीत्युपक्रमोपसंहाराभ्यासैरिदं जीवस्यैव बोधकम्। यत्पुनर्मध्ये आत्मज्ञानादीनां सर्ववेदनरूपफलसिद्ध्यर्थमात्मनः सर्वत्वमुक्तम्, तच्चस्य सोपाधिकस्य जगत्कर्तृत्वरूपोत्कर्षबोधनार्थमित्यार्द्रैन्धनाग्निदृष्टान्तादवसीयते, एवमेव समुद्रादिदृष्टान्तैराधारत्वं यदुक्तम्, तदपि तदर्थमेव। एवं श्रुत्यन्तरे या तस्य ब्रह्मता श्राव्यते, साप्युत्कर्षार्थमेवेत्यत इदं जीवबोधकमेवेति पूर्वः पक्षः। सिद्धान्तस्तु इदं ब्रह्मबोधकमेव, तत्र हेतुः 'वाक्यान्वया'दिति। वाक्यानामन्वयो वाक्यान्वयस्तस्मात्। अत्रोपक्रमेऽमृतत्वायात्मदर्शनं तत्साधनानि चोपदिश्यन्ते, अमृतत्वं मोक्षः, तच्च ब्रह्मज्ञानादेवेति। 'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाये'ति सावधारणश्रुतौ मार्गान्तरनिषेधात् सिद्धमितीहापि तमेवात्मत्वेन परामृश्य दर्शनादिवाक्यानामन्वयो वाच्यः, अन्यथा तद्व्याकोपापत्तेः। एवञ्चोपसंहारवाक्यमपि युज्यते, उपक्रमश्चासञ्जातविरोधित्वात्प्रबलः, एवं च ज्ञानफलादिवाक्यान्यप्यन्वेष्यन्ति। तस्यैव सर्वत्वात्सर्वाधारत्वाच्च। अन्यथा तु निःप्रयोजनमसदुत्कर्षबोधनान्नान्वियुः। न च प्रियत्ववाक्यानन्वयः शङ्क्यः। 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिश्रुतिभिर्ब्रह्मण आनन्दरूपत्वे भूतानां सशरीरजीवानां च तत्कार्यत्वे 'सर्वं एवात्मानो व्युच्चरन्ती'ति श्रुत्या केवलानामंशत्वे च सिद्धे 'एष ह्येवानन्दयाती'ति सावधारणश्रुत्या ब्रह्मण एवानन्दजनकत्वे च सिद्धेऽन्यत्र प्रियत्वाध्यासो जीवे प्रियत्वाधिक्यं तत्सम्बन्धतन्नैकट्याभ्यामेवेति तेषामपि तत्रैवान्वयः। एवं चाभ्यासोपि तस्यैवानुगुणः। अतः साक्षात्परम्परया च सर्वेषां वाक्यानां तत्रैवान्वयादिदं ब्रह्मवाक्यमेवेति। तथा चैतस्मिन्नधिकरणे प्रियत्वस्य भगवद्धर्मत्वेनैव सिद्धत्वाज्जीवे निरुपाधिप्रेमापि तन्नैकट्यादेवेति न श्रुतिविरोध इत्यर्थः। नन्वेवं सति तस्य स्वतः सिद्धत्वात् किं तत्साधनप्रार्थनेनेत्यत आहुः अत इत्यादि। अत इति। जैवप्रियत्वापेक्षयाप्यतितिरोहितत्वेन। तदिति। नैकट्यम्। ननु जीवब्रह्मणोः स्वरूपविचारेऽतिनैकट्यस्यापि सिद्धत्वात् साधनप्रार्थना न युक्तेत्यत आहुः आश्रय इत्यादि। अन्यथा स्वाप्यये जीवस्यापि तदाश्रितत्वेन स्वत एव रतिः स्यात्, अतो नैकट्यार्थं सर्वदाश्रयोऽपेक्षित इति तथेत्यर्थः। ननु तेपि बहवः समीपेपि सन्तीति किं प्रार्थनेनेत्यत आहुः नेत्यादि। आश्रितमात्रेणेति। साधारणैराश्रितैः॥१६॥

१-१९-१८ एवं त्वित्यत्र। निश्चयेनेति। 'यस्य स्यादद्धा न विचिकित्सास्ती'ति श्रुतेस्तथेत्यर्थः॥ १८॥

तमित्यत्र। स्मश्रूत्पत्त्यावसीयन्ते इति। अग्रे तदुत्पत्त्या तथा निश्चीयन्ते, तत्र गमकं मृतेति। मृतत्वज्ञापका इति। त्वङ्मृतत्वज्ञापकाः। तेन

१-१९-२६ सिद्धमाहुः अत इत्यादि। अमेध्यस्पर्शाभावात् कालक्नो धलवत्त्वादि-

रूपो गुण एव, न तु कामवत्त्वादिरूपः कालजो दोपस्तत्रेत्यर्थः । उभयज्ञापनायेति । गुणदोषाभावरूपगुणद्वयज्ञापनाय । अन्यथा षोडशाब्दमित्येव वदेदित्यर्थः । तयोः प्रयोजनमाहुः अग्रिमेत्यादि । कामजरादिदोषस्यास्यभावाय गुणसूचनं सम्पन्नस्य ज्ञानभक्त्यादिरूपगुणस्य स्थापनाय दोषाभावसूचनमित्यर्थः । अस्मिन् पक्षे तमितिपदस्य विशेषार्थाभावात् पक्षान्तरमाहुः भगवदित्यादि । त इति । अग्रिमा वर्णाः । ताभ्यां सिद्धमाहुः अत इत्यादि । तथा चामेध्यत्वक्रूस्पर्शाभावाच्छिष्टकाले भगवत्स्मरणं द्व्यष्टवर्षपदेन सूच्यते द्वितीयस्तमितिपदेन । प्रक्रान्तविषयत्वबत्प्रसिद्धार्थविषयत्वेपि बाधकाभावादिति । तथा च तद्गुणद्वयसूचनायेदं पदद्वयमत्रेत्यर्थः । गूढचिह्नमिति । पुंव्यञ्जनम् ॥ २६ ॥

स विष्णुरात इत्यत्र । आगमने नियतकालरहित इति । 'अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते' इति तथेत्यर्थः । परिगृहीतानामिति । शुकेन परिगृहीतानाम् ।

१-१९-२९

अहो इत्यत्र । पूर्ववदिति । 'अहो वय'मित्यत्र यथा परश्लाघार्थे स्वश्लाघा तथेत्यर्थः । उपदेष्टृत्वमिति । जनकादेरिवेत्यर्थः । तद्गतं पापमित्यादि । देहगतं पापं जलसंयोगद्वारा जले गच्छतीत्यर्थः ॥ ३२ ॥

१-१९-३०

पुरुषस्येत्यत्र । अधिकारिद्वैरूप्यं स्वतन्त्रम्रियमाणभेदेन कर्मणां श्रोतव्यादीनां तत्तदभावभेदेनेति मूलवाक्य एव स्फुटति । विपरीतेत्यादि । स्वतन्त्रकर्तृसम्बन्धिकर्मपञ्चके म्रियमाणसम्बन्धाभावो अन्यस्यान्यसम्बन्धितदभाव इत्यर्थः । विशकलिततयेति । कर्तृभेदेन द्विधाकर्मभेदेन दशधेत्यर्थः । यद्वा । विपर्ययमित्यस्यार्थमाहुः अथवेत्यादि । उभयकरणमिति । नित्यद्वयकरणं नित्यनैमित्तिककरणं च । ननु नियमविध्यङ्गीकारे नोभयकरणप्रसक्तिरिति किमर्थं विपरीतकथनप्रश्न इत्यत आहुः आवश्यकेत्यादि ॥ ३७ ॥

१-१९-३१

एवं श्रीवल्लभाचार्यनखचन्द्रमरीचिभिः । निरस्ते हृदयध्वान्ते विवृतायसुबोधिनी ॥ १ ॥
समर्पिता तत्पदयोरेषा पुष्पाञ्जलिर्गिराम् । तेनतुष्यन्तु दयया दासेस्मिन् सहसूनवः ॥ २ ॥
यदत्र सदसद्वापि जीवबुद्ध्या मयोदितम् । आशयाज्ञानतस्तन्मे क्षन्तव्यं दीनवत्सलाः ॥ ३ ॥

बद्धाञ्जलि मूर्ध्नि बुधेषु नत्वा मुहुस्तदीयेषु निवेदयामि ।
असम्यदस्मिन् भवति कचित्तत्कृपापरैर्योस्य निवारणीयम् ॥ ४ ॥

इति श्रीमदाचार्यचरणकमलैकतानश्रीपीताम्बरतनुजपुरुषोत्तमप्रकाशित-
प्रथमस्कन्धसुबोधिनीप्रकाशो ऊनविंशाध्यायविवरणम् ।

# मुद्रितपुस्तकानि ।

| | |
|---|---|
| सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १-०-० |
| निरोधलक्षणम् । षड्विवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. १-०-० |
| संन्यासनिर्णयः । अष्टविवरणसमेतः । गुर्जरानुवादसमेतश्च । | रु. १-०-० |
| { जलभेदः । चतुर्विवरणसमेतः । पञ्चपद्यानि । विवरणद्वयसमेतानि । सेवाफलम् । विवरणत्रयम् । } | रु. १-०-० |
| भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. २-०-० |
| सिद्धान्तमुक्तावली । अष्टविवृतिसमेता । गुर्जरानुवादसमेता च । | रु. १ ०-० |
| सिद्धान्तरहस्यम् । एकादशविवरणसमेतम् । गुर्जरानुवादसमेतं च । | [illegible]. १-०-० |
| पुष्टिप्रवाहमर्यादा चतुर्विवरणसमेता । | रु. १-०-० |
| नवरत्नम्-पञ्चविवृतिसमेतम् । गुर्जरभाषानुवादसमेतं च । | रु. १-०-० |
| श्रीसुबोधिनी । दशम-पूर्वार्ध-तामस-फलप्रकरणम् । | रु. ३-०-० |
| श्रीसुबोधिनी । दशम-उत्तरार्ध-राजस-साधनप्रकरणम् । | रु. २-०-० |
| २ श्रीसुबोधिनी दशमोत्तरार्धराजसफलप्रकरणम् । | रु. २-०-० |
| ३ श्रीसुबोधिनी-दशमोत्तरार्धसात्त्विकप्रमेयप्रकरणम् | रु. २-०-० |
| ४ श्रीमती टिप्पणी । श्रीमद्विट्ठलेश्वरप्रणीता । | रु. २-०-० |
| ५ रासपञ्चाध्यायीप्रकाशः । श्रीपीताम्बरप्रणीतः । | रु. १-०-० |
| ६ दशमतामसफलयोजना । श्रीलालूभट्टकृता । | रु. ०-८-० |
| ७ वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १-०-० |
| ८-२१ भाष्यप्रकाशिका । ब्रह्मसूत्रवृत्तिः । श्रीकृष्णचन्द्रकृता । अध्यायाः १-२-३-४ | रु. २-४-० |
| २२ तैत्तिरीयोपनिषद्भाष्यम् । श्रीजयगोपालभट्टकृतम् । गुर्जरानुवादयुतम् । | रु. १-०-० |
| २३ भागवतार्थनिबन्धः । प्रकाशावरणभङ्गसमेतः । आद्यस्कन्धद्वयम् । | रु. १-०-० |
| २४ शृङ्गाररसमण्डनम् । श्रीविट्ठलेश्वरप्रकटितम् । गुर्जरानुवादसमेतम् । | रु. २-८-० |
| २५ श्रीमधुराष्टकम् । षड्विवरणसमेतम् । | अमूल्यम् । |
| २६ { प्रेमामृतम् । श्रीविट्ठलेश्वरकृतविवृतिसमेतम् । पारवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । } | रु. ०-८-० |
| २७ रसाब्धिमहाकाव्यम् । श्रीदेवकीनन्दनकृतम् । | रु. १-०-० |
| २८ मनोदूतम्-हृदयदूतं च । गुर्जरानुवादसमेतम् । | रु. ०-८-० |
| २९ निबन्धनामावली । टीकासमेता । | रु. १-४-० |
| ३० श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| ३१ पत्रावलम्बनम् | रु. ०-४-० |
| ३२ श्रीमदणुभाष्य-प्रकाश-रश्मि- तृतीयाध्यायप्रथमपादः । | रु. १-०-० |
| ३३ श्रीमदणुभाष्य-प्रकाश-रश्मिः तृतीयाध्यायद्वितीयपादः । | रु. १-०-० |
| ३४ श्रुतिरहस्यम्-प्रकाशसमेतम्-गुर्जरानुवादयुतम् । | रु. १-०-० |
| ३५ श्रीमद्भागवतप्रथमस्कन्धश्रीसुबोधिनीप्रकाशः । श्रीपुरुषोत्तमप्रणीतः । | रु. १-०-० |
| 36 Discuss how far Sankaracharya truly represents the view of the author of the Brahma-Sutras | Rs 1-0-0 |

१. पंडित गट्टूलालजीनी पाठशाला, केथेड्रलस्ट्रीट सूरेश्वर, मुंबई.

Printed by Manilal Itcharam Desai at the "Gujarati News" Printing Press, Nos 20-24 Bake House Lane, Fort, Bombay.

Published by Mulchandra Tulsidas Telivala B. A., L. L. B., Vakil, High Court, Bhakkar Buildings, C. P. Tank Road, Girgaon, Bombay.

श्रीकृष्णाय नमः ।

# श्रीमती टिप्पणी ।

(दशमस्कन्धप्रकरणद्वयविवृतिप्रकाशः ।)

श्रीमद्गोस्वामिश्रीमद्विट्ठलेश्वरदीक्षितप्रणीता ।

श्रीमत्प्रभुचरणनिजश्रीहस्ताक्षरलिखनेन संवादिता ।



सा च,
श्रीसुरतिस्थश्रीमद्गोस्वामिश्रीमत्पद्मलालात्मजश्रीव्रजरत्नलालचरणसंपूर्णसाहाय्येन
'राजनगरस्थ भगवद्धर्मपरायण श्रेष्ठिअचरतलाल हरिवल्लभदास मूल-
चन्दवाला'इत्यस्य द्रव्येण च 'भृगुपुरस्थ मूलचन्द्र तुलसीदास
तेलीवाला बी. ए., एल्एल्. बी., वकील हाइ कोर्ट,
सुरतिस्थ धैर्यलाल व्रजदास सांकलीया बी. ए.,
एल्एल्. बी., वकील हाइ कोर्ट' इत्येताभ्यां
संशोध्य.मुम्बापुर्यां 'निर्णयसागर'
मुद्रणालये मुद्रयित्वा
प्रकटीकृता ।

---

श्रीवल्लभाब्दाः ४४२. संवत् १९७७.

---

मूल्यं रूप्यकद्वयम् ।

# मुद्रितपुस्तकानि ।

१ सेवाफलम् । द्वादशविवरणसमेतम् । रु. १-०-०
२ निरोधलक्षणम् । षड्विवरणसमेतम् । गुर्जरानुवादसमेतं च । रु. १-०-०
३ संन्यासनिर्णयः । अष्टविवरणसमेतः । गुर्जरानुवादसमेतश्च । रु. १-०-०
४ { जलभेदः । चतुर्विवरणसमेतः । पञ्चपद्यानि । विवरणद्वयसमेतानि । सेवाफलम् । विवरणत्रयम् । } रु. १-०-०
५ भक्तिवर्धिनी । चतुर्दशटीकासमेता । रु. २-०-०
६ सिद्धान्तमुक्तावली । अष्टविवृतिसमेता । गुर्जरानुवादसमेता च । रु. १ ०-०
७ सिद्धान्तरहस्यम् । एकादशविवरणसमेतम् । गुर्जरानुवादसमेतं च । रु. १-०-०
८ पुष्टिप्रवाहमर्यादा चतुर्विवरणसमेता । रु. १-०-०
९ नवरत्नम्-पञ्चविवृतिसमेतम् । गुर्जरभाषानुवादसमेतं च । रु. १-०-०
१० श्रीसुबोधिनी । दशम-पूर्वार्ध-तामस-फलप्रकरणम् । रु. ३-०-०
११ श्रीसुबोधिनी । दशम-उत्तरार्ध-राजस-साधनप्रकरणम् । रु. २-०-०
१२ श्रीसुबोधिनी दशमोत्तरार्धराजसफलप्रकरणम् । रु. २-०-०
१३ श्रीसुबोधिनी-दशमोत्तरार्धसात्विकप्रमेयप्रकरणम् रु. २-०-०
१४ श्रीमती टिप्पणी । श्रीमद्विठ्ठलेश्वरप्रणीता । रु. २-०-०
१५ रासपञ्चाध्यायीप्रकाशः । श्रीपीताम्बरप्रणीतः । रु. १-०-०
१६ दशमतामसफलयोजना । श्रीलालूभट्टकृता । रु. ०-८-०
१७ वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । रु. १-०-०
१८-२१ भावप्रकाशिका । ब्रह्मसूत्रवृत्तिः । श्रीकृष्णचन्द्रकृता । अध्यायाः १-२-३-४ रु. २-४-०
२२ तैत्तिरीयोपनिषद्भाष्यम् । श्रीजयगोपालभट्टकृतम् । गुर्जरानुवादयुतम् । रु. १-०-०
२३ भागवतार्थनिबन्धः । प्रकाशावरणभङ्गसमेतः । आद्यस्कन्धद्वयम् । रु. १-०-०
२४ श्रृङ्गाररसमण्डनम् । श्रीविठ्ठलेश्वरप्रकटितम् । गुर्जरानुवादसमेतम् । रु. २-८-०
२५ श्रीमधुराष्टकम् । षड्विवरणसमेतम् । अमूल्यम् ।
२६ { प्रेमामृतम् । श्रीविठ्ठलेश्वरकृतविवृतिसमेतम् । परिवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । } रु. ०-८-०
२७ रसाब्धिमहाकाव्यम् । श्रीदेवकीनन्दनकृतम् । रु. १-०-०
२८ मनोदूतम्-हृदयदूतं च । गुर्जरानुवादसमेतम् । रु. ०-८-०
२९ निविधनामावली । टीकासमेता । रु. १-४-०
३० श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । रु. ०-१०-०
३१ पत्रावलम्बनम् रु. ०-४-०
३२ श्रीमदणुभाष्य-प्रकाश-रश्मिः तृतीयाध्यायप्रथमपादः । रु. १-०-०
३३ श्रीमदणुभाष्य-प्रकाश-रश्मिः तृतीयाध्यायद्वितीयपादः । रु. १-०-०
३४ श्रुतिरहस्यम्-प्रकाशसमेतम्-गुर्जरानुवादयुतम् । रु. १-०-०
३५ श्रीमद्भागवतप्रथमस्कन्धश्रीसुबोधिनीप्रकाशः । श्रीपुरुषोत्तमप्रणीतः । रु. १-०-०
36 Discuss how far Śankaracharya truly represents the view of the author of the Brahma-Sutras Rs 1-0-0

१. पंडित गट्टूलालजीनी पाठशाला, केविडूलस्ट्रीट मूलेश्वर, मुंबई.

Printed by Manilal Itcharam Desai at the "Gujarati News" Printing Press, Nos. 20-24 Bake House Lane, Fort, Bombay.

Published by Mulchandra Tulsidas Telivala B. A., L. L. B., Vakil, High Court, Khakkar Buildings, C. P. Tank Road, Girgaon, Bombay.

श्रीकृष्णाय नमः ।

# श्रीमती टिप्पणी .

(दशमस्कन्धप्रकरणद्वयविवृतिप्रकाशः ।)

श्रीमद्गोस्वामिश्रीमद्विट्ठलेश्वरदीक्षितप्रणीता ।
श्रीमत्प्रभुचरणनिजश्रीहस्ताक्षरलिखनेन संवादिता ।



सा च,
श्रीसुरतिस्थश्रीमद्गोस्वामिश्रीमन्मटूलालात्मजश्रीव्रजरत्नलालचरणसंपूर्णसाहाय्येन
'राजनगरस्थ भगवद्धर्मपरायण श्रेष्ठिअचरतलाल हरिवल्लभदास मूल-
चन्दवाला'इत्यस्य द्रव्येण च 'भृगुपुरस्थ मूलचन्द्र तुलसीदास
तेलीवाला बी. ए., एल्एल्. बी., वकील हाइ कोर्ट,
सुरतिस्थ धैर्यलाल व्रजदास सांकलीया बी. ए.,
एल्एल्. बी., वकील हाइ कोर्ट' इत्येताभ्यां
संशोध्य-मुम्बापुर्यां 'निर्णयसागर'
मुद्रणालये मुद्रयित्वा
प्रकटीकृता ।

---

श्रीवल्लभाब्दा ४४२. संवत् १९७७.

---

मूल्यं रूप्यकद्वयम् ।

श्रीमद्गोस्वामिश्रीव्रजरत्नलालचरणाः ।



श्रीवल्लभाचार्य्यवचोविचारप्रचारचर्य्यापचयैकचित्तः ।
गुणैर्गरिष्ठोऽधिगतप्रतिष्ठो धर्मात्तनिष्ठो व्रजरत्नलालः ॥ १ ॥

## મૂલ શ્રીહસ્તાક્ષરપુસ્તકનો શોધ.

ઉપર જણાવેલા સર્વ ગોસ્વામિબાલકો તથા વૈષ્ણવ વિદ્વાનોનો ઉપકાર અમે અન્તઃકરણથી
માનીએ છીએ. નવ પુસ્તકના આધારે શ્રીટિપ્પણીજીનું શોધન કરી અમે મુદ્રણકાર્યમાં ફલપ્રકર-
ણના પ્રથમાધ્યાયના અન્તભાગપર્યન્ત આવ્યા. 'क्रिया सर्वापि सैवात्र' એ શ્રીસુબોધિનીકારિકાનું
વ્યાખ્યાન કાંઈક વિલક્ષણ લાગ્યું. આથી શ્રીપુરુષોત્તમજીકૃત તત્પ્રકાશ જોયો. આ પ્રકાશ પણ
શ્રીપુરુષોત્તમજીનો નિજશ્રીહસ્તાક્ષરે લખેલો અમારે ત્યાં વિરાજે છે. તે જોતાં નીચેની પંક્તિ
વાંચવામાં આવી:—'अत्र कारिकाव्याख्यानं टिप्पणीपुस्तकेषु दृश्यते, तत् पाण्डुलिखने नास्तीति
श्रीगोकुलनाथानां तत् प्रतिभाति, लेखरीत्यापि तथेति च।' અહિં કારિકાવ્યાખ્યાનનું દર્શન
ટિપ્પણીપુસ્તકોમાં થાય છે, તે પાંડુલિખનમાં નથી, તેથી શ્રીગોકુલનાથજીનું તે હોય એમ લાગે
છે, લેખરીતિથી પણ તેમજ ભાસે છે. એ કારિકાવ્યાખ્યાન શ્રીગોકુલનાથજીનું છે એમ
શ્રીપુરુષોત્તમજી કહે છે તે વાતને એજ કારિકાવ્યાખ્યાનનું સ્વતંત્ર પુસ્તક જે અમારી પાસે
વિદ્યમાન છે તે પુષ્ટિ આપે છે. તે પુસ્તકમાં આ પ્રકારે લખેલું છે—'श्रीश्रीवल्लभो जयति।
दशमना अध्याय २६ ने समाप्ते श्रीआचार्यजीनी कारिका ५ ॥ छे, ते मध्ये पहेली कारिका जे 'क्रिया
सर्वापि सैवात्र परं कामो न विद्यते। तासां कामस्य संपूर्तिर्निष्कामेनेति सा तथा ॥ १ ॥ श्रीजीकृत
पद्य लिखन'. આના પછી મુદ્રિત શ્રીટિપ્પણીજીમાં વિદ્યમાન સંસ્કૃત વ્યાખ્યાન અક્ષરશઃ આદ્યન્ત
લખેલું છે. શ્રીગોકુલેશના અન્તરંગ સેવકો એઓશ્રીને પુરુષોત્તમભાવથી શ્રીજીસંજ્ઞાથી વ્યવહારે
છે. આથી શ્રીપુરુષોત્તમજીનું કથન કે આ વ્યાખ્યાન શ્રીગોકુલનાથજીનું છે તે સુદૃઢ થાય છે.
આ તો અપ્રસ્તુત પ્રસંગ થયો, પરન્તુ આ શ્રીપુરુષોત્તમજીની પંક્તિથી અન્ય વાર્તા સ્ફુરી.
આ લેખથી એમ જણાયું કે શ્રીપુરુષોત્તમજી પાસે આ પાંડુલિખન શ્રીટિપ્પણીજીનું હોવું
જોઇએ, અને શ્રીપુરુષોત્તમજી સુરતમાં થયલા હોવાથી ઉક્ત પુસ્તક સુરતના શ્રીબાલકૃષ્ણજીના
મંદિરમાં હોવું જોઇએ. આ અનુમાનોથી દોરાઇને અમે એક વિનતિપત્ર આ સંબધમાં
શ્રીવ્રજરત્નજીને લખ્યું. મહારાજશ્રીએ નિજમંદિરમાં વિદ્યમાન સંગ્રહમાં તપાસ કરી, પરન્તુ
એ પાંડુલિખનનું પુસ્તક તેમાં મલ્યું નહિ. તેથી આપશ્રીએ અમને જણાવ્યું કે ઉક્ત
શ્રીટિપ્પણીજીનું પુસ્તક અમારે ત્યાં સુરતના મંદિરમાં નથી. આ પ્રત્યુત્તરથી અમારા અન્તરા-
ત્માને સંતોષ થયો નહિ, તેથી સ્વતઃ સુરત જઈ આનો નિશ્ચય કરવાનું સ્ફુર્યું. આથી
દીવાળીની રજામાં ગત આશ્વિન શુક્લ ત્રયોદશીને દિવસે અમે સુરત ગયા. તે જ દિવસે
મહારાજશ્રીવ્રજરત્નજીને વિનતિ કરી કે આપશ્રી અમને આપશ્રીને ત્યાં સેવામાં વિરાજતા હસ્ત-
લિખિત પુસ્તકોનું દર્શન કરાવવા કૃપા કરો. મહારાજશ્રીએ કૃપા કરી અમારી વિનતિ લક્ષમાં
લઈ બીજે જ દિવસે—આશ્વિન શુક્લ પૂર્ણિમા—રાસોત્સવને દિવસે—પ્રાતઃકાલે ગ્વાલ અને રાજ-
ભોગના અનવસરમાં ઉક્ત પુસ્તકોનું દર્શન કરાવ્યું. હસ્તલિખિત પુસ્તકોનું દર્શન કરતાં અમને
બહુ જ આનન્દ તથા સંતોષ થયો. અમને માલૂમ પડ્યું કે શ્રીમદ્વિઠ્ઠલેશ્વર પ્રભુચરણના
નિજ શ્રીહસ્તાક્ષરે લખેલા શ્રીટિપ્પણીજીના મૂલ પુસ્તકજી ત્યાં બિરાજે છે. અને આજ
પુસ્તકનો ઉપન્યાસ શ્રીપુરુષોત્તમજી પાંડુલિખન તરીકે કરે છે. આ ઉપરથી મહારાજશ્રીને
વિનતિ પુનઃ કરી કે મુદ્રિત શ્રીટિપ્પણીજીના પુસ્તકને આ મૂલ સાથે સરખાવવા દેવાની કૃપા
કરો. આપશ્રીએ અમારી આ વિનતિ પણ સ્વીકારી. દીપોત્સવના અન્નકૂટાદિ ઉત્સવ પ્રસંગોમાં
આ કાર્ય શાન્તિથી નહિ થાય એમ હોવાથી આપશ્રીએ અમને આ કાર્ય નાતાલની રજામાં
કરી લેવાની અનુજ્ઞા આપી. તા. ૨૧ મી ડીસેમ્બરને મંગલવારે અમે સુરત પાછા ગયા. તે જ
દિવસે સાયંકાલે મહારાજશ્રીના દર્શનાર્થ ગયા. ઉક્ત કાર્ય કઇ રીતે કરવું તેનો આપશ્રીએ
સુનિપુણતાથી અને સરલતાથી પ્રબંધ કર્યો. બુધવારે પ્રાતઃકાલે મૂલ શ્રીહસ્તાક્ષરના શ્રીટિપ્પ-

ણીજી સાથે સરખાવવાનું કાર્ય આરભ્યું. આ કાર્ય કરતા અમારા આનન્દનો પાર ન રહ્યો બુધ, ગુરુ, શુક્ર, શનિ અને રવિ એમ પાચ દિવસ પ્રાતકાલે ૯ થી ૧૨ અને બપોરના ૭ થી ૬ આ કાર્ય મહારાજશ્રીની કૃપાથી અમે નિર્વિઘ્ન શાન્તિથી તથા અત્યન્ત ઉલ્લાસથી કર્યુ; અને જન્મપ્રકરણથી આરભીને છેક ભ્રમરગીતના શ્રીટિપ્પણીજી પર્યન્તનો સમગ્ર ગ્રન્થ મૂલ શ્રીહસ્તાક્ષરના પુસ્તક સાથે સવાદી લીધો. ૧૨૮ પૃષ્ઠ તો શ્રીટિપ્પણીજીના મુદ્રિત હતા, તેથી તેટલા પૃષ્ઠ મૂલ સાથે શોધીને શોધપત્ર પણ તૈયાર કર્યુ, અને અવશિષ્ટ ભાગ તો મૂલને જ અનુસરીને મુદ્રિત કર્યો છે. આથી આ મુદ્રિત શ્રીટિપ્પણીજીનું પુસ્તક અત્યન્ત પ્રામાણિક હોવાનો સભવ છે ૧૨૮ મુદ્રિત પૃષ્ઠોમાં અશુદ્ધ પાઠ માત્ર એક બે સ્થલે જ દૃષ્ટિગોચર થયા હવે જો કોઈ દોષ મુદ્રિત પુસ્તકમા હોય તો તે નેત્રદોષ અથવા મુદ્રણયત્રદોષ વિના અન્ય હોવાનો સભવ નથી શ્રીટિપ્પણીજીના પ્રત્યેક વાચકને અમારી વિનતિ છે કે વાચવાનો આરભ કરતા પહેલાં અન્તે મુદ્રિત શોધપત્રના આધારે મુદ્રિત પુસ્તકના ૧૨૮ પૃષ્ઠ શોધી લેવા

ઉક્ત મૂલ શ્રીહસ્તાક્ષરના શ્રીટિપ્પણીજીના દર્શનાદિ કરતાં કેટલાક વિચારો જે અમને સ્ફુરેલા તે પણ અત્ર વૈષ્ણવોને નિવેદન કરવાનું આવશ્યક લાગે છે. ઉક્ત મૂલ શ્રીહસ્તાક્ષરની પ્રતિ એવી રીતે લખેલી હતી, અને તેમાં એટલા બધા તો શોધપત્રો ભિન્ન પ્રમાણના પત્રો ઉપર અને સાહિથી લખેલા હતા કે હાલ શ્રીટિપ્પણીજીના પુસ્તકોમાં જે સ્વરૂપનુ દર્શન થાય છે તે તે મૂલ શ્રીહસ્તાક્ષરની પ્રતિ ઉપરથી શોધિત અને ક્વચિત્ વર્ધિત રૂપનું લાગે છે અન્તે મુદ્રિત શોધપત્રના મૂલ શ્રીહસ્તાક્ષરપુસ્તકસ્થ પાઠો અત્ર મુદ્રિત પાઠો સાથે સરખાવતા આ કથનને પુષ્ટિ મળે છે આ જ શોધિત વર્ધિત આવૃત્તિના મૂલ આધારરૂપ આ પાડુલિખન છે, અને તેજ પુસ્તકનો ઉપન્યાસ શ્રીમત્પુરુષોત્તમજી નિજવિરચિત રાસપચાધ્યાયીપ્રકાશમા કરેછે

મૂલ શ્રીહસ્તાક્ષરની પ્રતિ પ્રથમથી જ ગ્રન્થરૂપે કલ્પાઇ હોય એમ લાગતુ નથી શ્રીમત્પ્રભુચરણે સેવાનવસરમા શ્રીસુબોધિનીજી ઉપર ક્વચિત્ ક્વચિત્ ટિપ્પણ યોજેલુ, પરન્તુ પુન પુન વિચાર કરવાથી આપશ્રીને અધિક અધિક લખવાની સ્ફૂર્તિ થઈ, અને તેથી પ્રથમ જે શ્રીટિપ્પણરૂપે હતુ તે અન્તે ઇતિશ્રીમા વિવૃતિપ્રકાશરૂપ થયુ. તથાપિ મૂલ પ્રસિદ્ધિ જે શ્રીટિપ્પણીજીથી થઈ હતી તે જ સપ્રદાયમા ચિરસ્થાયી થઈ જેમ બાલકનુ અન્ય ગૌરવયુક્ત નામ હોવા છતા સ્નેહીઓ બાળુ, બચુ નામથી સ્નેહથી વ્યવહારે છે તેમ શ્રીસુબોધિનીજીના વાચકોએ આ ગ્રન્થને તેના વિવૃત્તિપ્રકાશ એ બૃહત્ નામથી ન વ્યવહાર્યું, પરન્તુ શ્રીટિપ્પણીજી એવા મૂલાશયસૂચક નામથી પૂર્ણ ભાવથી વ્યવહાર્યુ મૂલ આ ગ્રન્થ માત્ર પ્રકીર્ણ ટિપ્પણરૂપ હતો તે વાત પણ આ મૂલ પુસ્તકમા પાછળથી ઉપરનીચે ટિપ્પણરૂપે લખેલા મગલાચરણના શ્લોકોથી તથા અન્તમા ઇતિશ્રીના અભાવથી પણ સૂચવાય છે

મૂલ શ્રીહસ્તાક્ષરની પ્રતિમા પ્રાય સર્વત્ર જ્યા ભગવત્ શબ્દનો પ્રયોગ આવતો ત્યાં ભગવત્‌ને સ્થાને ભવત્શબ્દ જોવામા આવ્યો સાપ્રદાયિક પરિભાષામા પ્રભુને 'આપ' એમ સામાન્ય વ્યવહાર છે શ્રીમત્પ્રભુચરણને પ્રભુસાનિધ્ય અને પ્રભુતન્મયતા એટલી બધી પ્રકટ છે અને પ્રભુના સયોગરસમા એટલા બધા [illegible] મગ્ન છે કે અનવધાનતાથી ભગવત્શબ્દને સ્થાને પ્રાય સર્વત્ર ભવત્શબ્દનો પ્રયોગ [illegible] થઈ ગયો છે શ્રીટિપ્પણીજીના શોધિત લિખનમાં લેખકે ભગવત્શબ્દ [illegible]

શ્રીમત્પ્રભુચરણના શ્રીહસ્તાક્ષરમાં કેટલીક વિલક્ષણતા પણ દૃષ્ટિગોચર થઈ. આપશ્રીને સામાન્યરીતે બહુ લખવાની ટેવ ન હોવી જોઈએ, અને એ જ કારણથી અક્ષર ઠરેલા નથી. અક્ષર સર્વ સમાન નથી, પણ નાના મોટા એક પંક્તિમાં પણ દૃષ્ટિગોચર થાય છે.

## શ્રીગ્રન્થકૃતઃ ।

શ્રીટિપ્પણીજીના પ્રણેતા શ્રીમદ્વલ્લભાચાર્યજી શ્રીમહાપ્રભુજીના દ્વિતીય કુમાર શ્રીમદ્વિઠ્ઠલેશ્વર છે. એઓશ્રી સમ્પ્રદાયમાં શ્રીગુસાંઈજી, શ્રીમત્પ્રભુચરણ ઇત્યાદિ નામથી પ્રસિદ્ધ છે. શ્રીમદ્વિઠ્ઠલેશ્વરનું પ્રાકટ્ય સવત્ ૧૫૭૨ ના માર્ગશીર્ષ કૃષ્ણ નવમીને વાર શુક્રને દિવસે થયું હતું. જે સમયે શ્રીમદાચાર્યચરણ નિત્ય લીલામાં પધાર્યા તે સમયે આપશ્રીનું વય માત્ર પંદરેક વર્ષનું હતું, પરન્તુ શ્રીમદાચાર્યજીના અંતરંગ સેવકોમાં શ્રીમદ્દામોદરદાસ શ્રીપદ્મનાભદાસાદિ ભૂતલ ઉપર વિરાજતા હતા. તેઓને શ્રીમત્પ્રભુચરણ ક્વચિત્ સંશય થતાં પૂછતા એમ કેટલીક સાંપ્રદાયિક ગાથાઓમાં પ્રસિદ્ધ છે. શ્રીમત્પ્રભુચરણે શ્રીમદાચાર્યજીની પછી સંપ્રદાયનો બહુ સારો પ્રસાર કર્યો. સાંપ્રદાયિક અનેક મર્યાદાઓ બાંધી જે હજુ સુધી અવિચ્છિન્ન સચવાઈ રહી છે. અનેક રાજાઓ પણ એઓશ્રીના સેવક થયા. એઓશ્રીનું નામ '**अनेकक्षितिपश्रेणिमूर्धासक्तपदाम्बुज**' એ જ આશયને સ્પષ્ટ કરે છે. સમ્રાટ્ અકબરના દરબારના રાજા ટોડરમલ, રાજા વીરવર (બીરબલ), રાય પુરુષોત્તમાદિ એઓશ્રીના કૃપાપાત્ર વૈષ્ણવ હતા. સ્વપિતૃચરણે પ્રકટ કરેલા બ્રહ્મવાદ અને ભક્તિમાર્ગનું સરસ મંડન આપશ્રીએ વિદ્વન્મંડન નામક સ્વતંત્ર ગ્રન્થમાં કર્યું છે. વ્યાસસૂત્રના અન્તિમ સાર્ધ અધ્યાયનું ભાષ્ય પણ આપશ્રીએ નિજપિતૃચરણના અન્તિમ દૃષ્ટિબિન્દુથી યોજ્યું છે. ભગવલ્લીલાનું ગાનકીર્તન કરવાને અને નિજ ગીતસંગીતસાગરત્વને શ્રીમદ્રસેશ પ્રભુમાં વિનિયોગદ્વારા સમર્પણ કરીને સફલ કરવાને આપશ્રીએ શૃંગારરસમંડનાદિનું પ્રાકટ્ય કર્યું છે. અને શ્રીગોવિન્દના વિહારરૂપ શ્રીસુબોધિનીજીનું ઉત્તમોત્તમ દૃષ્ટિથી દિગ્દર્શન કરાવવાને આપશ્રીએ આ શ્રીટિપ્પણીજી યોજ્યાં છે. આપશ્રીનું વિશેષ ચરિત્ર સાંપ્રદાયિક ગાથાઓમાં પ્રસિદ્ધ છે. આપશ્રી સંવત્ ૧૬૪૨ ના પૌષ કૃષ્ણ સપ્તમીને દિવસે નિત્ય ભગવલ્લીલામાં પધાર્યા. આપશ્રીનું સેવ્ય સ્વરૂપ શ્રીનવનીતપ્રિયજી હાલમાં શ્રીનાથદ્વારમાં વિરાજે છે. આપશ્રીની વિજ્ઞપ્તિઓ ખાસ કરીને ભગવદ્વિરહક્લેશાનંદનું શુદ્ધ પ્રતિબિંબ છે.

## ग्रन्थपरिचयः ।

શ્રીટિપ્પણીજીનું મંગલાચરણ વાચતાં એક બે વસ્તુ આપણુ ધ્યાન ખેંચે છે. '**श्रीविठ्ठलैः क्रियते**' અને '**चिरविचारहृद्गततदीयतात्पर्यम्**' શબ્દોથી આપશ્રીની પ્રૌઢ અવસ્થામાં આ ગ્રન્થ યોજાયલો છે એમ દિસે છે. તેમજ '**स्वे यदरणं शरणमामकं हृदयाम्बुजम्**' એ શબ્દોથી આપશ્રીના સૌભાગ્યમદનું અને પ્રબ્લેકચિત્તતાનું દર્શન થાય છે. આચાર્યશ્રી શ્રીસુબોધિનીજીમાં જે નિગૂઢ આજ્ઞાઓ કરી ગયા છે તે આજ્ઞાઓના તદ્ધૃદયગત અન્તિમ તાત્પર્યના દૃષ્ટિબિન્દુથી શ્રીમત્પ્રભુચરણે શ્રીટિપ્પણીજી યોજ્યા છે. આચાર્યશ્રીના નિતાન્ત ગોપ્ય હૃદયતાત્પર્યના કાંઇક અવગાહનની અપૂર્વ અને અનુપમ કૂંચી શ્રીટિપ્પણીજી છે. આપશ્રીની માફક ભગવચ્ચરણારવિન્દના કુંકુમરાગથી અનારક્ત હૃદયને જે સમયે શ્રીમત્પ્રભુચરણ 'ખદ્યોત, ગાવઃ' ઇત્યાદિ શબ્દોનું તાત્પર્ય શ્રીસ્વામિનીજીઓમાં ઘટાવે તે સમયે કાંઇક અતિશયતાનો ભાસ થાય, તો પણ જ્યાં આપશ્રીનું દૃષ્ટિબિન્દુ લક્ષમાં આવે કે તરત જ આ ભાસતી અતિશયતા પણ પરમ હૃદયગમ લાગે છે. કોઈ કોઈ સ્થલે આચાર્યશ્રીની સાંકેતિક વાણીમાં સ્થિત પરમ નિગૂઢ અવ્યક્ત માધુર્ય આપશ્રી અત્યન્ત ઔચિત્યાનુસાર પરમ ઓજસ્યુક્ત અલ્પ શબ્દોમાં દર્શાવી

દે છે જેમ બ્રહ્મસૂત્રોનું અન્ય ટીકાકારકૃત વર્મપર વ્યાખ્યાન અસમત નહિ હોવા છતા પણ આપશ્રી તો સર્વસૂત્રોનું તાત્પર્ય ધર્મિમા જ યોજે છે, કારણકે આચાર્યશ્રીને તે જ અભીષ્ટ છે, અને વ્યાસને પણ તે જ હોવુ જોઇએ, તેમ શ્રીસુબોધિનીજીમા પણ ધર્મપર વ્યાખ્યાન નહિ કરતા, ધર્મિપર સર્વત્ર યોજે છે આચાર્યશ્રી રાસલીલૈકતાત્પર્ય છે, અને તે રાસસ્ત્રી ભાવપ્રતિનિગ્રહ છે, તેથી આપશ્રી શ્રીટિપ્પણીજીદ્વારા શ્રીસુબોધિનીજીનુ તાત્પર્ય એવી રીતે ઘટાવે છે કે જ્યા એઓશ્રીનુ તાત્પર્ય દૃષ્ટિગોચર થાય કે તત્ક્ષણ જ રાસસ્ત્રીનો પરમ નિગૂઢ ભાવ એ જ પરમ પ્રાપ્ય વસ્તુ છે એમ સ્ફુરે, અને તત્સ્ફૂર્તિ થતા રસેશ પ્રભુના રાસોત્સવની પરમફલતાનો આસ્વાદ પ્રાપ્ત કરવાના પ્રચુર હૃદયગમ મનોરથો તદ્ભાવથી આરક્ત હૃદયમા સ્ફુરે, અને ક્વચિત્ કરુણામય પ્રભુના કૃપાતિશયથી હીનાધિકારીને પણ પરમફલની સિદ્ધિ થઈ જાય વસ્તુત શ્રીસુબોધિનીજીનુ યથાસ્થિત તાત્પર્ય શ્રીટિપ્પણીના દર્શન વિના સ્ફુરવુ દુર્લભ છે, અને તેથી જે શ્રીસુબોધિનીજીના દર્શનાદિ કરનારાઓ શ્રીટિપ્પણીજીરૂપ ઉપનેત્ર ધારણ કરીને તદ્દર્શનાદિ કરશે તો અમને તો સશય નથી કે તેમનુ હૃદયકમલ પણ ભગવચ્ચરણારવિન્દના પરાગરાગથી સદૈવ અરુણ થયા વિના રહે.

## मुद्रणसंबन्धी ।

વાચકોને શ્રીટિપ્પણીજીના સ્વરૂપનુ યથાસ્થિત પરમ સુન્દર દર્શન થાય તેને માટે યાવચ્છક્ય પરિશ્રમ અમે લીધો છે. શ્રીટિપ્પણીજી સ્વરૂપથી જ શ્રીસુબોધિનીજીના પ્રકીર્ણ શ્લોકોના વ્યાખ્યાનરૂપ છે. તેથી અમે બાજુમા પ્રત્યેક ટિપ્પણના અધ્યાય તથા શ્લોકની સખ્યાનો નિર્દેશ કર્યો છે, અને પ્રત્યેક ભિન્ન વ્યાખ્યાનને માટે નૂતન વિભાગ કર્યો છે શ્રીસુબોધિનીજીના પ્રતીકો મોટા ટાઇપમા છાપ્યા છે શ્રીમદ્ભાગવતના શ્લોક જેના ઉપર ટિપ્પણ છે તે તથા અધ્યાયારભો પણ મોટા ટાઇપમા છાપ્યા છે પ્રકરણના તથા અધ્યાયના આરભ અન્ત નિર્દેશ્યા છે મુદ્રણસમયમા જેટલા સ્વતત્ર લેખ પ્રાપ્ત થયા તેટલા સર્વ શ્રીટિપ્પણીજીમા તે તે સ્થલે બ્રેકેટ ( ) કરી છાપ્યા છે પ્રાચીન પુસ્તકોમા ક્વચિત્ વિદ્યમાન ટિપ્પણ પણ ઉપયોગી જણાયુ ત્યા ટિપ્પણરૂપે છાપ્યુ છે. પાઠપાઠાન્તરો યોજવામા યાવચ્છક્ય પ્રભુદત્ત વિવેક કર્યો છે. અર્થાત્ શ્રીટિપ્પણીજીનુ સર્વાંગસુદર સ્વરૂપદર્શન થઈ શકે તેને માટે યાવચ્છક્ય અમે પ્રભુકૃપાથી કર્યુ છે

## स्वतंत्र लेखो ।

શ્રીટિપ્પણીજીના અન્તે શ્રીગુસાઇજી, શ્રીગોકુલનાથજી, શ્રીહરિરાયજી વગેરે મહાનુભાવોના યાવત્પ્રાપ્ય શ્રીભાગવતના શ્લોકોના સ્વતન વ્યાખ્યાનો તથા શ્રીસુબોધિનીજીના પ્રકીર્ણ ટિપ્પણો પરિશિષ્ટમા છાપવાનો અમારો મનોરથ હતો પરન્તુ આ સમય એ મનોરથ અમારો સફલ નથી થતો તેવી અમને કાઇક ખેદ થાય છે પરિશિષ્ટમા છાપવાને માટે જેમ જેમ અમે સ્વતન લેખો તથા ટિપ્પણોનો શોધ કરતા ગયા તેમ તેમ તે સગ્રહ વૃદ્ધિ પામતો ગયો, અને હાલ અમારી પાસે તે સગ્રહ એટલો તો મહાન્ થઇ ગયો છે કે જો તેનુ અમે મુદ્રણ કરવા જઇએ તો એક બીજા શ્રીમતી ટિપ્પણીજી જ થઈ જાય કદાચિત્ તેથી પણ પરિશિષ્ટ મોટુ થઈ જવાનો ભય લાગ્યો આ કાર્ય પૂર્ણ કરતા પ્રેસની હાડમારીમા કદાચિત્ બે વર્ષ શ્રીટિપ્પણીજીની પ્રસિદ્ધિમા વિલબ થવાનો [illegible] લાગ્યો તેમ જ તે કાર્યને સાગોપાગ પૂર્ણ કરવાને દ્રવ્યાદિસામગ્રીની પણ વિશેષ [illegible] લાગી આથી એ સર્વ સગૃહીત સ્વતન લેખો સ્વતનગ્રન્થરૂપે યથાવ[illegible]
આ નિબંધથી શ્રીટિપ્પણીજી[illegible] અનિચ્છાથી કરવો પડ્યો છે

પ્ત્ર થશે. સ્વતંત્ર લેખોનો આવો સુન્દર મહાન્ સંગ્રહ પ્રભુકૃપાથી અમને પ્રાપ્ત થયો તેથી અમને પણ આ વિલંબમાં પ્રભુની ઇચ્છા કારણભૂત લાગે છે. કદાચિત્ અન્ય લેખોનો પણ સમાવેશ હજુ પણ આ સંગ્રહમાં થવાનો હશે. પરન્તુ સપૂર્ણ સાધનસામગ્રી પ્રાપ્ત થયે તેનું પણ મુદ્રણ અમને અતીવ ઉપયોગી જણાય છે. પ્રભુ તે કાર્ય કરવાનું પણ અપેક્ષિત સામર્થ્ય અમને દાન કરો એટલું જ તત્પ્રતિ પ્રાર્થ્ય છે.

### चित्र ।

શ્રીટિપ્પણીજીના આરંભમાં શ્રીમત્પ્રભુચરણનું લક્ષ્મીઆર્ટસમાં તૈયાર કરાવેલું રંગિત ચિત્ર ધર્યું છે, તે રા. હરખલાલ હરિદાસ ભગતે આપ્યું છે. તેથી તેમનો પણ ઉપકાર માનીએ છીએ.

### श्रीव्रजरत्नजीनुं उपकारसंस्मरण ।

શ્રીટિપ્પણીના મુદ્રણદ્વારા પ્રકાશ કરવામાં શ્રીમદ્વ્રજરત્નજીનો આદિથી અન્તપર્યન્ત પરમ ઉપકાર થયો છે. શ્રીટિપ્પણીજીના મુદ્રણાર્થ અપેક્ષિત દ્રવ્ય સંપાદન કરવામાં, શોધન માટે નિજ મંદિરના સંગ્રહમાંથી અપેક્ષિત પુસ્તકો આપવામા, શ્રીકંકરપત્રીના શ્રીદ્વારકાધીશજી-ના મંદિરના પુસ્તકસંગ્રહના દ્વાર પરમ પરિશ્રમ લઇને અમને ઉઘડાવી આપવામાં, અને નિજમંદિરમાં શ્રીબાલકૃષ્ણજીની નિકટ સેવામાં વિરાજતા શ્રીમત્પ્રભુચરણ શ્રીમદ્વિઠ્ઠલેશ્વરના નિજ-શ્રીહસ્તાક્ષરથી લિખિત મૂલ શ્રીટિપ્પણીજીના પુસ્તક સાથે મુદ્રિત શ્રીટિપ્પણીજીના પુસ્તકને વિના પ્રતિબંધે અને વિના સંકોચે પરમ ઉદારતાથી અને સરલતાથી સરખાવવા અને શોધવા દેવામાં, ઉક્ત મહારાજશ્રીની સાંપ્રદાયિક ઉજ્જ્વલ ઉન્નતિ કરવાની પરમ અભિરુચિ સ્પષ્ટ થાય છે. આ પ્રકારે અપૂર્વ અને અનુપમ ઔદાર્ય દર્શાવીને મહારાજશ્રીએ નિખિલ સંપ્રદાયને આપશ્રીનો પરમ ઋણી બનાવ્યો છે. મહારાજશ્રીનો અમારા ઉપર જે પરમ અનુગ્રહ થયો છે તેનું કથન અસ્મત્પ્રોક્ત પ્રાકૃત શબ્દોથી થઈ શકે એમ નથી. મહાનુભાવો નિજ અનુભવથી યથાર્થ સમજી શકે છે. તેમને અસ્મત્કથનની અપેક્ષા નથી. શ્રીમદ્બાલકૃષ્ણપ્રભુ મહારાજશ્રીના સકલ સાંપ્રદાયિક ઉન્નતિપ્રસારના મનોરથો સફલ કરો એટલું પ્રાર્થી વિરમીશું.

### ग्रन्थनिवेदन ।

શ્રીસુબોધિનીજીના વરેણ્ય આશયો સ્ફુરાવવામાં આ પુસ્તક કોઈ પણ મહાનુભાવ ભગવ-દીયને સહાયક થશે જ એ વિચારથી અમારા પરિશ્રમની કૃતકૃત્યતા માનીએ છીએ. અન્તમાં આ પરમ પ્રેમથી અને અભિરુચિથી સિદ્ધ થયલો ગ્રન્થ શ્રીમત્પ્રભુચરણકમલમાં સમર્પણ કરીએ છીએ.

વસન્ત પંચમી, ૧૯૭૭. મુંબઈ.

મૂલચન્દ તુલસીદાસ તેલીવાલા,
ધીરજલાલ વ્રજદાસ સાંકલીયા.

तत्प्रसिद्धमिति तद्धर्मसाम्यमाचार्यैर्निरूपितम् । मूलेऽनुशयनशब्दस्य भावार्थकत्वपक्षे त्वनुशय्यतेऽनेनेत्यनुशयनमिति करणव्युत्पत्त्या ताभिः सहात्मनो निगूढभावकरणं येन स निरोधः । स्वकीयेषु स्वविषयकभावोत्पादनं यया लीलया क्रियते सा निरोधशब्दवाच्येत्यर्थः । अथ प्रकरणार्थरूपं नमस्यन्ति **चतुर्भिरिति** । दशमस्कन्धे पञ्चप्रकरणानि सन्तीति पञ्चधा प्रकरणार्थरूपो मम हृदये यो विराजते तं नमामीति सम्बन्धः । पञ्चरूपत्वं प्रकटयन्ति । आद्यं चतुर्भिरध्यायैः । द्वितीयं प्रमाणप्रमेयसाधनफलात्मकैश्चतुर्भिः प्रकरणैः । तथैव तृतीयम् । चतुर्थं त्रिभिः प्रकरणैः । पञ्चमं षड्भिरध्यायैः । एवं पञ्चधा यो विराजत इति सम्बन्धः । **पूर्वोक्तरेति** । अशरीरस्य विष्णोः पुरुषशरीरस्वीकारः सर्गः, पुरुषात् ब्रह्मादीनामुत्पत्तिर्विसर्गः, उत्पन्नानां तत्तन्मर्यादया स्थापनं स्थानम्, स्थितानामभिवृद्धिः पोषणमिति प्रकारकः कार्यकारणभावः । प्रकृते च पूर्वस्कन्धे भक्तानां निरूपणात् तेषां चित्तवृत्तिनिरोधे कथ्यमाने स तिष्ठति, अन्यथा मुक्तानामाश्रयत्वेनाश्रयनिरूपणान्मुक्तिमनिरूप्य तन्निरूपणमशक्यमिति तदसंगतं स्यात्, निरोधः प्रलयत्वेन तेऽभिमत इति मुक्त्यनन्तरं तन्निरूपणे मुक्तानां प्रलय इति संगतिर्भवेत्, सा चायुक्ता, अनेवंकथने कार्यकारणभावक्षतिरित्यर्थः । **आद्यन्तयोरिति** । प्रकरणयोरिति शेषः । तत्र दुष्टमारणाभावाल्लक्षणस्याप्रवेश इत्यव्यापकं लक्षणमिति भावः । **मुक्तावपीति**। स्कन्धान्तरे तन्निरूपणादतिव्यापकं तदिति भावः । एवं सति तस्या लीलाया दशविधलीलामध्यपातित्वाभावेन भागवतेऽप्रवेशः । अथ ग्रहिलतया प्रवेशो वाच्यस्तदा दशविधलीलाभ्यो भिन्नत्वेन भागवतमध्यपातित्वेन चैकादशी सा भवेदित्याहुः **लीलाधिक्यमिति** । नवलक्षणज्ञानं ह्याश्रयज्ञाने कारणम् । तथा सति तयोस्तथात्वहानिश्चेत्याहुः **कार्येत्यादि** । 'दशमस्य विशुद्ध्यर्थं नवानामिह लक्षण'मित्युपक्रान्तत्वात्तेभ्यः पूर्वमाश्रयोक्तौ तत्त्यागश्च भवेदित्याहुः **प्रक्रान्तेति** । **ब्रह्मेति** । तेषां भक्तत्वेऽप्यधिकारित्वात् केवलभक्ताया भूमेराधिक्यं तदपेक्षयेति भावः । **अन्यसंश्रय** इति । भक्तेष्वेवाविश्य सेवितवन्तो, न स्वातन्त्र्येणेत्यर्थः । यद्वा प्रभोराविर्भावस्य स्वस्यापीष्टत्वेऽपि न स्वयं विज्ञापयितुं शक्तास्तादृगार्त्यभावात्, किन्तु तादृशीं भुवमग्रे कृत्वेत्यर्थः । **प्रद्युम्न** इति । अत्र निबन्धानुरोधादयं क्रमो न विवक्षित इति ज्ञेयम् । हेतोस्त्रैविध्ये तात्पर्यमाहुः **गुणा** इति । सत्त्वादय इत्यर्थः । **तद्गतम्** । भक्तगतमित्यर्थः । द्वादशभिः प्रश्ने हेतुमाहुः **गुणदोषग** इति । षड्गुणाः लोके दोषत्वेन प्रसिद्धा धर्माश्च षड् देशान्तरगता गर्भमातुलमारणादयः । उभयविषयकत्वात्तस्य तथात्वमित्यर्थः । गुणवाक्यसाम्यं दोषवाक्यानामयुक्तमित्याशङ्क्याहुः **समत** इति । यथा गुणा उत्तमास्तथा लोके दोषा अप्युत्कटा इत्युभयोः साम्येन राज्ञा प्रश्नः कृत इति तथेत्यर्थः । समत इति भावप्रधानः ।

**१०-१-३. अग्रिमप्रयोजनार्थमिति** । अनवतारसामयिकजीवोद्धारार्थमित्यर्थः ।

**श्रवणानन्दत्वेने**ति गानतात्पर्यम्। **अनिवार्या** इति। भगवद्विषयकत्वेन निवारयितुमयोग्याः कामादय इत्यर्थः। **तथापि श्रवणस्ये**ति। आद्या प्रवृत्तिर्विषयत्वेनैवेति तथा प्रवृत्तस्याखिलपुरुषार्थसाधकेऽर्थे प्रवृत्तिप्रयोजकं विषयान्तरसमानधर्मवत्त्वं जघन्यमेवेति तथोक्तम्। **अनिवर्त्यदोषेण चे**ति। सहजासुरत्वेनेत्यर्थः। **वैराग्यजनकस्ये**ति। गुणानुवादे वैराग्यजनकस्येत्यर्थः। दैत्यानां मुक्तिस्वरूपमाहुः **अपुनरावृत्ती**ति।

१०-१-४.

**पुण्यद्वारमात्रता**मिति। अग्रे हि भगवान् साक्षादेव भक्तदुःखं निवारितवान्न तु केनचिद् द्वारेणेत्युच्यते। तेन तच्चरित्रेऽपि साक्षात्पुरुषार्थसाधकत्वं, न तु पुण्यद्वारेति ज्ञापितं भविष्यतीति तथेत्यर्थः। क्षेत्रं पाण्डोः, बीजिनो धर्मेन्द्रादयः। एकस्वामिकक्षेत्रजत्वेन पञ्चापि। एकक्षेत्रजत्वेन तु त्रय एव पितामहा भवन्ति। **स्वधर्मत्याजनसामर्थ्यमपी**ति। भगवदिङ्गितकरणं तद् देवव्रतं, तद्विरुद्धं तद् दैत्यव्रतम्। तथाच देवव्रते भीष्मे तिमिङ्गलत्वं दैत्यव्रतं कौरवैः संपादितमिति तेषां कौरवाणां तयासामर्थ्यं जातमित्यर्थः। इदमतिसामर्थ्यमिति भावः। सैन्यसागरपदतात्पर्यमाहुः **बहिःस्थितमपी**ति। सैन्यस्था हीतस्ततः स्वसेनाबहिःस्थितं मारयन्ति, न तु स्वसेनाम्। समुद्रस्यास्तु स्ववृन्दमध्यस्थमपि। इह च उभयरूपत्वमुक्तम्। तेनोक्तकैमुतिकन्यायसूचनाय सैन्यत्वं समुद्रत्वं चोक्तमित्यर्थः। पोतमपि गिलन्तीति साधनघातकत्वम्। **चेतने**ति। जलात्मकः समुद्रः स स्वयं न मारकोऽचेतनत्वात्, किन्तु तत्स्थाश्चेतनाः। इह समुद्रस्यैव चेतनत्वात् स्वस्वरूपेणैवान्यनाशकत्वं ज्ञाप्यत इत्यर्थः। प्लवत्वोक्तितात्पर्यमाहुः **भगवत इत्यादिना**। प्लवो हि समुद्रात् स्वल्पतरस्तत्स्वरूपानन्तःपाती च। स्वाश्रयणमात्रेण तारको, न तु मकरादिनिवारणे स्वक्रियावान्, एवं भगवानपि पाण्डवसैन्यमशेषं रक्षितुं नोद्यतः। तदा बृहद्रूपः स्यात्। किन्तु पाण्डवानेव रक्षितुम्। अतोऽल्परूपत्वमयुद्ध्यमानत्वात्तदनन्तःपातित्वम्। 'पितामहा मे'इति श्लोकविवरणे **तथापि सम्यगित्यादि**। उक्तसागरं वत्सपदमकुर्वन्नित्येतावतैव चारितार्थ्ये प्रभोः प्लवत्वनिरूपणं तत्तरणोक्तिश्च निरर्था। वत्सपदे मज्जनासंभवेन प्लवानपेक्षणादित एव तरणस्याप्यसंभवादुल्लङ्घनस्यैव तत्र संभवादित्याशङ्क्य तत्तात्पर्यमाहुः **तथापी**ति। वत्सपदे तासामेव मज्जनसम्भवात् प्लवतरणोक्त्या तेषां तथात्वं ज्ञाप्यत इत्यर्थः। तत्र हेतुः **सम्यगित्यादि**। तत्रापि हेतुः **स्वदृष्टये**ति। स्वसाम्येनेत्यर्थः। **लौकिकदृष्टये**ति वा। भगवत्त्वेन भगवति ज्ञाने वत्सपदे मज्जनसंभावना न स्यादित्याहुः **भगवद्भाव इति**। भक्ष्माग्रदर्शन उत्तरावच्छरणगमनमेव स्याद्, न शस्त्रग्रहणम्। तदा चक्रेण प्रभुणा चेन्न रक्षिताः स्युस्तदा स्वसामर्थ्यस्याप्रयोजकत्वाद् नाश एव स्यात्। इदमेव मज्जनरूपम्। स्वसामर्थ्येनास्माकं जय इत्यभिमानेन हि तदा शस्त्रग्रहणम्। एवं सति पूर्वमपि प्रभुणैव रक्षितत्वेन तदुपकाराज्ञानान्माहात्म्याज्ञानाच्च क्षुद्रत्वमेव तेषु पिपीलिकात्वम्।

१०-१-५.

**द्रौण्यस्त्रेत्यस्य** विवरणे **अर्जुनस्येत्यादि** । सर्वात्मना गर्भदाहे गोप्यस्याभावाद् गोपनासम्भव इति गोप्यमशमाहुः **अर्जुनस्येत्यादिना** । स्थूलांशे दग्धेऽप्युक्तबीजत्वांशात्मको धर्मस्तु वैष्णवांशत्वात् स्थित एवेति दग्धानप्यशान् स्वसामर्थ्येन अदग्धान् भावितवानिति तैः सहभूत बीजभाव जुगोपेत्यर्थः । **योगविभागादिति** ।

१०१६.

'जनपदशब्दात् क्षत्रियादञि'ति सूत्रप्राप्ताञ्प्रत्ययस्य लोपस्तु 'जनपदे लुबि'ति सूत्रेण भवति, इह कुरुशब्दस्य जनपदावाचित्वेऽञो लोपासम्भवादेव प्रयोगासम्भव इत्याशङ्क्य तत्सम्भवप्रकारमाहुः **योगविभागादिति** । जनपदशब्दे विभक्ते कृते, लुबित्येतावन्मात्र सूत्रमिति जनपदावाचित्वेऽपि तत्प्रत्ययलोपात्तथा शब्दसिद्धिरित्यर्थः । **अन्यथा प्रतीतैरिति** । पूर्वं दग्धत्वेन प्रतीतानामदग्धत्वेन प्रतीतिरन्यथाप्रतीतिः । **धर्मरक्षार्थं** इति । वेदमन्त्रेणाधिष्ठापितब्रह्मरूपदेवताकं हि ब्रह्मास्त्रम् । तत्कार्यस्य भगवता प्रतिबन्धे भगवतो वेदमार्गरक्षकत्वलक्षणो धर्मो गच्छेदिति तथा । एतेनादाहेऽपि सामर्थ्यं प्रभौ सूचितम् । **मोक्ष** इति । वेदमन्त्राधिष्ठिता देवता हि स्वकार्यं कृत्वा निवर्तते । तदकरणे तदनिवृत्त्या मोक्षप्रतिबन्धः स्यान्मर्यादामार्ग इति तदभावार्थं तथेत्यर्थः । **तत्त्वसहितमिति** । 'तेजस्तत्त्व सुदर्शन'मिति वाक्यादिति भावः । इह चक्रपदं भगवति स्थितानां सर्वेषां तत्त्वानामुपलक्षकम् । तानि तु द्वादशस्कन्धे, 'अथेममर्थं पृच्छाम' इत्युपक्रम्य, 'तान्त्रिकाः परिचर्यायां केवलस्य श्रियः पते' । अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथा च यैरिति शौनकेन पृष्टः सूतो 'नमस्कृत्य गुरून् वक्ष्ये विभूतीर्वैष्णवीरपी'त्युपक्रम्य अङ्गादीनि पूजायां येन रूपेण ध्यायन्त्याचार्यास्तानि रूपाण्यवदत् । तथाच ध्यानार्थमेव तथा प्रदर्शनमिति साधूक्तं **उपकार** इति । रक्षार्थं चक्रोक्तावग्निमोक्त्या विरोधः स्यान्न तूक्तरीत्याहुरत **एवेति** । कालनिग्रहार्थं **वेति** । चक्रं मारकत्वेन कालरूपम् । तद् धृत्वा तिष्ठतीति तन्न स्वकार्यकरणक्षमं भवतीति तथा । चक्रपदोपादानतात्पर्यान्तरमाहुः **अत एवेति** । दग्धस्यापि पूर्वभावसम्पादनेन जीवितसम्पादनमनुभावः । तादृशो भगवान् पूर्णे गर्भे प्रयोजनाभावात्ततो निवृत्त इति सोऽनुभावोऽपि निवृत्तः[1], अन्यथा भगवता रक्षित इति कालादेरपि भयाभावादयं देहो नित्य एव स्यात् । तथाच चक्रं भ्रमणशीलमिति व्यावृत्य मत्सरितो भ्रमणं कृतवदिति कालाधीनत्व सम्पन्नमितीदानीं न जीवनसम्पत्तिरित्यर्थः ।

**वीर्याणीत्यत्र अनेनेत्यादि** । वारद्वय वीर्यप्रश्नकथनेनेत्यर्थः । यदुवंशे वंशसचन्धिकार्यकरणार्थं प्रद्युम्नांशेनावतीर्य वीर्याणि कृतवानिभमल्लकंसमागधादिवधरूपाणि प्रवयसामपि यौवन यदूनां द्वारकानयनवैदर्भीहरणादिरूपाणि चेति

१०१७

'तत्रांशेनावतीर्णस्ये'त्यनेनावताररूप निरूपितम् । 'वीर्याणि तस्ये'त्यनेनोक्तरूपद्वयमुक्तफलदाने वागीवत् करणभूत यस्य तन्मूलभूत रूप निरूपितम्[2] । अखिलदेहभाजामितिपदादेत-

---

१ आविर्भावेति पाठः । २ पुरुषकालरूपात्मकम् ।

दवतारात् पूर्वमपि तेषामुक्तफलदानोक्तेस्तथात्वं ज्ञायते । । एवं सत्यवतारकार्यस्य मूलरूपकार्यस्यापि करणादुभयरूपत्वमस्मिन्नवतारे ज्ञाप्यत इत्यर्थः । तेन वीर्यबहुत्वसम्भावनास्तीति तत्प्रश्न इति भावः । अत्रैतदवतारवीर्यं पृच्छँस्तत्कर्तुर्यन्मूलरूपत्वमुक्तवान् तेनास्यैवावतारस्य मूलरूपत्वोक्त्या माहात्म्यमेवोक्तवानित्याशयेन पक्षान्तरमाहुः इदमेवेत्यादिना । आत्मत्वेन मृत्युदानमनुपपन्नमित्याशङ्क्य समादधते **निमित्तवशादिति** । देहभाक्त्वोक्तितात्पर्योक्तिरियम् । 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ'विति तत्त्वसूत्रात् । 'स नैव रेमे, तस्मादेकाकी न रमते स द्वितीयमैच्छ'दित्यादिश्रुतिभ्यश्च जीवानां देहसम्बन्धः स्वक्रीडार्थमेव भगवता कृत इति क्रीडैव निमित्तं, तद्वशात्तथेत्यर्थः । **भगवद्ध्यानरूपाणीति** । आन्तरत्वादिति भावः । **अतः कथमपीति** । उतेति पदादन्तर्मुखेभ्यो रूपद्वयेनाप्यमृतदानम् । विषयपक्षे भजनोपयोगित्वेन तथात्वम् । ब्रह्मादिपक्षे भगवत्क्रीडोपयोगित्वेन विभूतिरूपत्वेन च ज्ञानात्तथात्वम् । बहिर्मुखेभ्यस्तथात्वं स्पष्टम् ।

**क्व वासमित्यत्र** । अथवेत्यादि । अधुनापि, 'वयं गोवृत्तयोऽनिशं, श्रूयतां मे पित'रित्यादिवचनानामश्रवणाद्वसुदेवपुत्रत्वेन यादवत्वेन ज्ञानादेवमपि कथनं सम्भाव्यते इत्याशयेनेदमुक्तम् । १०-१-९.

**देहं मानुषमित्यत्र** । **तत्रैवोक्तमिति** । तत्रैव वृष्णिमानुषदेह एवाश्रयणमत्रोक्तमित्यर्थः । तेषु सर्वेषु भूभारराजपृतनानिरसनसामर्थ्याय भगवानाविष्टस्तिष्ठतीति तथा । वृष्णिभिः सह संव्यवहारे क्रियमाणे वृष्णिदेहेष्वाश्रयणसंभवादपि तथा । एतज्ज्ञापनायैवाश्रयण उक्तः । अन्यथा तं विनापि प्रश्नसम्पत्तेस्तं न वदेत् । एवं सति, 'वृष्णिभिः सह देहं मानुषमाश्रित्य कति वर्षाणि यदुपुर्यामवात्सी'दिति सम्बन्धो ज्ञेयः । अत एवाग्रे प्रभुर्वक्ष्यति, 'नैवान्यतः परिभवोऽस्य भवेत् कथञ्चि'दित्यत्र हेतुभूतं विशेषणं मत्संश्रयस्येति । १०-१-११.

उद्धारविषयनिर्द्धारमाहुः **ये भक्ता** इति । शास्त्रीयसाधनरहितानामित्यर्थः । ननु ससाधनानामपि कथं न विषयत्वमित्याशङ्क्य तत्र बाधकमाहुः येषामिति । किञ्च, एतेषां निरोधपदार्थोऽपि पूर्वस्माद्विलक्षणोऽतोपि न विषयत्वमित्याहुः **संसारेति** । अत्र ससाधनेष्वित्यर्थः । निरूप्यते । त्वयेति शेषः । तथाच संसारस्याविद्याकार्यत्वेन तन्निवृत्तेश्च ज्ञानैकसाध्यत्वेन तद्रूप एव निरोधस्तेषां वाच्य इत्याह अत इति । तथाच चहेव वैलक्षण्यमिति भावः । किञ्च । भक्तानां संसारो लीलोपयोगित्वेन सुखरूपस्तेषां तु दुःखरूप इतीतोपि तद्वैलक्षण्यमित्याहुः दुःखेति । प्रासङ्गिकमुक्त्वा पूर्वोक्तमुपसंहरन्ति एवमिति । एकं निःसाधनानां भगवत्प्राप्तिलक्षणमित्यर्थः । ननु भगवत्कृतनिरोधो न शास्त्रैर्जनयितुं शक्य इति पूर्वोक्तशेषभावासम्भवात् ससाधनानामपि विषयत्वं वक्तुं युक्तम् । अत एव, 'तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगवितानार्थं कथं १०-१-१७.

पश्येमहि स्त्रियः' इतिपृथग्वचनमपि गीयत इत्याशयेन पक्षान्तरमाहुः **द्वयं** **चेति** । उभयोर्निरोधस्यैकरूपत्वेनोक्तवैलक्षण्याभावात्तथेत्यर्थः । एवम्प्रकारेण लीलाकरणे कथने च हेतुमाहुः **साङ्गस्येति** । निरोधस्येति शेषः । अत्रोपपत्तिमाहुः **तत** इति । यतश्चिकीर्षितनिरोधमवतीर्य स्वयं कृतवानतो हेतोरयं स्कन्धो दशमत्वेन युज्यत इत्यर्थः । अन्यथाऽनवतीर्यैवाम्बरीषादेरिवात्रापि भक्तदुःखनिवारणोक्तौ भक्तकथैवोक्ता भवतीति ईशानुकथैवेयमपि भवेदित्यस्य स्कन्धस्य दशमत्वं न स्यादिति भावः । अङ्गमाहुः **अवतार** इति । येन विना यन्न सम्भवति तत्तदङ्गमत्रोच्यते । तथाचानाविर्भावे निरोधपदार्थ एव न स्यादिति भावः । यद्वा, यतः संसारभवदुःखव्यावृत्तिरेव निरोधप्रयोजनमतो निरन्तरं भगवत्स्मरणात्मको निरोधो दैवासुरसाधारणो निरूप्यत इत्याहुः **संसारेति** । स्मृतिश्च क्वचित् स्नेहात् क्वचित् द्वेषादिनेति परं विशेषः । एकं पूर्वोक्तमित्यर्थः । अथवा यतो लीलानुपयोगिसंसारवतां संसृतिरपि दुःखरूपातोधिकारिभेदेन विरोधाभावाद् दुःखनिवृत्तिः संसारनिवृत्तिश्चेति द्वयमपि फलमित्युक्तमित्याहुः **दुःखरूपा च संसृतिः, द्वयं वा न विरुध्यत** इति । एवमनुक्तौ दुःखरूपेत्याद्यनर्थकं स्यात्, केषाञ्चिद्भक्तानां दुःखमेव निवारितम् । अहम्ममात्मकः संसारस्तु लीलोपयोगित्वेन स्थापित एव । केषाञ्चिद्भक्तानामन्येषां च संसारोऽपि नाशितः । तेन द्वयमपि फलमित्यर्थः । नन्वाधिदैविकप्रवर्तनं विना वाण्युद्गमासम्भवे भक्तदुःखहेतुवाणीं स कथं प्रवर्तितवानित्याशङ्क्य तत्तात्पर्यमाहुः **सर्वमुक्त्यर्थमिति** । हर्याविर्भावं विना सा न भवतीति स्वयं तं कर्तुमशक्तस्तद्धेतुहेतुं चक्र इत्यर्थः । तदनुगुणदेवतायास्तदुत्कर्षमसहमानाया इतिरूपेऽग्रिमग्रन्थे तत्पदाभ्यां कंस एवोक्त इति ज्ञेयम् । मुक्तिहेतुत्वेन तदनुगुणत्वम् । भगवन्मातृदास्य दैवपक्षे परमोत्कर्षः । अयं चासुर इत्यसहमानत्वम् । एवमविरोधः पूर्वापरयोः । कालो ह्यत्र प्रतिबन्धको जात इत्यत्रापि अत्रपदस्य दैवानुगुणत्वे कंसस्येत्यर्थो ज्ञेयः । तथा सति मातुर्दुःखासम्भवेन मातृत्वमेव न स्यादिति भावः । **अनस्तेऽप्यन्त** इति । भीष्मादय इत्यर्थः । **तद्धर्मा** इति । नृपधर्मा इत्यर्थः ।

**वासुदेवकलानन्त** इत्यस्य विवरणे । तदाविष्टस्तस्मिन् सङ्कर्षणे आविष्ट इत्यर्थः ।

१०-१-२४. अत्र पूर्वं शय्यारूपे सङ्कर्षणे शयानस्यावतारदशापन्ने तस्मिन्नावेशरूपा स्थितिरनुशयनं भवति । तथाचानुशयनस्यैव स्कन्धार्थत्वाद्बलदेवाविष्टवासुदेवकलाया एव लीलास्कन्धार्थः स्यादित्यत आह **अत्र** इति । यतः शयानस्यावेशोऽतो हेतोर्विष्णोः सात्त्विककल्पाविष्टानुरेव बलभद्रेण कृत्वानुशयनमुच्यते, नात्मनः पुरुषोत्तमस्य नेत्यर्थः । 'निरोधोऽस्यानुशयनमात्मन' इति मूलवाक्यादिति भावः । तेन नोक्तदूषणमिति भावः । तर्हि बलदेव एवं निरूपणे किं तात्पर्यं तदाह **एकवदिति** । पूर्वोक्तवासुदेवांशत्वादंशांशिनोश्च तादात्म्येनाभेदादेकवदेव प्रोच्यते । तेन तत्रापि तथा निरूपणमित्यर्थः । अतस्तच्चरित्रमपि मूलरूपचरित्रमेवेति भावः । नन्वेवं लोके न प्रतीयत इत्यत

आह कृष्ण इति। यथांशलेनैक्येपि स्वरूपे द्वैविध्यप्रतीतिस्तथा चरित्रेपीत्यर्थः। अत एव यथा चतुर्व्यूहरूपेण प्राकट्यं मथुरायां, पुरुषोत्तमस्य व्रजे तथात्रापीत्याह देवक्यामिति।

**शूरसेनो यदुपतिरित्यत्र**। ननु मातृचरणानां दुःखप्रापणोपायमात्रं ह्यत्र वाच्यम्। तत्तु विवाहं कृत्वा गृहगमनसमये तथाकाशवाण्यभूदित्येतावतैवोक्तं भवतीति देशकालावस्थादिभिः सर्वोत्कर्षवर्णनं व्यर्थमित्याशङ्क्य तत्तात्पर्यमाहुः **सर्वोत्कर्षं त्वित्यनेन**। **भगवदाविर्भावस्थानमिति**। यथा वसुदेवजन्मसमय आनका दुन्दुभयश्च नेदुरिति सर्वत उत्कर्षो लोके ज्ञातस्तथा स्त्रिया भर्तृगृह एव पुत्रजन्म भवति। तत्र विवाहो निमित्तमिति तं कृत्वा तद्गृहगमनसमये मातुः सर्वोत्कर्षे भगवता सम्पादिते सति यत् दुःखमुपस्थितं तत् स्वल्पके निमित्ते शीघ्रमनायासेन भगवता निरसितुं योग्ये सति भवतीति भगवन्मार्गे शास्त्रे निरूपितमित्यत्रापि न काचिच्चिन्तेति ज्ञापनाय तद्वर्णनमित्यर्थः। सुष्ठु अल्पकमतिसूक्ष्मं दुर्ज्ञेयमिति यावत्। तादृशे निमित्ते सतीत्यर्थः। भक्तदुःखं विना भगवदाविर्भावो न भवतीति तदर्थं तत्कथनमित्यपि तात्पर्यं ज्ञेयम्। **देशतः कालत इत्यादि**। सत्यैव सुखदा इत्युक्त एकस्य द्वयोर्वापि सुखदत्वं सम्भवतीति नायं नियम इत्याशङ्क्य निमित्तानां तावद्रूपत्वात्तथेति बोधयितुं तान्येवोक्तानि, **देशत इत्यादिना**। अथवा, सार्वविभक्तिकस्तसिलिति केचिदिति वाक्यादत्र प्रथमातस्तसिलिति ज्ञेयम्।

१०-१-२७.

**तस्यां तु कर्हिचिदित्यस्य विवरणे**। **सर्वानित्याद्याचकर्षेत्यन्तम्**। पूर्वसान्निध्ये सति भक्तदुःखाभावे स्वावतारो न सम्भवतीति तदर्थं तत्सान्निध्यं दूरीकृतवान्। अग्रे च तत्प्रयोजनाभावात् स्वस्मिन्नेव लीनं कृतवानित्यर्थः।

१०-१-२९.

**पथि प्रग्रहिणमित्यत्र**। **अनेनाधिभौतिकः काल इति**। भगवत्प्रादुर्भावहेतुर्भक्तिमार्गोऽयं विवाहश्चेत्युभयोः साम्यादेतत्सम्बन्धिमार्गे कालकृतप्रतिबन्धकथनेन भक्तिमार्गेऽपि तथात्वं ज्ञाप्यत इत्याशयेनेदमुक्तम्। एवं सत्यस्मिन् मार्गे भगवत्प्रापकमार्ग इत्यर्थो ज्ञेयः।

१०-१-३४.

**खड्गपाणिः कचेऽग्रहीदित्यत्र**। **कचेषु किञ्चिदित्यादि**। ग्रहणक्रियाकर्मत्वेपि कचानां कर्तुर्ग्रहणक्रिययेप्सिततमत्वाभावात्तथात्वज्ञापनाय सप्तम्युक्ता, न द्वितीयेत्यर्थः।

१०-१-३५.

---

१. यथा चतुर्व्यूहरूपेण सह प्राकट्यं पुरुषोत्तमस्य, तथा व्रजे बलभद्रेऽपि वासुदेवावेशेन सह प्राकट्यमित्यर्थः। २ व्यूहरूपेणेत्यर्थः।

**दृष्ट्वा समत्वमित्यत्र । अनेन पञ्चवार्षिक** इत्यादि । अत्रायं भावः । अग्रे निगडनिग्रहानन्तरमेव, जातं जातमहन्निति वक्ष्यमाणत्वात् समर्पणानन्तरममारणे तन्नोचितमिति मत्वा नारदेन तथा कथनादेतदनुपदमेव तत्कथनमिति ज्ञायते । तथाच निग्रहे गर्भासंभव इति । अत एव, जातं जातमिति न कालभेदज्ञापकमित्यग्रे वक्ष्यते । भगवतस्त्वलौकिकी रीतिरिति नानुपपत्तिः ।

१०-१-५९.

## इति प्रथमाध्यायः ।

---

**द्वितीयाध्यायार्थोक्तौ कृष्णोद्यम** इत्यादि । भगवदुद्यमे हेतुमाहुः **महत्त्वेति** । हेतोरिति शेषः । अत एव तावन्तमपि विलम्बमसहिष्णुर्गर्भकर्षणमाज्ञप्तवान् । न ह्येवमन्यत्रेति भावः । अथवान्येभ्योऽवतारेभ्योऽत्र महत्त्वज्ञापनाय मायाज्ञापनवसुदेवादिमनःप्रवेशलक्षणः स उच्यत इत्यर्थः । अथवा महत्त्वं पुरुषोत्तमत्वं तज्ज्ञापनाय सविशेषणः स उच्यत इति सम्बन्धः । असाधारणत्वेनेतरेभ्यो व्यावर्तको धर्मो हि विशेषणम् । तदत्र मायाज्ञापनमेकम् । न हि ब्रह्मादिव्यामोहिकां तामन्य आज्ञप्तुमर्हति, सान्याधीना वा भवति । वसुदेवदुरासदत्वादिकं, देवक्यां स्वहन्तृज्ञानेप्यासुरभावत्याजनं कंसस्य, ब्रह्मादिस्तुतिश्च ।

१०-२-०.

**हतेष्वित्यस्याभासे । देवक्या बन्धनावधीति** । अत्रेदमाकूतम् । सप्तमे गर्भे जाते नन्दाद्या ये व्रज इत्यादि नारदेनोक्तम् । तदा षड्पुत्रहतिर्मातृबन्धनं च जातम् । तदत्र, हतेष्वित्येकेनानूद्य स गर्भो देवक्या हर्षशोकविवर्धनो यम्बूवेत्यर्थेन शीघ्रं भगवदुद्यमे हेतुरुक्तः । पूर्वं शोकवर्धनो नासीत् । हतेषु तेषु अयमपि तथा भविष्यतीति ज्ञानेन तथा बभूव । तथाचेदं सर्वं बन्धनानन्तरं जातमिति तदेव पूर्वावधिर्यस्य तादृशं चरित्रमाहेत्यर्थः । अत एवाग्रे वक्ष्यन्ति 'षड्पुत्रवधात् पूर्वमेव सङ्कर्षणगर्भ' इति । असुरहननं सङ्कर्षणगर्भविषयकं दुःखं च भगवच्चरित्रमेव । तर्हि हर्षवर्धनत्वमनुपपन्नमित्याशङ्क्य तत्रोपपत्तिमाहुः **स चार्धमित्यादिना** । पुरुषोत्तमस्यैव पूर्णानन्दत्वान्मातुर्मनसि तदागमने तत्रानन्दाविर्भाव एवाभूत्, परस्परं तादृशी नामून्निरोधवशादिति सरस्वतीदृष्टान्तेन वक्ष्यते । अस्यानन्दमयत्वेपि प्रभुसङ्गम एव पूर्णानन्दप्राकट्यकरणं भवतीति तथा ।

१०-२-४.

**गच्छ देवीत्यत्र । स्थावरान्नगरादिति** । न गृणातीति नगरमतः स्थावरतुल्यम् । अभिमानेन स्तब्ध एव तिष्ठतीति तथा ।

१०-२-६.

**आविवेशेत्याद्याभासः । अथाक्रोशानन्तरमित्यादि** । ननु मूल एतदानन्तर्यवाचकपदाभावात् स्वयं तत्कथनमनुपपन्नमिति भातीति चेन्मैवम् । भावानवबोधात् । तथाहि । इह हि शीघ्रं स्वागमनार्थमेव गर्भकर्षणाज्ञापनम् । तु, 'गां गता तत्तथाकरो'दित्येतावतैव निरूपितमभूत् । आक्रोशस्तु प्रकृतानुपयुक्तः ।

१०-२-१५.

एवं सत्यपि 'गर्भे प्रणीत' इति श्लोककथनं यत्तद्भगवद्वाक्यस्याथशब्दतात्पर्यकथनायेति ज्ञायते। अन्यथा, 'तत् सन्निकृष्य रोहिण्या उदरे सन्निवेशये'त्युक्ते प्रयोजनाकाङ्क्षायामहं देवक्याः पुत्रतां प्राप्स्यामीत्येतावतैव चारितार्थ्यादथशब्दं न वदेत् । एवं सति यस्मादानन्तर्यं प्रभुबुद्धिस्थं स पदार्थो 'गर्भे प्रणीत' इति श्लोकेन विवृतः श्रीशुकेन । आचार्यैरपि तमेवाथशब्दं प्रतीकत्वेनोक्त्वा, गर्भं इतिश्लोकोक्ततत्तात्पर्यमाक्रोशानन्तरमित्यादिनानूदितम् । अयमर्थो भगवतोऽत्यन्त गोपनीय इति तत्सम्पत्तिर्लोकानामन्यथाज्ञानोक्त्या तत एव तदज्ञानसूचनेन च ज्ञापितेति सर्वमनवद्यम् ।

**पुरुषोत्तमस्तु नन्दगृह** एवेत्यादि, भवतीत्यन्तम् । अत्रायं भावः । उक्तवाक्यानुरोधान्नन्दगेहे पुरुषोत्तमाविर्भावोऽवश्यमङ्गीकार्यः । एवं सति, 'सुतं यशोदाशयने निधाये'त्यग्रिमवाक्य चानुपपन्न भवति । तत्र स्वरूपद्वयदर्शनप्रसङ्गात् । आगतस्य तिरोधानं न वक्तुं शक्यम्, आगमनवैयर्थ्यापातात् । 'प्रागयं वसुदेवस्ये'तिवाक्यविरोधश्चेति उभयतःपाशारज्जुरितिचेत् । अत्र ब्रूमः । नन्दगेहे प्रादुर्भूतस्यैव पुरुषोत्तमस्य सर्वतःपाणिपादान्तत्वेन तदा कार्यमस्तीति वसुदेवगृहे प्रादुर्भाव इति ज्ञायते । स एव, 'बभूव प्राकृतः शिशु'रित्यनेन उक्तः । पूर्वरूपस्य तिरोधानेऽप्यग्रिमकार्यार्थं स्वस्मिन्नेव स्थापितवान् । यतो मुक्तिभूभारहरणवंशसम्बन्धित्वेनाविर्भावपित्रादिसुखदानवेदमार्गरक्षानारदशापनिमोकद्विजसंमाननादिकार्याणि वासुदेवादिमूर्तिनियतकारणकानि उक्तकार्याण्यग्रे स्पष्टानि । एतदेवोक्तम् **एवं सति सर्वेषां चरित्राणामभिनिवेशो भवतीत्यनेन** । अत्र श्रुतार्थापत्तिरेव मानमिति नानुपपत्तिः काचित् । **रूपान्तरमिति** । रूपान्तरत्वेन भानमित्यर्थः। तच्च मानुषत्वम् । तथाच शुद्धे पुरुषोत्तम एव तथा भानस्याग्रे वाच्यत्वान्मायानिरूपणेन तन्नियतकार्यविषयस्याप्युत्पत्तिर्निरूपिता भवतीत्यर्थः ।

**दधार सर्वात्मकमित्यस्य** विवृतौ । द्युद्धिराकाशस्येवेत्यारभ्य, भवतीत्यन्तम् । यथा यथा मित्याद्यावरणापसारणं तथा तथाकाशप्राकट्यं यथा, तथा यावद्यावन्मायारूप येन प्रकारेणापसार्यते तावत्तावत्तेन प्रकारेण भगवत्स्वरूपं

१०-२-१७.

प्रकटं भवतीति क्रमेणैव गर्भलक्षणाविर्भावस्तेनेतरगर्भेभ्यो भगवद्गर्भसम्बन्धिन्यपि वृद्धिर्देवक्या अविलक्षणोपपन्ना भवति । एवमेव यावता अंशेनेतोपसारण तावतांशेन यशोदागर्भे मायाप्रादुर्भाव इति यशोदाया अप्यविकृता वृद्धिस्तथेत्यर्थः । अन्यथा त्वलौकिकत्वेन पूर्वं तल्लक्षणाभावे पश्चात् प्राकट्ये च उभयोर्यशोदादेवक्योर्बुद्धिर्विकृता भवेत् । तथा सति लीला न सम्पद्येतेति तथैव ज्ञेयमिति भावः । साकारव्यापकलक्षणः स्वोकाकारस्यावरणापसारणेऽपसारितस्यापि तस्य तथाकारत्वं लोकन्यायेन सिद्धम् । अत्रावरणस्य व्यापकत्वेनाविशेषाद् यशोदागर्भदेशेऽपि तत्प्राकट्ये नानुपपन्नं किंचित् ।

---

१ विरहेन सर्वात्मभावनमित्यर्थः ।

**सत्यव्रतमित्यस्य विवरणे। अष्टविधं भवतीत्यादि।** अष्टविधत्वं चाग्रे स्फुटीभविष्यति। यत् सत्यं तत् परमित्यादिवक्ष्यमाणश्रुत्यर्थनिरूपकमिति ज्ञेयम्। यद्वा सर्वोत्कृष्टमित्यत्र वाशब्द एवकारार्थो वाक्यालङ्कारे। श्रुताविव स्तुतावप्येतयोरैक्यं प्रतिपादनीयमित्यतिदिशन्ति। **एवं सत्यत्वेत्यादिना।** लोके हि व्रतमुत्कृष्टमिति यदुक्तं तत्रोपपत्तिर्यस्त्वित्यादिना उच्यते। तथाच लोके व्रतं सत्यं चेति द्विविधं सत्यं निरूपितं भवति। मूले व्रतपदेनैतदुभयप्राप्तौ हेतुमाहुः। **उभयोः परत्वादिति।** सत्यव्रतमित्यनेन सत्यं परमिति श्रुतिपदस्यार्थ उक्तो भवतीति भावः। तेन लोके सत्यं व्रतं चेति द्वैविध्यम्। अग्रे परं सत्यमिति श्रुत्यर्थनिरूपकं सत्यपरमिति पदं व्याकुर्वन्ति। **अतः परमिति।** अत्रापि लोके लौकिकं नियामकं वैदिकं द्वादशविधं चेति द्वैविध्यम्। भगवतो व्रतं लोकानुसारेण देवहितकारिणो नियामकं चेति द्वैविध्यम्। त्रिसत्यमिति पदार्थे भूरादित्रयं कायादित्रयं चेति द्वैविध्यम्। एवमष्टविधत्वं सत्यस्य भगवतः कालरूपस्य। यदि सत्यरूपत्वं न स्यात्तदा लोके व्रतादिकं नियामकं च वैदिकं च द्वादशविधं भगवद्व्रतानि च लोकाश्चात्मादयश्च न स्युरित्युपपत्तिरूपत्वम्। व्रतं हि उपोषणादिरूपमहोरात्रादिसाध्यम्। सत्यमपि तप्ततैलादिष्वप्यदाहोऽत्युत्कटपापेऽल्पेनैव कालेनानिष्टमनुत्कटत्वेचिरेणेत्यादि। अन्यत् स्पष्टम्। लौकिकमुक्तद्वादशविधं वैदिकं चेति द्विविधम्। भगवदीयं व्रतं नियामकं चेति च द्विविधम्। लोका भूर्भुवःस्वर्लक्षणाः। आत्मानः कायजीवपरमात्मानः। लोकाः फलरूपाः। इतरे त्वितराणि। इदं च द्विविधम्। एवमष्टविधत्वं सत्यस्योक्तभेदेन। पदद्वये विधेयभेदेन द्वैविध्यम्। त्रयं च द्विविधम्। एवं चतुर्विधत्वम्। **इतराविति।** प्रमाणफललक्षणावर्थावित्यर्थः। **आद्यन्तयोरिति।** सत्यात्मकमित्यन्तिमेन पदेन फलम्। एतस्मादाद्येन, ऋतसत्यनेत्रमित्यनेन प्रमाणमित्यर्थः। भगवत्स्वरूपज्ञानशक्त्योः फलत्वप्रमाणत्वे प्रसिद्धे। अथवा सत्यस्य योनिमित्यनेन प्रमाणम्। सत्यस्य सत्यमित्यनेन फलम्। 'मानाधीना मेयसिद्धि'रिति कारणान्तःपाति मानमिति तथा। पूर्वमज्ञस्य ज्ञानेन विषयस्वरूपमपि तदैव सिद्धं भूतमिति यतो मानम्। फलं विवृतावेव स्फुटं, **सत्य एवेत्यादिना।** प्रमाणादिचतूरूपं भगवति प्रतिष्ठितं चेति पञ्चविधम्। पूर्वोक्तमष्टविधमेतत्पञ्चविधं चेति त्रयोदशधा। अग्रे ज्ञानशक्तिद्वयं धर्मी चेति षोडशधा।

१०-२-२५.

**बिभर्षीत्यस्य विवृतौ। चरचराशब्देनेत्यादि।** 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन' इति श्रुत्यर्थनिर्णयं कुर्वन्, 'अत्ता चराचरग्रहणा'दिति सूत्रे विषयवाक्योक्तब्रह्मक्षत्रे चराचरशब्देन व्यासोवददिति तथेति ज्ञेयम्।

१०-२-२८.

**त्वत्पादपोतेनेत्यत्र। भगवद्भावकेत्यादि।** अक्षरपक्षेऽनुपपत्तिरियम्। भगवतः पुरुषरूपेणानिर्माने ह्यक्षरस्य चरणरूपत्वम्। तदा भगवतैव तरणसम्भवे तावन्मात्रस्य तथात्वमयुक्तम्। एतदेवोक्तम्, **भगवतीत्यादिना।** न च तेन पुरुषरूपेणापि तत्सम्भव इत्याह। **समाधिकल्पितस्यैवेति।**

१०-२-२९.

**येन्येरविन्दाक्षे**त्यत्र । सम्यग्वायुसञ्चारो नाडीशुद्ध्या भवतीति तदर्थमपेयपानादिकं यत्तदेव विकर्मेति ज्ञेयम् । एतदुक्तं **विकर्मसहितमि**त्यनेन ।

१०-२-३१.

**शरीरिणां श्रेय** इत्यत्र । **ते हि शरीराभिमानिन** इत्यादि । वैदिकं कर्म यथोक्तमेव कृतमदृष्टजनकम् । ज्ञानमपि तत्राङ्गम् । 'य एवं वेदे'ति वाक्येभ्यः । तथाच तदभावात्तथेति भावः । जडत्वादपि तथात्वं ज्ञेयम् ।

१०-२-३३.

**सत्त्वं न चे**दित्यत्र । **उभयोः साक्षात्कार** इत्यादि । आत्मसाक्षात्कारस्य फलमध्यासनिवृत्तिः । द्वितीयस्याद्वैतस्फूर्तिः । वैदिकमार्गे हि प्रमेयं, 'स हैतावाना'सेतिश्रुतेर्ब्रह्मात्मकम् । अतस्तत्त्वेन स्फूर्तिः फलमिति भावः । इत्यद्व्यतिरिक्तमिति । न चेदित्यत्र यदित्यदं तद्व्यतिरिक्तमित्यर्थः । **अज्ञानभिद्धिज्ञानं मार्जनमापेति न व्याख्यानमिति** । क्रियापदस्य समानलकारेणैवान्वयनियमान्मार्जनमाप्नुयादिति भवेत् । स्वोक्ताशङ्काया अनिवृत्तेश्च स्वव्याख्यातशास्त्रार्थाप्राप्तेश्चेति भावः ।

१०-२-३४.

## इति द्वितीयाध्यायः ।

---

**तृतीयाध्याये** प्रकरणार्थसंदर्भे । **अधिकारिणि काल इति** । दक्षिणायनकृष्णपक्षनिशीथादिदोषेषु सर्वकर्मणि निन्दितेषु सत्सु सर्वगुणोपेतत्वोक्तिर्मूलेऽनुपपन्नेत्याशङ्क्य तत्तात्पर्यमाहुः **अधिकारिणी**त्यादिना । तथा'प्यधिकं तत्रानुप्रविष्टं, न तु तद्धानि'रिति न्यायेनोक्तदोषानिवृत्तिस्तदवस्थैवेति चेत् । अत्र वदामः । नात्र पूर्वोक्ताधिभौतिककाले प्रादुर्भाव उच्यते, किन्त्वधुनैव लीलाविर्भावारम्भ इति लीलाकालो योऽत्र भगवदात्मकत्वेन वाच्यः स प्रादुर्भूत इति । एवमेव देशादिरपि । अत एवाथशब्दो भिन्नप्रक्रमार्थक उक्तः । आधिभौतिकस्य तस्य जन्मनिमित्तत्वाभावाद् भौतिकसाधिष्ठानत्वेऽपि यथा वरदेयरात्रीणां तदा दिवापि प्रकटनं कृतमिति तद्रात्रीणां दिवारूपत्वमपीति न वक्तुं शक्यम् । तथास्याधिभौतिकनक्षत्रत्वं न वक्तुं शक्यम् । एतज्ज्ञापनायैव शुकैस्तथोक्तम् । अन्यथा प्रकटे त्वदुक्तदूषणे सत्येवं न वदेत् । यद्यप्याधिभौतिक उत्तरायणत्वादिविशिष्टेऽप्येतत्प्रकटनं सम्भवति, तथापि यदेतादृशे तस्मिंस्तथा करणं तन्मर्यादामार्गात् पुष्टिमार्गोऽतिविलक्षणो बलिष्ठश्चेति ज्ञापनायेति जानीमः । अत एव सर्वदेवतासान्निध्यप्रयुक्तसर्वगुणोपेतत्वव्यावृत्त्यर्थं तद्गमनानन्तरं भिन्नप्रक्रमेण इदमुक्तम् । असङ्कोचात् सर्वशब्देनैश्वर्यादय उच्यन्ते । तेन भगवदात्मकत्वमुक्तं भवति । तेन लीलाकालत्वमायाति ।

१०-३-०.

**प्रादुर्भावस्थले नैश्चिन्त्यं वाचि पूर्ववदि**ति । वाचि उपनिषद्भाषायामित्यर्थः । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह,' 'अदृश्यमग्राह्यं,' 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः,' 'न चक्षुषा दृश्यते नोत वाचे'त्यादिविरोधः प्राकट्यकथने आपततीति । स च, 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्,'

१०-३-८.

**सत्यव्रतमित्यस्य** विवरणे। **अष्टविधं भवतीत्यादि**। अष्टविधत्वं चाग्रे स्फुटीभविष्यति। यत् सत्यं तत् परमित्यादिवक्ष्यमाणश्रुत्यर्थनिरूपकमिति ज्ञेयम्। यद्वा सर्वोत्कृष्टमित्यत्र वाशब्द एवकारार्थो वाक्यालङ्कारे। श्रुताविव स्तुतावप्येतयोरैक्यं प्रतिपादनीयमित्यतिदिशन्ति। **एवं सत्यस्त्वेत्यादिना**। लोके हि व्रतमुत्कृष्टमिति यदुक्तं तत्रोपपत्तिर्यस्त्वित्यादिना उच्यते। तथाच लोके व्रतं सत्यं चेति द्विविधं सत्यं निरूपितं भवति। मूले व्रतपदेनैतदुभयप्राप्तौ हेतुमाहुः। **उभयोः परत्वादिति**। सत्यव्रतमित्यनेन सत्यं परमिति श्रुतिपदस्यार्थ उक्तो भवतीति भावः। तेन लोके सत्यं व्रतं चेति द्वैविध्यम्। अग्रे परं सत्यमिति श्रुत्यर्थनिरूपकं सत्यपरमिति पदं व्याकुर्वन्ति। **अतः परमिति**। अत्रापि लोके लौकिकं नियामकं वैदिकं द्वादशविधं चेति द्वैविध्यम्। भगवतो व्रतं लोकानुसारेण देवहितकारिणो नियामकं चेति द्वैविध्यम्। त्रिसत्यमिति पदार्थे भूरादित्रयं कायादित्रयं चेति द्वैविध्यम्। एवमष्टविधत्वं सत्यस्य भगवतः कालरूपस्य। यदि सत्यरूपत्वं न स्यात्तदा लोके व्रतादिकं नियामकं च वैदिकं च द्वादशविधं भगवद्व्रतानि च लोकाश्चात्मादयश्च न स्युरित्युपपत्तिरूपत्वम्। व्रतं हि उपोषणादिरूपमहोरात्रादिसाध्यम्। सत्यमपि तप्ततैलादिष्वप्यदाहोऽत्युत्कटपापेऽल्पेनैव कालेनानिष्टमनुत्कटत्वे चिरेणेत्यादि। अन्यत् स्पष्टम्। लौकिकमुक्तद्वादशविधं वैदिकं चेति द्विविधम्। भगवदीयं व्रतं नियामकं चेति च द्विविधम्। लोका भूर्भुवःस्वर्लक्षणाः। आत्मानः कायजीवपरमात्मानः। लोकाः फलरूपाः। इतरे त्वितराणि। इदं च द्विविधम्। एवमष्टविधत्वं सत्यस्योक्तभेदेन। पदद्वये विधेयभेदेन द्वैविध्यम्। त्रयं च द्विविधम्। एवं चतुर्विधत्वम्। **इतराविति**। प्रमाणफललक्षणावर्थावित्यर्थः। **आद्यन्तयोरिति**। सत्यात्मकमित्यन्तिमेन पदेन फलम्। एतस्मादाद्येन, ऋतसत्यनेत्रमित्यनेन प्रमाणमित्यर्थः। भगवत्स्वरूपज्ञानशक्त्योः फलत्वप्रमाणत्वे प्रसिद्धे। अथवा सत्यस्य योनिमित्यनेन प्रमाणम्। सत्यस्य सत्यमित्यनेन फलम्। 'मानाधीना मेयसिद्धि'रिति कारणान्तःपाति मानमिति तथा। पूर्वमज्ञस्य ज्ञानेन विषयस्वरूपमपि तदैव सिद्धं भूतमिति यतो मानम्। फलं विवृतावेव स्फुटं, **सत्य एवेत्यादिना**। प्रमाणादिचतूरूपं भगवति प्रतिष्ठितं चेति पञ्चविधम्। पूर्वोक्तमष्टविधमेतत्पञ्चविधं चेति त्रयोदशधा। अग्रे ज्ञानशक्तिद्वयं धर्मी चेति षोडशधा।

१०-२-२५.

**विभर्षीत्यस्य** विवृतौ। **चरचराशब्देनेत्यादि**। 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन' इति श्रुत्यर्थनिर्णयं कुर्वन्, 'अत्ता चराचरग्रहणा'दिति सूत्रे विषयवाक्योक्तब्रह्मक्षत्रे चराचरशब्देन व्यासोवददिति तयेति ज्ञेयम्।

१०-२-२८.

**त्वत्पादपोतेनेत्यत्र**। **भगवद्भावकेत्यादि**। अक्षरपक्षेऽनुपपत्तिरियम्। भगवतः पुरुषरूपेणाविर्भावे ह्यक्षरस्य चरणरूपत्वम्। तदा भगवतैव तरणसम्भवे तावन्मात्रस्य तथात्वमयुक्तम्। एतदेवोक्तम्, **भगवतीत्यादिना**। न च तेन पुरुषरूपेणापि तत्सम्भव इत्याह। **समाधिकल्पितस्यैवेति**।

१०-२-२९.

**येन्येरविन्दाक्षे**त्यत्र । सम्यग्वायुसञ्चारो नाडीशुद्ध्या भवतीति तदर्थमपेयपानादिकं यत्तदेव विकर्मेति ज्ञेयम् । एतदुक्तं **विकर्मसहितमि**त्यनेन ।

१०-२-३१. **शरीरिणां श्रेय** इत्यत्र । **ते हि शरीराभिमानिन** इत्यादि । वैदिकं कर्म यथोक्तमेव कृतमदृष्टजनकम् । ज्ञानमपि तदाङ्गम् । 'य एवं वेदे'ति वाक्येभ्यः । तथाच तदभावात्तथेति भावः । जडत्वादपि तथात्वं ज्ञेयम् ।

१०-२-३२. **सत्त्वं न चेदि**त्यत्र । **उभयोः साक्षात्कार** इत्यादि । आत्मसाक्षात्कारस्य फलमध्यासनिवृत्तिः । द्वितीयस्याद्वैतस्फूर्तिः । वैदिकमार्गे हि प्रमेयं, 'स हैतावाना'सेतिश्रुतेर्ब्रह्मात्मकम् । अतस्तत्त्वेन स्फूर्तिः फलमिति भावः । इत्पदव्यतिरिक्तमिति । न चेदित्यत्र यदित्पदं तद्व्यतिरिक्तमित्यर्थः । **अज्ञानभिद्विज्ञानं**

१०-२-३४. **मार्जनमापेति न व्याख्यानमि**ति । क्रियापदस्य समानलकारेणैवान्वयनियमान्मार्जनमाप्नुयादिति भवेत् । स्वोक्ताशङ्काया अनिवृत्तेश्च स्वव्याख्यातशास्त्रार्थाप्राप्तेश्चेति भावः ।

इति द्वितीयाध्यायः ।

---

**तृतीयाध्याये** प्रकरणार्थसंदर्भे । **अधिकारिणि काल** इति । दक्षिणायनकृष्णपक्षनिशीथादिदोषेषु सर्वकर्मणि निन्दितेषु सत्सु सर्वगुणोपेतत्वोक्तिर्मूलेऽनुपपन्नेत्याशङ्क्य तत्तात्पर्यमाहुः **अधिकारिणी**त्यादिना । तथा'प्यधिकं त-

१०-३-०. त्रानुप्रविष्टं, न तु तद्धानि'रिति न्यायेनोक्तदोषानिवृत्तिस्तदवस्थैवेति चेत् । अत्र वदामः । नात्र पूर्वोक्ताधिभौतिककाले प्रादुर्भाव उच्यते, किन्त्वधुनैव लीलाविर्भावारम्भ इति लीलाकालो योऽत्र भगवदात्मकत्वेन वाच्यः स प्रादुर्भूत इति । एवमेव देशादिरपि । अत एवाथशब्दो भिन्नप्रक्रमार्थक उक्तः । आधिभौतिकस्य तस्य जन्मनिमित्तत्वाभावाद् भौतिकस्याधिष्ठानत्वेऽपि यथा वरदेयरात्रीणां तदा दिवापि प्रकटन कृतमिति तद्रात्रीणां दिवारूपत्वमपीति न वक्तुं शक्यम् । तथास्याधिभौतिकत्वद्रूपत्व न वक्तु शक्यम् । एतज्ज्ञापनायैव शुकैस्तथोक्तम् । अन्यथा प्रकटे त्वदुक्तदूषणे सत्येव न वदेत् । यद्यप्याधिभौतिक उत्तरायणत्वादिविशिष्टेऽप्येतत्प्रकटनं सम्भवति, तथापि यदेतादृशे तस्मिंस्तथा करण तन्मर्यादामार्गात् पुष्टिमार्गोऽतिविलक्षणो बलिष्ठश्चेति ज्ञापनायेति जानीमः । अत एव सर्वदेवतासान्निध्यप्रयुक्तसर्वगुणोपेतत्वव्यावृत्त्यर्थं तद्गमनानन्तरं भिन्नप्रक्रमेण इदमुक्तम् । असङ्कोचात् सर्वशब्देनैश्वर्यादय उच्यन्ते । तेन भगवदात्मकत्वमुक्त भवति । तेन लीलाकालत्वमायाति ।

**प्रादुर्भावस्थले** नैश्चिन्त्यं वाचि पूर्ववदिति । वाचि उपनिषद्रूपायामित्यर्थः । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह,' 'अदृश्यमग्राह्यं,' 'न तत्र सूर्यो

१०-३-८. भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः,' 'न चक्षुषा दृश्यते नोत वाचे'त्यादिविरोधः प्राकट्यकथने आपतति । स च, 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्,'

**सत्यव्रतमित्यस्य** विवरणे। **अष्टविधं भवतीत्यादि**। अष्टविधत्वं चाग्रे स्फुटीभविष्यति। यत् सत्यं तत् परमित्यादिवक्ष्यमाणश्रुत्यर्थनिरूपकमिति ज्ञेयम्। यद्वा सर्वोत्कृष्टमित्यत्र वाशब्द एवकारार्थो वाक्यालङ्कारे। श्रुताविव स्तुतावप्येतयोरैक्यं प्रतिपादनीयमित्यतिदिशन्ति। **एवं सत्यत्वेत्यादिना**। लोके हि व्रतमुत्कृष्टमिति यदुक्तं तत्रोपपत्तिर्यस्त्वित्यादिना उच्यते। तथाच लोके व्रतं सत्यं चेति द्विविधं सत्यं निरूपितं भवति। मूले व्रतपदेनैतदुभयप्राप्तौ हेतुमाहुः। **उभयोः परत्वादिति**। सत्यव्रतमित्यनेन सत्यं परमिति श्रुतिपदस्यार्थ उक्तो भवतीति भावः। तेन लोके सत्यं व्रतं चेति द्वैविध्यम्। अग्रे परं सत्यमिति श्रुत्यर्थनिरूपकं सत्यपरमिति पदं व्याकुर्वन्ति। **अतः परमिति**। अत्रापि लोके लौकिकं नियामकं वैदिकं द्वादशविधं चेति द्वैविध्यम्। भगवतो व्रतं लोकानुसारेण देवहितकारिणो नियामकं चेति द्वैविध्यम्। त्रिसत्यमिति पदार्थे भूरादित्रयं कायादित्रयं चेति द्वैविध्यम्। एवमष्टविधत्वं सत्यस्य भगवतः कालरूपस्य। यदि सत्यरूपत्वं न स्यात्तदा लोके व्रतादिकं नियामकं च वैदिकं च द्वादशविधं भगवद्व्रतानि च लोकाश्चात्मादयश्च न स्युरित्युपपत्तिरूपत्वम्। व्रतं हि उपोषणादिरूपमहोरात्रादिसाध्यम्। सत्यमपि तप्ततैलादिष्वप्यदाहोऽत्युत्कटपापेऽल्पेनैव कालेनानिष्टमनुत्कटत्वेचिरेणेत्यादि। अन्यत् स्पष्टम्। लौकिकमुक्तद्वादशविधं वैदिकं चेति द्विविधम्। भगवदीयं व्रतं नियामकं चेति च द्विविधम्। लोका भूर्भुवःस्वर्लक्षणाः। आत्मानः कायजीवपरमात्मानः। लोकाः फलरूपाः। इतरे त्वितराणि। इदं च द्विविधम्। एवमष्टविधत्वं सत्यस्योक्तभेदेन। पदद्वये विधेयभेदेन द्वैविध्यम्। त्रयं च द्विविधम्। एवं चतुर्विधत्वम्। **इतराविति**। प्रमाणफललक्षणावर्थावित्यर्थः। **आद्यन्तयोरिति**। सत्यात्मकमित्यन्तिमेन पदेन फलम्। एतस्मादाद्येन, ऋतसत्यनेत्रमित्यनेन प्रमाणमित्यर्थः। भगवत्स्वरूपज्ञानशक्त्योः फलत्वप्रमाणत्वे प्रसिद्धे। अथवा सत्यस्य योनिमित्यनेन प्रमाणम्। सत्यस्य सत्यमित्यनेन फलम्। 'मानाधीना मेयसिद्धि'रिति कारणान्तःपाति मानमिति तथा। पूर्वमज्ञस्य ज्ञानेन विषयस्वरूपमपि तदैव सिद्धं भूतमिति यतो मानम्। फलं विवृतावेव स्फुटं, **सत्य एवेत्यादिना**। प्रमाणादिचतूरूपं भगवति प्रतिष्ठितं चेति पञ्चविधम्। पूर्वोक्तमष्टविधमेतत्पञ्चविधं चेति त्रयोदशधा। अग्रे ज्ञानशक्तिद्वयं धर्मी चेति षोडशधा।

१०-२-२५.

**विभर्षीत्यस्य** विवृतौ। **चरचराशब्देनेत्यादि**। 'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन' इति श्रुत्यर्थनिर्णयं कुर्वन्, 'अत्ता चराचरग्रहणा'दिति सूत्रे विषयवाक्योक्तब्रह्मक्षत्रे चराचरशब्देन व्यासोवददिति तथेति ज्ञेयम्।

१०-२-२८.

**त्वत्पादपोतेनेत्यत्र**। **भगवद्वाचकेत्यादि**। अक्षरपक्षेऽनुपपत्तिरियम्। भगवतः पुरुषरूपेणाविर्भावे ह्यक्षरस्य चरणरूपत्वम्। तदा भगवतैव तरणसम्भवे तावन्मात्रस्य तथात्वमयुक्तम्। एतदेवोक्तम्, **भगवतीत्यादिना**। न च तेन रूपरूपेणापि तत्सम्भव इत्याह। **समाधिकल्पितस्यैवेति**।

१०-२-२९.

**येन्येरविन्दाक्षे**त्यत्र । सम्यग्वायुसञ्चारो नाडीशुद्ध्या भवतीति तदर्थमपेयपानादिकं

१०-२-३१. यत्तदेव विकर्मेति ज्ञेयम् । एतदुक्तं **विकर्मसहितमि**त्यनेन ।

**शरीरिणां श्रेय** इत्यत्र । **ते हि शरीराभिमानिन** इत्यादि । वैदिकं कर्म यथोक्तमेव कृतमदृष्टजनकम् । ज्ञानमपि तत्राङ्गम् । 'य एवं वेदे'ति वाक्ये-

१०-२-३२. भ्यः । तथाच तदभावात्तथेति भावः । जडत्वादपि तथात्वं ज्ञेयम् ।

**सत्त्वं न चे**दित्यत्र । **उभयोः साक्षात्कार** इत्यादि । आत्मसाक्षात्कारस्य फल-मध्यासनिवृत्तिः । द्वितीयस्याद्वैतस्फूर्तिः । वैदिकमार्गे हि प्रमेयं, 'स हैतान्ना-

१०-२-३४. ना'सेतिश्रुतेर्ब्रह्मात्मकम् । अतस्तत्त्वेन स्फूर्तिः फलमिति भावः । **इत्यद्-व्यतिरिक्तमिति** । न चेदित्यत्र यदित्यदं तद्व्यतिरिक्तमित्यर्थः । **अज्ञानभिद्विज्ञानं मार्जनमापेति न व्याख्यानमिति** । क्रियापदस्य समानलकारेणैवान्वयनियमान्मार्ज-नमाप्नुयादिति भवेत् । स्वोक्ताशङ्काया अनिवृत्तेश्च स्वव्याख्यातशास्त्रार्थाप्राप्तेश्चेति भावः ।

इति द्वितीयाध्यायः ।

---

**तृतीयाध्याये** प्रकरणार्थसंदर्भे । **अधिकारिणि काल** इति । दक्षिणायनकृ-ष्णपक्षनिशीथादिदोषेषु सर्वकर्मणि निन्दितेषु सत्सु सर्वगुणोपेतत्वोक्तिर्मूलेऽ-

१०-३-०. नुपपन्नेत्याशङ्क्य तत्तात्पर्यमाहुः **अधिकारिणी**त्यादिना । तथा'प्यधिकं त-त्रानुप्रविष्टं, न तु तद्धानि'रिति न्यायेनोक्तदोषानिवृत्तिस्तदवस्थैवेति चेत् । अत्र वदामः । नात्र पूर्वोक्ताधिभौतिककाले प्रादुर्भाव उच्यते, किन्त्वधुनैव लीलाविर्भावारम्भ इति लीला-कालो योऽग्रे भगवदात्मकत्वेन वाच्यः स प्रादुर्भूत इति । एवमेव देशादिरपि । अत एवाथ-शब्दो भिन्नप्रक्रमार्थक उक्तः । आधिभौतिकस्य तस्य जन्मनिमित्तत्वाभावाद् भौतिकस्याधि-ष्ठानत्वेऽपि यथा वरदेयरात्रीणां तदा दिवापि प्रकटनं कृतमिति तद्रात्रीणां दिवारूपत्वमपीति न वक्तुं शक्यम् । तथास्याधिभौतिकतद्रूपत्वं न वक्तुं शक्यम् । एतज्ज्ञापनायैव शुकैस्तथो-क्तम् । अन्यथा प्रकटे त्वदुक्तदूषणे सत्येवं न वदेत् । यद्यप्याधिभौतिक उत्तरायणत्वादि-विशिष्टेऽप्येतत्प्रकटनं सम्भवति, तथापि यदेतादृशे तस्मिंस्तथा करणं तन्मर्यादामार्गात् पु-ष्टिमार्गोऽतिविलक्षणो बलिष्ठश्चेति ज्ञापनायेति जानीमः । अत एव सर्वदेवतासान्निध्यप्रयुक्त-सर्वगुणोपेतत्वव्यावृत्त्यर्थं तद्गमनानन्तरं भिन्नप्रक्रमेण इदमुक्तम् । असङ्कोचात् सर्वशब्देनै-श्वर्यादय उच्यन्ते । तेन भगवदात्मकत्वमुक्तं भवति । तेन लीलाकालत्वमायाति ।

**प्रादुर्भावस्थले नैश्चिन्त्यं वाचि पूर्ववदि**ति । वाचि उपनिषद्रूपायामित्यर्थः । 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह,' 'अदृश्यमग्राह्यं,' 'न तत्र सूर्यो

१०-३-८. भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः,' 'न चक्षुषा दृश्यते नोत वाचे'त्यादिविरोधः प्राकट्यकथने आपतति । स च, 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्,'

क्रम्य, 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं ममे'ति प्रभुवाक्याच्छ्रीव्रजजनमनोरथपूर्तये, 'दर्शयामास लोकं स्वं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद्ब्रह्मज्योतिः सनातनम् । यद्धि पश्यन्ति मुनयो गुणापाये समाहिता' इत्यादिवाक्यैः सर्ववेदप्रतिपाद्यत्वेनाप्यक्षरं ब्रह्म पुरुषोत्तमस्य लक्षणम् । चेष्टारूपत्वेन, 'अथ सर्वगुणोपेतः काल' इत्यादिना निरूपितो य आनन्दमयो लीलाकालः सोऽपि तथा । आदिपदाल्लीलाविशेषाश्च । तथाच सर्वात्मकत्वभगवत्त्वजगदादिलक्षणेषु ब्रह्म मुख्यं लक्षणम् । सर्ववेदप्रतिपाद्यत्वादाविर्भूतसच्चिदानन्दरूपत्वाज्ज्ञानिमुक्तिस्थानत्वात् पुरुषोत्तमगृहचरणात्मकत्वात् । अतः श्रीवत्सस्य लक्ष्मत्वमुक्तमन्यथेतरविशेषणवदिदमप्युक्तं स्यादिति भावः । अत्रोपपत्त्यन्तरमाहुः अत एवेति । जातिवेदाक्षरब्रह्माणि तदानन्दश्च सर्वशब्देन उच्यते । तदाधारभूतो भृगोर्देहः । तद्गतस्तस्य गतिर्भगवत्पर्यवसायिन्येवेति तथेत्यर्थः । किञ्च भगवतस्त्वगिन्द्रियाद् भृगोरुत्पत्तिः । तच्चेतरेन्द्रियेभ्यो विशिष्टमन्तर्बहिर्व्यापित्वात्तथा ज्ञानजनकत्वाच्च स्पर्शसुखाभिव्यक्तिहेतुत्वाद्भगवतः स्पर्शसुखाभिव्यक्तिहेतुः । श्रीस्तत आविर्भूतेत्याशयेनाहुः लक्ष्म्याश्चेत्यादि ।

**गलशोभीत्यत्र** । सरस्वत्या ज्ञानशक्तिरूपत्वात्तथा कृतिः । अत्र विद्यादिपदानि त्यक्त्वा सरस्वतीपददानस्यायं भावः । सा हि वीणागानपरा, प्रभुश्च मुक्तोपसृप्य इति मुक्ताः सर्वे सङ्गीतविद्यया यथा प्रभुं सन्तोषयन्ति तदर्थमेव करणम् । एतेनैवंविधानां लीलास्थमुक्तानां न प्राकृतत्वं, किन्तु कण्ठभूषणरूपत्वमेवेति ज्ञाप्यते । स्थानं प्रभुगुणगानम् । मुक्तानामेव शुकादीनां तत्राधिकारादिति भावः ।

**सान्द्रपयोदेत्यत्र** । **पूर्वमिति** । निबन्धे निरूपितमित्यर्थः । तत् स्मारयन्ति । **आकाशेत्यादिना** । चक्षू रूपवद् द्रव्यं गृह्णत्तदभावे निर्मेघ आकाशे दूरं गतं सन्नीलमिव पश्यति । तथा ब्रह्माप्यतिगाढं गम्भीरतया नीलमिव पश्यतीत्येकः प्रकारः । तत्तद्गुणाधिष्ठातृदेवतानां तादृक्ताद्रूप्यत्वात् तत्प्रतिबिम्बेन नियतानेकरूपत्वमिति द्वितीयः । भूमेर्नीलरूपत्वेन तत्राविर्भावे तत्प्रतिफलनेन तथा भातीति तृतीयः । शुद्धस्य सत्त्वस्य नीलरूपत्वेन तत्प्रतिफलने वैकुण्ठाविर्भूतं ब्रह्म तथा भातीति तुरीयः । अथवा भूमिर्वैकुण्ठं श्वेतद्वीपम् । हन्तेदं ब्रह्मणो नीरूपत्वपर्यवसायित्वेन न दासविद्वज्जनमनोरमं भवतीतिचेन्नैवम् । अशावतारविभूतिरूपावतारविषयत्वादस्य । श्रीपुरुषोत्तमाख्यं तु वस्त्वेव तादृशं, न त्वौपाधिकं तत्राण्यप्यस्ति, शुद्धब्रह्मरूपत्वादित्यनुपदमेव प्रमाणप्रकरणे निरूपयिष्यत इति विद्वद्भक्तमनोरममेतदिति जानीहि । यस्तु स्वकाल इत्यादि तु परोक्षवादत्वेनापि ज्ञेयम् । स्वकाले लीलाकाले । अत एव स्वपदम् । नूतनरसोत्पादको दिनान्तादिप्यग्रिमश्च । एवमित्यादिना श्रीवत्सेत्यादिविशेषणोक्तितात्पर्यमुक्तं क्रमेण, पुरुषोत्तमासाधारणचिह्नत्वात् तत्त्वेन ज्ञाने मूलकारणभूतः श्रीवत्सः । तस्य ब्रह्मत्वं निरूपितम् । वस्तुतस्तु श्रीरूप एव सः । ब्रह्मानन्द-

रूपत्वात्तस्यास्तत्र स्थितो लीलां करोतीति लीलामूलभूतमपि तद्रूपं ब्रह्म। 'कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यज' इति वाक्यात् । स्वीयत्वेनाङ्गीकृतानामात्मनामाधिदैविकं रूपं स्वकण्ठे स्थापयन्न जातु त्यजति । स्वरूपानन्दं चताननुभावयतीति तथा । भूरूपकथ्या आवरणोक्त्या तथात्वम् । प्रावृड्घनश्यामलोक्त्या सर्वानिष्टनिवृत्तिपूर्वकं सर्वार्थदानम् ।

**महार्हे**त्यत्र । **भगवन्मुखनिरीक्षका** इत्यादि । अत्रायं भावः । 'बिभर्ति सांख्यं योगं च देवो मकरकुण्डले' इति वाक्यात्तद्रूपयोस्तयोः सहभावेन किरीटस्योक्तेर्मौलिपदं, पारमेष्ठ्यमित्यत्रापि तद्रूपो वेद एवोच्यत इत्यवगम्यते । सर्वप्रमाणानामुपरि स्थितिस्तस्यैवोचिता यतः । एवं सति तज्जनितज्ञानमेव तत्त्विड्रूपमिति तत्परिष्वङ्गोक्त्या तेषां तथात्वमेव संपद्यत इति जीवानां तत्र स्थितिरयुक्तेतिशङ्कानिवारणाय भगवन्मुखेत्याद्युक्तम् । अपरं च तेषां बहुत्वेपि तत्त्विष्येकत्वोक्त्या तज्जनितस्य भक्तिभावस्यैकरूपत्वं मूले ज्ञाप्यते । तेन वेदादीनां भक्तिरेव फलमिति ज्ञापितं भवति । अर्हस्य प्रापकद्रव्यरूपत्वेन तादृशोत्र गुरुरेवेति तथोक्तम् । अन्यथा त्वमूल्यपदमेव वदेदिति भावः । इदं च भक्तिमन्महापुरुषानुग्रहादेवेति ज्ञापनायार्हे महत्त्वमुक्तम् । अत एव, 'वेदवादरताः पार्थे'त्यादिनोक्तशीलानां न भक्तिलाभः । एतदेवाभिसंधाय सर्वलोकप्रसिद्धादिति विशेषणं दत्तम् । अर्हस्य लोकसिद्धत्वेनापि तथा विशेषणमिति ज्ञेयम् । कुन्तलानां रसोद्दीपकत्वेन तेषु भक्तिप्रवर्तकत्वमपि सूच्यते । **तान्येव पदानी**ति । कुन्तलानां भ्रमरतुल्यत्वेन तेषां षट्पदत्वेनैतेष्वेतान्येव तानीत्यर्थः । **त्रयाणामपी**ति । वेदसांख्ययोगानामित्यर्थः । कुन्तलानां शास्त्राभिज्ञजीवत्वेन पूर्वमुक्तत्वात्तेषामनेकविधत्वे तज्ज्ञानप्रकारानेकविधत्वमेव प्रयोजकमिति कुन्तलानेकत्वोक्त्या तत्प्रयोजकमप्याक्षिप्तं भवतीत्यर्थः ।

१०-३-१०.

**उद्दामे**त्यत्र । त्रयाणां कर्मत्वोक्तेरयं भावः । भूमावेव कर्ममार्ग इति तद्रूपकथ्यां भूषणत्वेन स्थितस्य कर्मत्वं युक्तम् । इतरयोः क्रियाशक्तौ प्रतिष्ठितत्वेनेति ।

**कृष्णावतारे**त्यत्र । **सम्यग्भ्रमो यस्ये**ति । विविधपदार्थैर्महानुत्सवः कार्य इति बुद्ध्या तत्र तत्र मनोधावनं भ्रमः । पुरःप्रकटे भगवत्यन्यत्रापि मनोधावनस्यानुचितत्वात् । परं तूत्सवरसस्तादृश एवेति भक्तिमार्गे स गुण एवेति भगवच्छास्त्रेणापर्युदस्तः । ( वसुदेवदेवकीस्तुतितात्पर्यनिरूपणं द्वादशात्मेत्यादिभिः क्रियते। पूर्वं तमद्भुतमित्यादिना द्वादशधा प्रादुर्भाव उक्तः । अग्रे तद्रूपद्वाभ्यां वसुदेवदेवकीभ्यां ततो न्यूनाधिकभावेन निरूपणे विसंवादादन्यतराप्रामाण्यशङ्का स्यात्, तन्निरासः स्तुतिनिरूपितार्थाभ्यां भवतीति ज्ञापयन्तीति **द्वादशात्मे**त्यादिना । स्तुतिभ्यामिति पूर्ववद् द्वादशधैव निरूपितो हरिर्ज्ञेयः । तत्र प्रकारमाहुः **त्रिधा च नवधे**ति । देवकीभिस्त्रिधा, वसुदेवैर्नवधेत्यर्थः । स्तुत्याः स्वरूपमाहुः वैदिकोऽलौकिक उच्यत इत्यनेन । आद्यस्य नवधात्व

१०-३-११.

---

१ शोधपत्रमिदं श्रीमन्मथुरेशपुस्तकस्थम् ।

इतरस्य च त्रिधात्व उपपत्तिमाहुः **यज्ञस्त्वित्यादिना** । अग्निहोत्रदर्शपूर्णमासादिरूपः पञ्चात्मकः । चतुर्व्यूहात्मकश्चतुर्मूर्तिः । षड्गुणैश्वर्यवान् साकारब्रह्मरूप उपास्यत्वेन तन्त्र उच्यते । तन्त्रपदेन भागवतशास्त्रमप्युच्यते । एतज्ज्ञापनायैव भगवत्पदम् । फलितमर्थमाहुः **पञ्चात्मकश्चतुर्मूर्तिरि**ति । वेदे तन्त्रे चोपास्यत्वेनोक्तं रूपमिदमेवेत्यर्थः । ननु वैदिकत्वेनैव चारितार्थ्ये द्वितीयस्योक्तिः कुतस्तत्राहुः **तन्त्रमिति** । यथा वेदो भगवत्प्रापकः, तथा तद्यमपीति वेदतुल्यं तदित्यर्थः । तत्र त्रैवर्णिकानामेवाधिकारः, अत्र तु सर्वेषामिति मर्यादापुष्टिभेदेनोभयमपि भगवत्प्रापकम्, यतोतस्तथेति भावः । द्वितीयस्याः स्तुतेस्त्रिधात्वे हेतुमाहुः **लौकिक इति** । अत्र गुणशब्दः प्रकारवाची, न तु प्राकृततद्वाची । 'अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति भगवद्वाची । 'अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति भगवद्वाक्याल्लोकेपि तत्स्वरूपं प्रथितं वाच्यम् । तच्चाधिदैविकादिरूपं त्रिविधं स्मार्तमिति सा तथेत्यर्थः । लौकिकस्यैव हि वस्तुन आधिदैविकादिरूपत्रितयं रूपमुच्यते । अत एव स्मृतौ परमात्मत्वेनैव भगवानुच्यते, आधिदैविकत्वात् । इदं स्तुतिव्याख्याने स्फुटीभविष्यति । उक्तार्थमनुवदन्ति संदेहाभावाय **नवधेत्यादिना** । पूर्वं वसुदेवेनैकेन श्लोकेन प्रार्थनं कृतं, तेन दशश्लोकाः । त्रिरूपत्वोक्तिरेव मुख्येति त्रिधेत्युक्तम् । 'मर्त्यो मृत्युव्याले'ति 'विश्वं यदेत'दिति च श्लोकद्वयं पर्यवसानतः स्तुतिरूपमिति चकारेण समुचितम् । प्रतिपत्तिहेतुविरोधपरिहारयोरेव तत्र स्फुटं प्रतीतेः । फलितमर्थमाहुः **शास्त्रत इति** । प्रतीयमानस्यैव शुद्धभगवद्रूपत्वमुभाभ्यां तथेत्यर्थः । एवं निरूपणस्यावश्यकत्वमाहुः **बाधकमिति** । उभयोर्हेतुश्चाक्षुषत्वादिति ज्ञानं तस्मादित्यर्थः । )

**विदितोसीत्यत्र । यस्त्वित्यारभ्य प्रयोगान्तम्** । अत्रैवं ज्ञेयम् । असीति व्यवहारो युष्मच्छब्देनोपस्थित एव भवतीति स्थितावपि व्यवहारमात्रोक्तिर्या सा, न तेन विनानुपपन्नस्तमाक्षिपतीत्यन्यलभ्यत्वाभिप्रायेणेति । अत एव, पिधेहीत्यादौ द्वारादिपदार्थस्यैवाध्याहारो, न तु पदस्यापि लाघवादिति भाट्टा मन्यन्ते । प्रकृते त्वर्थस्य पुरःस्थत्वेन नाध्याहारापेक्षापि । वस्तुतस्त्वसिभवानिति समस्तं पदम् । तथाचासिशब्दयुक्तो भवानित्यर्थः । तद्युक्तत्वं तेन व्यवहार्यमाणत्वम् । पूर्वोक्तपक्षे भवच्छब्दसंगत्यभावारुच्या पक्षान्तरमाहुः **अथवेत्यादि** । क्षराक्षरपुरुषोत्तमाः, आधिभौतिकादयो वा त्रयः पुरुषाः । असीति देहरूपेण सत्त्वेन प्रतीयमान उक्तः । भवानिति तदभिमानित्वेन अग्रिमेण परमात्मत्वेन प्रतीतिविषय उक्तः । तेन श्रुत्युक्तसैन्धवघनदृष्टान्तन्यायोत्राभिप्रेत इति ज्ञायते ।

१०-३-१३.

**प्रकृते पर इत्यस्याग्रे । प्रत्यक्षदोषस्त्वित्यादि** । शुद्धब्रह्मत्वेन पुरुषोत्तमत्वेन च वेदनं हि विदितोऽसीत्यनेन प्रतिज्ञातम् । असि भवानितिव्यवहारश्च प्रत्यक्षविषय एव भवति । एवं सत्युक्तव्यवहारविषयस्यैव प्रमोरुक्तरूपत्वं सिध्यतीति तत्परिहार इत्यर्थः ।

ननु ज्ञातत्वे प्रामाणिके सत्युक्तदोषपरिहारः । तच्च न वक्तुं शक्यम् । दोषत्वादित्यत आहुः **ज्ञातत्वेति** । भवत्पुरुषपदाभ्यां पूर्वं तथोक्तत्वादलौकिकचक्षुस्तत्सामर्थ्यरूपेणापि स्वयमेव हरिः प्रकटो जात इति स्वस्य ज्ञानं यथा न विरोधि तथा वसुदेवज्ञानमपीत्यर्थः । 'अन्यदेव तद्विदितादथो अविदिता'दित्यादिश्रुतिरपि लौकिकयोस्तयोः सकाशादेव भेदमाह । अन्यथा वदद्व्याघात इति भावः । नन्वदृश्यत्वादिप्रतिपादकवेदाप्रतिपाद्यत्वाद् ब्रह्मत्वमपि न वक्तुं शक्यमित्यत आहुः **विरुद्धा** इति । यद्रूपं यदा दृश्यं तदेव तदैवादृश्यमपीतीन्द्रियसामर्थ्यलक्षणेनांशेन प्रभ्विच्छालक्षणेन तेन चोभयधर्मसिद्ध्या ब्रह्मत्वं न क्षतं भवतीत्यर्थः ।

१०-३-१४. **स एव स्वप्रकृत्येत्यत्र** । **आधिदैविकस्वभावेनेत्यादि** । लीलौपयिकपदार्थानामलौकिकत्वेन लौकिक्या प्रकृत्या न तत्सृष्टिः सम्भवतीति तथोक्तम् । अन्यथा स्वपदानर्थक्यमिति भावः ।

१०-३-१९. **त्वयीश्वर इत्यत्र** । अविरोधे ईश्वरत्वब्रह्मत्वलक्षणं हेतुद्वयमुक्तं तृतीये पादे । चतुर्थेऽपि द्वितीयकोट्युपस्थितिर्न प्रामाणिक्यतोऽपि न विरोध इति हेत्वन्तरमुक्तमिति, **किञ्चेत्यादिना** व्याख्यातम् । अन्यथा त्वविरोधः पूर्वेणोक्त एवेत्यग्रे तच्छक्त्योपचारोक्तिः शशशृङ्गभिया पलायनमनुहरेत् । वस्तुतस्तु, ननु सांख्यादिषु गुणानामेव कर्तृत्वमुच्यते इत्यत आह **त्वदाश्रयत्वादिति** । त्वमेवाश्रयो येषां तादृशत्वाद्गुणानां त्वन्निष्ठं कर्तृत्वं तेषूपचर्यत इत्यर्थोभिप्रेत इति ज्ञेयम् ।

१०-३-२२. **देवकीस्तुतितात्पर्योक्तौ** । **इदानीं मारण** इत्यादि । युद्धे भगवतैव तन्मारणसम्भवेऽपि पूर्वमुद्यतायुधेन बाला मारिता इत्यधुनापि तादृशतद्दर्शनं पूर्वज्ञानसदृशम् । तथाच तन्मात्रेणैव तथेत्यर्थः । **अन्यथेति** । जन्माज्ञानाभावे प्राणास्थितिरेव स्यादित्यर्थः । न सिध्येदिति पाठे प्रथमः पक्षो रक्षा ।

१०-३-२५. **व्यक्तेऽव्यक्तमित्यत्र** । **पुरुषोत्तमाभिन्न** इति । पुरुषोत्तमचरणात्मक इत्यर्थः ।

१०-३-२७. **त्वत्पादाब्जं प्राप्येत्यत्र** । ननूक्तपलायनविशिष्टस्य साक्षाद्भगवच्चरणप्राप्तिर्न संभवत्यतोनुपपन्नमिदमित्याशङ्क्य तत्तात्पर्यमाहुः **सत्सङ्गे भागवतं चेत्यादिना** ।

१०-३-२८. **स त्वं घोरादित्यत्र** । **इदानीं मारणे वेत्यादि** । रक्षाप्रार्थनेति शेषः । अस्मिन् पक्षे रूपानुपसंहारातिरिक्तबाधकाभावात्तत् कृत्वान्यत्र स्थेयमिति भावः । एतदेवोक्तम्, **अनुपसंहार इत्यादिना** । **अन्यतरेति** । इदानीमेव मारणं लोके चैतद्रूपदर्शनमित्येतयोरन्यतरस्य तथात्वायेत्यर्थः । इदानीममारणमन्यत्र गमनं च

१. सज्ञानमिति पाठः ।

मध्यम पक्ष । एवं सत्यपि यदि तममारयित्वैवान्यत्र गतिर्भवति तदा स्वतस्तन्मारणान्निवृत्तिर्भवतीति, तथापि दोषानिवृत्तिरित्याहु **मध्यमपक्षे** **खल** इत्यादिना । तेन जन्माज्ञानस्यावश्यकत्वमुक्तं भवति ।

**शङ्खचक्रे**त्यत्र । **यद्यपी**ति । केचिद्देवा अपि चतुर्भुजा भवन्तीति तादृशे रूपे देवाना नालौकिकत्वेन भानम् । इतरेषा तु भवतीति तथा । **तादृशम**

१० ३ ३०

**पी**ति । उपसहृतालौकिकप्रभ चतुर्भुजाकारमात्रमपीत्यर्थ । रूप चेदमित्यनेन कसादीनामदर्शनं प्रार्थितम् । अत एव, मासद्दशामित्युक्तम् । अनेन तु तदर्दर्शनेऽपि मनुष्यमानस्य तथा दर्शन नास्मद्धितमिति तदभाव प्रार्थितोऽतो नान्यतरवैयर्थ्यं शङ्कनीयम् । किञ्च, यद्यप्याद्येनैव द्वितीयचारितार्थ्यं भवति, तथापि रूपपदमात्र ध्यानधिष्ण्यपद च श्रुत्वा सर्वांशेन तिरोधान हरिर्मा करोत्विति विशेषप्रार्थन द्वितीय कृतमिति ज्ञेयम् ।

**त्वमेवे**त्यत्र । भगवदुक्तवाक्यसख्यातात्पर्यमाहु **चतुर्दशे**ति । पूर्णब्रह्मणो देवकीपुत्रत्व न प्रमाणसिद्धमिति भ्रमाभावाय सर्वा अपि विद्या अत्र प्रमाणानीति ज्ञापनाय तत्समानसख्यैर्वाक्यैर्भगवतोक्तमित्यर्थ । प्रमाणस्य भाव प्रामाण्य प्रमाणत्वमिति यावत् । तदर्थमित्यर्थ । नच सख्याया अपि तात्पर्यवत्त्वे प्रमाणाभाव इति वाच्यम् । श्रुतिसिद्धत्वात् । तथा हि । 'वैश्वानर द्वादशकपाल निर्वपेत्, पुत्रे जाते यदष्टाकपालो भवति, गायत्र्यैवैन ब्रह्मवर्चसेन पुनाति, यन्नवकपालस्त्रिवृतैवास्मिंस्तेजो दधाति, यद्दशकपालो विराजैवास्मिन्नन्नाद्य दधाति, यदेकादशकपालस्त्रिष्टुभैवास्मिन्निन्द्रिय दधाति, यद्द्वादशकपालो जगत्यैवास्मिन् पशून् दधाती'तिश्रुतौ कपालेषु द्वादशसख्याविधानतात्पर्यं तदवयवभूतसख्याफलोक्त्या निरूपितम् । तत्तत्सख्यायास्तत्तत्फलसाधकत्वोक्तेरपि तत्तत्फलसख्यासजातीयत्वमेव प्रयोजकमिति ज्ञेयम् । 'अष्टाक्षरा गायत्री तेजस्त्रिवृत्, दशाक्षरा विराडन्न विराट्, एकादशाक्षरा त्रिष्टुप्, द्वादशाक्षरा जगती, जागता पशव' इतिश्रुतिभ्य । ननु सकृत्स्मरणेऽपि वरवाक्यसत्वरने वारत्रय तथात्व कुत इत्यत आहु **त्रिगुणमित्यादि** । लौकिकमेकगुण, द्विगुण वैदिक, भगवदीय त्रिगुणमत सर्वाधिकमिहोक्तमिहैव फलति चेत्तदा सत्य भवति । वैदिक तु जन्मान्तरेऽपि फलतीति तथा । भगवदुक्त त्वामोक्ष यावन्ति जन्मानि तेषु सर्वेष्वेव फलतीत्येतदेवैकगुणत्वादिक तेषु ।

**अजुष्टग्राम्ये**त्यत्र । ननु श्रीतिसेवनार्थत्वाज्जुषेरनयो श्रीतिसत्त्वादजुष्टत्व कथमितिचेत् । सत्यम् । तथापि द्वितीयमर्थमादाय तथोक्तमित्याहु **सेवा न घृ-**

१० ३ ३९

**ष्टे**तीति । नन्वजुष्टत्वेऽनपत्यत्व प्राप्तमेवेति कथन तस्य किंप्रयोजनकमित्याशङ्क्य तत्तात्पर्यमाहु **वैदिकेनापी**ति । अलौकिकप्रकारकतन्निषेधार्थक तदित्यर्थ । अजुष्टेत्यादिविशेषणतात्पर्याणि **रागस्ये**त्यादिना क्रमेणोक्तानि । ननु मोक्षाधिकविवक्षितर्लीलाऽमृताब्धिफल्के मोक्षावरणपूर्वकहरिसदृशपुत्रवरणे मायामोहस्य हेतुत्वोक्तिर्भेत्तिमा-

१ तदशा इत्यपि पाठ ।

गेविरुद्धा, मोक्षस्य चैवमाधिक्यं भवेदित्यत आहुः इयं विशेषमायेत्यादि । तर्हि मदनुग्रहात्तन्न वव्राथ इति वक्तुं युक्तं, न त्वेवमिति चेद्, न । अनवबोधात् । प्रकटे भगवति ज्ञानशक्तेरपि प्रकटत्वेऽपि ब्रह्मत्वेन भगवत्त्वादिना च ज्ञानाभावो यः स न मोहमृते । तथा ज्ञानं च लीलारसविरोधीति न तथा ज्ञापनम् । नन्वयमप्यनुग्रहादेवेतिचेन्नतु मोहोऽप्यनुग्रहादेवेति बुद्ध्यस्व । तथाप्येवंविधेऽर्थे मोहोक्तिः कथं भक्तमनोरमा भवेत् । इत्थम् । अचिन्त्यानन्तशक्तेर्भगवतो नियतकार्या हि ताः सर्वा लीला अप्यनेकविधाः । एवं सति यान्तरङ्गलीलायामेवाधिकृता सा तल्लीलास्थभक्तानां मध्ये यस्मिन् यादृशी लीला प्रभोश्चिकीर्षिता तस्मिंस्तदुपयोगिपदार्थेष्वासक्तिं तदतिरिक्तविस्मृतिं च करोतीत्येतन्मात्रसाधर्म्येणैतच्छक्तिकार्येपि मोहत्वोक्तिः । प्रकटे प्रभौ सर्वशक्तिप्राकट्येऽपि स्वानुरूपातिरिक्तज्ञानाद्यभावात् प्रमाणमार्गात् प्रमेयमार्गोतिविलक्षणो बलिष्ठश्चेति ज्ञापनाय च । अत एव, 'न न्यवर्तन्त मोहिता' इति वक्ष्यते । न हि तत्रामोह उत्तम इति वक्तुं शक्यम् । निवृत्तिहेतुत्वात् । यथा यथैतन्मोहाधिक्यं तथा तथा पुष्टिमार्गे भावप्राचुर्यमिति ज्ञेयम् । अत एव गोविन्दापहृतात्मत्वेनैवानिवृत्तिसम्भवेऽपि मोहिता इत्युक्तम् । अत एव भगवन्मायावाचकपदयोरसमासः । दास्यभावात् । पितृत्वादिभावस्य न्यूनत्वात् । यद्वा, 'समो मशकेने'ति श्रुतेर्भगवतः सर्वसमत्वेपि भगवत्समत्वं नान्यस्यास्तीति तादृक्पुत्रवरणं मोहकार्यमिति तथोक्तिः । वस्तुतस्तु 'अपवर्गं न वव्राथे' इत्येतावतैव चारितार्थ्येपि 'म' इति यदुक्तं, तेन पुरुषोत्तमसम्बन्धी भक्तिमार्गीयो दास्यरूपो योपवर्गः स उच्यते । तस्य सर्वाधिकत्वात्तद्वरणं मोहादेवेति तथा । ननु तदवरणोक्तिप्रयोजनं न पश्यामः । तया विनापि प्रकृतार्थोपपत्तेः । उच्यते । भगवद्वचनैरुक्तप्रकारकस्वरूपदर्शनेन च सर्वार्थतत्त्वज्ञानमभूदित्येवम्भूतास्मत्क्लेशेनाविर्भूतो भगवान् दास्यमेव कुतो न दत्तवानित्याशङ्काभावायैतदुक्तम् । अत्रायं भावः । कामदित्सयेतिवचनान्नियतेच्छयैवाविर्भाव इति भवदकामितं स्वतो न देयम् । अपवर्गे च भवतोः कामो नाभूदिति तथेति ज्ञापयितुं तदुक्तिः । तथापि परमकृपालुरेवं कुतः कृतवानिति शङ्का तु, एवं सति यान्तरङ्गेत्यादिना प्रागेव निरस्ता । एतेनैव कामदित्सयेति वाक्यादेवाकामितादानस्य प्राप्तेः कामाभावस्य च स्वतः सिद्धत्वात्तदनुवादः किमर्थ इत्याशङ्कापि निरस्ता ज्ञेया । कामाभावहेतोर्मोहस्यापि निरूपणात् । अन्यथा मोहनमेव कुतः कृतवानिति शङ्का तिष्ठेदेवेति । किञ्च, 'स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन'इति वाक्यान्निरयतुल्यत्वं यस्मिन् भगवत्परा मन्यन्ते, तस्यापवर्गस्यावरणं भक्तानां मायामोहकार्यमिति कथं वक्तुं शक्यम्, अतो यथोक्त एवार्थो ज्ञेयः ।

**युवां मामित्यत्र** । यदि मत्त्यङ्गत्वेन ज्ञानं नोच्येत, किन्तु स्वातन्त्र्येण, तदा यथाकथञ्चित् स्नेहमात्रेण निरोधपदार्थसिद्धेरस्मिन् स्कन्धे ज्ञानमुच्यमानमेतदर्थोऽसङ्गत्यात्र प्रवेशमलभमानं वाक्यभेदापादकं भवेदित्याहुः **अन्यथा** १०-३-४५. **बोधांश** इत्यादि ।

**इत्युक्त्वासीद्धरिस्तूष्णीमि**त्यस्य विवरणे, अत्र आत्मपदेन इदमाकूतम्। यथात्मा अविकृतो नित्यः शुद्धः सद्रूपस्तथेयं मायाप्युक्तगुणविशिष्टा। अत एव तादृशगुणविशिष्टलीलायाः प्रत्यायिका, नासत्पदार्थस्य। संसारहेतुभूता माया यथा जीवस्य स्वरूपं विस्मारयित्वा प्रापञ्चिकविषयासक्तिं जनयत्येवमियमपि भक्तानां स्वस्वरूपविस्मृतिं भगवदासक्तिं च जनयतीत्येतावद्धर्मसाम्येनास्यामपि मायाशब्दप्रयोगः। वस्तुतस्तु यथाऽन्ये लीलोपयोगिनो गोपीगोपादय आनन्दरूपा एवमियमपीति ज्ञापनायात्मपदम्। अन्यथा पुरुषोत्तमवाचिभगवत्पदाव्यवहितोक्त्यैव मायाया भगवदीयत्वप्राप्तेरात्मपदं व्यर्थं स्यात्। एवं सति, 'प्रकाशाश्रयवद्वा तेजस्त्वा'दिति न्यायेन भगवद्रूपत्वादत्र कर्मधारयो प्यभिप्रेत इति ज्ञेयम्। तथाचेदं पदं सर्वत्रानुषज्यते। तथाहि। अत्र लीलार्थं भगवता तौ पितृत्वेनाङ्गीकृताविति भगवच्छक्त्यैव तयोस्तथाविर्भावः। अन्यथा निषेकजननाद्यभावेन तयोस्तथात्वमुच्यमानं बाधितं स्यात्। एतदेवाह **आत्ममायया पित्रो**रिति। ननु 'एतद्वां दर्शितं रूपमि'ति वाक्यात् पूर्वरूपदर्शन एव भगवदिच्छाया उक्तत्वाद्, 'नान्यथा मद्भवं ज्ञान'मिति वाक्याद्दर्शनस्यानन्यलभ्यत्वाच्चैतद्रूपदर्शनं कथमेतयोरत आह **आत्ममायया सम्पश्यतो**रिति। एतेन चक्षुस्सामर्थ्येनादृश्यत्वं सूचितम्। अतिशयेनोपक्रान्तकार्योपयोगित्वं हि सम्यक्त्वम्। तेन पूर्वमीश्वरत्वेन जानतोर्लीलोपयोगिमायाकरणकदर्शने सम्यक्त्वं स्वपुत्रत्वेनापि दर्शनं ज्ञेयम्। तथैव लीलायाः करिष्यमाणत्वात्, पित्रोरितिवचनाच्च। यद्वा, लौकिकभावे सत्येव लीलोपपत्तिरिति दर्शने लीलोपयोगिमायाकरणकत्वनिरूपणेन पितृत्वोक्त्या च पुत्रत्वज्ञानं प्राप्तमेव। तच्च न केवलं, किन्त्वीश्वरत्वानुसन्धानसहितमिति तदेव सम्यक्त्वम्। 'युवां मां पुत्रभावेन ब्रह्मभावेन चे'ति भगवद्वचनात्। अथवोक्तरूपमायाकरणकदर्शने तद्विरुद्धाविषयकत्वमेव सम्यक्त्वम्। तथाच ब्रह्मभावस्य लीलाविरोधित्वेन तद्रहितं स्वस्मादुत्पन्न इत्येव ज्ञानं सम्यग्दर्शनम्। एवं सति तथा पश्यतोस्तयोः परं प्राकृतः शिशुर्बभूवेति तद्दर्शनप्रकारकथनम्। वस्तुतस्तु भगवान् षड्गुणसम्पन्नः परमकाष्ठापन्नः शुद्धब्रह्मरूप एव यः शिशुः शिशुरूपः स सद्यस्तस्मिन्नेव क्षणं आसीद् दृष्टः प्रकटो वा जात इति योजना। तत्राभवद्भगवान् व्यासपुत्र इत्यत्रेवात्राप्यासीदिति पदस्य नोत्पत्तिरर्थः, जातो हि बालो रोदिति। तच्च द्वाःस्थजागरणहेतुरिति तूष्णीं तथासीत्। अपरोक्षत्वेऽप्यलौकिकत्वेन ज्ञानाभावात् सोंशः परोक्ष एवेति लिट्प्रयोगः। अपरं च। इह हि तत्तत्क्षणसम्बन्धित्वेनोच्यमानापि सर्वा लीला तथाभूतैव शुद्धब्रह्मधर्मरूपा नित्यैवेति, 'कृतागसं'मितिश्लोकोक्तरूपवत्रासादिसहितशिशुरूपस्यापि शुद्धब्रह्मत्वाद्यथाश्रुतेपि न काप्यनुपपत्तिः। तच्छ्लोकोक्तरूपस्यैव, नचान्तरित्यादिना शुद्धब्रह्मत्वमग्रे शुकेनोक्तमिति न काचिच्छङ्का। लीलाया निरोधार्थत्वाद् यथैव सम्भवति तथैव करोतीति न प्राकृतानुकरणलीलायां काचिन्न्यूनता। प्रत्युत भक्तार्थं एनमपि करोतीत्यद्भुतमाहात्म्यस्यापकमित्येतत्सर्वं हृदि कृत्वा

१०-३-४६.

स्वस्यैव सर्वभवनसामर्थ्येन तथा कृतवानित्याद्युक्तमिति ज्ञेयम् । अत एव 'ववन्ध प्राकृतं यथे'ति प्राकृतदृष्टान्त उक्तोऽग्रे । अथवा शेषे इदं सूत्रं शेषाधिकारकाण्प्रत्ययान्तोत्र प्रकृतिशब्दः । तेन यथा चक्षुषा ग्राह्यं रूपं चाक्षुषमित्यादिशब्दास्तथायमपीति प्रकृत्या ग्राह्यः प्राकृत इत्यर्थः सम्पद्यते । लौकिकालौकिकभेदेन हि द्विविधा जीवाः । तेषां प्रकृतिरपि तथा । तथाच, 'मल्लानामशनि'रितिश्लोकोक्तरीतिवदलौकिकप्रकृतिभिरलौकिकत्वेन ग्राह्यो, लौकिकप्रकृतिभिर्लौकिकत्वेनेत्येतादृशो, वस्तुतस्त्वलौकिक एव शिशुर्वभूवेत्यर्थः सम्पद्यते । अत्र लौकिकव्यवहारोपयोगि ज्ञानं लौकिकं, तद्वन्तस्तथा । शास्त्रीयं ज्ञानमलौकिकम्, तद्वन्तस्तथेत्युच्यन्ते । तेन नन्दादीनां लौकिकत्वेन भानेपि लीलाया अलौकिकत्वात्तन्मध्यपातित्वेन तज्ज्ञानादीनां न लौकिकत्वम् । तेषां पुत्रत्वादित्वेन ज्ञानं शास्त्रेणानूद्यते परं, न तु विधीयत इति शास्त्ररीतिमपेक्ष्य लौकिकत्वमुच्यते । नैतावता काचिन्न्यूनतात्र । लीलात्वेनालौकिकत्वमुक्तमेव । यद्वा, प्रथमस्कन्धे भीष्मोक्तौ, 'प्रकृतिमगन् किल यस्य गोपवध्व'इत्यत्रेवात्रापि प्रकृतिशब्दो भगवत्स्वरूपवाची । तथाच पूर्ववत् प्रकृत्या स्वरूपेणैव ग्राह्यः। तथा, 'न तत्र सूर्यो भाती'त्यादिश्रुतिभिः, 'नाहं वेदै'रित्यादिस्मृतिभिश्चेतरसाधननिषेधाच्छ्रुत्यन्तरे च, 'नायमात्मा प्रवचनेन लभ्य' इत्यादिनेतरसाधननिषेधपूर्वकं, 'यमेवैष वृणुते तेन लभ्य' इत्यादिना भगवतैव भगवाँल्लभ्य इति निरूप्यते । तथाचैतादृशशुद्धब्रह्मरूपो लोकवेदप्रसिद्धः पुरुषोत्तमः शिशुर्वभूवेत्यर्थः। तयोः सम्पश्यतोरेव तथाकरणे उपपत्तिमाहुः **लौकिकज्ञानेत्यादिना** । **सामर्थ्यस्य** सामर्थ्यप्रकटनस्येत्यर्थः । इदमत्राकूतम् । अनेनैव रूपेणाधुनैव कंसं मारयित्वा सर्वसमाधानं कर्तुं सामर्थ्ये सत्यपि यद्रूपान्तरप्रकटनं तत् 'समुद्विजे भवद्धेतोरधीरधी'रित्यादिवाक्यैर्लौकिकरीत्यैव स्नेहातिशयो ज्ञायते । येन भगवतः कंसाभिमुखत्वमात्रेपि प्राणापगमो भवेत् । लोकविद्वेषभिया रूपोपसंहारप्रार्थनेनापि लौकिकरीत्यैव स ज्ञाप्यते मातुः । पितुस्तु पूर्णमाहात्म्यज्ञानवत्त्वेनोक्तशङ्काभावेप्यनेनैव रूपेण अधुनैव कंसमारणे भक्तदुःखनिवृत्तौ सत्यां स्थितौ प्रयोजनाभावादस्माकं पुनर्दर्शनं न भविष्यति चेन्न, प्राणस्थितिर्भविष्यतीत्यभिप्रायेण तद्वृत्तान्तकथनादेतद्रूपोपसंहारोन्यत्राधुना गमनमभिप्रेतमिति ज्ञायते। अन्यथा माहात्म्यज्ञानवत्त्वेन सर्वज्ञतामपि प्रभोर्जानातीति न तन्निवेदयेत् । तथाच तदा तद्दर्शनसत्त्वोक्त्या तज्ज्ञानस्योक्तरूपस्य हेतुत्वं सूच्यत इति युक्तं तथात्वमिति ।

१०-३-४७. **ततश्च शौरि**रित्यत्र । सर्वमोहनस्वभावायास्तस्या आविर्भावे वसुदेवे तथात्वं कुतो नेत्याशङ्क्य तन्निवारणाय, भगवत्प्रचोदित इतिपदतात्पर्यमाहुः **साधारणमोहस्ये**ति । भगवता गोकुले स्वनयनार्थं ततः कन्यायाश्चानयनार्थं स प्रेरित इत्येतावति कार्ये भगवज्ज्ञानशक्त्यैव व्याप्त इति योगमायाजनितसर्वसाधारणमोहस्य निवर्तकमुक्तरूपं ज्ञानमिति तथेत्यर्थः । यथान्यः कश्चिच्चौर्येण गच्छन् पद्भ्यां शनैश्च ग-

च्छति स्वचातुर्येण, तथैव वसुदेवोपीति ज्ञाने साधारणत्वम् । अन्यथा गोपाला भाण्डीरमिवायमपि गोकुल प्रापित स्यात् । यद्वा, भगवद्विषयकज्ञानतारतम्येन मोहापगमतारतम्यमिति भगवति लोकसाधारण ज्ञानमधुनास्यास्तीति तादृङ्मोहोप्यपगत इति तथेत्यर्थ । तावान् चाह्योपि बन्धो निवर्तत इत्याहु **कपाटोद्धाटनं** चेति । **तदा** देवकीत्यादि । दर्शनेन हि मोहाभाव । समानकालत्वे जन्मनो दर्शनक्षणे मोह एव भवेदित्यर्थ ।

## इति तृतीयाध्यायः ।

---

**चतुर्थाध्यायोक्तिसन्दर्भे अनिमित्त** इति । भक्तदु खाभावादित्यर्थ । **ज्ञापने** इति । मायाकृतरोदनेन स्वज्ञापनम् । ततो गृहपालकृतबालजन्मज्ञापन च कसे । एते उभे अपि तथेत्यर्थ । **ततोपीति** । एतदुभयज्ञापनानन्तर, 'यत्र क्व वा जात' इति मायाकृत भगवज्जन्मज्ञापन, कसकृततज्ज्ञापन च मन्त्रिषु । एते उभे अपि दु खसुखदे इत्यर्थ । **न चान्यथेति** । मायामोह विनेत्यर्थ । ननु धर्मस्थापनहेतो र्भगवदवतारस्य तन्नाशहेतुत्व कथमुच्यते । 'जात खलु तवान्तकृद्, यत्र क्व वे'ति वाक्य श्रवणेनैवानिर्देशान्निर्देशाश्चेत्यादिमन्त्रणस्य जातत्वादित्यत आहु **तामसप्रभुक** इति । **तामसाश्च त** इति । तद्भता पखादय इत्यर्थ । एवमपि कण्टकन्यायेन धर्मप्रतिपक्षदूरीकरण युक्तमिति भाव । **पश्चादिति** । तम कार्यनिवृत्ते पश्चाज्ज्ञातो धर्मस्तथेत्यर्थ ।

१०४.

**भुवि भौमानीत्यत्र** । ननु 'भुवि भौमानि यथा यान्त्यपयान्ति तथात्मा न याति नापयाती'त्येतावतैव वाच्योऽर्थ सम्पद्यत इत्यन्यानि पदानि व्यर्थानि । किञ्च, यथा भूर्न विक्रियत इति द्वितीयो दृष्टान्तो बाधित । भौमाना भूविकारत्वा दित्यरुच्या पक्षान्तरमाहु **भुवि भौमानि भित्यादीनीत्यादि** । भुवि भौमानि भित्या दीनि यथा यान्त्यपयान्ति च । भूतान्यबादीनि च यान्त्यपयान्ति । आत्मा त्वेतेषु भूतेषु विद्यमान एव न तथा । न याति नापयातीत्यर्थ । एतेन भूतानीतिपदस्यात्मनि सम्बन्धे प्रकार उक्त । यद्यप्येवमपि भूतपदमेतेष्वित्यादिपदानि च न सार्थकानि भवन्ति, तथापि तेषु स्थियमानस्यापि तद्धर्मासम्बन्धकथनात्तथात्वम् । अन्यथेतदर्थाप्राप्ते । **दृष्टान्त एचेति** । दृष्टान्तनिरूपकत्वास्ये भूतपदस्यापि प्रवेश उक्त इत्यर्थ । अत पर, यथा भूरिति दृष्टान्त निवृण्वन्ति **यथा वह्निरित्यादिना** । भौमानि यदा विक्रियन्ते तदा तेभ्यो बहि स्थिता स्थूला भूर्न विक्रियते, तथैतेष्वन्तस्थित आत्मापि तथा । एव सति तथैतेष्वित्यस्यावृत्ति कार्या । तदेतदुक्त, **तथैतेष्विति भिन्नवाक्यमित्यनेन** । अस्मिन्नेव पक्षे, एतेष्वित्या दिपदानि प्रकारान्तरेण व्याकुर्वन्ति । **एतेषु मनुष्यदेहेष्वपीत्यादिना** । यथा बहि स्थिता भूर्मनुष्यदेहेषूत्पद्यमानेषु न विक्रियते तथात्मापीत्यर्थ । अग्रे तूक्तेऽर्थे प्रमाणमुक्तमेते

१०४।१९

---

१ स्थाणे स्थाणो वनि पाठ ।

ष्वित्यादिना। अथ प्रकारान्तरेणार्थमाहुः **वर्षाकालेत्यादिना** । एतेषु तृणादिषूत्पद्यमानेषु यथा भूर्विक्रियते, न तथा तदन्तर्गत आत्मेत्यर्थः । व्यतिरेकेऽत्र दृष्टान्तः । 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीर'मिति श्रुतेः पृथिव्यन्तर्गतोऽभिमान्यात्माऽस्तीति मन्तव्यम् । विपक्षे बाधकमाहुः **अन्यथेति**। एकतृणरूपेण एकस्यात्मनो विकृतौ सत्यां निरवयवत्वेनांशभेदस्य वक्तुमशक्यत्वाद् द्वितीयादिषु तेषु भिन्नो भिन्न आत्माङ्गीकार्यः स्यादित्येकस्मिन् पृथिवीलक्षणशरीरेऽनन्ता आत्मानः कल्पनीयाः स्युरित्यर्थः। **अधिष्ठात्र्य** इति । त्वगादिगोलकेषु लोमादीनामिन्द्रियाणामोषध्यादयो देवताः शरीराभिमान्यात्मनः सकाशाद्भिन्ना इत्यर्थः ॥ इति **श्रीजन्मप्रकरणश्रीटिप्पणी समाप्ता** ।

## इति चतुर्थोऽध्यायः ।

---

## तामसप्रकरणे प्रमाणप्रकरणम् ।

**पञ्चमाध्याये प्रकरणार्थसन्दर्भे । स्वभावस्येति** । भक्तस्वभावानुसरणे भगवतः परमदयालुत्वं भक्तिमार्गोत्कर्षश्च सिध्यति । तदन्यथाकरणे क्लिष्टकर्मत्वं स्यादनेकविधत्वं रसालता च लीलाया न स्यादिति भावः । सात्त्विकं विहायादावेव तामसप्रकरणनिरूपणेऽस्य तामसत्वेनोक्तौ च हेतुमाहुः **लौकिकं तामस** इति । इदमत्र आकूतम् । पुरुषोत्तमस्वरूपमेव फलं, नेतरदिति हि भक्तिमार्गे मुख्यः सिद्धान्तः, तत्सम्बन्धादेव अन्यत्र फलत्वोक्तिः । एवं सत्यत्र स्वभावान्यथाकृत्यभावेन सात्त्विकानां ज्ञानादिविहितमार्गरुच्या राजसानां च विक्षेपतो लौकिकालौकिककर्मब्यासङ्गेन स्वरूपविस्मृतिसम्भवेन सम्यङ्निरोधासिद्धिः, तामसानां तु मौढ्यात् यत्राग्रहः पतति तत्र स न गच्छति कथञ्चनेति लोके दृश्यते । व्रजवासिनां च भगवत्स्वरूपविषयकः स्नेहस्तादृशो जातो येन स्वरूपातिरिक्तस्य भगवदुक्तस्यापि धर्मस्यानङ्गीकारोभूत्तथैवाग्रेतनज्ञानस्यापि । तेन सर्वात्मना निरोध एतेष्वेव फलित इत्येतद्धर्मसाम्येन पुष्टिमार्गस्य मर्यादातो विपरीता गतिरिति ज्ञापनाय च तामसत्वं प्रकरणस्योच्यते। वस्तुतस्तु निर्गुणमेव। 'तस्मान्मद्भक्तियुक्तस्ये'त्यारभ्य 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह'ति भगवद्वाक्यात्'स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इति वाक्यात्तत्साध्यमोक्षस्यापि नरकतुल्यत्वेन गणना, अतोपि भक्तिमार्गाद् ज्ञानमार्गस्य हीनत्वमिति भगवदेकनिष्ठविशुद्धभाववतां सर्वाधिकत्वं शास्त्रसिद्धमिति दिक्। एतदेव लौकिकत्वं तामसे मुख्यमितिपदेनोच्यते। व्यापकत्वेनात्मत्वेनान्तर्हृदि हरिरस्त्येवेति श्रवणेपि बहिर्लोके प्रकटं यद्रूपं तदेवोक्तरीत्या मुख्यमत्र, नान्तरात्मादिरूपमित्यर्थः । मर्यादामार्गतो वैलक्षण्यात् स्त्रियोत्र मुख्या इति ज्ञापयितुं तत्रापि मर्यादायां यो मुक्तिप्रतिबन्धकत्वेन सम्मतः कामः स एवात्र भगवत्प्रापक इति च ज्ञापयितुं काम एवान्तःफलं यस्यास्तादृशी सेत्यर्थः । अत्रासम्भावितत्वभानं न कार्यम्, यत एतादृश्येव

१०.५.०.

कृतिरग्रे स्फुटा निरूपयिष्यत इत्यर्थः। किञ्च, मर्यादायां विहितभक्त्या भगवदाविर्भावः, अत्र तु कामवशादेव दैन्ये सति प्रकटे प्रभौ स्नेहः, सोपि तथा, तच्छास्त्रानुसारी, न तु निष्प्रनुसारीत्यर्थः। 'एका भ्रुकुटिमावध्ये'त्यादिकथनात्। तथा चात्र निःसाधनेभ्यो ब्रह्मादीनामपि साधनैरप्यप्राप्य भजनानन्द तदधीनत्वमङ्गीकृत्य दत्तवानिति सर्वोत्कर्षवत्त्वेन तत्तथेत्यर्थः। यद्वा, अग्रे गजदृष्टान्तदानैर्भगवान् स्वयं कामवशाद्भक्तानां समीपमागच्छतीति ज्ञाप्यते। तथा चोक्तरीत्या कामेनोद्भूते प्रिये स्नेह इत्यर्थः। न ह्येवमन्यत्र सम्भवतीति युक्तमादौ तत्कथनमिति भाव.। लौकिकमारूप्येण चतुर्विधलीलाकरणे लौकिकत्वेन भगवति ज्ञानवतां निरोधासिद्धिरित्याशङ्क्याहु. एकमिति। यथैकेन पूतनासुपय.पानेन लोके वीर्यप्राकट्य, तस्याश्च मुक्ति, प्रमेयबलप्राकट्य लोके वेदे च, पूर्वभक्षितानां बालानां कृतार्थता, अन्येषां च रक्षा, तोकेनामीलिताक्षेणेतिवाक्यादग्रे व्रजवासिनां माहात्म्यज्ञानपूर्वकः स्नेहस्तात्कालिकश्च विस्मयोन्येषां श्रवणादिफल चेत्याद्यनेककार्याणि जातानि, तथा सर्वापि लीलेत्यर्थः। एवं सति प्रतिपाद्याननुगममाशङ्क्य तदनुगमक रूपमाहुः प्रपञ्चेति। आसक्तिरत्र मुख्या, तद्विस्मृतिरङ्गम्, तया विना सर्वथासक्त्यसम्भवात्तथा च निरोधत्वमेव तथेत्यर्थः। नन्वत्र बलदेवादिकार्यमप्युच्यत इति न सर्वा भगवल्लीलेत्याशङ्क्याहुः येनैवेति। आविष्टचरित्रमिति भाव.। अन्यथा निरोधः तेनापि न स्यात्। अत एव 'बलपार्थभीमव्याजाह्वयेन हरिणे'ति ब्रह्मणोक्तम्। एवं सति प्रपञ्चनिस्मृतिरित्यनेनैवास्य श्लोकस्य गतार्थतेति शङ्का निरस्ता ज्ञेया। पूर्वं प्रतिपाद्यत्वेनात्र तु परिचायकत्वेन तदुक्तेः। उत्सवाविष्टेत्यादिना क्रमेणैतत्प्रकरणस्थाध्यायप्रतिपाद्यनिरोधाधिकारिण उक्ताः। समुच्चय एवास्य, न त्वेतन्मात्रपरम्। भगवदासक्तानां तत्सम्बन्धमात्रेण सर्वासां लीलानां हृद्यत्वात्। आद्ये स्पष्टम्। तृतीये 'नन्दादयश्चाद्भुतदर्शनाकुला' इति वाक्यात्। 'अहो बतात्यद्भुत'मिति 'मानयामास विस्मित' इति च। 'आसीत् सुविस्मिते'ति च वाक्यैराश्चर्याभिवेशिनो निरुद्धा.। तुरीयेध्याये शास्त्रे पुरुषोत्तमनामत्वेन प्रसिद्धानि कृष्णवासुदेवादिनामान्यत्र कृतानीत्यलौकिकम्। गर्गेण स्पष्टतयोक्तेपि नन्दाबोधोपि तथा। अलौकिकत्वेन ज्ञात्वा तेषु नामसु ये रतास्तेऽत. परमस्यैतानि नामानीति ज्ञात्वास्मिन्निरुद्धा भविष्यन्तीति च। रिंगणलीलाप्यलौकिकरीत्या दैत्यनाशनपूर्वकभक्तेष्टेति तथा। लोके हीनत्वापादकत्व चौर्यं भगवत्युत्कर्षाधायक निरोधसाधकत्वादेवमपि भक्तमनीषितकरणाचालौकिकत्वम्। मृद्भक्षण, तत आस्ये विश्वदर्शनं शरणागतिर्मद्वदनुग्रहश्चेति सर्वमलौकिकमिति तादृशानामेतच्छ्रवणेन निरोध. सेत्स्यतीति तथा। पञ्चमे दधिभाण्डभेदनादिक लोकदृष्ट्योपद्रावकमिति तथा। अग्रिमा लीला स्वभक्तोपद्राविका चेति। षष्ठे नलकूबरमणिग्रीवौ स्त्रीस्वभावरतावृिति तत्कथा तथा। स्त्रियश्च स्वभावश्च[1] राजसतामसादिस्तयो रता इत्यर्थ। नात्र क्रमो विवक्षित इति। अत.परं द्वितीयाध्यायतात्पर्यमुच्यते। तत्रादौ हरिशरणगमनेनैव भयनिवृत्तिरिति तत्त्वम्। अनधिकारिमुक्त्युक्त्या प्रमे-

1 अलौकिक वनति पाठ।

यवलतत्त्वं चोच्यते। रक्षाकरणेन स्वामिनीनां च तत्त्वमलौकिकत्वतादृक्स्नेहवत्त्वादिलक्षणम्। हरौ रक्षाकरणं लोकरीत्येति लौकिके तत्त्वे रतास्तथा । सप्तमे वृन्दावनावासपर्यन्तं महानेवोद्यमो निरूपितो 'गोपीभिः स्तोभित' इत्यादिना। अग्रे च लीलोद्यम उक्त इति तथा। अथवा। यथाक्रममेव निरूपणं ज्ञेयम् । तथाहि । पूतनाया आगमनप्रकारागमनभगवत्कर्मकग्रहणपूतनाकर्मकमारणप्रकारतद्देपानाक्रमणतन्मुक्तितत्सहजरूपतद्दाहगन्धादयः सर्वे आश्चर्यरूपा इति तादृशानां निरोधः । तृतीये स्वोत्सवार्थमपि लौकिकप्रवाहधर्मासक्त्या स्वविस्मृतौ प्रकारान्तरेणास्मरणे शकटं भंक्त्वा मातुर्निरोधकरणमलौकिकम् । तस्य वैपरीत्येन तथात्वमपि तथा। प्रवालमृद्वंघ्रिस्पर्शमात्रेण तथाकृतिरपि तथा। अकस्माद्गुरुत्वप्रकटनमारभ्य कुशलेनागमनपर्यन्तं सर्वमलौकिकम् । जम्भालीलायां तथात्वं स्पष्टम् । उक्तत्रिविधलीलायामाश्चर्यरूपत्वमप्यस्तीति तादृशानामप्यत्र निरोध इति समुच्चयार्थोपिशब्दः । तथाप्यलौकिकत्वं मुख्यमिति पृथक्त्वम् । चतुर्थे चौर्यादिलीलाया लोकप्रतीत्योपद्रावकत्वमिति तथा । नामरूपादेरलौकिकत्वेनोक्तनिरोधस्यापि समुच्चयार्थश्चः । पञ्चम आवश्यकत्वज्ञानेन दास्याद्यभावे स्वयमपि कर्मकरणम् । पुत्रे च शिक्षार्थं तथा करणं स्त्रीस्वभावः । षष्ठे नारदोक्तिभिर्लोकतत्त्वम् । परमार्थतस्तत्त्वं स्तुत्येत्युभयत्र रतास्तथा । सप्तमे मन्त्रणपूर्वस्थानत्यागापूर्वतत्परिग्रहतत्रगमनाद्युद्यमोक्तेस्तादृशास्तथेति । अत्रोक्ताधिकारिणो यथासम्भवं लीलास्थास्तदन्ये च ज्ञेयाः । सप्तस्वप्यध्यायेपूक्तासु लीलासु सप्तविधा अपि यथासम्भवमधिकारिण इति ज्ञेयम् । **आवश्यकमिति** तदनन्तरमेव शीघ्रं करदानार्थगमनोक्त्येति शेषः । यदि केनाप्यंशेन नन्दो वसुदेवागमनं जानाति तदाकाशवाणीवृत्तान्तज्ञत्वेन सञ्जातवृत्तान्तशङ्कया स्वपुत्रत्वे सन्दिहान एव चोत्सवं कृतवानिति कस्यचिच्छङ्का स्यात् सापि तदैव मथुरागमनेनापास्तेत्याहुः **अन्यथाज्ञानेति** । उपपत्त्यन्तरमाहुः **उत्सवस्त्विति**। यथाकथञ्चिद्गमनसम्भवेऽप्युत्सवस्तु स्वपुत्रत्वनिश्चयं विना न स्यादित्यर्थः । नन्दः स्वपुत्रमादायेत्यत्रोदारधीरिति विशेषणसूचितं महार्हानेकविधभगवदुपयोगिद्रव्यानयनं चान्यथा न स्यादित्याहुः **द्रव्येति**। यद्यपि भ्रमप्रमासाधारणं तथाज्ञानमात्रमेवाह्लादहेतुस्तथापि महतामन्तःकरणमतथाभूतं वस्तु न गृह्णातीत्याशयेनाहुः **अन्तःकरणप्रतीत्यापीति** ।

**अलङ्कृत इत्यस्याभासः**। **अन्यामपि शुद्धिमित्यादि** । अत्रायं भावः । बाह्याभ्यन्तरभेदेन शुद्धिर्द्वेधा । एतत्तारतम्येन भगवदानन्दानुभवतारतम्यमिति मर्यादा । प्रकृते चोत्सवरसानुभावकमलङ्करणमिति तथात्वमिति । मूलस्थपाणिपदतात्पर्यमाहुः **रिक्तेत्यादि** । **सम्बद्धा** इति कुलदेहसम्बन्धयुक्ता इत्यर्थः ।

१०-५-१.

**नवकुङ्कुमेत्यत्र** । मुखेषु तादृक्पङ्कजत्वोक्त्या व्यञ्जितमर्थमाहुः **गन्ध इत्यादिना**।

१ कोटापुस्तके कर्मकस्य कर्तृक इति कृतम् ।

१०५१०. भावज्ञापकत्वसाम्येन कटाक्षोक्त्योरैक्यविवक्षया चतुष्टयत्वमुक्तम् । कटाक्ष-युक्तास्ता इति वा । तथा च गन्धादिवक्रोक्तिगानपर्यन्तं ताभिर्ज्ञापितं ज्ञास्यति । यतस्तच्चतुष्टयं ज्ञेयम् । लोभात्मकं रसं तु स्वत एव ज्ञास्यतीति योजना । एतेन भगवतस्तु रूपादिपञ्चविधविषया ये भोग्यास्ते एता एवेति सूचितम् । तेनैतासु भगवत आसक्तिः सूचिता भवति, मिथश्चित्तव्यतिषङ्गोपि । चतुष्टयज्ञेयपदे रसस्यैव वा विशेषणे ।

**कृष्णे विश्वेश्वर** इत्यत्र **सञ्ज्ञेत्यादि** । ननु विश्वेश्वरादिपदसामानाधिकरण्या-

१०५१३. त्तद्वत् कृष्णपदमप्यानन्दहेतुत्वेनोक्तम्, न तु नामत्वेनेति सञ्ज्ञेत्यादिकथनं न घटते । अस्तु वा, तथापि व्रजवास्युक्तिः परं न घटते । शुकस्तु जाना-त्येवेति युक्तं तदिति कथमेवमिति चेत्, सत्यम् । यदा यादृशी लीला भवति तत्कालीनां तादृशीमेव तां शुको वदति । यथा 'चिरं पाहीति बालकं' इति । तथा च तदालोके तन्नामप्राकट्यं भगवता न कृतमिति तत्कथनमयुक्तमित्याशयेन तदुक्तम् । यत्तु नामत्वेन नोक्तमित्युक्तम्, तत्राप्युच्यते । पुरुषोत्तमस्वरूपं सदानन्दात्मकमिति केवलस्वरूपवा-चित्वेन कृष्णपदमेव मुख्यं नाम । नन्वीश्वरादिपदवद्धर्मपुरःसरत्वमिति तत्सामानाधिक-रण्येप्यस्य नामत्वेनैवोपस्थितिः । यथान्यशब्दानां धर्मपुरःसरं धर्मिवाचकत्वेपि सत्ताशब्दस्य न तथात्वम्, तथात्रापीति । **मारयेदिति** । वादकानिति शेषः । **महानपकुर्यादिति** । पूज्यपूजाव्यतिक्रमजन्यदोषप्रयोजको भवेदित्यर्थः ।

**तत आरभ्येत्यत्र** । **यदा पूर्वोक्तेत्यादि** । अत्रायं भावः । रमाक्रीडत्वोक्त्यैव सर्वसमृद्धिमत्त्वस्य प्राप्तावपि पृथक् तन्निरूपणाद्धरेर्निवासेत्यनेनैव हेतुकथनेपि

१०५१८. तत आरभ्येति पार्थक्येन पूर्वानधिकथनाच्च पश्वादिसमृद्धौ विष्ण्वाराधनस्यैव नैकट्यात् हेतुत्वमवगम्यते । तादर्थ्यचतुर्थ्याराधनस्यैव मुख्यफलत्वेनानुषङ्गिकत्वमनेनेति । **दिष्ट्या भ्रातरित्यत्र** । **इदानीमित्यादि** । वसुदेवबुद्धिमनुसृत्येदमुक्तमिति ज्ञेयम् । वस्तुतस्तु प्रजाशब्दोपत्यमात्रवाचीत्यग्रे वचनादिदानीमप्रजत्वोक्तिः कन्याभि-

१०५२३. प्रायेण तस्या गतत्वात्तथात्वम् । प्रजा यत्समपद्येति तु भगवदभिप्रायेण । अन्यथेदानीमप्रजस्य प्रजा समपद्यतेति विरुद्धं वाक्यं स्यात् ।

**न तेष्वित्यत्र** । **यथात्मन** इत्यादि । नन्दस्यातिप्रियत्वात् तत्तोषार्थं स्वगृहे नन्दा-कारणमुचितं यद्यपि, तथापि तथाकृते भगवति देवकीपुत्रत्वं कंसः सम्भाव्य

१०५२८. नन्दानिष्टं कुर्यात्तदा सुहृन्नन्दः क्लिष्टो भवेदतो नाकारणम् । इदमप्येकं दुःख-मेतदुक्त्या ज्ञाप्यते, तेन यथात्मनो नन्दस्य स्वगृहे नाकारणमिति सम्बन्धः । शेषं हेतुत्वे-नोक्तम् ।

निःसाधनफलात्माय प्रादुर्भूतोस्ति गोकुले ।
अतो वयं सुनिश्चिन्ता जाताः सर्वत एव हि ॥ १ ॥

इति पञ्चमोध्यायः ।

तद्राहित्यं भूषणम्, नतु दूषणम्। अद्भुतकर्मत्वलक्षणस्वरूपसम्पादकत्वात्। अत एव 'तस्मान्नन्दात्मजोऽयं त' इति गर्गोक्तिरपीति भावः।

१०-२३-१६. **वर्णास्त्रय** इत्यत्र। **वाक्यान्यष्टश्लोकैरुक्तानीति** नामकरणसमये गर्गेण छन्दोननुरोधेनैव वाक्यान्युक्तानि, तथैव नन्दैरपि, तान्येव व्यासेन श्लोकैरुपनिबद्धानीति तथोक्तम्। यद्यप्यासन्नित्यादीनि तानि सप्तैव, तथापि मन्ये नारायणस्यांशमित्यादिकं गर्गवाक्यफलितार्थनिरूपकत्वेन तद्रूपमेवेत्याशयेनाष्टसङ्ख्योक्ता।

**इति त्रयोविंशोऽध्यायः।**

१०-२४-०. **चतुर्विंशाध्यायतात्पर्योक्तौ। गोरक्षा** चेदित्यारभ्य **जायत** इत्यन्तस्यायं भावः। साजात्यमात्रेणाप्यखिललौकिकगवाधिदैविकगामिनी पालनलीला पुरुषोत्तमातिरिक्तस्य न सम्भवतीति तत्त्वप्रमापिका तादृग्रूपसुरभिप्रपत्तिः। तदुक्तं 'भवताऽलोकनाथेन सनाथा वयमच्युत' इति सुरभ्या। लोकभिन्ना अलोका अलौकिक्य इति यावत्। तासां नाथेन पालनकर्त्रा त्वया वयमपि सनाथाः पालिता भवाम इत्यर्थः। लीलास्थपदार्थमात्र इयं व्यवस्थेति ज्ञापनायालोकेति सामान्योक्तिः, अन्यथोक्तरीत्यालोकनाथेति वदेत्। तत्र हेतुरच्युतेति। धर्मतोऽपि च्युतिराहित्येन पालनलक्षणो धर्मो यद्यस्मद्गामी न स्याद्गोत्वाविशेषात् तदास्मदंशे स च्युतः स्यादित्यर्थः। **तदेयमिति।** लीलापदं भावप्रधानम्। भगवल्लीलाप्रमाणमिति समस्तं पदम्। तथा चेयमुच्यमाना लीला भगवल्लीलात्वे प्रमाणं तथेत्यर्थः। ननु हेतुवादसिद्धत्वेनेन्द्रयागश्चेद्भग्नः, तदा प्रकृतेपि 'भवता लोकनाथेने'त्यादिना रक्षकत्वादिहेतूक्तिपूर्वक एवेन्द्राभिषेकः कृत इति को विशेष इत्यत आहुः **अतो हेतूक्तिरपीति।** यतो यागभङ्गकरणप्राप्तसदोषत्वशङ्कापरिहाराय तद्भङ्गतदपूर्वकारणपालनानां केवललीलात्वं ज्ञापनीयम्[1]। तच्चाधिदैविकगामित्वनिरूपणेन भवतीति तद्रूपमेव। अतोऽत्र हेतूक्तिरपि। एषा लीलारूपैवेत्यर्थः। अत एव 'भवाय भवे'ति 'कृष्णेऽभिषिक्त एतानी'त्यादिना सत्फला वर्ण्यत इत्याहुः **सत्फलेति।** किञ्च, पारम्पर्यागतमर्यादाभङ्गोऽप्येवं न जात इत्याहुरिन्द्रयागश्चेति। अग्रेपि प्रतिवर्षं गोसवं करिष्यन्तीति **भवितेत्युक्तम्।** एतेन लीलासम्बन्धिलोकपालादयोपि न भगवदतिरिक्ता इति ज्ञापितमिति दिक्।

१०-२४-१. **गोलोकादाव्रजदित्यत्र। न हि प्राकृतैः स्ववंशीयैरिति।** प्रकृतं लीलाकरणं तत्सम्बन्धिभिरित्यर्थः। तथा सति लीलारसविरोधः स्यादिति भावः।

१०-२४-३. **इन्द्रस्तुत्याभासे दशभिः प्राणश्लोकैरिति।** भगवदपराधैराधिदैविकसर्वतिरोधाने तादृशाः प्राणा अपि तिरोहिता इत्ययं मृत इवाधुनेत्याधिदैविकतत्प्राप्त्या स्वजीवनसिद्ध्यर्थं तत्समानसङ्ख्याकैः श्लोकैः स्तुतिमाहेति सङ्ख्यातात्पर्यमु-

---

१ केवलपुरुषोत्तमलीलात्वं देवकार्यकृतिर्व्यूहकार्यत्वादित्यर्थः।

त्तम् । ननु 'गोवर्धने धृते शैल' इतिवाक्यात् क्रियाशक्त्याविर्भावं कृत्वा यथायं बोधितस्तथा पूर्वमेव ज्ञानशक्तिमेवाविर्भाव्य कुतस्तथा न कृतवान्, तदा प्रभुमाहात्म्यज्ञानान्नापराधं कुर्यात्, अधुनाग्रेऽपि चेत्यत आहुः **क्रियाशक्तीति**। इन्द्रादीनां बाहुरूपत्वादिति भावः। ननु प्रयोजनमस्तीति कुतस्तथा नाकरोदित्याशङ्क्य तदनधिकारमाहुः **बाह्यश्चायमिति**। हेतुककर्मसम्बधित्वेन वेदबाह्य इत्यर्थः । अत एव गवादिद्रोहार्थमाज्ञप्तवानिति भावः। एतदेवाहुस्तथाविध इति। अतःपरं क्रियाशक्तिर्यावत्प्रयोजनार्थं स्वस्मिन्यावती च दत्तास्ति तदुपयोगिज्ञानमपि दत्तमस्तीति भगवदपराधेन चतुर्विधपुरुषार्थानां भगवद्दत्तगुणानां च तिरोधानं ज्ञात्वा तत्सिद्ध्यर्थं स्तौतीति तावत्सङ्ख्याकैः श्लोकैः स्तुत्या ज्ञाप्यत इत्याहुः **पुरुषार्थप्रसिद्ध्यर्थमिति**।

**स्वच्छन्दोपात्तदेहायेत्यत्र**। नटवदेव रूपमित्यादिग्रन्थः पूर्वोक्तरूपेन्द्रस्तुत्य-

१०-२४-११. भिप्रायेणेति ज्ञेयम्। **इति चतुर्विंशोध्यायः।**

**पञ्चविंशेध्याये तात्पर्योक्तौ। अन्यथा नन्दविज्ञानमिति**। यदि वरुणैश्वर्य-तद्दासस्वानयनलक्षणं पुरुषसम्बन्धि यत्परं माहात्म्यं पुरुषोत्तमत्वेन ज्ञानजनकमिति यावत्। तद्दर्शनं न स्यात्तदा तत्तदेव पूर्वोक्तं नारायणांशत्वेन देवोत्तमत्वेन यज्ज्ञानम्, वस्तुतस्तु पुरुषोत्तमविषयकमेवं ज्ञानं भक्तिमार्गविरुद्धं, पर्यवसायि पर्यवसानशीलं स्यादित्यर्थः। तथा सत्यग्रे भजनानन्दानुभवो न स्यात्, तद्विरुद्धज्ञानवत्त्वाद्, अतो निरवधिमाहात्म्यवत्त्वेन पुरुषोत्तमत्वेन ज्ञानं जननीयम्, भक्तिमार्गविरुद्धज्ञानवत्त्वेन निग्रहश्च कार्यः। वरुणद्वारा, भगवानुभयं कारितवानिति वरुणं सेवकत्वेन प्रभुर्मनुत इत्यर्थः।

**नमस्तुभ्यं भगवन्न इत्यत्र। विवादे सत्स्वित्यादि**। ननु 'यावज्जीवमग्निहोत्रं

१०-२५-६. जुहुया'दित्यादिकर्मकाण्डेन 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' 'यामिमां पुष्पितां वाच'मित्यादिना च विरोधात् कथं तत्तदुपास्यानां न नमस्तेत्या-शङ्क्य तत्र विषयव्यवस्थामाहुः **विवाद** इति। विषयस्य विवादविषयस्येत्यर्थः। देहाद्यध्यास-कृताधिकारकत्वेनाज्ञानमूलकत्वेन कर्मणो जघन्यत्वात् 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः, न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति प्रभुवचनाद्भक्तिमार्गान्मार्गान्तरस्य दौर्बल्यम्। तत्रोपास्यरूपाणां भक्तिमार्गसेव्यपुरुषोत्तमरूपाद् दौर्बल्यमिति भावः। भक्ति-मार्गाज्ञानदशायामेव कार्यता तेषां दौर्बल्यम्। अत एव 'मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायत' इति भगवतोक्तम्। ननु चार्वाकादिभिरीश्वरो नाङ्गीक्रियत इतीश्वरोऽपि न सर्वसिद्धान्तसिद्धः। किञ्च, ईश्वरवादिनामपीदं स्वरूपं शुद्धं ब्रह्मरूपमिति न सर्वेषां सम्मतमित्यत आहुः **सत्स्विति**। मोहकशास्त्रजमोहरहिताः सन्तः, तेषु परस्परं यस्मि-न्विषये विवादस्तत्र तथेत्यर्थः। अत एवाग्रे श्रुत्यादिकमेवोक्तम्।

**न यत्र श्रूयते मायेत्यत्र। लोकानामित्यादि**। मायया मोहिता एव तथा कल्पयन्तीति तथा। कार्यो मोहः, कारणं सा। एतदेवाहुः **कार्यकारणरूपिणीति**।

**आनीतोऽयं तव पितेत्य**त्रेदंप्रयोगं विनापि चारितार्थ्ये तत्प्रयोगात् तत्तात्पर्यमुक्तं **वेपमानः पुरो वर्तत** इत्यनेन। तत्र भगवदैश्वर्यदर्शनजसात्त्विकभावात्तथेति ज्ञेयम्। १०-२५-७.

**नन्दस्त्वतीन्द्रियमित्य**स्याभासे। **यथैकं वचनमिति**। गोसवकर्तव्यताबोधकं वचनं व्रजानन्यतेन्द्रमानभङ्गगोवर्धनोद्धरणव्रजजनाप्यायनतन्माहात्म्यज्ञानेन्द्रप्रणतिगोविन्दनामधारणाद्यनेककार्यं करोति तथेत्यर्थः। १०-२५-९.

**ते तु ब्रह्महृदमित्य**स्याभासे। **विलय एवाभूदिति**। अयमर्थः। लोकस्याक्षरात्मकत्वेनानन्दरूपस्य सर्वत्राविर्भावेन सर्वेषां देहेन्द्रियप्राणान्तःकरणात्मस्वप्याविर्भावे प्रकटाग्निसम्बन्धात् काष्ठान्तर्गताग्निप्रादुर्भावे तस्याप्यग्निरूपतापत्त्या काष्ठताविलयवदेतद्देहादीनामप्यानन्दतापत्त्या देहादिभावविलयोऽभूदिति। **प्रत्यापत्त्यर्थमिति**। पूर्वभावसम्पत्त्यर्थमित्यर्थः। **तदात्मकांशस्येति**। सर्वत्राविर्भावात् तत्तद्देहादिष्वप्याविर्भूतांशस्येत्यर्थः। **काष्ठाग्निवदिति**। काष्ठान्तर्गताग्निप्राकट्यार्थं योऽन्योऽग्निस्तत्र प्रविष्टस्तस्यापि तदतिरोधाने तिरोधानं न यथा, तथेत्यर्थः। **अर्धज्वलितानामिति**। अत्रैवं ज्ञेयम्। व्रजवासिमनोरथपूर्त्यर्थं ब्रह्मानन्दाद्भजनानन्दे तारतम्यज्ञापनार्थं च स्वलोकस्य हि प्रदर्शनम्। तारतम्यज्ञानं चाग्रे नैतत्स्फूर्तिं विना संभवति। सा चाधुनैतदनुभवं विना तथेत्यधुनैतदानन्दानुभवोऽपि वाच्यः। स च स्वस्मिंस्तद्भिन्नत्वज्ञानं विनानुपपन्नः। एवं सत्यानन्दात्मकत्वं स्वस्य भेदज्ञानपूर्वकमक्षरानन्दानुभवश्चेत्यर्धज्वलितत्वम्। पुनः काष्ठता तु पूर्वोक्तदेहादिष्वाविर्भूतलोकस्य तिरोधानेन तत्सम्बन्धजनितानन्दात्मकत्वभानतिरोधानेन च यथापूर्वं स्थितिः। एवं करणस्यावश्यकतामाहुः **अन्यथेति**। तद्धेतुमाहुस्त**च्चेति**। अत्रायं भावः। ज्वलितांशस्य पुनः काष्ठतावदानन्दात्मकतामापन्नस्य देहादेः पुनर्जडभावो ह्यशक्यः। प्रकृते तु लीलोपयोगित्वात्सर्वेषां देहादिभावे सत्येव च तथात्वसम्भवाद्देहादिभावः प्रकृतिः, मुक्त्यवस्था विकृतिरेव। एवं सति विकृतिमपास्य प्रकृतिसम्पादकमेतादृशानां वेदब्रह्मैव भवितुमर्हति। कार्यस्यामर्यादत्वादेतदपि न मर्यादामध्यपाति तथा भवितुमर्हत्यतो यथा हृदो नद्यन्तर्गत एव प्रवाहाद्भिन्नः सन् सदातिनिर्मलः स्रवन्मन्दारविन्दोदयहेतुः सततमतिगभीरतया स्वान्तःपतितपदार्थपूरणपटुस्तथा वेदान्तःपात्येव मर्यादामार्गीयाद्भिन्नं सद्ब्रह्मत्वेन निर्दोषभजनानन्दानुभवहेतुर्विचित्रभावजनकं पुष्टिमार्गीयमेवेति ज्ञापनाय मूले वेदस्य ब्रह्मत्वं हृदत्वं चोक्तम्। एतदेवोक्तं **तद्भिन्नस्य जलात्मकमित्य**नेन। न चाक्षरात्मकत्वेन लोकस्य तदानन्दवाचकं ब्रह्महृदपदमिति वाच्यम्। ब्रह्मानन्दस्य महत्त्वेन हृदस्याल्पत्वेन तत्त्वोक्त्यनुपपत्तेः। आनन्दपदं हित्वा हृदपदोक्तावश्यं तात्पर्यं वाच्यम्। तत्तत्करूपमेव संभवति। एतेनैवाक्षरपरत्वं ब्रह्मप- १०-२५-१६.

१. देहादिभावप्रकृतिप्राप्त्या भजनानन्दानुभवरूपमेत्यर्थः।

दस्य निरस्तम् । तत्त्वस्य पूर्वमेवोक्तेश्च । मध्ये शब्दब्रह्मयोजनायां हेतुमग्रे वक्ष्यन्ति **प्रमाणतो ज्ञान**मित्यादिना । एवं सत्यत्र ह्रदत्वमज्जनोक्तिभ्यां जलरूपतापि शब्दब्रह्मणोऽस्तीति मन्तव्यम् । तदाहुरत **एवे**ति । एतस्यापि व्यापकत्वात् क्वचिद् गोकुलनिकटे प्रकटीकृतेत्यर्थः । एवं कृतेरावश्यकतामाहुः **तत्कार्यमिद**मिति । एतादृशानां पूर्वभावसम्पादनलक्षण कार्यं प्रमाणतो ज्ञान च तदेकसाध्यमित्यर्थः । अत्रोपपत्तिमाहुर**ग्रे** चेति । 'यत्राक्रूरोऽध्यगात् पुरे'त्यनेन । तत्र हि शब्दब्रह्मात्मके जले भगवत्स्वरूप स ज्ञातवानिति । मज्जनपदार्थमाहुः **शब्दब्रह्मात्मका एव जाताः** । तत्र हेतुरु**त्तमाधिकारिण** इति । नन्वस्मादप्युद्धरणस्यावश्यकत्वे पूर्वस्मादेव किमिति नोद्धृत्य प्रकृतिभाव सम्पादितवानित्याशङ्क्य तत्र हेतुमाहुः **क्रमश्चायमि**त्यादिना । स्वकृतमर्यादास्थापनार्थं तथाकृतिरित्यर्थः । तमेवाहुः **परब्रह्मे**ति । परब्रह्मणा पूर्वं स्वस्मिन् स्थित पश्चात् स्वस्माद्विभक्त यद्वस्तु तच्छब्दब्रह्मात्मक भवति । ततस्तेन तथा कृत जगद्रूप भवतीत्यर्थः । इदमत्राकूतम् । साक्षाल्लीलोपयोगि जगद्धि सच्चिदानन्दात्मक स्वस्मिन् स्थित क्रीडेच्छया स्वस्माद्विभक्त करोति प्रभुः । यतोऽन्तःस्थित न बहिःकार्यक्षमम् । तच्चानन्दस्वरूपादियुक्त सत् स्वरूपमलभमानमिव न किञ्चित्कार्यक्षम भवति । तदा प्रवृत्तिनिवृत्तिभ्यां लौकिकीभ्यामलौकिकार्थसम्पादनक्षमं शब्दब्रह्मेति तदात्मकतायां लीलोपयोगि प्रवृत्तिनिवृत्तिक्षम भविष्यतीति ज्ञात्वा तथा सम्पाद्योक्तसामर्थ्ये सम्पन्ने तस्य प्रमाणरूपत्वाल्लीलायां प्रवृत्तिनिवृत्ती स्नेहाधीने इति न तदुपयोग इति तस्मादप्युद्धृता इति । एतदेवोक्त**मन्यथा प्रमाणगृहीता** इत्यादिना । लीला हि स्वतन्त्रा । एते प्रमाणाधीनत्वे विहितमेव कर्म कुर्युर्नेतरदपीति तत्रानुपयुक्ता भवेयुरित्यर्थः । यद्वा । प्रमाणमार्गगृहीतत्व प्रमाणैकवशचित्तत्वम् । तच्च पुष्टिलीलाप्रवेशानधिकाररूपमेवेति तथेत्यर्थः । **तदार्द्रनयना** इति । जले निमग्नानामार्द्रे ते भवत एव । प्रकृते च तस्य शब्दब्रह्मात्मकत्वेन यादृश श्रुतिसिद्ध भगवत्स्वरूप तादृशमेव दृष्ट्वापि पश्यन्तीत्येतदेवार्द्रत्वम् । तदानन्दाश्रुभिरपि तथात्व ज्ञेयम् । सर्वस्यापि ग्रन्थस्य तात्पर्यरूप गूढाभिसन्धिमुद्घाटयन्ति **ब्रह्मानन्दा**दिति ।

यद्वा । ते तु **ब्रह्महृदं नीता** इत्यस्याभासः । **ततो** दर्शनानन्तरमित्यादि । अत्राय भावः । अक्षरानन्दाल्लीलात्मकानन्दस्याधिकत्वेऽप्येतेषां तद्रूपत्वेन तन्मध्यपातित्वेऽप्यक्षरानन्दस्येयदवध्यननुभवेन तारतम्याज्ञानाद् भगवता च लोकमध्य एव लीलाकरणात् स्वस्येतरलोकसाधारण्य मन्यमानानां य मनोरथोऽभूत् । तत्पूर्त्यर्थं स्वलीलात्मकत्वांश हस्तपिहितमिव कृत्वा साधारणीं रीतिं प्रकटितवान् । तस्यां तु सच्चित्प्राकट्यमेव जीवेषु, नानन्दांशस्य । तत्प्राकट्ये च ब्रह्मभावः सम्पद्यते । स चाक्षरानन्दांशभूतः । अक्षरानन्दाविर्भावे च जीवस्वरूपात्मकानन्दोऽपि तथाभूत् । बाह्याग्निसम्बन्धे दार्वन्तःस्थवह्निरिव । इदमेव विलयशब्देनोच्यते । अन्तरार्द्रदारुणो यथा बाह्यांश एवाग्नित्वम्, तथैतेष्वग्रे लीला-

याश्विकीर्पितत्वेन तदात्मकत्वमार्द्रतास्थानीयमतो नाक्षरानन्दात्मकत्वसम्पत्तिः । बाह्यांशस्थानीयो जीवत्वांश एव । इदमेवार्धज्वलितत्वम् । अक्षरानन्दानुभवार्थं लीलात्मकत्वं यल्लीलात्मककार्यानुन्मुखं कृतवानासीत् साधारणीं च रीतिमप्रकटयत्तद्दूरीकृत्य पुनर्लीलाकार्योन्मुखत्वसम्पादनमेव काष्ठतासम्पादनम् । लोके ज्वलितांशस्य काष्ठता त्वशक्या कर्तुम्, अतस्तादृशमग्नितिरोधायकमपेक्षितं येन तत्तिरोधानं पुनः पूर्वरूपता च सम्पद्यते । तादृशं शब्दब्रह्मैव । यतो देहाद्यध्यासवत एव विषयीकृत्य देहधर्मरूपवर्णाश्रमधर्मान् कर्मज्ञानोपासनारूपान्निरूपयति । तत्सम्बन्धेऽक्षरानन्दाविर्भावाविर्भूतजीवस्वरूपात्मकानन्दतिरोभावेन जीवभावः सम्पद्यते । स चात्र पूर्ववल्लीलोपयोगित्वमेव । मूले ब्रह्मणो ह्रदत्वोक्त्या तस्य च जलरूपत्वेनैतस्य जलात्मकत्वमुच्यते । जलनिर्वाप्योऽग्निरिति तदपनेयस्याक्षरात्मकत्वस्याग्नित्वमुच्यते । अतः कचिद्गोकुलनिकट एव शब्दब्रह्म जलात्मकं प्रकटितवान् । अक्षरात्मकतातिरोधानमेव तत्कार्यम् । उक्तेऽर्थे प्रमाणमाहुरग्रे च वक्ष्यतीति । 'यत्राक्रूरोऽध्यगात्पुरे'ति शेषः । तस्य जलमध्य एव तदवगमादेतद्वचनेन तदभेदोक्त्या ह्रदत्वोक्त्या च जलरूपत्वं शब्दब्रह्मणो निःप्रत्यूहं मन्तव्यमिति भावः । सर्वांशेन तत्सम्बन्धज्ञापनार्था स्नानोक्तिः । शब्दात्मका एव जाता इति । ह्रदनयनोक्त्यैव तत्सम्बन्धप्राप्तावपि मज्जनोक्तिस्तदात्मकत्वमेव तस्यार्थ इति भावः । एवं करणे हेतुमाहुः क्रमश्चायमिति । पुष्टिमार्गप्रवेशनक्रम इत्यर्थः । शब्दब्रह्मणः सकाशात्परत्वेनाक्षरब्रह्मैव परब्रह्मशब्देनोच्यते । तथा च 'मुक्तोपसृप्यव्यपदेशादा'दौ ब्रह्मभावाद्वैकुण्ठाद्वा पृथक्कृत्वा 'न स पुनरावर्तते' इत्यादिवाक्यैस्तादृशानां पुनर्देहादिसम्बन्धस्य मर्यादाश्रुतिविरुद्धत्वात्, ततोपि पृथक्कृत्वा पुष्टिलीलात्मकजगत्त्वसम्पादनमित्यर्थः । अत एवेति । पुरुषोत्तमस्वरूपं साक्षाद्वक्तुमशक्तं कार्यद्वारा स्वानुभवज्ञापनद्वारा वा शक्तमित्यर्थः । यथा चैतत्तथा 'मनोरथान्तं श्रुतयो यथा ययु'रिति दृष्टान्तव्याख्यानविवरणे प्रपञ्चयिष्यते । चकारादित्यादि । वेदास्तु मर्यादानिरूपकाः । ब्रह्मानन्दनिमग्नानां ततः पृथक्करणं न तत्सम्मतम् । अतः श्रीकृष्णाज्ञारूपपुष्टिश्रुतिसम्मत्या पुष्टिलीलापरिगृहीता नास्मद्विषयाः, किन्तु मर्यादामार्गीया एवेति स्वस्माद्भिन्नाः कृताः । तदेतदुक्तं वेदैरपि भगवदाज्ञयोद्धृता इति । एतस्यावश्यकत्वायाहुरन्यथेति । मर्यादामार्गीयत्वे पुष्ट्यप्रवेशः स्यादित्यर्थः । यतस्तदार्द्रनयना इति । 'नन्दादयस्तु तं दृष्ट्वा परमानन्दनिर्वृता' इत्यनुपदमेव वक्ष्यमाणत्वात्तदानन्दाश्रुभिस्तथेत्यर्थः । अथवा । अग्रिमपद्यैनैतेषां प्रमाणतो ज्ञानकरणार्थं लोकं प्रदर्शितवानिति वक्ष्यमाणत्वाल्लोकदर्शनेन माहात्म्यज्ञानपूर्वकः स्नेह आर्द्रनयनत्वोक्त्या सूच्यते ।

नन्वेवं व्याकृतौ को हेतुः? यथाश्रुतव्याकृतेरपि साधीयसीत्वेन प्रतीयमानत्वात् । तथाहि । अतिगभीरत्वेन शुद्धत्वेन तापहारकत्वेन ब्रह्मानन्द एव ब्रह्मह्रदपदेनोच्यते । यथा ह्रदे मग्नो बाह्यमर्थं न जानाति, तथा तदानन्दभरेण देहाद्यनुस-

न्धानरहिता जाता इति ज्ञापनाय मज्जनोक्तिः । ततः कृष्णेन पूर्णानन्देन ततो गणितानन्दात्पृथक्कृताः देहाद्यनुसन्धानयुताः कृताः । तदा तल्लोक ददृशुः । अत एव ब्रह्मण इति व्यस्तं पदमुक्तम् । दर्शनक्रियायाः पूर्वमसम्भवात् । एव साधारणानां व्यवस्थामुक्त्वा श्रीनन्दादीनां विशेषत आह **नन्दादय** इति । किञ्च, 'दर्शयामासे'ति पूर्वं भगवत्कार्यमुक्त्वैतत्कर्तृकदर्शन 'ददृशु'रित्यनेनोक्तम् । एव सति तावत्पर्यन्तमेकवाक्यतैवोचिता, न तु वाक्यभेद इति चेत् । स्यादेतदेव यदि दर्शयामासेत्युक्त्वा विषयस्वरूप चोक्त्वानुपदमेव ददृशुरित्युक्तं स्यात् । उच्यते च ब्रह्महृदप्रापण तत्र मज्जनं तत उद्धृतिश्चेति क्रियान्तरसमुदायः । तत्रापि तुशब्देन पूर्वार्थव्यवच्छेदपूर्वकम् । त्वदुक्तरीत्या तु दर्शनात्पूर्वमेव तदानन्दे मज्जनमुक्तं भवति, तच्च नोपपद्यते, हेत्वभावात् । किञ्च, दर्शयामासेत्यनेनैवैतद्दर्शनस्य प्राप्तेस्त्वदुक्तरीत्या पुनस्तस्यैव दर्शनं ददृशुरित्यनेन न वदेत् । तस्मादाचार्योक्त एव ग्रन्थार्थ इति ज्ञेयम् । **पञ्चविंशत्यध्यायविवरणं समाप्तम्** ॥

## इति साधनप्रकरणम् ।

---

## फलप्रकरणम् ।

**षड्विंशाध्याये प्रकरणार्थोक्तौ । ब्रह्मानन्दात् समुद्धृत्येति** । ननु सर्वसमर्थत्वेन ब्रह्मानन्दवत्स्वगृहस्थिताभ्य एव स्वामिनीभ्यो भजनानन्द कुतो नादात्, लोकवेदत्याजनपूर्वक विवक्षितरीत्या कुतो दत्तवानित्यत आहुर्ब्र**ह्मानन्दादि**ति । तथैवैतद्दाने एतस्यापि ब्रह्मानन्दमध्यपातित्वेन तत उद्धृतेर्वैयर्थ्यं स्यात्, भजनानन्दस्वरूप चैतादृशमेवेत्येवंरूपानन्ददाने तददत्तमेव च स्यादिति भाव. । ननु स्त्रीभ्य एवैतद्दाने को हेतुः । तत्रापि पूर्वमन्यविवाहितासु । कुमारीष्वतथात्वेपि भगवता सम निवाहाभावात्तन्न्याय एव । अत एव वरदानानन्तरमपि 'लब्धकामा कुमारिका' इत्येवोक्तमित्याशङ्क्य तत्र हेतुमाहुः **लौकिकस्त्रीष्व**िति । भजनानन्दो हि स्वरूपात्मकः । तच्च 'रसो वै स' इत्यादिश्रुतिभी रसरूपम् । स च यादृक्स्वशास्त्रसिद्धस्तादृगेव । तत्र च स्वाविवाहितायामेव मुख्यो रस इति निरूपितम् । अतो लोकसम्बन्धिन्यो लौकिक्यो भगवदतिरिक्तलोके विवाहलक्षणसम्बन्धवत्य इति यावत् । एतादृशीषु सम्यक् सिद्धो भवति । तत एतत्कथाश्रवणेन तद्भावोदये पुरुषेपि स रसो भवेत्, नान्यथेति स्त्रीष्वेव तद्दानमित्यर्थः । **सिद्ध** इतिपदेनैतद्रसस्वरूपसिद्धिश्चेत्पूर्वं स्यात्तदान्यत्रापि तत्प्राप्ति. स्यात् । सा चैतास्वेव सम्भवतीति तथेति ज्ञाप्यते ।

किञ्च । लक्ष्मीतुल्यतायां हि भगवद्रमणमिति मर्यादा । सा च ब्रह्मानन्दरूपा । तथा च पूर्वाध्याये ब्रह्मभावोक्त्या तद्रूपत्वमुक्त जातमित्युक्तमर्यादापि सपन्नेतीतोप्यत्र रमणमित्याहुः **स्वानन्दानुभवार्थ**मिति । यद्यपि स्वामिनीष्वेतावता न कोपि विशेष., तथा

१. आनन्दादान इति पाठ ।

'प्यधिकं तत्रानुप्रविष्टं नतु तद्धानि'रिति न्यायोत्रापिशब्देन ज्ञाप्यते । तथा च स्वपदस्य स्वामिनीवाचकस्यानुभवपदेन समं सम्बन्धो ज्ञेयः । आनन्दपदं भजनानन्दपरम् । यद्वा । बलदेवे स्वधर्मान्निरूपयता भगवता 'गोप्योन्तरेण भुजयोरपि यत्स्पृहा श्री'रितिवाक्ये श्रियोपि स्पृहानिरूपणेन तस्या अपि दुर्लभो यो रसस्तं प्राप्य गोप्यो धन्या इति व्रजस्त्रीष्वेव स्वानन्दानुभवयोग्यता निरूपिता, नान्येष्वन्यासु वेत्यर्थः । तथा च तत्रैवैतदधिकारवत्त्वात्तथेतिभावः । यद्वा । 'हेमन्ते प्रथमे मासी'त्यत्र तेषां प्रसादरूपा शक्तिः स्त्री भवतीत्यत्र या शक्तिरुक्ता तत्प्रवेशो यत्र, तत्र प्रभुसम्बन्धयोग्यता, स चैतास्वेव सम्पन्न इति पूर्वं निरूपितमित्यर्थः । एवं सत्येतत्प्रवेशो यत्र पुरुषेपि भविष्यति, तत्रैवंभावो भविष्यतीत्याशयेनाहुः **तद्द्वारेति** । तासामनुग्रहद्वारेति वार्थः । यत्रापि तत्प्रवेशोनुग्रहो वा तत्रापि स्त्रीत्वमृते नैतद्रसप्राप्तिरित्याहुः **स्त्रिय एव हीति** । तं पुरुषरूपं भगवन्तमित्यर्थः । ततः स्त्रीकर्तृकपानानन्तरं पुमान् भगवांस्तासु प्राक्पीतरसाधिकरणभूतासु तमेव रसं पातुं शक्त इत्यर्थः । रसाधिक्ये पुंभावात्तथेति भावः । यतस्ता एव रसयोग्यास्तत्पाने शक्ताश्चातो न कदाचिद्रमणे व्यवधानं करोतीत्याहुः **अतो हि भगवानिति** । **आन्तरं त्विति** । सखीवृन्दे मिथो गुणानुवादे लीलासहितप्रियतमप्राकट्येनान्तर्ये भावविशेषा उत्पद्यन्ते, न ते संगमेपीत्यस्य परत्वम् । 'नामरूपे व्याकरवाणी'ति श्रुतेः प्रपञ्चस्य द्विरूपत्वेन लीलाप्रपञ्चस्यापि तथात्वाद्गुणगानलक्षणनामात्मकभगवत्स्वरूपस्य परमानन्दरूपभावात्मकरमणलक्षणा लीला प्रिये दोषारोपादिदोषरहिताग्रे निरूप्यत इत्याहुः **ततः शब्दात्मिकेति** । सप्तमाध्यायव्यवस्थैषा । शब्दात्मिकाया अपि लीलायाः प्रवृत्तिनिवृत्तिभेदेन द्विरूपत्वेनोत्तरा सप्तमाध्याये निरूपिता । पूर्वस्याः सदोषत्वादभ्रापि तत्पूर्वाध्याये वेदात्मकवेणुरूपत्वेन बलदेवस्य तत्साहित्येन कृतलीलायां शंखचूडोक्त्या सदोषत्वं तद्वधोक्त्याऽत्र सापि निर्दिष्टेति ज्ञाप्यत इत्यर्थः । अत एवाध्यायद्वयेन निरूपणमिति भावः ।

यतो रूपं पञ्चात्मकमतस्तद्दानं पञ्चधातस्तन्निरूपणमपि तावद्भिरध्यायैः कृतमित्याहुः **तत इति** । पञ्चात्मके रूपे येनांशेन या लीला कृता तां तां लीलां क्रमेणाहुः **आत्मनेति** सार्धेन । 'यथेन्द्रियादिरूपत्वं शुद्धस्य ब्रह्मणस्तथा । आत्मत्वादिस्वरूपत्वं मन्तव्यं श्रुतिवाक्यतः । यथेन्द्रियादिसङ्घात आत्मनो मुख्यता तथा । प्रकृते स्वामिनीभावप्राधान्यं तत आदिमे । स एवोक्तः प्रभुर्यस्माद्रसरूपः श्रुतेर्मतः । आत्माधीनं यथा कार्यं सर्वमेवमिहापि हि । भावाधीनमतः प्रोक्तमात्मनेत्यादि सुष्ठु हि । अन्याप्राधान्यतः पूर्वं केवलेनेति तत्तथा । तत्तत्प्राधान्यतस्तत्तल्लीलेत्यग्रे तयोदितम् । मनःप्रभृतिसर्वस्वं तासु नास्ति हरेः परम् । इति ज्ञापितमेतेन विप्रयोगदशासु वै' । यद्वा । आत्मना प्रथमेत्यादिनोक्तं पञ्चविधत्वं प्रत्यध्यायोक्तलीलायामपि ज्ञेयम् । तथाहि । प्रियाभ्यः फलं दातुं तथा रूपप्राकट्यं कृत्वा स्थित इति भगवत्पदेनात्मना लीलोक्ता । 'मनश्चक्रे' 'कृष्णगृहीतमानसा' इत्यादिनाऽन्योन्यं चित्तव्यति-

पङ्क्तो निरूपित इति मनसा । ततः 'स्वागतं व' इत्यादिकथनाद्वचसा । तादृग्वचनश्रवणेपि प्राणानां स्थितिस्तु प्राणरूपेण भगवानेव वाग्द्वारा प्रविष्ट इति प्राणैः सा । अत एव मूले 'प्रतिभाषमाण'मित्युक्तम् । चलं हि प्राणानां धर्मः, एते चालौकिका इति भगवद्वशीकरणलक्षणं चलं संपन्नमिति स्वामिनीवाग्रूपत्वं प्राणरूपत्वं चेति तथा । तत इन्द्रियशरीरयोः सेति स्पष्टम् । तिरोधानमपि कायिकमिति तथेति प्रथमाध्यायस्थितिः । तिरोधानदशायामेतासामात्मा भगवत्स्येव प्रविष्ट इति स एवात्मत्वेनैतासु स्थितः कार्यं कृतवानित्यात्मना सा । एवमेव मनःप्रभृतीन्द्रियान्तं ज्ञेयम् । 'नात्मागाराणि सस्मरु'रिति वाक्याद्देहस्मृतिरहितानां पुनः पुलिनागमनं स्वतो न सम्भवतीति शारीरी सा । तृतीयेध्याये व्रजोत्कर्षहेतुत्वं दर्शनाभावेन वधहेतुत्वं रक्षकत्वमलौकिकत्वे सति प्रार्थनया प्राकट्यं च स्वरूपमात्रस्यैवेत्यात्मना या लीला सा चतुर्भिरुक्ता । ततोग्रे निकटागमनद्विविधरमणमुख्यरसदानानि प्रार्थितानि, तानि चोद्दीप्तभावपूर्वकाणि । भावाश्च मनोनिष्ठा इति तल्लीला चतुर्भिरुक्ता । तत एकेन प्राणस्थितिहेतुत्वेन कथास्वरूपं निरूपितम् । तत्र वाक्प्राणरूपत्वं स्पष्टम् । ततोग्रे प्रहसितेक्षणादिकं चलनं चेन्द्रियकार्यमिति तल्लीलोक्ता । ज्ञानकर्मभेदेनेन्द्रियं द्विविधमिति द्वाभ्यामेवोक्ता । ततो दिनान्ते स्वयमागत्याननं प्रदर्शयतीति शारीरी सा । एतदग्रे शारीरीत्वं स्पष्टम् । अधरामृतदानस्य रतान्तःपातित्वेन तदपि तथा । अटव्यटनं स्पष्टम् । दर्शनेन्तरायस्य दुःखदत्वे हेतुः स्वरूपमेवेति सापि तथा । अग्रे त्यागोपि दैहिक एवेति तथा । अग्रे चाननोरसोर्देहमध्यपातित्वेन सापि लीला तथा । ततोग्रे स्वरूपाभिव्यक्तिप्रार्थनमिति तथा । अग्रे चरणाम्बुजरुहं देह इति स्पष्टम् । स्वामिनीनां हि बहिःप्राकट्यमेव भगवतोभीष्टम्, तदैवेश्वरवादोन्यदा शून्यवाद इति ज्ञापनायैश्वर्यसमानसंख्यकैः श्लोकैः दैहिकी सा निरूपिता । तुरीयेध्याये प्रियप्राकट्येन पूर्वदशाखिलापि विस्मृतेति ज्ञापनायोक्तक्रमातिक्रम उच्यते । दैन्यभावबहिःप्रकटनरूपाभ्यां साधनफलरूपाभ्यामात्मना सा । ततः सर्वासामुत्थानं भगवन्मनसैवेति सा तथा । तत इन्द्रियैरिति स्पष्टम् । ततोग्रिमलीलायोग्यस्थले गतिः, तत्रासन उपवेशनादिकं शारीरम् । ततो वाग्रूपत्वं भगवता चातिरोधानकथनाद्वाचः प्राणरूपत्वं चेति । पञ्चमेध्याये प्रतिबन्धकनिवर्तनेन स्वाङ्गैः पोषणेन च पूर्ववद्भावसंपन्नाः प्रियाः कृता इत्यात्मना सा । क्रीडाया मानसरसोद्गमहेतुत्वेन तदारम्भस्तथा । शोभोभयोरपि क्रीडासामयिकीति सापि मानस्येव । ततोग्रे भगवत्साम्येन गानं वाक्प्राणैः सा । ततः स्कन्धग्रहणाघ्राणरसास्वादनादि हस्ताब्जधारणान्तेन्द्रियैः सा । ततोग्रे शारीरी । अथवा । 'शास्त्राणां विषयस्तावद्यावन्मन्दरसा नराः । रतिचक्रे प्रवृत्ते तु नैव शास्त्रं न च क्रम' इतिवाक्यादत्रोभयोरुत्कटभावव-

३ति पाठः । २. गमनाद्विविधेति पाठः ।

स्वेन सर्वत्र सर्वा लीलात्रोच्यत इति नायं क्रमो विवक्षितः । एतच्च यथा तथा स्वयमेव भावनीयम् ।

**रूपं प्रतिष्ठितमिति** । हरिप्रियास्विति शेषः । पूर्णस्वरूपानन्दो दत्तोभवदित्यर्थः । आद्येध्याये प्रभुरुक्तरूपात्मना लीलां कृतवानिति भक्तानामप्यात्मन्येव स्वानन्दं पूरितवानित्याहुः **जीवानानन्दयदिति** । आत्मन इत्यर्थः । अत एव प्रभुणा तादृग्रसभावः पूर्णोत्र कृतो येन प्रभुवचनेभ्योपि निरपेक्षा जाताः । ततः क्रमेणातिशयितभावस्तथा कृतो येन स्वरूपादपि निरपेक्षा जाताः, यतो मानोभूत् । तथा च भगवद्भावस्य नित्यत्वादयं भावः स्थायिभाववत्सदा स्वामिनीष्वस्तीति ज्ञेयम् । यतोस्मिन् रसे नायिकाप्राधान्यमेव निर्वहति । अग्रे यदार्त्यादेः कथनं तदेतस्यैव भावस्यावस्थाविशेषसम्बन्धिव्यभिचारिभावानामेव । अत एवाग्रे 'ईषत्कुपिता' इति वक्ष्यते । द्वितीयतृतीयादिलीलाकरणभूतमनोवाक्प्राणादिषु रसपूरणं च तथैव भवेदिति तथेति भावः । 'यमेवैष वृणुत' इति श्रुतेरेतावत्स्वतो भगवता कृतम्, न तु साधनबलेनैतास्वित्याहुः **स्वयमिति** । तर्हि नादेनाकारणं गमनबोधनादिकं चानुपपन्नमित्याशंक्य, तत्रोपपत्तिं वदन्तो भगवान् लीलां कुर्वन् शास्त्रमर्यादामपि प्रदर्शयतीत्याशयेनाहुः **ते चेत्समर्पितात्मान** इति सार्धेन । सर्वात्मभाववन्तश्चेद्भक्ता भवन्ति, तदैवायं रसः प्राप्यो, नान्यथेत्यर्थः । एतेनैतास्वेवैवं रमणं कुतो नान्यास्विति शंकापास्ता । सोपि भगवत्कृत एव भवति, नान्यथेति ज्ञापनाय तदुपायरूपरिरंसाचन्द्रोदयगाननिषेधवचनान्युक्तानीत्याहुः **तत्रोपायश्च रूप्यत** इति । तत्र समर्पितात्मत्व इत्यर्थः । अन्तर्गृहगतकथयैतद्भावरहितानां नैतत्प्राप्तिरित्यत्र निदर्शनमप्युक्तमिति चकारार्थः । मानतिरोधानाभ्यामन्यापि सा मर्यादा ज्ञाप्यत इत्याहुः **आत्मेति** । लडर्थे लुङ्छान्दसः । रसमर्यादामग्रे स्वयमेव वदिष्यन्त्यन्त्यश्लोकद्वये । अन्तःप्रपत्त्यभावे बाह्यतस्तिरोधत्ते । तत्र हेतुर**न्तःकरणसम्बन्धीति** । यथा पतिपुत्रादिः शरीरसम्बन्धी, तथा हरिः सर्वभावप्रपत्त्येकलभ्य इति, सा चान्तःकरणधर्म इति तथा । तथा च हेत्वभावे कार्याभावो युक्त इति भावः । तिरोधानमपि मानजदुःखहरणार्थमेवेत्याहुः **हरिश्च स** इति । अत्र हरिपदस्यायं भावः । 'एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासी'दिति वाक्याद्यथान्यैररक्षणे जाते स्वयमाविर्भूय रक्षितवान्, एवमन्वेषणादिसाधनानामसाधकत्वेतिदैन्ये सति तन्निवारणाय स्वयमाविर्भूय सर्वं कृतवानिति । अथवा । अन्तःकरणसम्बन्धी सन् तत्र स्थितः सन् बाह्यतस्तिरोधत्त इत्यर्थः । यद्वा । मानस्यायं हि सहजो धर्मो यन्नायकतिरस्कारोऽवचनानीक्षणादिभिः, प्रकृते च तत्कार्यं स्वयमेव प्रभुः कृतवान् । न केवलमधुनैवम्, किन्तु सार्वदिकीयं व्यवस्थेत्याहुः **सोऽन्तःकरणेति** । सः पूर्वोक्तरसभावात्मक एव प्रभुः स मानात्मकः सन्नन्तःकरणसम्बन्धी चेत्तदा बहिस्तथेत्यर्थः । यद्वा । कायिकचेष्टया

मानापनोदनं कुतो न कृतवानित्याशंक्य तत्र हेतुमाहुः स इति । अन्तर्ज्ञानादिकार्यकरण येनेत्यन्त करण आत्मा तत्सम्बन्धी यतोऽतस्तथेत्यर्थः । आवेध्याय आत्मनैवैतदात्मनि स्वानन्द पूरितवानित्यन्तरेव च सोस्तीत्यन्तरेव प्रविश्य तद्धर्मापनोदन कृतवानित्युच्यते। यदा कायिकमानन्ददान करिष्यति, तदा बहिरेव तथा करिष्यतीति भावः। अत एव गीत-गोविन्दादिषु तथैव गीयते । हरिरिति पूर्ववत् ।

आद्यश्लोके **सर्वास्वेव रात्रिष्वित्यादि**। ननु तासां रात्रीणां नित्यत्वाद् दिवापि स-त्त्वेन तेष्वप्येतद्रात्रिप्राकट्य कृत्वा रमते, उत लौकिकीषु रात्रिष्वेव तथा कृत्वा तथेति शङ्कानिरासायाहुः **सर्वास्वेवेत्यादि** । यावतीषु ता आरोपितवा-स्तावतीषु सर्वासु रात्रिष्वेव लौकिकीष्वित्यर्थः । अन्य 'शैव शशाङ्कांशुविराजिता' इति श्लो-केन लौकिकीनां तासामतिदेशो न सङ्गच्छेत । दिवापि तथोक्तौ दोहनपयोधिश्रयणसयावसि-द्ध्यादिक गोपानां दिवा गोचारणादिपराणमेतासु स्वपार्श्वस्थत्वेन माननं च न सङ्गच्छत इति भाव. । **पूर्णत्वादिति**। रसशास्त्रीयाभिः सर्वाभि. कलाभि. पूर्णत्वादित्यर्थः । सकलकलापूर्ण-भगवन्मन.सम्बन्धिचन्द्रस्यापि सदा तथात्वात्तासु तत्प्राकट्यकरणेन तथात्वकरणमित्याशये-नाहुः **पूर्णिमेत्यादि**। अन्यदा सदोपस्य जलादेर्दोषनिवर्तकत्वं कमलादिलक्षणगुणाधायकत्व च शरदो लोके दृश्यत इति तस्यामसाधारणो धर्मोस्तीति ज्ञायते। इहापि रसानुपयोगिवस्तु-निरासपूर्वक भगवद्भावपोषिकाऽलौकिकी शरद्भविष्यतीति तामेव कृतवानित्याहुः **ऋतुम-पीति** । पुसा सदोषभावस्त्रीणामप्यत्र न प्रवेश इत्यपि ज्ञापयितु वसन्तादीना प्राधृष्य-करणमिति हृदयम् । ननु रात्रीणां नित्यत्वेन तद्धर्माणामपि नित्यत्वात् तासां कालात्मकत्वेन-स्ववश्यंभावाच्च तत्करणोक्तिर्विवरणे कथमुपपद्यते । न च मनस इवेति वाच्यम् । तथाना-श्रुतेरिति चेत् । इत्थम् । अत्र हि वीक्षणस्य तथा मन.करणे हेतुत्वमुच्यते । तथा च सर्व-विषयकापरोक्षनित्यज्ञानवतो नित्यरात्रिदर्शनस्यापि तथात्वेन तत्कार्यस्यापि तथात्वापत्तौ तत्समाधानाय वीक्षणे पूर्वस्माद्विशेषो वाच्यः । स चात्र विषयरूप एव वक्तु युक्त । स च विशेषणात्र एव । पूर्वं तस्याविर्भावनादधुनैव तथा करणाद्रसोद्दीपिका सामग्री प्रभुरेव कृतवानिति सुष्ठूक्तमाचार्यैः कृत्वेति । यद्यपि विशेषणस्यापि नित्यत्वेनोक्तदूषणानुद्धा-रस्तथापि भक्तानामपि दर्शनयोग्यता तत्र सम्पादितेति तथा। नायकभावेनेक्षणमेव विशेष इति ज्ञेयम् । अत एवोपसर्गो वीति । वस्तुतस्तु तत्तत्क्षणसम्बन्धिनी लीला नित्यैवोच्यत इति नानुपपत्ति काचित् । **यद्यपीत्यादिनाऽपिशब्दार्थ उक्तः** । **तथापि मर्यादेति** । रसमर्यादेत्यर्थ । **एवं कार्ये योगमायाया इति** । भजनानन्ददानलक्षणे कार्य इत्यर्थः । **अन्यत्र स्थितं प्रमाणम्** । वेदात्मान सङ्कर्षण देवक्या स्थितं रोहिण्या

१० २९ १.

१ सर्वथैति पाठ । २ प्रकटितवानिति पाठ ।

योजितवती, स्वयमाविर्भूय मथुरायां स्थितमानन्दरूपं प्रभुं गोकुले, तथात्रापि पूर्वं गोपानां गृहेषु स्थिता ऋचोधुना भगवति योजयति, भगवति स्थितमानन्दं च तास्वित्यर्थः ।

अत्र कश्चिदाह । आनन्दस्य सुखरूपत्वादमूर्तस्यान्यत्र गमनासम्भवात्प्रियसङ्गनिमित्तकः स्वामिनीषु सुखविशेष उत्पन्न इत्येव वक्तुं युक्तम्, अतो योगमायाश्रयणनिमित्तकथनमनुपपन्नमिति । स वक्तव्यः । 'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त' इत्यादिश्रुतिभ्य'आनन्दमयोभ्यासा'दित्यादिन्यायेभ्यश्च धर्मिग्राहकप्रमाणभूतेभ्य आनन्दमयत्वं भगवत्स्वरूपे मन्तव्यम्, अनिच्छतापि त्वया । तथैव चिद्रूपस्य धर्मरूपभगशब्दार्थज्ञानरूपत्वव'त्प्रकाशाश्रयवद्वा तेजस्त्वा'दिति न्यायाद्धर्मरूपतापि । तथा च 'तदेजती'ति श्रुतेस्तस्य गतिरूपत्वमप्यङ्गीकार्यम् । अत एव व्यापकत्वेपि गतिलीलोपपद्यते, दामोदरलीलेव । वस्तुतस्तु स्वरूपमर्यादामप्यतिक्रम्य भक्तार्थे लीलां करोतीति नानुपपत्तिः काचित् । अत एव 'रसं ह्येवायं लब्ध्वानन्दी भवती'ति श्रुतिः । सर्वात्मभावलक्षणः स्थायिभावो रसस्तमेव लब्ध्वानन्दवान् भवति । तादृशे प्रभुः स्वरूपानन्दं ददातीति तथा लाभकथनेन भगवद्दत्त एव प्राप्यते, नान्यथेति सूच्यते । एवकारः सर्वत्रानुषज्यते । तथाहि । रसमेव लब्ध्वा तथा । तं लब्ध्वा तथा भवत्येव । तथा भूत्वा आनन्द्येव भवति, न तु लौकिकदुःख्यपीति च । अतः **प्रमाणातिरिक्तमार्ग** इति । प्रमाणमार्गातिरिक्तो मार्ग इत्यर्थः । यतोन्यत्र स्थितं प्रमाणमन्यत्रापि योजयत्यतोन्यभजनरहितं विवाहितपतिभजनं विदधच्छास्त्रं तत्त्यागपूर्वकं भगवत्सेवामेव विधत्त इत्यर्थस्तु स्वामिनीनां तथा भजनेन तेन च फलसिद्ध्या 'या मामज'न्निति वाक्येन भगवता प्रत्युपकृतित्वेन कथनात्फलरूपेण चाधुना ज्ञाप्यते । तस्य मार्गत्वं च । अन्यथोन्मार्गत्वमेव भवेत् । अस्त्वेवमेतदित्यादिना प्रतिपादितं च ताभिः । ईश्वरवाक्यस्याखिलप्रमाणाधिकबलवत्त्वेपि स्वामिनीवाक्यैर्दुर्बलत्वमपि प्रमाणातिरिक्तो मार्ग इति ज्ञेयम् । यद्वा । प्रभुप्राप्त्यर्थं गुरूपसत्तिस्तदुक्तकरणं च भक्तानां प्रमाणमार्गः । प्रकृते च स्वामिनीप्राप्त्यर्थं योगमायाश्रयणादिकं प्रभुः करोति करिष्यत्यपीति प्रमाणातिरिक्तो मार्गः, यतोन्यत्र प्रतिष्ठितमानन्दमन्यत्र योजयत्यत एतद्भावेन भजनरूपोत्युत्कटस्नेहजविरहभावेन सर्वत्यागपूर्वकं स्वदेहादिविस्मृतिपूर्वकं भगवदन्वेषणपरत्वलक्षणश्च भक्तिमार्ग इत्यर्थः । इदं च द्वितीयतृतीयाध्यायादिषु स्पष्टम् । एवं सत्यस्मिन्मार्गे स्वामिन्य एव गुरव इति ज्ञापितं भवति । स्वामिनीनां विप्रयोगभावे सौभाग्यमदादिर्हेतुः । तत्र च भगवद्धर्मप्रवेश एव हेतुः । अन्यथा पादरजःप्रपन्नानामेतासां मदो मानश्च न स्यातामिति भावः । नन्वेवं 'शशांकांशुविराजिता निशा' इति वाक्याल्लौकिकीष्वपि रात्रिषु रमणमिति ज्ञायते । एवं सत्यलौकिकीतत्परिग्रहे गौरवं विशेषाभावश्चेत्याशंक्य लौकिकीनामपि तासां स्वरूपमाहुः **याश्च रात्रय** इति । **निर्मिता** इतिपदात्सर्गादावेवैतदर्थमेव भगवता सृष्टाः काश्चन रात्रयो

भगवत्येव स्थिता एतावत्पर्यन्तं, लीलासमये लौकिकीष्वेव रात्रिषु स्थापयित्वा तां कृतवानिति ज्ञाप्यते । लौकिकेन्दुप्रकाश्यत्वेन गीतगोविन्दाद्युक्तप्रकारेण लौकिकरीत्यैव रमणेन चैतासां लौकिकीत्वमुच्यते । तासु विवक्षितेन्दुप्रकाश्यत्वेन नायकमानोक्त्या नायिकाप्रणिपातोक्त्यैतन्माननायकान्तर्धाननायिकादैन्योक्त्यैतद्धेतुकतदाविर्भावे तदधीनत्वोक्त्या प्रश्नोत्तरे परोक्षभजनोक्तौ पूर्वमननुभवेपि प्रत्यक्षवावेपि तदनुभवतद्वाग्विश्वासोक्त्या भगवद्विचारितानुपूर्वीकस्वरजात्युन्नयनादिमिश्चालौकिकरीत्यैवालौकिकरसदानमिति ज्ञाप्यते । उक्तार्थेषु लौकिकवैलक्षण्यं स्पष्टम् । एवं सति स्वरूपत एव वालौकिकत्वमितिविवेकः । एवं कथन उपपत्तिमाहुः **अन्यथेति** । साधारणीनां रात्रीणां तल्लीलाश्रयत्वे तासां सर्वत्रैव तुल्यत्वात् सर्वेषु देशेषु सर्वेषामेतदानन्दआकट्यं स्यादित्यर्थः । अन्यथेत्यस्यैव विवरणं **साधारणीत्यादि** । भूम्येकत्वेपि लीलाश्रयभूम्यधिष्ठानत्वेनास्या नानुपपत्तिरिति भावः। ननु सर्वज्ञस्य रात्रिदर्शनमपि सार्वदिकमित्यधुना को विशेष इति चेत्तत्राहुः **शरदि क्लावित्यादि** । विशिष्टदर्शनं विशेष इत्यर्थः । ननु विशेषणस्यापि नित्यत्वान्न तथेति चेत् । सत्यम् । यादृशी लीलोच्यते तादृश्या एव नित्यत्वादधुनैवोक्तविशेषणवैशिष्ट्यमित्युक्तेपि न दोषः । एतद्यथा तथा विद्वन्मण्डने निरूपितमस्माभिः । ईश्वरस्यान्याश्रयणं हि लौकिकी रीतिः, तदुक्त्यात्र तद्रीत्यापि रमणं सूच्यते । एवं सति मध्यस्थत्वेन तदा तस्या विशेषत उपयोग इति तदाश्रयणमुक्तमिति ज्ञेयम् । किञ्च । स्वाशक्ये ह्यर्थेऽन्याश्रयणं क्रियते । तथा च सर्वसमर्थस्यापि स्वानन्ददानसमये ईश्वरत्वादिधर्माज्ञानं सम्पादयितुं रसपरवशत्वेन न कर्तुं शक्यं, गोपानां चैतल्लीलाविषयकाज्ञानं तथा । आगमनसमये निषेधोक्त्या तज्ज्ञानस्य कथनात् अत एतदादिकार्यसिद्ध्यर्थं योगमायाश्रयणमलौकिकरीत्या रमणेपीति ज्ञेयम् । अत एव 'मोहितास्तस्य मायया' 'मन्यमानाः स्वपार्श्वस्था'निति वक्ष्यति । अत एव रसोपयोगि यद्यत्कार्यं तत्तदा तदा सम्पादयितुं शक्येयमिति स्वनिकट एव मूर्तिमत्यास्तस्याः स्थापनमिति ज्ञापनायोपेत्युपसर्गः । एतदेवोक्तं **समीप एवाश्रित्येत्यनेन** ।

**तदोडुराज** इत्यस्याभासो **नूतने तस्मिन्नित्यारभ्य ससृज** इत्यन्तः । अत्रेदं प्रतिभाति । आश्रितत्वोक्त्यात्रेश्वरत्वमर्यादामुल्लंघ्य भगवानधुना प्रवृत्त इति ज्ञायते। अन्यथा रसमर्यादोच्छिद्येत । एवं सति यदवधि सर्वविकाररहितेन नैवंविधं मनः प्रकटितमिति सपद्येतादृशस्य तस्य नूतनत्वम् । लौकिकीं रीतिमनुसृतवतस्तद्देवतापेक्षापि घटते । लोके देवताधिष्ठितस्यैव कार्यक्षमत्वात्, अन्यथा नियामकाभावेन सामर्थ्याभावेन चाल्पेनैव यथा पूर्वमेव भवेत्, नतु रसैकपरवशं सदा। अत एवात्तगजेन्द्रलील इति वक्ष्यति। करिणीस्पर्शमात्रेण परवशत्वं तत्र प्रसिद्धम्। युक्तं चैतद्विभावादिकं विना न रसपोष इति । 'विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्ति'रिति वात्स्यायनसूत्रात् । वस्तुतस्तु 'रसो

१०-२९-२.

१ तासामिति पाठः । २ तदन्त इति पाठः ।

वै स' इत्यादिश्रुतिभ्यो रसरूपत्वात्प्रभोस्स यादृशस्तच्छास्त्रसिद्धोऽस्ति तादृशो निरूप्यत इति नानुपपत्तिः काचित् । अत एवैवंभूतस्यैव नित्यत्वमपि । एतद्विद्वन्मण्डने द्रष्टव्यम् । तस्मात्सुप्रसूक्त**मनधिष्ठितं** चेत्यादि । ननु चन्द्रस्योदयकर्तृत्वं मूले प्रतीयत इति भगवतः सृष्टिकर्तृत्वोक्तिरत्र विरुद्धेति चेत् । न । अनवबोधात् । यदा मनश्चक्रे तदैव य उडुराजोर्थादुत्पादितस्स उदगादिति मूलार्थस्य विवक्षितत्वात् । अन्यथा तदेति न वदेत् । सोप्युदगादित्येव वदेत् । किञ्चाग्रिमश्लोकोक्तचन्द्रदर्शनान्यथानुपपत्त्यैव चन्द्रोदयप्राप्तेरेतच्छ्लोकवैयर्थ्यापातः । एवं सति चिकीर्षितलीलाया वेदलोकयोरप्रतीतत्वेनापूर्वत्वात्तत्सामग्र्यप्यपूर्वैव सर्वा सम्पादितेति ज्ञापनाय तदेत्युक्तिपूर्वकं तदुदयवर्णनमिति ज्ञायते । अत एव **भगवन्मनश्चन्द्रस्येत्यारभ्य कदाचिदपीत्यन्तो** ग्रन्थो युज्यते । अन्यथा मूले पूर्णत्वादिधर्माः कण्ठोक्ता नेत्याचार्या अपि न वदेयुः । अत एव पूर्वश्लोके मनसोपि करणमुक्तं चक्रे इति पदेन । क्रीडायां मनस एव मुख्यत्वात्तस्य नूतनतया करणोक्त्यैव सर्वस्या अपि सामग्र्यास्तथात्वं ज्ञातं भविष्यतीत्यभिप्रायेण । एवं सति तादृशं चन्द्रं च प्रभुः ससृज इति हेतोरग्रे तदुदयमाह शुक इत्यामासार्थो ज्ञेयः । **तथापि क्रमेणैवेति** । अन्यथा रजन्येपेति प्रभुर्न वदेदिति भावः । नन्वस्या रात्र्या नित्यत्वेनैकयैव चारितार्थ्ये यह्वीनां तासां परिग्रहः किमर्थ इति चेत् । अत्र वदामः । नायिकाविशेषेषु प्रतिपदादितिथिनियतकर्तव्यताकबन्धादिविशेषैरेव रसः प्रादुर्भवतीति वात्स्यायननयसिद्धत्वात्तदर्थमेवोक्तरूपाणां तासां परिग्रह इति । रात्रीणामलौकिकत्वेन प्राकृतनक्षत्रारक्षकत्वेप्येतद्रात्रिप्रकाश्योडूनां चाप्रसिद्धत्वेपि यदुडुपपदोपादानं तत्त्वेतद्रात्रिष्वेव प्रकाशमानत्वेन स्वामिनीनां मनांस्येवात्रोडुत्वेनाभिमतानीत्याहुः **सोऽपि चन्द्र इत्यादिना** । इन्दोर्नक्षत्रसजातीयत्वं 'नक्षत्राणामहं शशी'तिवाक्यात्सिद्धम् । एतन्मनस्सु तत्त्वोक्त्यैतचन्द्रसजातीयत्वं सूच्यते । तच्च भगवन्मनःसम्बन्धित्वम् । तत्त्वं चात्र भगवन्मनोंशत्वम् । स्वमनःप्रवृत्तिनिवृत्तितोपादिकार्यधर्माविर्भावितत्वं च । **प्राच्याः ककुभ इत्यत्र** । **प्रतिस्पर्धिन्यामिति** । प्रतीच्यां दिशीत्यर्थः । उत्तरसन्ध्यायामखिलद्विजोपास्यत्वेनेयमेव दिङ्मुख्येति मर्यादामार्गीयत्वं लक्ष्यते । रविश्च तथा । अतस्तेन तत्र रागसम्भवः । यत्रोक्तरूपेन्दुप्राकट्यं सा दिक्पुष्टिमार्गीयेति तस्या एतत्प्रतिस्पर्धिनीत्वम् । एतेन मर्यादामार्गे ताप एव, पुष्टिमार्गप्रवेशे तन्निवृत्तिरिति सूचितम् । प्रातः प्राच्या अपि तथाभूताया एवाधुनैवंभूतात्वकथनात् अधुना प्रभोरेवेन्द्रत्वेन तद्देवताकात्वेनाप्यस्यास्तस्याः सकाशादुत्कर्षः । पुष्टिमार्गोत्कर्षमेव प्रभुः करोति, नान्यत्रास्मादुत्कर्षं सहत इत्येतत्सर्वं हृदि कृत्वा तस्या मुखे न राग इत्याद्युक्तं प्रतिस्पर्धिनीत्वमप्युक्तमिति ज्ञेयम् । **स चर्षणीनामित्यत्र** । इदं ज्ञेयम् । चृष प्रजननैश्वर्ययोरिति पाठादयं धातुराविर्भावन ईशधात्वर्थे गमने च शक्तः । अथवेशस्य भाव ऐश्यं तत्र तथा । प्रकृते तु सर्वात्मभावैकलभ्यरसाधिकारिमात्रसृष्टावेव याः शक्तयोऽ

धिकृतास्ता भगवदाविर्भावं ज्ञात्वा तादृशीराविर्भाव्य फलसिद्धिं प्रतीक्ष्यन्त्यस्तत्पर्यन्तमन्य-भावेभ्यस्ता रक्षन्तीति चर्षणीशब्देनोच्यन्ते । यद्यपि शाब्दिकैरेश्यशब्दस्य गत्यर्थकत्वमेवोक्तम्, तथापि गत्योरित्यनुक्त्वा यदेश्ययोरित्युक्तं तत् सोप्यर्थोऽत्र ज्ञेय इति ज्ञापनायेत्यस्माभि-स्तथोक्तम् । गमनार्थत्वे तु यत्र ता आविर्भाविताास्तत्र गत्वा तत्फलसिद्ध्यनुकूलप्रयत्नवत्यो भवन्तीति तथा । तथा च स्वस्वामिनीषु भगवद्भोगयोग्यास्वपि तद्विलम्बं दृष्ट्वैतदार्तिं च चर्ष-णीनां परमस्नेहवशाच्छोकोजनि । एवं सत्ययमिन्दुः प्रियसंगाभावजदुःखं स्वामिनीनामपन-यन्न केवलानां तदपनयति, किन्तु चर्षणीसहितानामिति मूलार्थः सम्पद्यते । स्वामिनीदुःख-निमित्तकस्तासां शोक इत्येतद्दुःखनिवारणेनैव तासामपि स निवर्तत इत्यमुख्यत्वात्सहभाव-स्तासामुक्तः । एतदिन्दुस्वाभाव्यादेतदुदये संगमनिश्चयेन च तन्निवृत्तिः । इदमेवोक्तं **चर्ष-णीसहितानां जीवानां** वेत्यादिना । आद्यपक्षे तु यत्सम्बन्धिनामेव परमानन्दानुभवस्ताः शक्तयः स्वयं तदर्थिन्यो भगवद्भक्तेष्वेतदतिरिक्तेष्वेतावत्कालपर्यन्तं परिभ्रान्ताश्चर्षणीशब्देनो-च्यन्ते । मुक्तौ तदभावं ज्ञात्वा तादृशेभ्यः स्वयमेव निवृत्ता भवन्ति । भगवतैव तादृश्य एव ताः सृष्टा इति तेषु न प्रवेश इति ज्ञापनाय न लभन्त इत्युक्तम् । अत एवाग्रे स्वत एव निवृत्ता भवन्तीत्युक्तम्, न तु निवर्तिता इति । तथा चैतदुदये तच्छोकनिवृत्तिर्जातेति तथा । अस्मिन्पक्षे पुनश्चन्द्रपरामर्शस्य प्रयोजनाभावादेकस्मिन्वाक्ये वारद्वयं तत्कथना-सम्भवात्पूर्वमप्रसिद्धत्वेनास्येन्दोः प्रसिद्ध्यर्थकत्वमपि तच्छब्दस्य न वक्तुं शक्यमित्य-रुच्याग्रिमः पक्ष उक्त इति ज्ञेयम् ।

१०-२६-२. **दृष्ट्वा कुमुद्वन्तमित्यत्राभासे** । तस्य **शब्दयोर्नित्यं निरूपयन्निति** । वाचः पूर्वरूपं हि मनस्तच्च समानाधिकरणाया एव तस्यास्तथा । प्रकृते च गान एतच्चन्द्रदर्शनस्य हेतुत्वोक्त्यापि गानसमानाधिकरणमनोधिष्ठातृत्वं तत्र ज्ञाप्यत इति भावः । न चैवं वनेपि तत्त्वापत्तिरिति वाच्यम् । विशेषणस्यैव तत्र प्रयोजन-कत्वेनोक्तेः । **रमाननाभमित्यत्र लक्ष्म्या अयं भ्राता**त्यादि । भगवान् रमणेच्छायां तद्रसपूरणार्थं ब्रह्मानन्दं लक्ष्म्यात्मकनायिकारूपमाविर्भावितवान् । तस्यैव रमणस्थानत्वात् चन्द्रोपि तथैवायमाविर्भावित इत्यस्य तद्भ्रातृत्वमत एव समानाकारत्वमिति भावः । **नवकुङ्कुमारुणमित्यत्र** । नवपदस्य तात्पर्यमाहुः **विवाहसमय** इत्यादि । **कलमे** गानस्य हेतुमाहुः **यदि व्यक्तमित्यादि** । यद्यपि स्वरूपदिदृक्षा न तच्छ्रवणनिमित्ता, तथापि गीतस्यार्थः स्वरूपमेवेति, तच्चार्थसंयुक्तमेवेति गीतस्य व्यक्तत्वेऽर्थस्यापि तथात्वं स्यात् । तथा च 'तदनङ्गवर्धनमि'तिवाक्यात्स्वरूपरसानुभवेच्छाया एवोद्भूतत्वेन तदनु-भवेनैवागमनप्रतिबन्धः स्यादिति भावः । **वामदृशामित्यत्र** । **यासां पुनर्दृष्टिरि-**

१ प्रतीक्ष्यमाणा इति पाठः ।

त्यादि । पुष्टिमार्गानुसारिभजनपरत्वमेवोत्तमत्वं दृष्टेः । अन्यथा चार्वादिपदान्यपहाय वामपदं न वदेदिति भावः ।

**निशम्य गीतमित्यत्र** । **यद्यपीति** । उपक्रम एतत्सम्बन्धिरात्रिदर्शनस्यैव रिंसाहेतुत्वेनोक्तेरिति भावः । **तथापीति** । **तदनङ्गवर्धनमिति**वचनाद्भगवदीयोनङ्गो यत्रास्ति तं तत्र वर्धयत्येवेत्येतास्वपि स्थितः । स तेन तथा कृत इत्येता अप्यागता इत्यर्थः । अत एव वर्धकत्वमुक्तम्, न तु जनकत्वमिति भावः । एतदेवोक्तमाह्वानं **सदृशमित्यनेन** । पूर्वापेक्षयाधुनात्युत्कटो जात इत्याशयेन **नूतन उत्पन्नः काम** इत्युक्तम् ।

१०-२६-४.

**दुहन्त्य इत्यस्याभासः** । **प्रसङ्गादित्यादि** । अत्र पक्षद्वयं सम्भाव्यते । कुमारीणामेवाह्वानं मुख्यमित्येकः, अविशेषेण तथेत्यपरः । तत्राद्ये **प्रसङ्गादि**त्यादि । द्वितीये **तासामित्यादि** । एवमग्रेपि । गुणशब्दोत्र सर्वत्र भावपरो ज्ञेयः । भाववैलक्षण्यज्ञापनाय तथोक्तिः । **जातीत्यादि** । धर्मपदं त्रिष्वप्यनुषज्यते । दोहनाद्यपेक्षयाञ्जनस्यान्तरङ्गत्वादन्यस्मिन्मण्डने सत्यप्येतद्विना तेषां सौन्दर्याजनकत्वादसम्पूर्णस्याशोभाजनकत्वाच्च मुख्यत्वमिति तत्त्यागोऽशक्य इति तत्करणाद्दुर्लभाधिकार इत्युक्तम् । **ज्ञानमार्गशोधिका इति** तु शास्त्ररीत्या बुभुत्सूनां बोधायोक्तम् ।

१०-२६-५.

**काश्चित्कृष्णान्तिकमित्यत्र** । **तन्मध्येपीति** । अन्यथा पूर्ववाक्ये काश्चिदित्युक्तत्वाद्वस्त्रादिव्यत्यासस्य जवकृतस्य सर्वसाधारणत्वादग्रे **काश्चिदि**तिपदमसम्बद्धं स्यादिति भावः ।

१०-२६-७.

**अन्तर्गृहगता इत्यस्याभासे** । **यासां काल इत्यादि** । नन्वासां भक्त्या त्कालस्तथा कर्तुं न शक्नोतीति चेत् । अत्रेदमाकूतम् । 'उक्तं पुरस्ता'दित्यस्य द्वितीयव्याख्यानानन्तरं 'यासां साक्षा' दित्यादिनोक्तप्रयोजनार्थं प्रतिबन्धोवश्यं कार्यः । भगवांस्तु भक्तानां स्वप्राप्तिप्रतिबन्धं न साक्षात्करोतीति वस्तुस्थितिः । अतोधिकारी कालः प्रभुकार्यं कृतवानिति नानुपपत्तिः काचित् ।

१०-२६-९.

**उक्तं पुरस्तादित्यत्र** । उक्तं निर्गलितार्थमाहु**र्यथाशास्त्रमित्यादिना** । अन्यथा चैद्यस्यापि पक्षसमत्वेन नेदमुत्तरं स्यादिति भावः । एतेनाद्यश्लोकार्थ उक्तः । **भगवानित्यादिना**ग्रिमाणाम् । किञ्च । पूर्वं ज्ञानभक्त्योरपि हेतुत्वमङ्गीकृत्योक्तम्, अधुनात्वाविर्भावेनैव ते अन्यथा सिद्धे इति स्वरूपेणैव सर्वेषां **मुक्तिरित्याहुः ज्ञानभक्त्योरित्यादिना** ।

१०-२६-१२.

**भगवतो नृपेत्यत्र** । **सर्वैश्वर्यसम्पन्न** इत्यारभ्य **निरपेक्ष** इत्यन्तेन ग्रन्थेन भगशब्दार्थवत्त्वं विवृतं प्रकृतोपयोगित्वेनेति ज्ञेयम् ।

१०-२६-१४.

**कामं क्रोध**मित्यत्र । नन्ववतारसमये पूर्वोक्तभक्तनिमित्तं पृथगाविर्भावोपेक्षितोऽथवा तेनैव तत्फलसाधनमिति सन्देहे निर्णयमाहुः **एकस्ये**ति । उक्तस्थले तेनैव तत्फलसाधनं न पृथक्तदपेक्षेत्येकस्यैवाविर्भावस्योभयरूपत्वं भवति । एकत्र विनियुक्तस्यान्यत्र विनियोगो न न्यायसिद्ध इत्याशङ्कानिरासाय निर्णायकन्यायमाहुः **संयोगे**त्यादि । यथा होम एव नियुक्ता जुहूः पर्णमयीत्वगुणयोगात्पापश्लोकश्रवणाभावमपि साधयति, न त्वेतदर्थं पृथक्सा तन्मयी क्रियते। 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोती'ति श्रुत्या होमार्थाया एव तन्मय्यास्तस्या एतत्फलसाधकत्वोक्तेः, तथा प्रकृतेपि भूम्यादिक्लेशव्ययनिमित्तकाविर्भावस्यैव तत्तद्भक्तयोगे तत्तत्फलसाधकत्वमिति न पृथक्तदपेक्षेत्यर्थः । अत्रेदमपि ज्ञेयम् । पुष्टिमर्यादाभेदेन द्विविधानामपि भक्तानां फलसाधनं सर्वशक्तिप्राकट्यपूर्वकमवतीर्णेन पूर्णेनैकेनैव स्वरूपेणैव कर्तुं शक्यम् । तत्रापि केवलमर्यादामार्गस्थापनायाविर्भूतेन पुष्टिमार्गीयभक्तेष्टपूरणं न क्रियते । एवं केवलपुष्टिमार्गीयेणाप्याविर्भावेन । अत एव दण्डकारण्यस्थर्षीणामिष्टपूर्तिर्न कोसलेन्द्रेण कृता । श्रीमद्गोकुलचन्द्रेण च यज्ञपत्नीनाम्, पुष्टिलीलानधिकारात् । अग्रे मथुरादिषु प्रद्युम्नादिरूपेण लीलाकरणात्तत्तदनुरूपं फलदानमिति । **नित्यं हरावि**त्यत्र । **स हि सर्वदुःखहर्ते**ति । भावनाविषयस्वभावादेव न दुःखभानमित्यर्थः । **नित्यमित्यादिना** तन्मयत्वं विवृतम् । तथा स्फुरण उपपत्तिमाहुः **सर्वत्र भगवदावेशादि**ति । अतिविगाढभगवद्भावनायां देहेन्द्रियप्राणान्तःकरणजीवेष्वपि तदावेशात्तेषु तथा स्फूर्तौ तत्सम्बन्धिष्वपि तथैव भानमित्यर्थः । एतदेव **जीव** इत्यादिना विवृतम् । ननु प्रश्नोत्तरं त्वाद्याभ्यामेव सम्पन्नम्, अनेनापि श्लोकेन स एवार्थः पर्यवस्यतीत्येतत्कथनं व्यर्थमित्याशक्य तत्तात्पर्यमाहुः **तादृशी**मिति । एव बोधनार्थमित्यर्थः ।

१०-२६-१५.

**ता दृष्ट्वे**त्यत्र । **यास्त्वि**त्यादि । अन्तर्गृहगता अनाकारिता एव नाद श्रुत्वोद्युक्ता इति प्रतिबन्धोभूदिति शङ्कानिरासायाहुः याः पूर्वोक्तास्ता अप्याहूताः । तनोपपत्तिमाहुः **समागता** इति । अन्यथा तथा न स्यादिति भावः । गेहस्य देहसम्बन्धित्वात्तस्य नष्टत्वेनैतासां गृहाभावात्तत्र गमनं बाधितमिति न निवार्यन्ते । दोषनिवारणार्थं प्रतिबन्ध इत्युक्तम् । यावद्भिर्गुणैर्भगवद्रमणं भवति तावद्गुणसम्पन्ना अन्यत्र विवाहितो रसशास्त्रोक्तरसविशेषोपयोगिगुणवत्यश्च याः समागतास्ता अपि यद्यपि न निवारयितु योग्यास्तथापि स्थातुमशक्ताः सत्यः स्वतो नागताः किन्तु शब्दश्रवणे सति । तथा च तासांशो निवारणीय इति शब्देनैव निवारण कृतम्, न तु दृशा । तदनङ्गीकारेण शब्दोपाधिकमागमन चेत् स्यान्निवृत्तिरपि स्यादिति तदभावो ज्ञाप्यत इत्याहुर्याः **पुनरि**त्यादिना । एवं करणे हेतुमाहुरन्यशेषपतयेति । एतेन भक्तिमार्गमर्यादा ज्ञापितेति भाव. । **अपा**[illegible] इति । अन्तर्बहिर्विभागादो नागरीणां कदाचिद्भवेदपि, न त्वेतासाम् । व्रजसम्बन्धे-

१० २६-१७.

नान्तरधर्मावरणासम्भवात्तथा चागमनं सर्वांशेनैव, नत्वन्यत्रापि केनाप्यंशेन हृदयं स्थापयित्वेति भावः । एतासां निवर्तने यावत्स्वसामर्थ्यमुपयुज्यते तावत्पूर्णमत्र प्रकटीकृतवान्प्रभुरिति ज्ञापनाय भगवानित्यादीनि प्रभुविशेषणानीति ज्ञेयम् । तेन स्वामिनीभावस्य महाबलवत्त्वं ध्वन्यते । तेन भक्तिमार्गोत्कर्ष एव सिध्यति । भावस्य भगवद्रूपत्वात्तदुत्कर्ष एवैवमपि पर्यवस्यतीति हृदयमाचार्याणाम् । नन्वत्र मोहने विशेष उक्तोन्यथा मोहिता इत्युक्तत्वेन पौनरुक्त्यं स्यात् । तथा च पूर्वस्मादाधिक्यस्य विशेषपदार्थत्वात्पूर्वस्य च भगवद्विषयकस्यैव तस्योक्तत्वात्तद्गत एव विशेषो वक्तुं युक्तो, न तु गृहादिविषयकस्य, पूर्वमसत्त्वादित्यरुच्या पक्षान्तरमाहुः **अथवेति** । स्थूणानिखननन्यायेनेति भावः । न च भगवद्विषयकमोहाद्विशेषो वक्तुं शक्यः, असम्भवात्, तथा सति गच्छेयुश्चेत्याहुः **अन्यथेति** । ननु तच्छब्देन सर्वत्यागसर्वात्मभावाद्युक्तधर्मपरामर्शात्तस्य स्वत एव दृढत्वात्तथा सत्युभयविशेषणकथनप्रयोजनाभावाच्च नैतत्साधीय इति चेत् । सत्यम् । उक्तानुपपत्त्या प्रभुणा स्ववाक्यानां गमनार्थकत्वाबोधनाचाद्य एव पक्षे तात्पर्यमस्तीति यद्यपि ज्ञायते, तथापि स्वरूपस्य रसरूपत्वेन भावात्मकत्वं यदुच्यते, तत्तु तद्विरोधिवचनाविर्भावेनानुपपन्नमिति शंकानिरासाय तदविरोध्यर्थकत्वमप्युच्यते वाक्यानां तात्पर्यविषयत्वेन । एतदेवाहुरत्तोर्थत इत्यादिना । यतः स्थितावेव भगवत्तात्पर्यमतो हेतोरापाततः प्रतीयमानार्थप्रत्यायनानिवारयन्नपि फलतः स्थित्यर्थकानीत्यप्युच्यन्त इत्यर्थः ।

भगवद्वाक्यसंख्यातात्पर्यमाहुः **दशविधानामिति** । सगुणनिर्गुणभेदेन दशविधानां तथा, नत्वेतासामिति भावः । एतासां वस्तुतो निर्गुणत्वेपि लीलारूपत्वेन प्रसक्त्यभावेन तदभावोपि न वक्तुं शक्य इति तथा । तर्हि निषेधस्य क्वोपयोगः ।

१०-२६-१८.

क्षुब्धदध्नो नवनीतस्येव क्षोभकवाक्यैस्तथाभूताभ्यो हार्दप्रकटने प्रभुशुश्रूषापूर्तौ वाचनिक्या अपि प्रपत्तेः सिद्धौ लोके सर्वात्मभावमार्गप्राकट्ये चोत्कटभावोद्दीपने रसपोषादिषु चेति बुध्यस्व । एतासु नायिकाभेदेन भावभेदो बोधनीयः, ते च क्वचिदेकरूपाः, क्वचित्कदाचिन्मिश्राः, क्वचित्कदाचिदुत्तरेणोपमर्दिताः, केचित्क्वचिच्चिरं स्थिराः, केचित्किञ्चित्कालं, केचिदाशु नाशिन इत्येवंरूपत्वं सत्त्वादिगुणेष्वस्तीति तद्दृष्टान्तेन बोधयितुं तावद्भिः श्लोकैरेता निर्धार्यन्त इत्याशयेनाहुः **तमो रज इत्यादि** । तथा सत्युपचारेण भावा एव तमआदिशब्दैरुच्यन्ते । तथा च तेषां भेदा यत्रैतादृश्यस्ता निरूप्यन्त इति सम्बन्धः । वस्तुतस्तु लीलामध्यस्थाः सत्त्वादयः प्राकृतेभ्यस्तेभ्यो भिन्ना एतासु सन्ति । यतः प्रभुसंगमविलम्बहेतोर्लयं कर्तुं प्रिये स्वसंगविलम्बासहिष्णुत्वहेतुभूतभावमुत्पादयितुमेतस्यैव पालनेन स्थैर्यं कर्तुं च समर्थाः । अत एवादौ तम एवोक्तं, ततो रजस्ततः सत्त्वम् । एतदेवाहुः **स्वान्तेति** । स्वस्य तमआदेरन्तः फलं लयादि । उक्तरीत्यैतद्गुणानां तत्र पर्यवसानात्तया निरूप्यन्त इत्यर्थः । **प्रियं किमित्यत्र** । **अर्थादेतासामिति** । स्वातिरिक्तस्य प्रश्नविषयीकरणादिति

भावः । किञ्च । प्रियस्यानेकविधत्वे हि तेषां मध्ये किं करवाणीति प्रश्नः संगच्छते । तेन तदनेकविधत्वं विवृण्वन्ति **तत्प्रयोजनमि**त्यादिना । देशादिव्यवहितत्वमेवेष्टात् कामिते विशेषः । व इत्येनैव चारितार्थ्ये द्वितीयपदेपि तदुक्तेर्भिन्नविषयकत्वं तस्यावगम्यत इत्याशयेन पक्षान्तरमाहुस्तत्रापीति । स्वामिनीष्वप्युक्तरूपसत्त्वादिभिस्तथात्वमस्तीत्येकैकविधाः प्रत्येकैकचरण इत्यर्थः ।

१०-२६-२०. **भ्रातर** इत्यत्र । अदृष्ट्वेत्यादिना प्रासंगिको लोकस्थित्या प्राप्तोर्थ उक्तः । **दृष्टं वनमि**त्यत्राप्युक्ता गुणाः पूर्वोक्ता ज्ञेयाः । स्थितिपक्षे **गृहे न गन्तव्यमि**ति यदुक्तं तत्र हेतुमाहुर्यदि **गृहगमने**त्यादि । सर्वं त्यक्त्वा वनं प्रविष्टस्य तदपेक्षायामेव प्रायश्चित्तं कृत्वा तत्र गमनं स्मृतिवचनेन बोध्यते यत इत्यर्थः । प्रकृते तदभावान्न गन्तव्यमेवेति भावः ।

१०-२६-२१.

**पतीन् सतीरि**त्यत्र । द्वितीयाबहुवचनान्यथानुपपत्त्याहुः **पतिविशेषणं चेति** । तथा च तेषामुपहासवचनमिदं भवति । यतो लोकव्यवस्थैताहशीति तामुक्तवन्तः **पूर्वजन्मनी**त्यादिना । **भवन्तश्चेति** । जायमाना इत्यर्थः ।

१०-२६-२२.

**भर्तुरि**त्यत्र । **स्त्रीणामिति** बहुवचनेन भर्तुरित्येकवचनेन च सर्वासां य एको भर्ता तस्यैवाविधानाद्भगवत एव तथात्वाद्भजनमेव विहितं क्रियत इत्याशयेन स्थितिपक्षार्थमाहुः **स्वभावतो जीवाना**मित्यादिना । अत्र बन्धुप्रजाशब्दाभ्यां तत्सखीभावपरम्परे उच्येते ।

१०-२६-२४.

**दुःशील** इत्यादिना क्रमेण यशऐश्वर्यवीर्यज्ञानवैराग्यश्रीविरुद्धा धर्मा उक्ता इत्याशयेनाहुः **षड्दोषः स** इत्तीति । स्थितिपक्षे स्वतोपि धर्मी दुष्ट इति पातकसम्बन्धोक्त्या ज्ञाप्यते । कदाचित्त्याज्यत्वेन नित्यमभजनीय इत्यपि तथा ।

१०-२६-२५.

**अस्वर्ग्यमि**त्यत्र । उपपतिसम्बन्धे दोषोक्त्या प्रमोश्च सहजपतित्वेन स्पष्टः स्थितिपक्षः । कुलसम्बन्धाभिमानवतीनामुक्त्या तत्र तदभावादपि तथा ।

१०-२६-२६.

**प्रेष्ठं प्रियेतरमि**वेत्यत्र । ज्ञानजर्यानुपपत्त्या पक्षान्तरमाहुः **अथवा तस्या**मित्यादि । भाषणेनैव सर्वतिरोधानमुक्तमिति पुनरपि तथैव चेद्भाषणं स्यान्न स्यादेव विशेषाभावादतः पूर्वविलक्षणमेतद्वाच्यम् । ततो जीवनमुक्तिसामर्थ्यं चात्र जातम्, अन्यथैतन्न स्यादिति वैलक्षण्यमेव निरूपितं **तस्यामप्यवस्थाया**मित्यादिना । अत एव **प्रतिभाषणमुक्तं मूले** । औदासीन्यपूर्वकपूर्वभाषणविरोधिसहासभाषणाभिप्रायेण । **तदर्थविनिवर्तिते**त्यत्र । **यदि त्यक्तोऽपी**ति । भगवदर्थं सर्वत्यागो भगवतोक्तः, पूर्वं त्यक्तार्थापरिग्रहोपि, यतः शुकादयोपि तथा चरन्ति, अधुना गृहपरिग्रहं वदन्ति, एवं सति भगवदुक्तमिति गृहं चेद्ग्राह्यं, तदा तदविशेषात्सर्वत्यागपूर्वकं भगवानेव कुतो न ग्राह्यः, गृहस्यैव ग्रहणे विनिगमकाभावादित्यर्थः ।

१०-२६-३०.

देवो यथेत्यत्र । अनङ्गीकार इति । अन्यत्र रागोत्पत्त्या विवाहिते रागाभाव उचित इत्यर्थः । यद्वा । द्वितीयस्यानङ्गीकार उचितः, न तु भर्तुरभजनमित्यर्थः । अनेन दृष्टान्तेन स्वस्य सर्वत्यागपूर्वकं भगवद्भजनेप्युपपत्तिरुक्तेति ज्ञापनायैवमुक्तमाचार्यैः । अन्यथा मूले प्रभुकर्तृकभजने दृष्टान्तोक्त्या विरोधः स्यादिति ज्ञेयम् । स्वाप्ययेति । आविष्कृतमिति भावार्थक्तान्तम् । तथाच सुषुप्तिमपेक्ष्य तत्साक्षिरूपस्य भगवतः सम्पत्तिर्ब्रह्मसम्पत्तिर्मोक्ष इति यावत् । तद्दानार्थं वा भगवतः स्वाविष्करणमित्यर्थः । केचित्तु स्वयं प्रकाशब्रह्मस्वरूपज्ञानातिरिक्तज्ञानाभावकथनम्, श्रुतौ तु तयोरन्यतरापेक्षम्, तत्र विनिगमकमाहाविष्कृतं हीति । हि यस्माद्धेतोस्तत्तत्प्रकरण एव तदुक्तमित्यर्थ इति वदन्ति । एवमपि सति ब्रह्मस्वरूपाविर्भावस्यैवोक्तज्ञानाभावे निमित्तत्वान्न पूर्वस्माद्विशेषः । प्रथमवचनश्रवणानन्तरं चित्तवैयग्र्यमभूदित्यग्रिमवाक्यानां व्युत्क्रमेणोत्तरदानमिति ज्ञेयम् ।

१०-२६-३१.

अस्त्वेवमेतदित्यत्र । एवमित्यस्य विवृतिः सर्वरूपेति । पत्यादिसर्वसेवारूपेत्यर्थः । एवमुक्तौ हेतुमाहुः अन्यत्रेत्यादिना । पत्यादिसेवाविधेर्भगवत्सेवाविधायकत्वोक्त्या त्वमेव सेव्य इति पक्षेप्युपपत्तिरुक्तेति ज्ञेयम् ।

१०-२६-३२.

कुर्वन्ति हीत्यत्र । स्नेहेन हीत्यादि । क्रियायाः स्नेहसमानविषयकत्वस्यौत्सर्गिकत्वादात्मन एव निरुपधिस्नेहविषयत्वाद्भगवति कृतस्यैव च तद्गामित्वात् त्वय्येव रतिं कुर्वन्तीत्यर्थः । अत्रौपाधिकस्नेहकथनस्यायं हेतुः । भगवता हि स्वातिरिक्ते स्वात्मौपाधिकी प्रीतिर्जीवस्येति पक्षमाश्रित्योक्तम् । स्वामिन्यस्तु वादिरीत्या प्रतिवादिमतमङ्गीकृत्य प्रौढ्या तत्पक्षं निराकुर्वन्तीति न कश्चिद्दोषः । नित्यप्रिय इत्यत्र । अन्यथा जारसेवापीत्यादि । ननु धर्मत्वे विहितत्वस्य प्रयोजकत्वादत्र तदभावान्न तथेति चेत् । उच्यते । प्राग्जन्मनि विवाहिते पुंसि जीवति पुरुषान्तरेण विवाहे दोषाकथनात्तत्र जन्मावच्छेदकमिति वाच्यम् । एवं सत्येतत्समानयोगक्षेमत्वाद्विनस्यापि तथात्वं सुवचम् । न च तत्र पतित्वाभावान्न तथेति वाच्यम् । 'स वै पतिः स्यादकुतोभयः स्वयं जीवच्छवं भजति कान्तमतिर्विमूढा । या ते पदाब्जमकरन्दमजिघ्रती स्त्री'त्यादिवाक्यैः कालभयवति पतित्वाभावेनोभयोस्तुल्यत्वात् । एवं सति पतिभजनं विदधच्छास्त्रं हरिसेवामेव विधत्ते । प्रभोर्दुरापत्वेन व्यवहारनियमार्थं परं तथा स्मृत्यादिषु कथनमिति भावः । अत एव वाग्दत्तापि कन्या ततः श्रोत्रिय उपपन्ने तस्मै दीयते न पूर्वस्मै । वरदेश्वरेति सम्बोधनेन व्यञ्जितमर्थमाहुरतो वयं क्लिष्टा इत्यादिना ।

१०-२६-३३.

सिञ्चाङ्गेत्यत्र । अत्र सिञ्चनस्यावश्यकत्वे हेतुरुत्तरार्धेनोच्यते । तत्रापि यान इति वर्तमानप्रयोगेण स्वजीवनस्य क्षणमात्रमपि तद्विलम्बासहिष्णुत्वं ज्ञाप्यते । एवं सत्येतत्कालीनं जीवनमुक्तिश्च [illegible]

१०-२६-३५.

नुपपत्त्या कल्प्यते । यद्यप्युत्तरदानसमये न तदस्ति, तथापि पूर्ववचनानामुत्तरदानार्थमेव हृदि स्थापितत्वात्तदनन्तरं तदभावे सति चेत्साक्षात्सुधादानमन्ततो भाषणमपि वा न भवेचदोक्तैव रीतिर्भविन्त्रीति हृदि कृत्वा पितृचरणैरुक्तं **वयमित्यारभ्य वक्तव्यमित्यन्तम्। नो चेद्वयमित्यत्र । हरेणैव** दग्ध इत्यादि । वियोगादिपदमनुक्त्वा विरहपदं यदुक्तवत्यस्तज्ज्ञापितं भावविशेषमाहुः **स विपरीत** इत्यादि । अयमग्निर्न पूर्वोक्तः । तथा सति पुनरद्युक्तिर्न स्यात् । तथा च पूर्वस्मादस्य कठिनत्वं वाच्यम् । तदाहुर्नामव्युत्पत्त्या । हरदग्धः कामोऽप्यवस्थोप्यस्ति । उक्तामृतेन जीवेदपि । अनेन तु दग्धः क्षणेनैव भस्मसाद्भवति पदार्थः, पुनर्जीवनाशारहितश्च । उक्तरूपदाहकर्तृवाचकपदस्यवर्णवैपरीत्येनैतद्वाचकपदस्यवर्णयोरेतद्वाच्ये तद्विपरीतधर्मवत्त्वं लक्ष्यते । सोऽस्माभिरुक्तोऽनेन त्वित्यादिना । एवकारोप्यर्थे । तथा चोक्तरूपदाहकर्त्रा हरेणापि दग्धो यत्र कामोऽद्युनापि न जीवति, तत्रोक्तरूपेण दग्धाः कथं पुनर्जीवेयुरिति भावः । पूर्वं सिञ्चनेन जीवनकर्तृत्वलक्षणोपि तद्विपरीतो धर्म उक्त इति प्रभुस्वरूपमेवात्र रहःपदेनोच्यते । तत्स्वत एव समर्थं, तथापि कोटिकन्दर्पाविकलावण्येन विभावानुभावादिसाभग्या च विशिष्टं किंकिं न कुर्यात्। एतदेवोक्तं **तत्रापि विशिष्टो विरह** इत्यनेन। लोकप्रसिद्धमर्थमाहुरेकान्ता भावेति । ननूक्तरूपत्वे कदाचिदपि सुखदत्वं न स्यादित्याशंक्य श्लिष्टार्थकोयं प्रयोग इत्याशयेनाहुरनेन **त्वयेत्यादिना** । स्वरूपस्यैव विरहत्वमित्यर्थः । शृंगाररसस्य संयोगविप्रयोगात्मकत्वात्तद्रूपत्वात्प्रभोस्तथात्वं युक्तमिति भावः । ततः काष्ठात् । उपाधेरार्द्रेन्धनत्वस्य । दार्ष्टान्तिके स्वरूपातिरिक्तः स्नेहहेतुरुच्यते । तेन सोपधिस्नेहे त्वनेवंभाव इति भावः सूच्यते ।

**यर्ह्यम्बुजाक्षेत्यत्र** । तत्त्वविशेषणोक्तितात्पर्यमाहुरस्माभिर्विचारितमित्यादि । 'भगवान् ब्रह्म कार्त्स्न्येन त्रिरन्वीक्ष्य मनीषया । तदध्यवस्यत् कूटस्थो रतिरात्मन् यतो भवे'दितिवद्भावेदार्थं विचार्य निर्दोषपूर्णगुण एव सेव्यः । स च भगवानेव । स च निर्दोषेणैव सेवितुं शक्य इति निखिलाधिदैविकाध्यात्मिकदोषावप्यपहाय तं यत्र इति तथा । **अरण्यजनेत्यत्र** । ननु चाञ्चल्यत्यागोक्त्यैवान्यसंगत्यागोप्युक्त एवेति तेनापीति ग्रन्थो न युक्त इत्यत आहुः **संगाभाव** एवेति । पूर्वं दोषाभाव उक्तोऽधुना प्रीतिहेतुर्गुण उच्यत इति न तथेति भावः । अत एव मूले **प्रीति**रुक्ता । अन्यपदार्थमाहुः **सर्वथेति** । तद्धर्मेति । भगवद्भावप्राकट्यादित्यर्थः । **सर्वदैव स्वम** इति । पूर्वमपि रमणपक्षे तस्य गोप्यत्वादेवमुक्तमिति ज्ञेयम् ।

१०-२६-३६.

**वीक्ष्यालकेत्यत्र** । **चतुर्विधो मोक्ष** इत्यादिना पुरुषार्थत्रयविवरणम् । अत्रालकावृतादिपदैर्मोक्षादिनिराकरणोक्तेरयमाशयः । मूले हि प्रभोरङ्गान्येवोक्तानि दासीभवनहेतुभूतेक्षणविषयत्वेन । तथा च त्वां वीक्ष्येत्येतावतैव

१०-२६-३९.

चारितार्थ्येपि यत्प्रत्यङ्गनिरूपणं, तत्रापि भूषणानां, तत्साभिप्रायमिति स निरूप्यत इति। **सारूप्यमिवेति**। सारूप्यमुक्तिमिवेत्यर्थः। अत्रालिसारूप्यवदलकैः सारूप्यमुक्तिमन्तो भक्ता लक्ष्यन्ते। केशा बद्धा अपि भवन्ति, न त्वलकाः। इतोपि तथा। 'मत्सेवया प्रतीतं च' 'सालोक्यसार्ष्टिसामीप्ये'त्यादिवाक्यैश्च तासां चतुर्विधानामपि दास्यान्न्यूनत्वं सिद्धम्। तत्रैतद्रसप्राप्त्यभावादेतस्य च ततोधिकत्वाद्धि तदवरणम्। अत एवात्राप्यावरणरूपत्वमेवोक्तम्। नह्यन्तःस्थितिं विना परितः स्थितिमात्रेण रसपानमलीनां सम्भवति। मुखस्याम्बुजत्वमप्येतेषां रसपानाभावज्ञापनायैव नोक्तम्। किञ्च, कमलं हि न पेयमपि तु तत्स्थो रसस्तथा न तदास्यं किन्तु स्वयमेव रसात्मकमित्यपि ज्ञापयितुं तत्त्वं नोक्तमिति ज्ञेयम्। बहुभिरावरणान्महारसत्वं व्यज्यते। किञ्च। लीलाया नादस्य वा श्रवणेन पूर्वं जनितो यो भावः स एतद्दर्शनेन पुष्टः क्रियते। प्रचुरार्तेर्लयो विविधरसभावोत्पत्तिश्चेति स्थितिलयोत्पत्तिकर्तृवाचकवर्णात्मकनाम्ना सूच्यते। अतो युक्तं दासीभवनमिति भावः। त्वत्सुन्दरस्मितेत्यादिनोक्ताधिकारवतीनां देये दास्ये सुखं स्वाधीनं भवतीति तच्छेषभूतानामनङ्गीकारः सर्वत्र। **गण्डस्थलेत्यत्र**। **स्थले हीति**। एतज्ज्ञापनायैव स्थलपदम्, अन्यथा नोक्तं स्यादिति भावः। **भुजदण्डयुगमित्यत्र**। **उभयत्रेति**। इन्द्रादीनां भयदैरपि दैत्यैर्भगवच्छासनमनुलङ्घ्यमित्यैहिकानिष्टनिवर्तकः। देवानामपि तत्तथा। यज्ञाकरणे द्विजान्दण्डयत्येवेत्यनुलङ्घ्याज्ञत्वेन मुक्तिहेतुभूतशुद्धिजनकहविर्दानेन पारलौकिकसुखप्रद इत्यर्थः। हविर्दानेन परलोकसाधने विशेषमाहुः **तत इति**। भगवत्क्रियाशक्तिरूपवैदिकक्रियासम्बन्धिहविर्भोगादित्यर्थः। सर्वथा अन्तःकरणस्थानामपीत्यर्थः। ( भुजदण्डावित्यनुक्त्वा द्वित्वसंख्यावाचिपदमेकवचनान्तं यदुक्तं तत्रायं भावः। द्वयोः पृथक् प्रतीतौ ह्यपेक्षाबुद्धिः। तया च द्वित्वम्। प्रकृते चाश्लेषदशायामुभयोर्भुजयोरेकवत् प्रतीतिः। सा च न स्वाश्लेषसमये संभवति, किन्त्वन्यस्याः। तथा च तादृग्दर्शनं भावोद्बोधकं भवत्येवेति। तथापि द्वयपदमनुक्त्वा युगपदं यदुक्तं तेन युगस्वभावो यथा न निवर्तयितुं शक्यः केनापि, तथा भुजदण्डयोरप्येकवचनसूचितार्थलक्षणः स्वभावो न मर्यादाशास्त्रादिभिर्निवर्तयितुं शक्यो भवति च। तथैवेति ज्ञाप्यते। तेनास्माकं दासीभवनमावश्यकमिति। )

का स्त्र्यंग त इत्यत्र। भगवत्साक्षात्कारे सति मोहासम्भवमाशंक्याहुः **तेषां बलमिति**। मर्यादामार्गीयभगवद्धर्मेभ्योपि पुष्टिमार्गीयास्ते बलिष्ठा इति भावः। **आर्यचरितादित्यत्र**। नन्वार्या हि श्रेष्ठाः, ते च भक्ता एवेति

१०-२९-४०.

तच्चरितमेव सर्वत्यागपूर्वकं भगवद्भजनमिति कथमेवं कथनं युज्यत इत्याशंकानिरासायार्यपदार्थमाहुः **प्रमाणबलविवेकिन इति**। ननु विवाहितभजनं हि प्रमाणमार्गः, भगवान् सर्वात्मक इति 'गोपीनां तत्पतीनां चे'त्यग्रे वक्ष्यमाणत्वाच्च तन्न हीयते, अधिकं परं सम्पद्यत इति नैषोपपत्तिरित्यत आहुः **प्रमाणे हीत्यादि**। तन्मार्गे हि पतित्वादयो धर्मा देहनिष्ठा

एव। अतस्तद्भिन्नत्वेनोपस्थितस्तद्वचनविषयो न भवति। 'यावद्वचनं हि वाचनिक'मितिन्यायात्। एवं सत्ययं मार्गो वस्तुविचारं न सहते। न च विहितत्वेनैवोत्तमता, निषिद्धत्वेनैवाधमतेति वाच्यम्। 'शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुष्वि'ति भगवद्वाक्यविरोधात्। न चैतद्विरोधापरिहारात्तत्र कर्तव्यमिति वाच्यम्। प्रमेयमार्गस्य स्वतन्त्रत्वेनैतस्माद्बलिष्ठत्वेन चैतद्विरोधस्याप्रयोजकत्वात्, अन्यथा प्रमेयमार्गोच्छेदापत्तिः। एतदेवोक्तं **प्रमाणे** हीत्यारभ्य **न दूषण**मित्यन्तेन ग्रन्थेन। ननु प्रमाणमार्गीयाणां प्रमेयमार्गीयाणां च मिथो भेदात्प्रमाणवाक्यं न प्रमेयमार्गीयं विषयीकरोति, यागविधिर्यतिमिव, अतो न विरोध इति चेत्। स्यादेवं यदि प्रमेयमार्गेपि विधिः स्यात्, यत्याश्रम इव। तथा सत्यधिकारिविशेषणमहिम्नैवान्यस्याप्राप्तेरविरोधः स्यात्। प्रकृते च प्रभ्वनुग्रहैकलभ्यत्वेन विध्यभावाद्वर्णाश्रमविशेषाधिकारेण प्रवृत्तं वाक्यं न संकुचितुमर्हति। बाधकाभावात्। अतस्ततोन्यथाकरणे विरोधो दुर्निवारः। प्रमेयमार्गप्रामाण्यं तु 'धर्मव्यतिक्रमो दृष्ट' इत्यादिना 'याः श्रुत्वा तत्परो भवे'दित्यन्तेन शुकवाक्येनैव वक्ष्यत इति सर्वमनवद्यम्।

**व्यक्तं भवा**नित्यत्र। ननु यथार्तौ सत्यामपीयदवधि तत्र स्थितम्, तथाधुनापि स्थेयमित्याशङ्कानिरासायाधुनार्तिहरत्वोक्तितात्पर्यमाहुः **इदानीं यथार्ति**रिति।

१०-२६-४१.

**इति विक्लवित**मित्यत्र। अत्र पञ्चिः श्लोकैः रमणं स्वकार्यसहितं निरूप्यते। तत्र संख्यातात्पर्यमाहुः **षड्गुणैश्वर्ये**ति। अत्रायं भावः। भागवते हि परमकाष्ठापन्नं वस्तु भगवच्छब्देनोच्यते। तस्य च षड्गुणवत्त्वमर्थः। प्रकृते च रमणमुच्यते। तच्च विविधभावसाध्यम्। ते च निर्विकारे ब्रह्मणि न सम्भवन्तीति मायया प्राकृतगुणसम्बन्धाद्वैतत्कृतमिति कश्चिद्बहिर्मुखः शंकेत, तन्निरासो रमणनिरूपकश्लोकसंख्ययैव रमणस्वरूपनिरूपणेन क्रियत इति। एतदेवाहुः **षड्गुणैश्वर्ये**त्यादिना। षड्गुणे यो भगवत ऐश्वर्यभावः स्वामिभावः। रमणे यदा यस्य गुणस्योपयोगस्तदा तत्प्राकट्यकरणेन रेम इत्यर्थः। न तु मायाद्यधीनत्वेनेति भावः। अत एव स्वयं पदम्। अन्त्येन श्लोकेन तिरोधानोक्त्या विप्रलंभोपि निरूपितो भवतीति पूर्णो रसोत्र निरूपितो भवतीत्याहुः **स्वरूपेणापी**ति। विशेषतो लक्षणानि त्वग्रे वाच्यानीति भावः। वाक्यार्थानाहुः **सामान्ये**त्यादि। विशेषरमणं बाह्याभ्यन्तरभेदेन द्विविधमिति। द्वितीयेन बाह्यं तदुक्तमित्याहुः **विशेष** इति। तृतीयेनान्तरम्। अजातस्मरकेलिजातस्मरकेलिभेदेन द्विविधा विलासा इति द्वाभ्यां तदुक्तिः। ननु नायिकामानापनोदनं चाटुकारैरुक्त्वैवं कथं कृतवानित्यत आहुस्तात्पर्यं **नायं लौकिके**ति। एतच्च श्लोकविवृतौ स्फुटीभविष्यतीति तथा। **तदैव स्वरूपमेवे**त्यारभ्य वचः स्फुटमित्यन्तग्रन्थस्यायं भावः। प्राकृतपुरुषस्येव स्त्रीप्रेक्षणादिभिस्तदा सञ्जातः कामश्चेत्स्यात्, तज्जनितश्चाङ्गादिविकारः स्यात्, तदा प्राकृत-

१०-२६-४२.

स्येव तन्नाशोपि स्यात् । न चैवम्, किन्तु 'रसो वै स' इत्यादिश्रुतिभिः स्वरूपमेव रसात्मकमिति रसशास्त्रसिद्धा यावन्तो भेदास्तत्सर्वरूपं स्वरूपमेवेति तादृशमेव पुरुषोत्तमस्वरूपमिति नानुपपत्तिः काचिदिति । यथा दैत्यान्प्रति वीररूपेणैवाविर्भावः, तेषां तथैवाधिकारात्, तथात्रैवमाविर्भाव इति हृदयम् । हासस्य मोहकत्वेनाधुना तत्प्रयोजनाभावमाशंक्य तदाहुः **तासां यथेत्यादि** । हासे प्रकर्षोयमेव । सख्याङ्गीकार एव हास्यसम्भव इति तथा । अन्यथोक्तरूपेण समं साम्याभावाद्रसो न स्यात् । सख्यस्वभावादेव न स्वस्माद्भिन्नतया गणना । सा तु मर्यादायामङ्गीकारे भवति । तथा सत्येवंभूतानामपि मर्यादायां पातने भक्तिमार्गमर्यादानाशः स्यात् । तदेतदुक्तं **नाशनार्थमित्यन्तेन** । उद्धारोत्रैतदुक्ततापात् । उत्कटतापदर्शनेनैव तदुद्धरणार्थं दया । तथा च हासेनैव तापनाशः सूचितो भवति । अन्यथा रसाभासहेतुत्वेन तां न वदेत् । अथवा । मूले सदयं रेम इति सम्बन्धः । इदं हि रमणमभूतपूर्वमादावुक्तं सामान्यरूपं च । अतोत्र न पूर्णरसदानं, किन्त्वग्रे । तेन न भगवत्समानं सामर्थ्यमधुनास्तीत्यधिकक्रियाशक्त्याविर्भावने नायिकानामुपमर्देन रसनाशः स्यादिति, तदभावाय दयोक्ता । यद्यप्येवं रसः पुष्टो न भवति, तथापि रसाभासभावाभासैर्मुख्योरसः पोष्यत इतीदं रमणमग्रिमरसपोषायोपयुज्यते । अत एवाभासे तापापनोदनार्थं सामान्यलीलामाहेत्युक्तमाचार्यैः ।

( **क्रिया सर्वापि सैवेत्यत्र** । भगवतो भक्तानां चालौकिकत्वं लौकिककामाभावं चाहुः **क्रिया सर्वापीति** । अयमर्थः । लोके रससम्बन्धिनी क्रिया लौकिककामविषयिण्येव प्रसिद्धेति भगवच्चेष्टायाश्च तत्सजातीयत्वात्कामोपि लौकिक एव भविष्यतीति कस्यचिद्भ्रान्तस्याशंकां वारयितुमाहुः **परं काम** इति । लौकिकः कामो न विद्यत इत्यर्थः । ननु भगवान् पुरुषोत्तम इत्यस्तु नाम लौकिककामाभावः, एतासां लौकिकतद्वत्त्वमस्त्विति चेत्तत्राहुः **तासां कामस्येति** । अयमर्थः । यदि भक्तानां लौकिकः कामः स्यात्तर्ह्यलौकिकेन भगवत्कामेन पूर्णो न स्यात्, तयोः परस्परमेकजातीयत्वाभावात् । विजातीयेन विजातीयस्य पूरणासम्भवात् । अतो भगवत्कामेनैव तासां कामस्य पूर्तेर्भगवत्तुल्यत्वं तासामपीति ज्ञापनायोक्तं **तास्तथेति** । यथा भगवानप्राकृतो लौकिककामरहितस्तथैता अपीत्यर्थः । अन्यथा भगवतः पूर्णरसोद्बोधो न स्यात्, न्यूनाधिकत्वेन भाववैजात्यात् । ननु कामो न विद्यत इति कथनाद्भगवति तत्सम्बन्धात् भक्तेषु चोभयविधकामाभाव एवास्त्विति चेत् । न । पञ्चमाध्यायोक्तकारिकाविरोधात् । तत्र लौकिकनिषेधपूर्वकमलौकिकस्य भगवति निरूपितत्वात् । तथा हि । 'अत्रैव लोके प्रकटमाधिदैविकमुत्तमम् । कामाख्यं सुखमुत्कृष्टं कृष्णो भुंक्ते न चापर' इति । अत्र कामसुखस्य आधिदैविकत्वोत्तमत्वविशिष्टस्य प्रभोर्भोक्तृत्वकथनाल्लौकिकस्यैव तस्य निषेधो, न त्वलौकिकस्यापि, अतो भगवद्भोग्यास्वपि तथैव,

१ 'अत्र कारिकाव्याख्यानं टिप्पणीपुस्तकेषु दृश्यते, तत् पाण्डुलिखिते नास्तीति श्रीगोकुलनाथाना तत् प्रतिभाति, लेखरीत्यापि तथेतिचे'ति श्रीपुरुषोत्तमाः ।

अन्यथा भगवतो भोक्तृत्वमेव न स्यात् । तस्मात् सुष्ठूक्तं तास्तथेति । विपक्षे बाधकमाहुः **कामेनेति** । प्राकृतेनेति शेषः । तादृशस्य संसारजननावश्यकत्वात् । प्राकृतेषु सर्वत्रैव तथा दर्शनात् । अत्रत्यभक्तेषु संसाराभावात्प्राकृततदभावो निःसन्दिग्ध इति ज्ञापनायोक्तं **न संशय** इति । प्राकृतत्वाभावे हेत्वन्तरमाहुः **अतो न कापीति** । यतोस्य भावस्या लौकिकत्वम्, अत एव मर्यादामार्गीयमोक्षेच्छूनामपि प्रवृत्तिर्न बाधितेत्यर्थः । मोक्षमार्गे कामाभाववतामेवाधिकारात् । तथा च श्रुतिः 'श्रोत्रियस्य चाकामहतस्ये'ति । तस्माद्यद्यस्य भावस्य प्राकृतत्वं स्यात्, तदा तत्कृतलीलाया अपि तथात्वात्तच्छ्रवणे लौकिककाव्यादिवत् कामोद्बोधात्तेषामेतल्लीलाश्रवणस्य विपरीतफलकत्वात् प्रवृत्तिर्न स्यादित्यर्थः । चकाराद्भक्तिमार्गीयापि मर्यादा न भग्नेत्यर्थः । तस्मादस्य भावस्यालौकिकत्वात्तेषामेतल्लीलाश्रवणे फलमुखां प्रवृत्तिमाहुः **अत एतच्छ्रुताविति** । एतल्लीलाश्रवणेन लोकः सर्वोपि साधारणोपि लौकिककामरहितो भवेत् । नन्वेतादृक्श्रवणमात्रेण कथं लौकिकतदभाव इति चेत्तत्राहुः **भगवच्चरितं सर्वमिति** । वस्तुस्वभावादेवेत्यर्थः । यद्वस्तु यादृशं भवति तत्स्वनिष्ठमपि तादृशं करोति । एतल्लीलाया लौकिककामराहित्यादलौकिकतत्प्रतिपादकत्वादेतत्परोपि लौकिकतद्रहितः सन्नलौकिकनिर्हेतुकभगवद्भावयुक्तो भवतीत्यर्थः । श्रवणं तु लीलातात्पर्यावधारणपूर्वकम्, न तु यथा कथञ्चित् । **अतः कामस्येति** । यत इयं लीला लौकिककामरहिता अत एतच्छ्रवणेन लौकिककाव्यश्रवणवन्न लौकिकतदुद्बोधः । ततः कारणात् 'कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीर' इति शुकवचनं स्फुटं स्फुटार्थमित्यर्थः ।) **अतो न कापीति** । मोक्षफला मर्यादा कामे सति न मोक्षः, तदभाव एव सः, इति लक्षणापि न भग्नेति सम्बन्धः । तथा च श्रुतिः मोक्षरूपब्रह्मानन्दप्राप्तौ 'श्रोत्रियस्य चाकामहतस्ये'ति । तत्रोपपत्तिमाहुः **अत एतच्छ्रुताविति** । ननु कामलीलाश्रवणेन लौकिकभावोत्पत्तिर्लौकिकस्यावश्यं भवतीति विपरीतं प्रयोजनं स्यादित्यत आहुः **भगवच्चरितमित्येकं श्लोकम्** । वस्तुस्वभावादेवाद्भुतकर्मत्वाच्च प्रभोरेतच्छ्रवणे तदुद्बोधो नेत्यर्थः । यतो न भवत्यत एव शुक एतल्लीलाश्रवणादिफलं कामाभावमेव 'काममपहिनोती'ति प्रकटमेवाह । यद्यपि हृद्रोगमपहिनोतीत्येवमेव वाच्यम्, तावतैव चारितार्थ्यात्, तथाप्युक्तलीलास्वरूपं ज्ञापयितुं स्फुटमाहेत्यर्थः ।

१०-२९-४३. **उदारहासद्विजकुन्देत्यत्र** । **कुन्दत्वं स्नेहस्येति** । काममात्रपर्यवसायी स्नेह इति ज्ञापनार्थमित्यर्थः । कुन्दानां रसमात्रोपयोगित्वादिति भावः । अत्रायं भावः । स्वामिनीनां सदा निरुपधिस्नेह एव चेत्स्यात्तदा खण्डितादिभावासम्भवेन पूर्णरसभोग उभयत्रापि न सम्भवतीति निरुपधित्वांशमाच्छाद्य कामोपाधिकत्वं सम्पादितवान्, नैतावता भक्तिमार्गे हीनता । आद्यप्रवृत्तेर्निरुपाधिकत्वाद्भगवता स्वानन्ददानार्थं स्वयमेतद्भावजननादिति । तर्हि कामनिवृत्तौ तन्निवृत्त्यापत्तिरित्याशंकानिरासो

दीधितिनिरूपणेन कृतः । स्नेहरूपदन्तेषु दीप्तिरुत्तरोत्तरमेकरूपेण प्रकाशमानत्वमेव । एतमेवार्थं परोक्षेणाहुः **तथा सतीत्यादिना** । ननु भगवानेतत्प्रार्थनया रमते, न तु स्वयं विनैव प्रार्थनाम् । तथा सति स्वामिनीष्वियदवधि यावान्भावः सम्पादितोऽस्ति तत्पूरणमेवोचितम्, न त्वधिक(संपादन)म्, प्रयोजनाभावात्, तावतैव श्रोतॄणां कामदोषनिवृत्तिसंभवादुदारहासादिकरणं कुत इत्याशयेन **यद्यपीत्यादिनाशंक्यात्र** भगवद्रिरंसाया एवोपक्रान्तत्वात्स्वानुरूपसर्वसामग्रीसम्पादनमावश्यकम् । अत एव न पूर्णमनोरथ इवौदासीन्येनैतत्सन्तोषार्थमेव रमते । तथा सति रमणस्वरूपाभावेनैतत्सन्तोषासम्भवप्रसंगः, किन्तु लौकिकनायकवद्विकारयुक्तः । एतज्ज्ञापनायैव मूले दृष्टान्तोयमुक्त इति तत्समाधानमाहुस्**तथापीत्यादिना** । कलङ्कवत्त्वोक्त्या प्रकृते विकारभाववत्त्वं सूच्यते । स यथा पूर्णोप्यपूर्णो भवति, पुनः क्रमेण पूर्णोपि, न तु सदा पूर्ण एव, तथात्रापीति ज्ञाप्यत इति भावः । **वन्धातिरिक्ताः सर्वा** इति । स्वामिनीनामुडुस्थानीयत्वात्तेषामेवावरकत्वोक्त्यावरणस्य च बहिः परितः स्थितिनियमेनात्रापि बाह्या एव लीला उक्ता भवन्तीत्यर्थः ।

**मालामित्यत्र** । प्रकरणाद्रसपोषार्थत्वात्सर्वस्य चरणमपि तदर्थमेवेत्याशयेनाहुः १०-२६-४४. **एषा हि गतिरिति** । इति षड्विंशोध्यायः ।

**सप्तविंशाध्यायार्थनिरूपणाय** पूर्वाध्यायोक्तान्तर्धानतात्पर्यवर्णने । **पुष्टो यथान्तरित्यादि** । अत्रायं भावः । संगमे ह्यग्रिमाग्रिमरसार्थं नवो नवः प्रयत्नो १०-२७०. भाव्यते, न तु पूर्वानुभूतो रसः पोष्यते । सर्वेषां तेषां स्वतन्त्रत्वात् । संयोगे यथा यथा रसानुभवाधिक्यं, तथा तथा विप्रयोगे दुःखाधिक्यमित्यनुभवसिद्धम् । एवं भावे संस्कारमात्रशेषस्य पूर्वरसस्योपमर्दकाग्रिमसंगमरसाभावेनान्तरेवातिपुष्टे भवति तथा, यथा पूर्वानुभूतलीलास्वरूपात्मका देहेन्द्रियप्राणान्तःकरणात्मानो भवन्ति । किमुत । अत एवासावहमित्यादिरूपं ज्ञानं तथैव क्रिया च भवतः । एतदनन्तरं जाते संगमे पूर्वसंगमादधिकरसत्वस्फूर्तिरप्यत एव । अन्यथा संगमत्वाविशेषेण तदनुपपत्तेरिति दिक् । यद्यपि संगमोत्तरकालीनविप्रयोगमात्र एवैतादृशत्वं सम्भवतीति नान्तःप्रवेशापेक्षा, तथाप्येतद्विप्रयोगस्यातिविषमत्वेन क्षणमात्रेणैवान्यथाकरण एतद्रसदानं नोपपद्यत इति रसात्मकत्वात्स्वरूपस्य स्वयमेव प्रविष्ट इत्याहुस्तदर्थं **भगवानिति** । **चत्वारोऽत्रेति** प्रियप्राप्तिसाधनानुष्ठानरूपं तद्रसस्वभावप्राप्तं गुणगानं चतुर्थोर्थः । **रसासक्तिरिति** । रसासक्त्यादित्रयमस्मिन्नध्याय उच्यते । एता हि रसासक्त्यैवान्वेषणपराः, अन्यथा गृहानेव गच्छेयुः । एवं सति यदेव बहिः संवेदनं तदेवान्वेषणमिति तदुक्त्या रसासक्तिरेवोक्ता भवतीति तथा । अग्रे स्पष्टम् । उक्तार्थत्रयनिरूपणे प्रकारविशेषमाहुः **उद्देशात इत्यादि** । आद्यैस्त्रिभिस्त्रयाणामुद्देशः कृतः । अन्वेषणं रसासक्तेर्लक्षणमसाधारणो धर्मोनुमापक इति यावत् । लीलाया एतदन्तःस्थित्यनुमापक एतासु तदाविर्भावः । गर्वाभावज्ञापकं सपत्नी-

भाग्याभिनन्दनादिकम्। अन्वेषणफलं च पददर्शनम्। लीलावेशफलं प्रियाधीनत्वस्वाधीनत्वदर्शनेपि प्रिये दोषारोपाभावपूर्वको 'रेमे तया चे'त्यादिनोक्तो भावः। गर्वाभावफलमितरविस्मृतिपूर्वकं तत्प्राप्त्यर्थैकः प्रयत्नः।

१०-२७-१. **करिष्य इवेत्यत्र। तथात्र काल इति।** अवतारसम्पूर्तिकाल इत्यर्थः।

**गत्यानुरागेत्यत्र। अतःस्मितेन मन्दहासेनेति।** अन्यथा प्रकृष्टोदारहासस्यैव
१०-२७-२. पूर्वमुक्तत्वादधुना स्मितं न वदेदिति भावः।

**गतिस्मितेत्यत्र। भगवति स्वधर्मानिति।** स्वगतौ प्रियगतिभावना जातेति
१०-२७-३. तथा। **भगवद्धर्मेष्विति।** भगवत एतासां च मिथो वैलक्षण्यं गत्यादिषु सहजम्। अधुना तु भगवद्गत्यादिवदेव गत्यादि, संस्थानविशेषोपि तथा, न तु प्राग्वत्। तथा च तद्भावापन्ना मूर्तिर्जातेत्यर्थः।

**गायन्त्य उच्चैरित्यत्र। प्रथमतो मिश्रभावादिति।** सुप्तप्रबुद्धन्यायेन
१०-२७-४. बहिःसंवेदनासंवेदनाभ्यां संगमविरहविषयकसमूहालम्बनज्ञानं जनितमिति तथेत्यर्थः। ननु प्रभोरानन्दरूपत्वेन तद्भावेषु सत्सु सदानन्द एवोचितो, न तु वक्ष्यमाणवस्थेत्याशंकाभावाय तस्याः स्वरूपमाहुः **शब्दो हि धूमवदिति।** अत्रेदमाकूतम्। एतावत्कालपर्यन्तं भगवता स्वरूपानन्दो न प्रकटितः। तस्य स्वरूपात्मकत्वेन तत्प्राकट्यं विना तदनुभवासम्भवात्। 'तथा परमहंसाना'मिति वाक्यात् यादृशेन भक्तियोगेन तत्प्राप्तिस्तादृक्कृतप्रकटनायाधुनैव पुरुषोत्तमावतारात्। प्रभुप्राकट्यानर्थक्यापत्तिभिया श्रुत्याद्युक्तसाधनसाध्यत्वं स्वरूपानन्दस्यैतत्साधनभक्तियोगस्य च न वक्तुं शक्यम्। अत एव कुन्तीभिः पूर्णसाधनवतामप्ययं दुर्लभ इति ज्ञापनायैवाधिकारिविशेषणान्युक्तानि। एवं सति स्वरूपस्य रसात्मकत्वेन अत्रत्या भावाः सर्वे रसात्मका एवेति मन्तव्यम्। अन्यथैतच्छ्रवणमात्रेणापि स्नेहोत्पत्तिर्न स्यात्। एवं सति तद्वार्तानभिज्ञस्य तवेयमाशंका कंटकवेधदृष्टान्तेन कामिनीकुचकुम्भे नखवेधस्यापि दुःखहेतुत्वसाधनमनुहरतीत्यलमुक्त्या। एवं सति तापकत्वेन विरहोग्निरेव। स यथार्द्रेन्धननिष्ठमग्निं स्वयं तत्संयुक्तः प्रकटीकुर्वन्नार्द्रत्वेन प्रतिबन्धात्तत्रासमर्थो धूममेव जनयति, तथायमप्यग्निरापाततो बहिःसंवेदनेन न सर्वात्मना तिरोधानास्फूर्तिरिति तज्जनितत्वेन तादृश एव जातः। बहिःसंवेदनाभावे तिरोधानास्फूर्तिरिति यावानंशस्तस्य तावान्सोत्रार्द्रत्वस्थानीयः। अन्यथैकदैव पूर्णतत्प्राकट्ये क्षणमात्रेण सर्वं भस्मसात्कुर्यादेव। तथा सत्यस्याग्नेर्धूमो गानरूपः शब्द एव। एवं सत्यर्धज्वलितदारुतुल्यता सिध्यति। तदेतदुक्तं बाह्याभ्यन्तरयोगत इत्यनेन। यथा स पूर्वमेकरूप एव भवति, ततोनेकधा, तथोत्तरोत्तरं विचित्रभावजननाद्गानमपि विचित्रं भवतीत्याहुः **विराजत इति।** यथाऽगर्वादिधूमस्य निर्गच्छतः शोभा, तथास्यापि शब्दस्य गानरूपत्वमिति ज्ञापनाय विराजत इत्युक्तम्। अतोऽ-

न्वेति । यतो हेतोर्भगवान्नसात्मकः, तदात्मका एव च भावाः, अतो हेतोरखण्डाद्वैतभानादिदं स्वामिनीनां ज्ञानमुत्तममित्यर्थः । एतदेव स्फुटयन्ति **धर्मिधर्माणामिति** । एते भावाः स्थायिभावस्य व्यभिचारिभावा इति धर्मिणः श्रीकृष्णस्य तद्धर्माणां विहारादीनां जीवतद्धर्मापेक्षयोत्कृष्टत्वात् तथेत्यर्थः । उक्तज्ञाने जीवतद्धर्मयोरेव सत्त्वात्तदपेक्षयैतयोर्न्यूनत्वादिति भावः ।,अथवा । यथा प्रियवद्विहारादिस्तथैवेदं गानमपीत्याहुः **यथा भगवत** इति । प्रीतिविषयाणामाकारणं भगवद्धर्मः सोत्रोक्तः । अत एव तदा स्वागमनवदधुना न प्रभोरागमनम् । तस्य स्वधर्मत्वात् । भगवान् कौतुकार्थमत्रैव कुत्रचिल्लीनोस्ति रसपरवशश्च । अतोस्मद्गानेनागमिष्यतीति ज्ञात्वा जगुरित्यर्थः । अस्मिन् पक्षे बहिःसंवेदनमेवास्ति, परं त्वद्दर्शनजालोक्तरीत्या तथा करणमिति ज्ञेयम् । सर्वथा बहिःसंवदने हि विचयनमिति । तत्र हेतुमाहुः **कृत्रिमत्वादिति** । आत्मनि भगवद्भावस्य कृत्रिमत्वात्तिरोधानमावश्यकम् । तद्धेतुर्विचित्रभाववतीनां मिथो मिलनं तदाहुः । यतो हेतोर्मिलितास्ततो हेतोः स्वतोन्यतश्च **विशेषविज्ञानात्तथेति** योजना । यद्वा । भगवद्भावापन्नाऽपरां सखीं मत्वाक्षेपादिकं करोतीति । स्वतो मिलनम् । तदान्यासामस्यां भगवत्त्वबुद्ध्यभावात् तद्भावाननुरूपकरणेऽस्या विशेषविज्ञानमभूत् । अन्ययापि भगवद्भावापनयाऽस्यां सखीत्वज्ञानेन मिलनमन्यतो मिलनम् । तत्रापि पूर्ववत्तथा । नन्वग्रे पूतनास्तुपानकरणदशापन्नप्रभुभावापन्नैव पूतनायन्त्या एव स्तनमपिबदिति यथा, तथात्रापि कुतो न । तथा सति विशेषविज्ञानासम्भव इत्यत आहुः **कृत्रिमत्वादिति** । अग्रे लीलाविर्भावस्य वक्तव्यत्वाद्यादृशी लीला तादृश्येवाविर्भवतीति सर्वमुपपद्यते । प्रकृते तु प्रियादर्शने सत्युत्कटभावेन प्रियमात्रस्फूर्त्या स्वस्मिन्नपि तत्त्वेन भानमिति कृत्रिमत्वमस्य । एवं सत्यनेनैव भावेन यदोक्तन्यायेनान्यज्ञानं तदा तिरोभावस्फूर्तिरित्यर्थः । बहिःसंवेदने सत्यपि मादकद्रव्यस्वभावादुन्मत्तो विवेकरहितो भवति, एवं विरहभावस्वभावजवैकल्यात्तथेत्याशयेन तत्रापि न सर्वात्मनेत्याद्युक्तम् ।

**आकाशवदन्तरमित्यत्र** । **शुको** हीत्याद्याभासमारभ्या**यमपी**त्यन्तम् । अत्रायं भावः । 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति भगवद्वाक्यात् भक्तिमार्गे ज्ञानं प्रतिबन्धकमिति मन्तव्यम् । युक्तं चैतत् । आत्मत्वेन भगवज्ज्ञाने तद्दिदृक्षादिजनितार्त्यसम्भवेन प्रभुप्रादुर्भावासम्भवात्सर्वस्वनाश एव यतः । एवं सति यत्र कालादिनियन्तृत्वज्ञानात्मकप्रतिबन्धके सत्यपि कंसादिभयज्ञानरूपः स्नेहकार्य एव देवक्यां जातः, तत्र प्रतिबन्धरहितानां स्नेहमात्रकार्यसम्भव इति किं वक्तव्यमिति कैमुतिकन्यायः सूच्यते । किञ्च । तत्र देवकीधर्मरूपं ज्ञानं प्रतिबन्धकत्वेनोक्तम्, अत्र तु विशेषणेन भगवद्धर्मस्तथोक्तः । एवं सति यत्रायमेव न प्रतिबन्धकः, तत्रान्यस्य का वार्तेत्यपि ज्ञापनायेदं विशेषणम् । तथा च हेतुसत्त्वेप्युक्तज्ञानाभावेन भक्त्युद्रेकः सूच्यते । एतदेवोक्तं **तासामज्ञानकथनार्थमित्यनेन** । शुकस्यैवं ज्ञानाभावे

त्वेतत्कथनेप्यशक्तिः स्यात्, जीवनं वा न स्यादिति शुकज्ञानोक्तितात्पर्यं वेदितव्यम्। अपरञ्च। सर्वेष्वित्यादिपदमनुक्त्वा नपुंसकलिंगभूतपददानेन प्रभौ च पुरुषत्वोक्त्या यथा षण्ढस्य पुरुषनैकट्ये रसोत्पत्तिर्न, किन्तु स्त्रीणामेव। तथा प्रभुसान्निध्येपि भूतानां रसानुत्पत्तिः, एतासां तदुत्पत्तिश्च युक्तेति ज्ञाप्यते। तेनैतासामेव प्रभुरसाभिज्ञत्वमित्युक्तं भवति। एतावान्परं विशेषो, बहिःसम्बन्धे विलक्षणो भाव उत्पद्यते, अन्तरेव सम्बन्धे तु विलक्षण इति। कात्यायनीस्वरूपनिरूपणप्रस्तावे कथितं स्त्रीत्वमत्र विवक्षितमतो न शंका कापि। अपरञ्च। भगवति दृष्ट एवासां बहिरिदमन्तरिदमिति ज्ञानम्, अधुना तदभावेन तयोरप्यभावादप्यन्तरननुसन्धानमुचितम्। परन्तु प्राप्तिरपेक्षितेति यत्र कुत्रचित्प्रश्न इत्याशयेन बाह्याभ्यन्तरेत्यारभ्य पृच्छन्तीत्यन्तेनोक्तम्। सर्वत्रैव विद्यमानमित्याद्यविशेषणतात्पर्यम्। 'पुरि हृद्याकाशे शेत' इति व्युत्पत्त्या आत्मनीत्यादिद्वितीयविशेषणस्य। यद्वा। प्रकरणाद्भक्तिमार्गाद्भगवता ये बहिर्भाविता जीवास्ते बहिर्भूतपदेनोच्यन्ते। तथा च तेष्वेवाकाशवन्निराकार इवाप्रत्यक्षतयैव सन्तं तत्राप्यन्तरमेव न तु कदाचिदपि बहिःप्राकट्येन। वस्तुतस्तु भक्तिमार्गीयेषु पुरुषत्वेन साकारं बहिःप्रकटं भर्तृरूपमतो बहिर्विचयनमेवोचितम्। न हि स्त्रीणां स्वभर्तुरन्तरन्वेषणमन्तःस्थितिज्ञानं वा स्वास्थ्यहेतुः, पुरुषार्थाय वा भवतीति मूलार्थः।

**नन्दसूनुर्गत** इत्यत्र। **प्रभुपुत्र इति न ज्ञात** इति। चोरत्वेन न ज्ञात इत्यर्थः। प्रभुपुत्रो यतो न चौर्यं करोतीति भावः। **प्रेमहासावलोकनै**रित्यत्र। **तमो रज** इत्यादि। यस्य यादृशं मनस्तस्य तादृश्यैव रीत्या तद्धरतीति भावः। १०-२७-५.

**तुलस्यास्तदुभयमिति**। पुष्पकृतः फलकृतश्च यो द्विविधविनियोगस्तदुभयं नास्तीत्यर्थः। १०-२७-६.

**कच्चित्तुलसीत्यत्र। सा चेत्यादि।** पूर्वं हि भक्तात्वेन निष्कामा निरन्तरं चरणारविन्दमेव सेवमाना स्थिता, लक्ष्म्यादीनामप्यत एवैषा पूजासाधनमन्यथा सपत्नीत्वं ज्ञात्वा तथा लक्ष्म्यादयो न कुर्युः। तथा सति नायिकात्वे यो रसः स नानुभूतो भवतीत्यस्मद्रीतिमज्ञात्वा तूष्णीं तिष्ठतेति मत्वा तथाहुरित्यर्थः। **अस्मदा**द्यपेक्षयेति। अवस्थाविशेषकृतदैन्याविर्भावज्ञापनायैवमुक्तम्। अन्यथा सपत्नीत्वं ज्ञात्वापि नेमां पृच्छेयुरिति भावः। १०-२७-७.

**याह्नुं प्रियांस** इत्यत्र। **समतया गमनेनेत्यादि**। यद्यपि चरणचिह्नादर्शनेपि भगवद्भावस्वभावादेव तल्लीलास्फूर्तिः सम्भवति, अत एवालिषु तुलसिकासम्बन्धित्वोक्तिः, तदनुसारेणाग्रे गमनाभावश्च, तथाप्यधुना प्रियदर्शनवता ज्ञापितः प्रियः शीघ्रं प्राप्स्यत इति ज्ञात्वा प्रश्नपरा इति, तत्राप्युन्मत्तदृष्टान्तस्योक्तत्वादस्यनवहिता इति १०-२७-१२.

१ विविधो विनियोग इति पाठः। द्विविधविनियोगः स्यादपि।

चिह्नदर्शनेपि तन्मार्गेण न गताः । किञ्च । यथा सहभूताया अपि स्वामिन्याश्चरणचिह्नादर्शनं पूर्वं पश्चाच्च दर्शनं तथेहाप्येकत्रैकदा पददर्शनं, नाग्रे । तीक्ष्णभावशान्त्यर्थमेव पदचिह्नानां दर्शितत्वात्तस्य च तावतैव शान्तेः । अग्रे तु भगवदावेशकार्यत्वेन वक्ष्यत इत्याशयेनाचार्यैरेवमुक्तम् । पदचाञ्चल्यज्ञापितालिनिवारणयत्नेनैव गृहीतपद्मत्वं ज्ञायते । तेनांजसा तदपीडनेन च तत्सम्भवात् । मदस्य संगाभावहेतुत्वमनुभूयते । तेषां च समदानामपि संगे मर्यादामार्गीयभक्तिरसजनित एव मदो भवितुमर्हतीति तुलसीसंबन्धकथनम् । अनवसरेपि गमनान्मदान्धतोक्ता । एवं रसासक्तस्येतरानुसन्धानासम्भवात् स्वमिलनं दुर्लभं जानन्ती तरुप्रणामं चेदनुसन्धास्यत्यस्मिन्नपि समये तदास्मानपि कदाचिदनुसन्धास्यतीत्याशयेन प्रश्नं चक्रे । अन्यथाऽलीनामन्धत्वनिरूपिकायास्तरुप्रणत्यभिनन्दनं प्रश्नोऽनुपपन्नः स्यादिति भावः ।

**लीला भगवतस्तास्ता** इत्यस्याग्रे । **भक्त्यातिमत्ता** इत्यादि । एतासां प्रियेस्नेहसाम्येपि क्वचिद्भगवद्भावे क्वचित्पूतनादिभावे हेतुमाहुः **भक्त्येत्यादि** ।

१०-२७-१४.

नायिकाभेदेन हि भावभेदः । एकस्या अपि समयादिहेतुभेदेनापि तथा । एवं सति भगवल्लीलातत्सम्बन्धिनां मध्ये यस्या यदा यादृग्रूपस्य यस्य स्मृतिस्तस्यास्तदा तदात्मकत्वं विशुद्धभावत्वाज्जलादिसम्बन्धिस्फटिकस्येवेति प्रघट्टकार्थः । तथा च भगवन्मात्रज्ञानमतिमत्तत्वम् । तत्सम्बन्धिनामपि ज्ञानमीषन्मत्तत्वम् । लीलासम्बन्धिनां येषां ये भावास्तदात्मकतायां ते भावा अपि स्वत एव भवन्तीति ज्ञापनाय **रोषत** इत्यादिना तदुद्देशः कृतः । भावेषु दृष्टान्तेन वैजात्यज्ञापनाय **सत्त्वाद्युक्तिः** । ननु तथापि भगवज्ज्ञानं विहाय पूतनादिज्ञानं यत्र, तत्र ततो न्यूनभावता गम्यते, तत्र हेतुरपि वक्तुं न शक्य इत्यरुच्या पक्षान्तरमाहुः **अतो न न्यूनभाव** इति । हि यस्माद्धेतोः शकटादिभिराविष्टा अतो न न्यूनतेत्यर्थः । अत्रैवं ज्ञेयम् । अत्र तापलीलाभगवतामन्योन्योपमर्दकभावेनाविर्भाव इति पूर्वमुक्तम् । सपदि तु लीलाया आविर्भाव एतासूच्यते । सा च भगवत्कृतितत्सम्बन्ध्यात्मिका विशिष्टा, न त्वन्यतरमात्ररूपा । तथा च यदंशो यत्राविर्भूतस्तत्र स एवांश उच्यते, अन्यथा पूतनासुपयःपानसामयिकदशापन्नभगवत्स्वरूपभावापन्नैव पूतनायन्त्याः स्तनं कथं पिबेत् । पूतनायन्ती च तस्यामेव पूतनावत् कथमाचरेत् । अतो न क्वापि कुतश्चिन्न्यूनतेति सारम् । अस्मिन्पक्ष एका लीला यत्राविर्भूता तत्र न द्वितीयेति सिध्यति । तथा सति चिरं विलासोयं न स्यादिति पक्षान्तरमाहुर्भगवद्भावापन्नायाः सकाशात् पूतनोलूखलादिभावापन्ना उत्कृष्टा इति ज्ञापनाय **सर्वत्रेति** । अत्युत्कटविरहभावेनातिदीनतया कथञ्चिच्चरणसम्बन्धं वाञ्छन्त्यो यत्र तत्सम्बन्धः पूर्वमनुभूतोस्ति तद्वदाचरन्ति। मयि चेन्न चरणं स्थापयति, तदा पूतनोलूखलादिबुद्ध्यापि वा स्थापयत्विति भावेन अत्यार्त्यैव सर्वत्र भगवद्बुद्धिः । अतस्तस्य प्रकर्षेण सिद्ध्यर्थं तथेत्यर्थः । **पुनरिति** पदादेकस्यां लीलायामनुकृतायामप्युक्तरीत्यार्तौ पुनरुलूखलादिभावोपि भवतीति ज्ञाप्यते । एवं सति भावप्राचुर्यादत्रोत्कर्षः सिद्ध इति भावः ।

**कस्याश्चित्पूतनायन्त्या** इत्यत्र । अन्या अहं कृष्ण इत्युक्तवतीति । यद्यप्यत्रोक्तिप्रयोजनं नास्ति, पूतनासुपयःपानदशाया मुक्तिप्राकट्याभावाच नैवं सम्भवति । तथापि यथा तदा पूतना मां गृह्णात्वन्यथा तु कार्यं न भविष्यतीति भगवदिच्छा स्थिता, तथा कृष्णत्वेनेयं मां जानात्विति कृष्णायन्त्या अपि तदेच्छासीदिति ज्ञापनपरा तदुक्तिरिति ज्ञेयम् । **तस्यास्त्वित्यादि** । अत्र मुख्योपपत्तिर्भावनयैवाविर्भूतेत्यादिना पूर्वमेवाचार्यैरुक्तेति सर्वमवदातम् ।

१०-२७ १५.

**तत्रैकोवाचेत्यत्र** । **चिरहेण दावाग्निं दृष्टवतीत्यादि** । अत्रेदमाकूतम् । भगवता यदेयं लीला कृता, तदा पूर्वं गोपैर्दावाग्निर्दृष्टः, ततः प्रार्थितः प्रभुः, अत्र कथं तद्वैपरीत्यमुच्यत इति शंकानेन निरस्यते । अतिविगाढमावत्या एव भगवद्भावो भवति । तादृश्या एव च हृदये विरहाग्निः प्रकटो भवतीति सैव स्वामिनी तं दृष्टवती । तदेतदुक्तं **चिरहेणेत्यादिना** । तदा पूर्वं ततः पालनमेव कृतमित्यधुनापि स्वामिन्या रक्षैव सम्पन्नेति भावः । अथवैतस्या एवैतल्लीलाभावनाभूदिति सैवोक्तवतीत्याहुर्**भावनया चेति** ।

१०-२७-२२.

**यातायां नन्दसूनुनेत्यत्र** । प्रभोः सह भावोक्त्या गौणत्वेन सूचितमर्थमाहुः **तयैव प्रायेणेति** ।

१०-२७-२७.

**भगवान्हरिरीश्वर** इत्यत्र । **वैलक्षण्यज्ञापनार्थमिति** । तादृशं कर्म स्वकृतमिति स्वदोपज्ञाने मात्सर्यजं दुःखं न भवतीति तथेत्यर्थः । **तुल्यफलत्वेनेति** । यादृक्कर्म तादृगेव फलमिति तुल्यफलकं कर्म भवति । तथा च यथास्मास्वपि कर्मवैलक्षण्येप्यस्मान् भक्तिमार्गेऽङ्गीकृतवानिति सा च तुल्येति तुल्यं फलं कृतवान्, तथा चेत्तामप्यङ्गीकुर्यात्तदास्मत्तुल्यैव भवेत् । तस्यामाराधनवलल[1]क्षणं कर्माधिकमस्तीति तां तन्मार्गे कुतोऽङ्गीकृतवानित्यर्थः । गोविन्दपदतात्पर्यनिरूपणे **साधारणेन्द्रोपीति** । यद्यपि 'इति गोगोकुलपतिं गोविन्दमभिषिच्य चे'ति वाक्यात् साधारण्येन सर्वस्यैव गोकुलस्येन्द्रः, न तु विशेषेणैकस्य कस्यचित् । अतस्तादृशस्यास्मदपेक्षया विशेषेणैकस्या भोगोचितः, तथापीश्वरत्वात्तथोपपद्यत इति भावः ।

१०-२७ २८.

**धन्या अहो** इत्यस्याभासे । **स्वभाग्याभिनन्दनमपीति** । चरणसम्बन्धाद्रेणूनां धन्यत्वोक्त्या स्वस्यापि तथात्वात्तथात्वमायातीति तथा ।

१०-२७-२९.

**रेमे तया चात्मरत** इत्यत्र । **पुष्टत्वात्कामस्येत्यादि** । यथा प्राकृतः कामी महानपि केवलं स्वार्थपरः सन्स्वयं यदि सुखी भवति तदा स्वकृतेपि दुःखिनं नानुसंधत्ते तथा । यथात्मारामत्वलक्षण स्वधर्ममप्यतिक्रान्तवांस्तयाऽस्मद्दुःखमप्यविचार्य स्वार्थमेवैतावत्सम्पाद्योद्भटभावः स्वयं तादृश्यैव तया च रेम इत्यर्थ

१० २७-३४.

[1] आराधनलक्षणमिति पाठः ।

इत्याशयेनोक्तं **पुष्टत्वादि**त्यादि । तथा च स्वधर्माविचारकस्य परधर्माविचारे किमाश्चर्यमिति भावः । एवं सत्यात्मरत इत्यस्य स्वार्थपरत्वमर्थः पर्यवस्यत्यतो न पौनरुक्त्यमिति ज्ञेयम् । एवं सकामत्वेपि न निष्कामताक्षतिरिति ज्ञापनायात्मारामत्वोक्तिरित्याशयेनाहुर्**निष्काम एवे**त्यादि । प्रकारान्तरेणाप्यपौनरुक्त्यमित्याशयेनात्मरतत्वं प्रकारान्तरेणाहुः **रसाधारत्वाये**ति । अत्रेदमाकूतम् । रसात्मकत्वाद्भगवतस्तस्य च स्थायिभावात्मकत्वात्तमेतस्यां प्रकटीकृत्य रेमे । अन्यथैतद्रसानुभवासम्भवात् । न तु प्राकृतभावे सतीति । यद्वा । **आत्मरत** इत्यत्रात्मपदं स्वामिनीवाचकम् । तथा **चात्मारामोऽपि** तयात्मरतः कृतो रेमे । चकाराद्विशेपरमणं विविधबन्धादिविशिष्टमुच्यते । तथा सति नखदशनादिकार्यसम्भवेनाप्रखरत्वशंका स्यात्, तन्निरासायाहुरस्खण्डित इति । यथा तस्यां रतोप्यात्माराम एव तथा दशनादिभिः खण्डितोप्यखण्डित एवेत्यर्थः । **कामिनां दर्शयन्दैन्यमि**त्यत्र । **कामिनस्त्वि**त्यारभ्य **एवं रेम** इत्यन्तम् । अत्रायमर्थः । पूर्वमात्मारामत्वोक्त्या तादृशोपि सन्यन्नायिकाधीनत्वमेवं भजते, तेन रसात्मको रसवांश्च भगवानेव, अन्ये तु कामिनो रसाभासिनो मलपूर्णे वस्तुन्यासक्त्या बीभत्सरसपूर्णा भ्रान्ताः सन्तस्तादृशीष्वेव दैन्यमात्रं फलं लभन्त इति ज्ञाप्यते । किञ्च । आत्मारामोपि यद्रसपरवशस्तत्रैव रसभरवशेन मानादिकं भवति, अन्यासु तु रसाभावान्न स मानः, किन्तु दौष्ट्यप्रकटनमेवेति । एतेनात्मारामस्यापि प्रभोर्यत्र रतिस्तत्रैव रसो नान्यास्विति फलितम् ।

**यां गोपीमि**त्यत्र । बहिःप्रियसम्बन्धेन्तरायहेतुत्वेन माने दोषत्वोक्तिर्विवृताविति ज्ञेयम् । समानरसत्वेप्येतासां तदा मानोभून्नैकत्र । तत्राप्यधुना सोभूत्, तत्र हेतुमाहुः **स्वगत्ययुक्तकरणा**दिति । नायिकानां हि प्रकृतिः सदा मानिनीत्वम् । प्रकृते चेयदवधि नायकाधीनत्वमेवाङ्गीकृतमिति स्वस्यापि नायिकाप्रकृतेर्या गती रीतिस्तस्यामयुक्तकरणान्नायकाधीनत्वेन स्थितेर्नायिकाप्रवृत्तिनिवृत्तिहेतुत्वेनाधिकारिण इवाधिकारिणो ये, आदिपदात्प्रौढा भावास्ते पूर्वभावान्कोमलान्नाशयामासुरित्यर्थः । **स्वयं त्वयुक्ते**ति पाठे स्वयंपदं स्वामिनीपरम् । शेषं पूर्ववत् । ननु पूर्वमेवास्या अपि स्वामिन्या मानः कुतो नाभूत्, रसप्राप्तेस्तुल्यत्वादिति चेत्, उच्यते । भगवान् हि भक्तेभ्यो भजनानन्दं दातुं लीलां करोति, स्वस्य तद्रसानुभवार्थं च । तथा च बह्वीष्वपि प्रियासु सतीष्वेकस्यां पृथङ्नयनेन विशेषरमणे यो रसस्स न सम्भूय रमणे । स च स्वरूपात्मक एवेति तत्स्वरूपं प्रकटीकृतवानिति न काप्यनुपपत्तिः । पूर्वं मानाभावे स्वामिनीभिरेव हेतुरुक्तोऽनयाराधित इत्यादिना ।

१०-२७-३५.

**ततो गत्वे**त्यस्याभासे । दोषाभावेनैवेत्यादिना दृप्तत्ववक्तुस्तात्पर्यमुच्यते । शक्तौ सत्यामपि प्राकृतकामिवत्कामाधीनत्वेन स्ववशत्वज्ञानेनाशक्तिख्यापने स्वस्कन्धेनापि नेष्यतीति ज्ञानं भ्रमः । यथा भगवद्रमणे दोषभावासम्भवा-

१० २७-३७.

द्भगवद्भावात्मकावेव सौभाग्यमदमानाविति 'तासां तत्सौभगमद'मित्यत्र निरूपितम्, तथा प्रकृतेपि प्रियाधीनत्वभावेनात्र रसो दत्त इति स एव भावोत्राजनि, न तु दोपरूपः। स एव हित्वा गोपीरित्यनेनोक्तः। एवं सत्यत्र विप्रयोगात्मकरसाननुभवे पूर्णरसदानं न भविष्यतीति ज्ञात्वा प्रभुः संयोगरसदित्सासंकोचमकरोत्। अयमेव भावः क्रियाशक्तिसंकोचप्रकाशको **न पारयेहं चलितुमित्यनेनोक्तः**। अन्यथाऽनृतवादित्वं स्यात्। न हि भगवन्तं प्रति तदीयानामेवं सम्भवति। स त्वतिपूर्णरसाविर्भावेन स्तम्भरूपः सात्त्विकभावो भवितुमर्हति। इसत्वं ह्यमर्यादत्वम्। तथा चोक्तरीत्या निरवधिरसदातुस्तत्संकोचेच्छा रसमार्यादिकी न भवतीति तद्भावोदयोत्र इसापदेनोक्तः। रजस्तमोऽधिष्ठात्रोरपि तज्ञं भावं दूरीकृत्य अमृतदातेत्यत्रापि पूर्णरसदानार्थमेव तद्भावजननं स्वतिरोधानं चेति ज्ञापनाय केशवपदोक्तिः। एवं सति पर्यवसानतो रसमार्यादिकीत्वमप्युक्तेच्छाया ज्ञायते। प्रियो त्विमं वृत्तान्तमजानन्ती पूर्ववदेव प्रियः करिष्यतीति ज्ञात्वा 'नय मा'मिति क्रियाशक्तिं प्रार्थितवती। परन्तु यत्र ते मन इत्यज्ञात्वाप्युक्तेर्भगवन्मन उक्तकार्येस्तीति पूर्ववत्क्रियोद्गमस्याशक्यत्वादुभयोः प्रभुरशक्यमेवोपदिष्टवान्प्रियायाः स्वस्कन्धारोहणम्, न तु स्वस्य। अग्रिमरसदित्सया प्रभुः स्वहार्दं न ज्ञापयतीति प्रिया प्रियस्कन्धमेव बुद्ध्वा तथैव कर्तुमुद्यताभूत्। तदा प्रभुस्तथाकरोत्।

एतत्सर्वं हृदि कृत्वाचार्यैरुक्तमेषा **हि नृत्यमित्यादि**। नटो हि नृत्यचेष्टया स्वान्तःस्थं रसं द्रष्टारमनुभावयति। एतद्धर्मसाम्येनात्रापि नृत्यपदप्रयोगः कृतः। एतदेव विवृतं स्वान्तरित्यादिना। पूर्वं प्रभुणा सर्वथा तदधीनत्वेन रसो दत्तः। सोऽन्तःप्रियाया अस्तीत्यधुना स्वयं तं रसं प्रियमनुभावयितुं वाकृती प्रकटयति। १०-२७-३८. तथाशक्यम्, भक्तस्नेहेनैव तद्वशीभूतस्तथा रमते, नत्वन्यथापि। प्रकृते हि 'न पारयेह'मित्यादिस्तेहरीतिविरुद्धम्। यद्रसमार्गाविरुद्धमिति तथा कर्तुमुचितं भवतीत्युच्यते। तत्र साधीयः। तथा सति रसस्याभाव्येन प्रियान्तःस्थरसच्युतेः किं प्रियमनुभावयेत्, अग्रिमरसदानप्रतिबन्धश्च भवेत्। इदमेवोक्तं **तद्भूमावित्यादिना**। एतदर्थस्तु। तत् उक्ताभिनयनम्। **भूमौ** स्वान्तर्लक्षणस्थानं त्याजयित्वा बहिःस्वप्रौढ्या तत्प्रकटने न सम्भवतीति शेषः। तत्र हेतुरूर्ध्वभावेत्यादि। स्वान्तर्गुप्तो हि रसामृताब्धिरुत्तरोत्तरं भावतरङ्गाननुभावयति। इदमेवोर्ध्वभावत्वम्। स एव बहिः प्रकटितो रसत्वादेव बहिर्भवति। अतोयमेवोर्ध्वभावाभावः। च्युतः स्वरूपत एव नष्टो भवेदिति यावत्। अलौकिकरसाभिनयनम्। विरहेणार्त्यादिप्रकटनं तल्लौकिकरीत्या स्वाधिक्यज्ञापनं **भूमौ पदस्यापनम्**। त-

१ ततो भोगस्थानेत्यादिमन्यतात्पर्यमाहुः एवं सतीत्यादि। २ एषा हि नृत्यमित्यादिमन्यतात्पर्यमाहुः प्रियेत्यादि। ३ संयोगविप्रयोगयोरित्यर्थः।

स्मिन्सति तत्र सम्भवतीत्यर्थः। अशक्ता चेदिति। 'यत्र ते मन' इति प्रौढ्या, न तु प्रार्थनरीत्या, सख्येन कथं वदेदित्यर्थः।

( एवं सति भंग्यन्तरेणाप्येतद्व्याकृतिः सम्भवति । तथा हि। भगवता ह्यस्यै प्रियायै पूर्णः स्वरसो दत्त इति भगवन्निष्ठा भावाः सर्वे हृदि स्फुरद्रूपा जाताः। तथा च सर्वत आधिक्यमपि स्वस्मिन् स्फुरितम् । तदुक्तं हित्वा गोपीरित्यादिना। एवं सति द्वितीयरसलीलाचिकीर्षा यदाभूत्सापि हृदि स्फुरिता । तामविपद्यां मन्यमानापि न कातरा जाता । किन्तु पूर्वरसगरिम्णा दृढा सती प्रियमब्रवीत् । एतदेव दृप्तापदेनोक्तम्। दुग्धगुणव्याप्तयोरप्यमृतं ददाति । अहं त्वेतद्गुणैरेव पूर्णेति अवश्यं सुखमेव दास्यति, न दुःखमित्यभिप्रायज्ञापनाय केशवपदम् । ततो भोगस्थानादग्रे वनसम्बन्धिनमुत्कृष्टं देशं स्वयं स्वेच्छया गत्वा, न तु प्रियेण नीता। गत्वाऽब्रवीदित्युक्त्या प्रियनैकट्यं ज्ञाप्यते। तेन तदधीन एव प्रियस्तत्संगे गत इति ज्ञापितं भवति। अथवा। वनमित्युद्देशो नाममात्रम्। वस्तुतस्तु महारसनिधानम्, तेन रसोद्दीपकमित्युक्तं भवति। एतादृशे वने मद्वियोगेन मां विचिन्वन् यदि प्रियो भवति, तदा कीदृशो रसः स्यादित्याशयेनाब्रवीत्। अत एव दृप्तात्वमुक्तम्। पूर्वरसातिमदात्तथा चेत्करिष्यतीति तदाहं चलितुं स्पन्दितुमपि न पारये, जीवनमेव न संपत्स्यत इति भावः। एवं चेत् किं कर्तव्यमित्याकांक्षायामाह नयेति। यत्र स्वान्तर्धाने ते मनस्तत्रान्तर्धाने मां नय, तिरोहितां मां कुरु, त्वं मा तथा भवेत्यर्थः। प्रियस्त्विदमत्यशक्यमित्याशयेनोत्तरयति स्कन्धेत्यादिना। यथा स्वस्कन्धारोहणमशक्यम्, तथा मत्तोऽन्तर्धानं भवत्याः । न हि पूर्णज्ञानशक्तेरविषयः कोपि भवितुं शक्नोति। यद्यपि विरुद्धसर्वधर्माश्रयत्वेन रसात्मकत्वेन च जानन्नेवाजानन्नपि भवितुं शक्नोतीत्येवमुत्तरं न सम्भवति, तथाप्यत्रातिप्रीतिविषयत्वेन तं धर्मं प्रकटयितुं न पारय इति भगवदाशयज्ञापनाय प्रियापदमुक्तम्। उत्तरदानमप्यत एव। अन्यथा त्वेवमुक्तस्तूष्णीं तिष्ठेत्तिरोधीयेतैव वा। प्रियात्वान्ममाशक्यं भवत्यास्तिरोधानम्, तत्सामर्थ्याभावाद्भवत्याः स्वतस्तिरोधानं तथेति भावः। एवं सति प्रियया प्रार्थितं देयं यद्यपि, तथापि प्रियात्वेन स्वाशक्यमिति लक्षणो यो हेतुस्ततो हेतोः स्वयमेव तथाऽकरोदित्याह ततश्चेति। एवं करणे प्रभुनिष्ठं हेतुमाह कृष्ण इति। अस्यां दशायां हृदि प्रकटः सन्नेवानन्दात्मकतद्रसपोषको यत इत्यर्थः।) इति सप्तविंशोध्यायः।

अष्टाविंशाध्यायार्थोक्तौ। स्वभावादपराधत इति। तदवस्थाया एव स्वभावो यद्गुणगानमेव भवत्येव। अतस्तत्स्वभावादेव गानं चक्रुरिति सम्बन्धः।

१०-२८-०. पक्षान्तरमाहुरपराधत इति। भक्तेभ्योपि स्वस्मिन्नाधिक्यज्ञानलक्षणमपराधं प्राप्यास्मान्यदि प्रार्थयिष्यति, तदा रसं दास्याम इति मानलक्षणा कृताऽवज्ञा यामि-

१ भगवतः। २ स्वस्कन्धारोहणवदन्तर्धानमित्यर्थः।

स्तादृश्यो यतोऽतः स्तोत्रं चक्रुरित्यर्थः । अवज्ञयाऽप्रसादे स्तोत्रेण प्रसादो भविष्यतीति तथेति भावः । यद्वा । स्वभावाद्रसस्वभावाद्योपराध इत्यग्रे पूर्ववत् । स्तोत्रमिति गानविशेषणम् । तथा च स्तोत्ररूपं गानं चक्रुरित्यर्थः । अग्रे गुणकथनं भाववैजात्यज्ञापनार्थमिति ज्ञेयम् । गूढाभिसन्धिना पक्षान्तरमाहुः **अथवेति**। प्रार्थनाश्च ता आद्याश्च प्रार्थनाद्याः याः प्रथमद्वितीयतृतीयपञ्चमषष्ठसप्तमाष्टमश्लोकैः कृताः, अन्ते त्रयोदशचतुर्दशाभ्यां च सान्निध्यात् कुमारिकाभिः कृताः । अन्ये तु प्रौढाभिरुक्ताः श्लोकाः। चतुर्थ्यो गुणातीतभावापन्नाः कोमलभावा इति यावत् । अतस्तथा श्लोकसंख्येत्यर्थः। ननु 'तदागमनकांक्षया जगु'रिति वचनाद्यथा मानेनापराधाद्वतः, तथा स्तोत्रेण सन्तुष्ट आगमिष्यतीति भावो लक्ष्यते, एवं सति दोषारोपादिरनुपपन्न इत्याशंक्य गूढाभिसन्धिमुद्घाटयन्तः स्तुतिस्वरूपमाहुः **तत्तदिति**। स्तुतिर्हि यथाधिकारं भवति । एतासामेतादृश एवाधिकारो येन कुहककितवादिवचनानामपि स्तुतित्वम् । अन्यथाग्रे तथानुवदिष्यंस्तदागमनकांक्षया जगुरिति न वदेत् । न ह्येवं ब्रह्मादिभिरपि वक्तुं शक्यम्। तथा च स्वस्वभावोद्गिरणे तच्छ्रवणेन प्रभोः परमसन्तोष इति तासां भाव एव निरूप्यत इत्यर्थः । विपक्षे बाधकमाहुः **अन्यथेति** । यद्यन्यस्तुतिवदत्रापि स्तुतित्वमेव स्यात्, न भावमात्रनिरूपणम्, तदोपालम्भादिप्रकारैरनेकरूपता स्तुतौ न सम्भवतीति सा नोच्येतेत्यर्थः ।

**सुरतनाथेत्यत्र** । (**सुरतं संभोग** इत्यादेरयमर्थः । रतं लौकिकं भोगशब्दवाच्यम् । तत्तु सृष्टिमारभ्य प्रवर्तते । तत्र न भगवदाज्ञापेक्षा । सृष्टिसमानयोगक्षेमत्वात्तस्य । एवं सति सुष्ठु अलौकिकं शोभनरूपं यत् रतं तत्

१०-२८-२.

सम्यग्भोगशब्दवाच्यम् । तदस्मास्वेव त्वदाज्ञयेच्छयेति यावत्, तयैव प्रवर्तते । यतो जगत् लौकिकम् । गच्छति, नश्यत्येव, न तु स्थिरम् । अतोऽत्यलौकिकं स्वरूपानन्दरूपं तत्र प्रकटीभवितुं नार्हति । एतादृशस्य तस्य भवानेव नाथः । प्रवर्तको रक्षकश्च । एवं सति स रसश्चेत् त्वय्येव निरुद्धस्तिष्ठेत्, तदा त्वलौकिका अपि भक्ताः शून्यहृदया भवेयुरिति त्वदिच्छां ज्ञात्वा त्वां प्रार्थयित्वा तादृशीर्वयं प्रकटीकृताः, यतः प्रतिबन्धनिवृत्तिः । अत एवाग्रे 'विखनसार्थित' इति वक्ष्यते । कामो भगवदीयः । मनसः पूर्वरूपत्वात् वाच उत्तररूपत्वात् 'मनश्चक्र' इत्युक्त्वा 'जगौ कलं वामदृशां मनोहरम्' 'ता दृष्ट्वान्तिक'मित्यादिकं च वाग्रूपमलौकिकभावप्रवर्तकं स्वप्रियास्वित्याशयेनाज्ञापदमुक्तम् । 'मैवं विभोर्हती'त्यादिवाचां भगवद्भावात्मकत्वात्तासामप्याज्ञारूपत्वमित्याशयः । तैरेव वचनैः प्रतिबन्धनिवृत्तिरपि ।) **अतो ब्रह्मणेति** । अत्रायं भावः । 'ब्रह्मादयो बहुतिथं यदपांगमोक्षकामा' इत्यत्र भगवद्भावकामाः सन्तः साक्षात्तमलभमानाः श्रियो-

१ सृष्टिसमानकालीनत्वादिति पाठः । २ शून्यहृदया इति पाठः । ३ तादृश- इति स्यात् । ४ पेशस्कृत्परत्वादिति ।

पांगा भावोद्धारिणो निरन्तरं प्रियसंगतत्वेन तद्भावात्मकत्वं प्राप्ता इति तत्सम्बन्धे तदनुभावेन कदाचित्स भावोपि भवेदित्याशया तत्कामास्त्वपश्चरन्तीति निरूपितम्। प्रकृते च स्वयं प्रभुः प्रकट इति तन्मार्गप्रकटनार्थं द्वारभूता वयं तेन प्रकटिता इति। अत्र सुरतशब्देन सुष्ठु भगवता समं रतं येनेति भगवद्भाव एवोच्यते, न तु सम्भोगः, तस्यापाम-रमनुवर्तमानत्वेन स्वदाङ्गेत्यादिना नाथत्वविवरणं यत्तदनुपपत्तेः। एतन्मार्गप्राकट्येन ब्रह्मणो न कोपि भावः सिद्ध इत्यरुच्या पक्षान्तरमाहुः **कामेन** चेति। भगवदीयभाव-रूपेणेति ज्ञेयम्। स्वामिनीदर्शने हि भगवतो भाव उद्रिक्तः सन् कामकार्यं करोत्यतस्तेनैव स्वार्थं वयं प्रकटीकृता इत्यर्थः।

**सख उदेयिवानित्यत्र**। **पूर्वमपि सखा यथेच्छमित्यादि**। 'सुपर्णावेतौ सयुजौ सखाया'विति श्रुतेरन्तरात्मा जीवस्य सखा भवति। प्रकृते च स्वरमणेच्छामनतिक्रम्य तदनुरूपमेवास्मान्प्रेरयसीत्यर्थः। अत एवास्माकं नायिकाभाव एव सार्वदिक इति भावः। एतादृशस्यागमनं नायिकायै स्वसमर्पणार्थमेव भवतीति तदेव कर्तुमुचितमिति भाव इत्याशयेनाहुः **आगतस्येत्यादि**।

१०-२८-४.

**दिनपरिक्षय** इत्यत्र **विप्रलपदतात्पर्योक्तौ**। **ज्ञानं वा भवेदिति**। भक्त्या-त्मकत्वात् मुखस्य स्नेहरसानुभव एव स्यादित्यर्थः।

१०-२८-१२.

**प्रणतकामदमित्यत्र**। **अथवा यल्लोक इत्यादि**। लौकिककामखण्डनैश्वर्य-स्वकामदानालंकरणापद्दूरीकरणात्मकं पञ्चविधमुपकारं करोति तच्चरणपङ्कजं तापनिवारणात्मकमेकमेवोपकारमस्मासु करोतित्यर्थः। **पद्मजैरर्चितमिति**। चरणपद्मजैर्नखैस्तथेत्यर्थः। लोके तेषां संयोगिद्रव्यत्वेपि भगवन्नखानां सच्चिदानन्दरूपत्वेन स्वरूपात्मकत्वेन तथा वक्तुमशक्यं यद्यपि, तथापि स्वस्याधुना चरणसम्बन्धेत्यार्त्या यदेव तत्सम्बन्धि, तदेव पूर्णसाधनमित्याशयेन तथोक्तम्। अस्मिन्पक्ष उपपत्तिमाहुरन्यथेति। उक्तारुच्यैव पक्षान्तरमाहुस्तत्तुल्यं चेति। तैरतिशोभा। अतस्तैश्चरणपद्मं पूजितमिव भवतीत्यर्थः। ध्वजादिचिह्नानि चोक्तरूपाणि ज्ञेयानि।

१०-२८-१३.

**रहसि संविदमित्यत्र**। **गुणत्रयसहितमिति**। मधुरत्ववल्गुवाक्यत्वबुधम-नोज्ञत्वलक्षणं गुणत्रयं ज्ञेयम्। रहसि संविदो ज्ञानानि येन वाक्येन तत्तथा। वाक्यनिरूपणे सति यादृशं तदस्ति तादृशमेव प्राप्यत इति गुणत्रयसहित-मित्युक्तम्। अथवा। कारणत्रयस्यैव विशेषणमिदम्। कारणोद्देशो वाक्यमित्यादिना कृतः। कामेत्यादिना गुणानां वन्वादिबोधकत्वेन वाक्यं कामोद्बोधकम्। हास्यमानन्दस्य। श्रीधामत्वेनोरसाधिकारिणो बोध्यन्ते।

१०-२८-१७.

एतावन्निरूपणेन भगवत्प्राप्तौ भक्तकृतसाधनस्य यावती पराकाष्ठास्ति, तावद्युक्ता

१०-२८-१९. जाता, भगवता च भक्तानां स्नेहपरीक्षायां क्रियमाणायां यावती तस्याः पराकाष्ठा, साप्युक्ता जातेत्युपसंहरन्ति **एवं साधनेति** । अत्र यावत्ताव-दित्यव्ययपदे । तथा चोक्तरीत्या साधनपरीक्षयोर्यावत्स्वरूपं तावद्रूपस्तापो निरूपित इत्यर्थः । **इत्यष्टाविंशोध्यायः** ।

**एकोनत्रिंशाध्याये । तासामाविरभूदित्यस्याभासे । ब्रह्मा विष्णु-** १०-२९-२. रित्यादि । अत्रेदमाकूतम् । आद्यब्रह्मकल्पे भगवानेव चतुर्मुखो ब्रह्माभूत्, तपश्च पूर्वं कृतवान् । स वाच्यवाचकतया 'भगवान् ब्रह्मरूपधृक् नामरूपक्रिया धत्त' इति वाक्या'च्छब्दब्रह्मेति यं विदु'रिति वाक्याच्छब्दसृष्टिमर्थसृष्टिं च कृत्वा तदेवानुप्रविश्य सर्वं कार्यं कृतवान्, स्वयं रजोरूपश्च । प्रकृते च पूर्वं रजोरूपमानरूपेणाविर्भूतः, ततस्तापरूपेण, ततो विविधगानप्रलापरूपेण, ततो विविधलीलारूपेण । विष्णुश्च विक्षेपरहितः शुद्धसत्त्वात्मको यथा यस्य पालनं भवति तथा पाति । प्रकृते च सखीवचनश्रवणानन्तरं स्वापराधहेतुकं गमनं प्रियस्य ज्ञात्वा चित्तविक्षेपं त्यक्त्वा पुनः स्वस्थानस्थिताः स्वजीवनार्थं स्वं स्वं भावं प्रकटीकृतवत्य इति तादृग्भावरूपेण प्रकटः । 'यदरोदीत्तद्रुद्रस्य रुद्रत्व'मिति श्रुतेः स्पष्टं रुद्रत्वम् । 'देवाः स्वधनमग्नौ निधाय संग्रामाय यदा गताः, तदाग्निस्तद्गृहीत्वा पलायितः, तदा देवा बलात्स्वकीयं धनमगृह्णन्, स तदा दुःखेनारोदी'दिति श्रुतावुपाख्यानम् । प्रकृते चादेयं रसं स्वं प्रभुः स्वामिनीभ्यो दत्तवान् स्वभोगार्थम् । स्वामिन्यस्तु मानेन स्वस्मिन्नेव तं रसं निरुद्धवत्यः, तदा मानेऽपहृतेऽतिदैन्यमाविष्कृतवत्य इति रुरुदुरित्युच्यते । यथा स सर्वनिरासकस्तथायं भावोऽखिलशास्त्रोक्तसाधनबलनिरासकः । यतः साधनबलस्फूर्तावेतदनुदयो भगवदनाविर्भावश्च, एतदुदये तत्स्फूर्तिनाशः प्रभोराविर्भावश्च । 'कृषिर्भूवाचक' इति वाक्यात्कृष्णशब्दवाच्यता यद्यपि सदैवास्ति, तथाप्येतद्भावोदयाव्यवहितोत्तरक्षणे यदि नाविर्भूयाद्, भक्तानां तदा देहादिसत्तैव न स्यात्, दैन्येनैवात्युपमर्दकभावेन प्राचीनसत्त्वनाशात् । अतः स्वयमाविर्भूय स्वस्वरूपात्मकं सत्त्वमानन्दं च तत्र स्थापयतीत्याविर्भूतस्य कृष्णतेति । **स्मयमानमुख्याम्बुज इत्यत्र । स्मयमानाभ्यां चेत्यादि** । न ह्येतादृशोऽन्योस्ति यस्य एतादृशा भक्ता इति स्मयः । अत एवैताश्चेत् मां प्रार्थयिष्यन्ति, तदाऽन्यस्या अपि मद्भक्तायेमं रसं दास्ये, अन्यथा तु मुक्तिमेवेति मानः । अत एवाम्बुजत्वमुक्तम् । तद्धि रविकिरणसम्बन्धादेव विकसितं सद्रसं प्रकटयति । अत्रैतत्प्रार्थनैव तत्स्थानीयेति भावः । **भक्तानां दोष इति** । विचारे क्रियमाणे भगवद्रसपानानन्तरमेव तादृग्भावोत्पत्तेस्तस्यैव स धर्म इति निश्चीयत इत्यर्थः । **अथवा व्यापिवैकुण्ठेत्यादि** । 'मया परोक्षं भजते'तिवाक्यात् श्रीकृष्णस्त्वेतासामेव निकटे स्थितः । एवं सति 'तं विलोक्यागत'मिति यदागमनकथनम्, तेन येन रूपेण तत्रास्थितिः पूर्वम्, तेन रूपेणागमनमित्यवश्यं वाच्यम्, तत्र स्थित-

सैव आगमनासम्भवात् । अतो येन रूपेणागमनं तद्रूपमुक्तं **व्यापिवैकुण्ठे**त्यादिना । व्यापिवैकुण्ठे हि पुरुषोत्तम एव, नांशः, व्रजे तु 'श्रयत इन्दिरे'ति वाक्याल्लक्ष्म्याः कदाचिदपि नावसरः । इदानीमेतन्मानापनोदनं तदार्तिनाशनं चैकदैव करिष्यन् लक्ष्म्या रमणं येन रूपेण करोति, तेन रूपेण कृत्वा तत्स्वरूपस्य एतदभिन्नत्वात् तान् धर्मान् प्रकटीकृत्य प्रकट इत्याशयेनागमनमुक्तम् । एवं सत्येतेषां धर्माणां पूर्वमसत्त्वात् तद्विशिष्टस्यापि तथात्वात्तादृशस्यागमनमुक्तं भवतीति भावः । **ननु कन्दर्पेणेति** **पृतनोक्ते**रिदमाकूतं ज्ञायते। पृतनया हि परपक्षनिरासः क्रियते। दुःखिता तु सा न तं कर्तुं समर्था । किन्तु सुखिता । स्वामिनीभिरपि सर्वात्मभावविरुद्धाः सर्वे भावा निरस्ताः । तथा च सर्वात्मभाववत्सु भक्तेषु दुःखसम्भवे मर्यादामार्गीया भक्ता अप्यस्मिन्मार्गे दुःखसम्भावनाराहित्यान्मोक्षादप्याधिक्यं न ज्ञास्यन्तीत्येतन्मार्गप्रवृत्तिर्न भविष्यतीति ज्ञात्वा कुतोऽतिरोधानं न कृतवानिति । तथा च कन्दर्पशब्दः सर्वात्मभावपरः । एतासां कामभावोपि सर्वात्मभावात्मक एवेति ज्ञापनाय कन्दर्पपदप्रयोगः । **स्वपृतना खिन्नेति** । भविष्यतीति शेषः । यद्वा । दैन्येनाविर्भूतो न तु हेत्वन्तरेणेतीममर्थं स्फुटं कर्तुमत्रापि लौकिकरीतिं जानतो भ्रान्तस्याशंकामनुवदन्ति **ननु कन्दर्पेणे**त्यादिना । साक्षादित्यनेनाद्यपक्षे समाधानमेवं ज्ञेयम् । अस्मिन्मार्गे मोक्षादाधिक्यज्ञानाभावः किं रसवार्ताभिज्ञस्यापाद्यते, उत तदनभिज्ञस्य । तत्रान्त्ये ओमिति ब्रूमः । आद्ये तु विवरणोक्ताध्यात्मिकमन्मथरसस्यैव यत्र विप्रयोगे महारसत्वमुच्यते, तत्र तस्यापि तद्रूपस्य विप्रयोगे महारसत्वेन ज्ञाने का शंका नामेति । द्वितीयपक्षसमाधानं विवरणे स्फुटम् ।

१०-२९-४. **काचित्कराम्बुजमित्यत्र** । **पूर्वमनेकविधा अपीति** । अनाविर्भावे चित्तविक्षेपादनेकविधत्वं पूर्वाध्याय उपपादितं वचनरीत्या । अधुना तु भ्रुभंगशब्दार्थं प्रकटीकृत्य स्वयमाविर्भूत इति ता अप्याविर्भूतस्वरूपैकनिष्ठा इति तदात्मिका जाता इत्यर्थः । एवं सति स्वरूपस्य रसात्मकत्वेन तद्धर्माणामपि तथात्वात् भ्रुकुटिबन्धनादिभावा अप्युपपद्यन्त इति भावः । **निर्गुणाश्च शिष्टा** इति । चकारात्तमस्सजातीयभाव उच्यते ।

१०-२९-५. **चन्दनरूषितमित्यत्र** । **एवं सामग्रीत्यादि** । एतास्वनुग्रहविशेषो ज्ञापित इति भावः ।

१०-२९-६. **एका भ्रुकुटिमाबध्येत्यत्र** । **तादृशभावस्येत्यादि** । पूर्वं मानमात्रं निरूपितम्, अधुना तु शतधापि मानापनोदनार्थं यत्ने कृते मानमहं न त्यक्ष्यामीति गाढमानो निरूप्यते। तथा हि। कालविलम्बेन हि मानः शिथिलो भवति, व्यभिचारित्वेनाचिरस्थायित्वात्। तथा चायं मानस्तथा यथा न भवति। गाढता तादृश्यैवास्य[1]

---

[1] गाढतादृशैवास्य इति पाठः, गाढतादृशैवेत्यपि पाठः ।

सार्वदिकी भवति । तथा कृतिरेव कालनियमनम् । प्रियवचनादिभिर्मानमवश्यं त्यजतीति नायिकास्वभावः, स मा भवतु, मानस्वभाव एव मम तिष्ठत्विति प्रयत्नस्तन्नियमनं स्वभावनियमनं नाल्पेन भवतीति संरम्भ उक्तः । मानस्य प्रियसंगमविलम्बहेतुत्वेन दुःखदत्वात् किमित्येवंकरणमित्याशंक्यैतद्विचारानुदयं तत्र हेतुत्वेन वक्तुमेतद्धेतुमाह विह्वलेति मूले। पूर्वानुभूतसंगमसुखस्मरणे तल्लोभात् कदाचिन्मानत्यागः स्यादिति तदभावाय दंशः। एवमत्याग्रहेपि हृदि प्रियस्थितेरावश्यकत्वान्मानस्यापि तत्रैव सत्त्वात् कदाचिदस्य तस्मिन् लयः स्याच्चेत्तदापि मानराहित्यं भवेदिति तदभावाय ज्ञाने कौटिल्यम् । निर्दोषभावे हि धर्मिणो मुक्तिः, तस्यातथात्वे तत्सम्बन्धाद्यत्र धर्मिणोपि न मुक्तिस्तत्र तस्य कथं सा भवेदिति भावः । **प्रमाणनिराकरणार्थमिति** । 'सर्वस्येशानः' 'य आत्मानमन्तरो यमयती' त्यादिश्रुतिभ्य ईशितृत्वनियामकत्वादिधर्मवत आज्ञोल्लङ्घनं तदग्रे स्तब्धत्वादिकं प्रभुश्चान्तःकरणं मानान्निवर्तयितुं यतते, अन्तःकरणं च न निवर्तत इति प्रमाणविरुद्धत्वान्न सम्भवति, तच्च प्रमाणबलनिराकरणे सम्भवतीति तद्धननमेव कृतं भवतीत्यर्थः । **यतो लौकिकी भक्तिरिति** । लोकरीत्यनुसारी स्नेह इत्यर्थः ।

१०-२९-७. **अपराऽनिमिषदित्यत्र** । **एषा हीत्यादि** । गतदोषा विस्मृतपूर्वदुःखेत्यर्थः ।

**तं काचिन्नेत्ररन्ध्रेणेत्यत्र** । **पूर्वं लौकिकीत्यारभ्य दृष्टिभेदः स्यादित्य**न्तम् । एका भृकुटिमित्यनेन लौकिकस्वरूपभाववती निरूपिता । तथथा तथोपपादितम् । भक्तिमार्गे हि स्नेहवशाद्बहिर्मुखारविन्ददर्शने तेनैव विस्मृतसर्वा तदन्यन्नापेक्षते, सा त्वपरेत्यनेन निरूपिता । योगे हि ध्याने प्रत्येकमंगं पृथक् चिन्त्यते, धारणायां तैः समुदितमेकत्वेन स्वरूपं चिन्त्यते । परस्परसम्बन्धास्मरणपूर्वकमेकाङ्गस्मरणस्यानुचितत्वेनापराधरूपत्वात् । प्रकृते तु स्वरूपस्य रसात्मकत्वेन भावात्मकत्वादेकैकस्यैवाङ्गस्य स्वामिनीभावविषयत्वे तत्र परस्परं भेदापत्तिः स्यात्, सा च अनेन भावेनापास्यते । इदमेवोक्तम**न्यथा दृष्टिभेदः स्यादि**त्यनेन । दृष्टिकृतो भेदः स्वरूपे स्यादित्यर्थः । न च विषयत्वेन स्वरूपस्य भावाद्भेदो वाच्यः । एतन्नियमाभावात् । सर्वं ज्ञानं प्रमेयमित्यादौ व्यभिचारात् । ईश्वरज्ञानस्य सर्वविषयकत्वेन स्वविषयकत्वस्यापि सर्ववादिसम्मतत्वेन प्रकृते च स्वयंप्रकाशचिद्रूपत्वात् स्वरूपस्य न काप्यनुपपत्तिः । एतेषां भावानां व्यभिचारिभावत्वे तु न स्वरूपभेदकत्वं स्यात् । स्थायिभावत्वेन तद्भेदकत्वमावश्यकमिति तत्समाधानमावश्यकमिति भावः । **स्वकीयो वा भाग** इति । प्रभुरेताभ्यः प्रत्येकमाविर्भूय रसं ददातीति सर्वासां भागरूपो भवति । तथा च यदर्थमाविर्भूतं यद्रूपं तत् तस्या भागरूपमिति तथा । एतेन पितृधने पुत्राणामिव प्रभुस्वरूपे स्वामिनीनामेव स्वत्वमिति ज्ञापितं भवति ।

१०-२९-८.

**सर्वास्ताः केशवालोकेत्यत्र** । **क्षुद्रगुणक्षोभयुक्तानामिति** । एतासां भगवतश्च गुणाः सर्वे महान्तः । परोक्षभजनस्याज्ञानं क्षुद्रो गुण एतासामिति हृदयम् । **मुक्ता एव ता इत्यादि** । तदात्यर्तितः प्राणेन्द्रियान्तःकरणजीवा भगवत्येव प्रविष्टास्तत्सम्बन्धेन च परमानन्दं प्राप्तवन्त इति पुनर्बहिरनुसन्धानमेतादृशीनामसम्भावितमित्यर्थः । **एवमत्रापीति** । एतास्तु न लौकिक्यो, नापि प्रसिद्धमुक्तिमार्गीयाः, किन्तु बहिः प्रियसंगमाभिलाषवत्यः, भगवांश्च एतन्मनोरथं पूरयत्येवेति तथैव संपत्स्यत इत्यर्थः ।

१०-२९-९.

१०-२९-१०. **ताभिर्विधूतेत्यत्र** । **प्राकृतीनामिति** । प्राकृतीत्व इत्यर्थः ।

**श्रुतयो यथेत्यत्र** । **श्रुतयो हीत्यारभ्य युक्तिं वेत्यन्तम्** । अत्रायं भावः । श्रुतिष्वस्त्यंशद्वयम् । भगवत्स्वरूपानुभूतिः, अन्येषां तत्सम्पत्तौ साधनत्वं च । तत्र स्वशक्त्यैव चेत्तदनुभवो जातो भवेत्तदा 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति न वदेयुः । भगवदनुग्रहेणानुभवैकवेद्यत्वाभावे श्रुतीनां वाग्रूपत्वादेवं कथने वदद्व्याघातश्च स्यात् । अतः श्रुतीनां पूर्वं तदप्राप्तिः, सततं तद्गुणवर्णनेन तदनुग्रहात्पश्चादनुभवो भगवदानन्दस्येति तथोक्तिरिति मन्तव्यम् । एतदेवोक्तं **श्रुतयो जाता** इत्यन्तेन ग्रन्थेन । अपरञ्च । 'तं त्वौपनिषदं पुरुषं पृच्छामी'त्यादिश्रुतिस्मृतिभ्योऽन्येषां भगवज्ज्ञानं श्रुत्यादिभिरेव भवतीति निश्चितम् । तच्च श्रुतीनां वाग्रूपत्वा 'यतो वाचो निवर्तन्त' इत्यादिश्रुतिभ्योऽसम्भावितम् । एवं सत्युभयविरोधपरिहाराय श्रुत्युक्तभगवद्धर्मश्रवणेन तत्कृत्या च भगवदनुग्रहे भक्तौ जातायां स्वयमेव तदानन्दानुभवयोग्यता भवतीति वाच्यम् । तदेतदुक्तं **सर्वे चेत्यारभ्य युक्तिं वेत्यन्तेन** ग्रन्थेन । एवं सति प्रकृतांशद्वयबोधनार्थमयं दृष्टान्तः । तेन सार्धाध्यायत्रयेण निरूपितस्नेहेन वशीकृतेन प्रभुणा कृत्वैतासां मनोरथान्तप्राप्तिः । अन्येषामपि कृतपुण्यपुञ्जानामेतदुक्तिश्रवणकीर्तनादिना एतद्भावानुसारेण भजनेन च भगवदानन्दानुभवो भविष्यतीत्युक्तं भवतीति । ननु सर्वथा वागविषयत्वे त्वेवं कथनमपि न सम्भवति । अनेनैव प्रकारेण तथात्वस्य प्राप्तेः । किञ्च । भगवदानन्दानुभवहेतुत्वेन हि गुणवर्णनं श्रुतीनां पूर्वमुक्तं तदप्येवं बाधितं भवेत् । तथा सत्येवं निरूपणमपि बाधितम्, अतो निषेधमुखेनैव वाग्विषयत्वं न विधिमुखेनेत्यस्याः श्रुतेस्तात्पर्यमिति चेत्, तत्राहुः **श्रुतिश्च तत्प्रतिपादिकेत्यादि** । प्रतिपादनं हि तद्बोधकवाक्यकथनम्, बोधश्च न शक्तिग्रहं विना । लोके तद्वाचकशब्दाप्रसिद्ध्या सोपि न सम्भवति, अतस्तदर्थबोधो भगवदिच्छयैवेत्यर्थः । अत एव भगवतोक्तं 'मतोस्मि लोके वेदे च प्रथित' इति । मुक्त्युच्छेदाभावाय तथेच्छा । यदप्युक्तं **सर्वथा वागविषयत्वेत्यादि** । तत्राप्युच्यते । जीवानां सर्वपुरुषार्थसिद्ध्यर्थं हि भगवान् वेदमाविश्चकार । तत्र येन रूपेण यः पुरुषार्थो यादृशाधिकारिणः सिध्यति, तद्रूपं तं पुरुषार्थं तमधिकारिणं च श्रुतिर्निरूपित-

१०-२९-१२.

वती मोक्षपर्यन्तम्। एवं करणे सन्तुष्टो भगवान् यद्रूपं प्रकटीकृत्य यमानन्दं दत्तवान्, तद्रूपं स आनन्दश्च पूर्वं न ज्ञातौ, अधुनापि मनोवागविषय इत्येतादृशमपि फलात्मकं वस्त्वस्तीति ज्ञापनाय चाहुः 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चने'ति । अत्र पूर्वार्धमानन्दस्य विशेषणम् । तथा चैतस्मात्पूर्वं 'रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवती'त्यादिना यद्भगवत्स्वरूपं निरूपितं, तत्सर्वात्मभावैकलभ्यम्, न त्वन्यथेति ज्ञापयितुं सर्वात्मभावस्य निर्वचनमशक्यमिति तद्व्यञ्जकं धर्ममाहोत्तरार्धेन । एतादृशमानन्दं यो विद्वान् ज्ञातवान् लब्धवान् वा स कुतश्चन लोकाद्वेदात् किं बहुना परीक्षार्थं साक्षाद्भगवदुक्तोल्लङ्घनान्मानादिदशायां तदतिक्रमादपि न बिभेतीत्यर्थः । मोक्षसाधनस्य स्वकृतिसाध्यत्वेन तत्र श्रवणादीनि साधनान्युक्तानि । अत्र तु भगवदनुग्रहैकलभ्यत्वेन स्वकृत्यसाध्यत्वादनुवाद एव कृत इति । **स्वैरुत्तरीयैरि**त्यस्याभासे । **आधारधर्मसम्बन्धा**दित्यादि । स्वामिन्यो हि सर्वांशे स्वसम्बन्धमेव प्रियस्यापेक्षन्ते । तद्भावस्वाभाव्यात् । प्रभुश्च तदर्थमेवाधुना प्रकट इति न तदन्यस्य तत्सम्बन्धयोग्यतापि । अत एवाग्रे वक्ष्यति **कल्पितासन** इतीति भावः ।

१०-२९-१४. **स ईश्वर** इत्यत्र । **येषां जलक्रीडाया**मित्यादि । जलक्रीडानन्तरं येषामार्द्रता न तिष्ठतीत्यर्थः । **योगेश्वरान्तर्हृदी**त्यस्याभासे । **अपवित्रे**त्यादि । लोके वेदे च पवित्रत्वेन यादृशं वस्तु नोपादेयं तादृशमप्येतत्सम्बन्धियोगेश्वरान्तर्हृदयादपि भगवत उपादेयं यत्र, तत्र लोकादिषूपादेयत्वेन प्रसिद्धं यादृशं तादृशस्य एतत्सम्बन्धिनो वस्तुनः का वार्तेति ज्ञापयितुमेवं कथनमिति ज्ञेयम् ।

१०-२९-१५. **सभाजयित्वे**त्यस्याभासे । **स्वान्तःकरणदोषे**त्यादि । दोषस्यैव विवरणं स्वकृतघ्नतामित्यादिनोच्यते । परोक्षं भजता प्रभुणा तादृशो रसो दत्त इति तदज्ञानं स्वकृतघ्नता । प्रभौ दोषाभावात्तदारोप एव तत्र सम्भवति । स च गृह्यमाणस्य स्मर्यमाणस्य वा वस्तुनः सम्भवति । स्वामिनीनां तु प्रियातिरिक्तधर्मास्फूर्तिनियमेन स्वनिष्ठस्यैव एतस्यायमारोप इति भावः । यद्यप्ययमपि रसमध्यपात्येवेति न दोषत्वं वक्तुमुचितम्, तथापि भगवति दोषाभावस्य शास्त्रसिद्धत्वादारोपस्य च भ्रमत्वनियमाच्छास्त्ररीतिमवलम्ब्य तथोक्तम् । अग्रेपि दोषपदं यत्र तत्रेदमेव तात्पर्यं ज्ञेयम्। **विभ्रमभ्रुवे**त्यत्र । **भ्रूयम** इत्यादि। यमयति नियमयतीति यमः, कालः। तथा च कालविलम्बेन स भावः कदाचिन्नश्येतेति तदभावाय तस्यैव भावस्य नियमनं सदा स्थितिं तादृशी भ्रूः करोतीति तथा । अथवा । फलस्यैव नियमनमत्राभिप्रेतम् । एतदेवाहुः **यावत्प्रसादे**ति । तत्रैवानंगभाव एवाशेषस्वरूपानन्ददाता, नान्यत्रेत्यर्थः । **ईषत्कुपिता** इत्यत्र । **साधनैर्निवर्तित** इत्यत्रापि दोषपदं पूर्ववज्ज्ञेयम् । काचित्कराम्बुजमित्यादिनोक्तस्वकृतक-

राम्बुजधारणादीनि साधनानि । ननु स्वरूपेणानिवर्तितो दोषो वचनेन कथं निवर्तिष्यते । तस्मात्तस्य दुर्बलत्वात्तदुपपादितमाद्येऽध्याय इति चेत् । अत्रायं भावः । 'रसो वै स' इत्यादिश्रुतिभिर्भावात्मको हि भगवान् । स चाधुना दोषात्मको, रसस्वरूपस्यैव तथात्वात् । स्वामिनीभावाविर्भावमूलकारणं वेणुनादात्मकः शब्दः इति निर्दोषपूर्णगुणरूपभावाविर्भावोपि वाग्रूपशब्देन भविष्यतीति किमनुपपन्नम् । किञ्च । यथा वीक्षणेन यो रसस्य न स्पर्शादिना । सम्भाषणेन च यः, स नेक्षणादिनेति तत्तद्रसस्वभावः । तथास्मांस्त्यक्त्वा गतः कथमिति भावस्याद्यवचनैरेवेति शिशिरय निजहृदयम् । आद्येऽध्यायेप्येवमेव ज्ञेयम् । अतः सुष्ठूक्तं **साधनैर्निर्वर्तित** इत्यादि । ननु भजनाभजननिर्णयस्य प्रभुविषयकस्योद्देश्ये सति साधारण्येन प्रश्ने को हेतुरिति चेत्, उच्यते । भगवद्विषयकप्रश्नस्यैवाद्धा क्रियमाणे वयमेतादृश्यो भक्तास्त्वमेतादृशीरस्मान्कथं त्यजसीति हि प्रश्नः स्यात् । स च नायिकोत्तमानां स्त्रीरत्नानामग्रे भगवता स्तुत्यानां स्वामिनीनां मुखाम्बुजान्न निःसर्तुमर्हति, किन्तु ग्राम्याणां रसाभासयुक्तानामेव स्यात् । न हि विकचशारदसरोरुहात् तिन्त्रिणीरसस्यन्दः सम्भवति । अतो व्याजेन प्रश्ने भावगोपनेन महान्रस इति मुख्यरसस्याभाव्यादेव तथोक्तिरिति बुध्यस्व । भगवांस्तु जीवेभ्यः स्वस्य वैलक्षण्यं वक्तुं तत्स्वरूपज्ञानं विना ततो वैलक्षण्यं ज्ञातं न भविष्यतीति तत्स्वरूपमुक्त्वा स्वस्वरूपमुक्तवान् । अन्यथा स्वामिनीतात्पर्यविषयः स्वयमेवेति तान्न निरूपयेत् ।

**भजतोऽनुभजन्त्येक** इत्यत्र । **तेषां त्रयाणामित्यादि** । भजनानुसारेण भजनकर्ता प्रथमः, अभजतो भजनकर्ता द्वितीयः, उभयाभजनकर्ता तृतीयः । द्वितीयो यमभजन्तं भजते स एकः प्रतियोगी । तृतीयो यं भजन्तं न भजते स द्वितीयः प्रतियोगीति ज्ञेयम् । (१०-२९-१६.)

**भजन्त्यभजतो ये वा** इत्यत्र । **धर्मशेषश्चेत्यादि** । धर्मार्थं यो भजते तस्य धर्म एव मुख्य इति भजनीयस्तच्छेषः । एवं सति भजनकर्तुः पातकादिसम्भवे तद्दोषो निवर्तनीय एव, कृतघ्नतापरिहारायेत्यर्थः । (१०-२९-१८.) ननु पुण्येनैव पापनिवृत्तिरित्यस्य तत्र नोपयोग इत्यत आहुः **तदीय एवेति** । धर्मशेषीय एव धर्मो भजनद्वारा भक्तेषु गच्छतीत्यर्थः । ननु विहितत्वात्तद्भजनस्यापूर्व एव धर्मत्वेनोत्पद्यत इति चेत् । मैवम् । तादृक्फलसाधकत्वेन तद्भजनविधाने भजनीयनिष्ठतादृग्धर्मवत्त्वस्यैव प्रयोजकत्वात् । 'तेजस्कामोग्निमेव तेजस्वन्तं स्वेन भागधेयेनोपधावती'त्यादिश्रुतिभ्यस्तथा निर्णयात् । अन्यथा तेजस्वन्तमिति न वदेत् । न चामूर्तत्वं बाधकमिति वाच्यम् । अलौकिकस्यार्थस्य लोकरीत्या निर्णेतुमयुक्तत्वात् । 'अलौकिकास्तु ये भावा न तांस्तर्केण योजये'दिति श्रुतेश्चेति दिक् । निषेधस्य प्राप्तिपूर्वकत्वनियमेनात्र चापवादनिषेधोक्तेर्यत्र धर्मापवादसम्भावना स एवात्र धर्मः परिगृहीतः, यत्र न तत्सम्भावना न सोऽत्र विवक्षित

इत्याशयेनाहु **तत्र धर्मं यत्रेत्यादि** । नित्य कर्म कर्तव्यत्वेनैव यत्र क्रियते तत्र तदेव प्रधानम् । यत्र देवताराधनेनैव धर्मस्तत्र सा प्रधानम् । न चोक्तेषु धर्माभावादविवक्षित त्वमिति वाच्यम् । भगवता हि निर्णय क्रियते । स च सन्दिग्धे कर्तुमुचित । उक्तेषु सन्देहाभावादत्राविवक्षितत्वात् ।

**भजतोपि न वै केचिदित्यत्र । ये दयाधर्माधिकारिण** इत्यादि । धर्मार्थं भजत्सु धर्मं सम्पादयितुमधिकारिण समर्थास्तान् ये न भजन्ति ते त्वधमा इत्यर्थ । अकृतज्ञत्वादिदोषवत्त्वेन त एवाग्रे वाच्या । लौकिकमेव निमित्त भजने येषा ते लौकिकनिमित्तास्तान् ये न भजन्ति ते उत्तमा इत्याहु **ये लौकिकनिमित्ता** इति । त एव आत्मारामत्वादिधर्मवत्त्वेनाग्रे वाच्या ।

१० २० १९

**न पारयेऽहमित्यत्राभासे । भक्तिमार्गविरोधमित्यादि** । ननु 'नाह तु सख्य' इत्यादिना साधनमार्गीयभक्तविषयकमभजनमुक्तम्, प्रकृते च परोक्ष-भजनमुक्तम्, अनुवृत्तिवृत्त्यर्थं परोक्षभजने च हेतुत्वेनैव मदर्थैत्याद्युक्तम् । तथा चैतद्भजनानुरूपमेव स्वभजनमुचितम् । न तु कामपि मर्यादा स्थापयित्वा । तथा सति भक्तिमार्गविरोधापत्ति । एतादृशीना दु खदर्शनमपि स्वस्य तद्विरुद्धमिति प्राप्त उच्यते । अत्र स्वामिनीभजनानुरूप न भजनमिति हि तवाशङ्का । तत्तु प्रात्याहिकधर्म रूपम् । एतदेव भगवताप्युक्त मद्दत्तयत्फलार्थिनो यादृश भजन तत्फल दत्वा ततो निमुच्य इत्याशयेन 'ये यथा मा'मित्यादि । अत्र यथा तथेति पदाभ्या भजनप्रकार योरप्येकरूपत्वमुच्यते । प्रकृते च दास्य प्रकार । स च भक्तधर्म एव, नत्वीश्वरे सम्भवति । कदाचित्क्रियमाणमप्यनुकरणन्द्भवति । न हि महाराज कदाचित्सतोषेण स्वसेवकाङ्गमर्दन कुर्वन् दासो भवति । तथा प्रकृतेपि रसवशात् मानिनीपदपद्मपरागानुराग कुर्वन्नपि पति-रेव, न त्वन्यथा भवतीति क्व प्रत्युपकृतिसम्भवो भजनानुरूप भजन वा । एव सति प्रत्यु पकृत्यपेक्षया तदभावेन दोषारोपो न कार्य , अशक्यत्वादित्युक्त भवति । नन्वेव सति सुतरा परोक्षभजनमनुपपन्नम् । न ह्यप्रत्युपकार्यभजनासु दु खहेतुकृति सम्भवतीति चेत् । अत्र ब्रूम । रसात्मक प्रभुरित्यविवादम् । स च सयोगविप्रयोगभेदेन द्विविध । तत्रान्य-तराभावे त्वसम्पूर्ण एव स स्यात्, अत सम्पूर्ण रस दत्वा तदुत्तरकालीनदोषारोपात्मकव्य भिचारिभावोत्पत्तौ तद्व्यान्तिर्निर्वचनै कृता । तस्मादग्रिमरसानुभवविरोधित्वादिति न कि-ञ्चिदनुपपन्नम् । एतेनैतादृशीषु दु खदर्शन स्वस्य भक्तिमार्गविरुद्धमित्यपि निरस्तम् । एव सतीश्वरत्वेनाशक्तौ हेतुरित्याशयेन प्रभुराहेत्याहु **भक्तिमार्गविरोधं परि हर्तुमिति** । नन्वेतेन स्वस्येश्वरत्वमेवोक्त भवति, न त्वेतत्स्तुतिरिति चेत् । अत्राय भाव । यद्यपीश्वरत्वेनोक्तरीत्या प्रत्युपकारकरण न सम्भवत्येव, तथापि तर्कितमुच्यते, यदि कथञ्चिन्मयि दास्यमापद्येत, तथापि निरन्तर दासकरणेपि कदाप्यनृणो न

१० २० २२

भवामीति प्रभुणा निरवध्युत्कर्ष उक्त इति का वान्या स्तुतिरेतदग्रे । अन्यथा विबुधायुपपीति न वदेत् । 'स्वसाधुकृत्य न पारये' इत्येतावतैव चारितार्थ्यात् । नन्विदमितरभक्तसाधारणमिव भाति । तथा हि । चतुर्वर्गार्थिषु तद्दानस्य प्रत्युपकृतिरूपत्वेपि प्रासात्यन्तिकभक्तियोगेषु सेवातिरिक्तानपेक्षणात्तस्याश्च स्वतन्त्रपुरुषार्थत्वात्किं वा प्रत्युपकृतित्वं भजेत । प्रकृतेपि दास्यातिरिक्तानपेक्षणान्न प्रत्युपकृतिः सम्भवतीति कोऽत्र विशेष इति चेत् । अत्रेद प्रतिभाति । न ह्यपेक्षितत्वेन प्रत्युपकृतित्वं सम्भवति । स्वल्पं कृत्वाऽधिकप्रेप्सोरधिकं कृत्वा स्वल्पप्रेप्सोश्चार्थे व्यभिचारात् । अतः स्वरूपतः पूर्वकृत्यनुरूपत्व मृग्यम् । तत्रापेक्षानपेक्षे अप्रयोजिके । स्वामिनीभजनानुरूपं भजनमीश्वरेपि न सम्भवति, किं पुनर्जीवे । यच्चोक्तं प्रासात्यन्तिकेत्यादि, तत्राप्युच्यते । ते हि पूर्वं सकामत्वेन नित्यकर्तव्यत्वज्ञानेन वा प्रवृत्ता मध्ये भगवदनुग्रहेण सेवारसानुभवे जातेन्यापेक्षां त्यक्तवन्तः स्वार्थं, न तु तदर्थं तथा । एवं सत्युत्तरोत्तरं तादृक्सेवासम्पादनेन तदेकसाध्यसुखदानमेव प्रत्युपकृतिस्तेषु । अत्र तु 'त्वदुपासनाशाः' 'एवं मदर्थोज्झितलोकवेदे'त्यादिवाक्यैस्तत्प्राप्तेः पूर्वमेव त्यागः । प्रभौ सहजस्नेहोऽतः तत्सुखे स्वोपयोगं मत्वा तत्प्रतिबन्धकं दूरीकृत्य स्वं निवेदितवत्यः । अत एव 'यत्ते सुजाते'त्याद्युपपद्यते । अत ए'वैवं मदर्थोज्झिते'त्यत्र स्वत्यागोप्युक्तः । स्वार्थमन्यत्यागो लौकिकानामलौकिकानां च पुंसां सम्भवति, न तु यथाकथञ्चिदपि स्वत्यागः । अत्र स्वपदेनात्मोच्यते । तथा च स्वात्मत्वेन स्नेहविषयत्वाभाव एवैतत्यागः । भगवदुपयुक्तत्वेनैव तस्य देहादेश्च स्नेहविषयत्वात् । एवं सति भगवदर्थमात्मा प्रियो, न त्वात्मार्थं भगवानित्यागतम् । खण्डितादिष्वपि स्वसम्पाद्यसुखानङ्गीकृतिरेव दुःखे माने च हेतुः । तथा च भगवत्सुखसम्पादनं केन प्रत्युपकृतं भवेत् । न चैतत्साधनसम्पादनमेव प्रत्युपकृतिरस्त्विति वाच्यम् । अत्र भावस्यैव साधनरूपत्वात् तस्य पूर्वकक्षापन्नत्वात्सदैकरूपत्वेन नित्यत्वेनासाध्यत्वाच्च । किञ्च । भावबलेनैव यद्भवति तत्र न भगवत्कृत्यपेक्षा, 'वशे कुर्वन्ति मां भक्त्ये'ति वाक्यात् । अन्यच्च । 'नैकात्मतां मे स्पृहयन्ती'त्युपक्रम्य सेवाकथारसासक्तियुक्तानां तेषां 'पश्यन्ति ते मे' इत्यनेन स्वरूपरसानुभवमुक्त्वा एतादृशानपि 'भक्तिरनिच्छतो मे गतिमण्वीं प्रयुंक्त' इति कपिलदेवेनोक्तम् । इह तु रसमार्गरीत्याङ्गीकार इति न कदाचिदपि तदिच्छानुरूपा कृतिः सम्भवति । तस्य रसस्य तादृशत्वादेव । अपरञ्च । स धर्ममार्गोऽयं धर्मिमार्ग इत्यन्येभ्य इयान् विशेष इति कथं वदामः, खद्योतेभ्य इव तरणेः । अतः सुष्ठूक्तं न पारय इति । यद्यपि गेहशृंखलाच्छेदस्य भावस्वभावकार्यत्वात्तस्य च भगवदनुग्रहैकलभ्यत्वाद्गेहशृंखलाच्छेदोपि भगवतैव कारितो भवतीति नैतदुत्कर्ष आयाति, तथाप्येताभ्य एवायं भावो दत्तो, नान्येभ्य इत्येतदुत्कर्षः । अतएवैतस्यैव प्रत्युपकृतिरूपत्वं भगवतोक्तम् । तर्हि 'न पारय' इत्यनुपपन्नम् । प्रत्युत एतादृ-

न्भावदातरि प्रत्युपकृत्यसम्भवाद्वैपरीत्यमापततीति चेत् । अत्रेदं प्रतिभाति । पूर्णाखिलशक्तिपूर्णस्यापि प्रभोरशक्तिर्यत्करणे तद्वस्त्वत्यन्ताभाव एवेति निश्चयः । न हि सर्वसामर्थ्यवत्त्वेन द्वितीयमीश्वरं कर्तुं समर्थः । अतएव प्रभुणोक्तं 'न शक्यन्तेऽनुसंख्यातुमनन्तत्वान्मयापि ही'ति, तथा प्रकृतेपि केवलभावस्य रसात्मकत्वेन भगवदात्मकत्वात्तदनुरूपवस्त्वभावादशक्तिरेव निष्प्रत्यूहेति मन्तव्यम्, अन्यथा ईश्वरत्वमेव न स्यात्, श्रुत्युक्तरूपाभावादिति बुध्यस्व । वैपरीत्यापत्तिरिति दूषणं यदुक्तम्, तत्रोच्यते । कर्मज्ञाने साधनमार्गीयभक्तिं च जीवार्थं कृतवान् भगवान्, फलमार्गीयभक्तिमार्गं तु स्वार्थमाविश्चकार । अन्यथा रसात्मकस्वस्वरूपानन्दानुभवो न स्यात् । 'तस्मादेकाकी न रमत' इति श्रुतेः । तथा च भावदानादेरपि स्वार्थत्वान्नोक्तदूषणम् । नन्वेवमपि 'न पारय' इति नोपपन्नमिति चेत् । न । अस्यानन्दस्य स्वरूपात्मकत्वेप्येताभ्य एव तदनुभवादनुभूतस्य च वस्तुन एवैतादृशत्वे नैवं कथनस्य तत्स्वरूपनिरूपकत्वात् । यथा 'विस्मापनं स्वस्य च सौभगर्द्धे'रित्यत्र वस्तुस्वरूपनिरूपणम्, तथात्रापीति सर्वमनवद्यम् । अत्र पूर्वार्धेनैवैतत्स्तुतिसंपत्तावप्युत्तरार्धकथनस्य तात्पर्यमाहुः **अतो मयीत्यादिना** । अत्रोपकृतेरेव प्रत्युपकृतिरूपत्वोक्त्या तद्भिन्नतदपेक्षायां सोपाधिभजनं कार्यं भवति, तथा च भजन एव तत्सम्भवात् । एतदेवोक्तं **नो चेदित्यनेन** । तच्च भवतीष्वसम्भावितमशक्यत्वादित्याहुः **न ह्यशक्यमित्यनेन** । प्रत्युपकृत्यशक्तावयं भगवन्निष्ठोपि हेतुरिति ज्ञेयम् । **इत्येकोनत्रिंशोध्यायः** ।

**त्रिंशत्तमाध्यायार्थकथने** । **त्रिंशत्तमे हरिरित्यादि** । इतिशब्दो हेतुवाची । लीलां चक्रे इति । लोके प्रकटामिति शेषः । तथा सत्ययं वाक्यार्थः । यद्यप्यतिगोप्यत्वादियं लीला न वक्तुमुचिता, तथापि प्रभुर्लोके प्रकटां लीलां चक्र इति हेतोरीर्यत इति, अन्यथा रासलीलेर्यत इत्येव वदेयुः । सा च 'यथा मदच्युद्द्विरदः करेणुभि'रित्यन्तेन ग्रन्थेनोक्ता । एदतग्रेतिदेशेन कामशास्त्रोक्तरीत्यापि सोक्तेत्याहुः **कामकृतामपीति** । इन्द्रो विषयभोगेभियुक्त इति तन्नामग्रहणम् । वस्तुतस्तु ब्रह्मादीनामपि दुर्लभैव । कामकृता सा हि लोकानुसारिणी भवति । एवं सति यत्र सापीन्द्रादिदुर्लभा, तत्र पूर्वोक्तलीलायास्तथात्वे किं वाच्यमिति भावः । लीलोक्तिप्रस्तावे फलश्रुतिरसंगतेत्याशंक्य तत्तात्पर्यमाहुः **अस्या इति** । लोके कामकथा तदुद्बोधिका दृष्टेति तच्छंकया वैराग्यार्थी कदाचिन्न शृणुयात्, तथा भक्त्यर्थ्यपि, मातृणां रहस्यवार्ता न श्रोतुमुचिता, तथा सति चित्तवैषम्येतिमहान्दोषः स्यादिति शंकया, न शृणुयात् । एवं सति विषय्येवावशिष्यते । तथा सति तु हीनाधिकारिविषयत्वेनोत्तमत्वं न स्यादित्येतत्सर्वपरिहाराय फलश्रुतिरित्यर्थः । विषयिणः पूर्वं विषयत्वेन श्रवणेपि तत्स्वभावादेव दोषनिवृत्तिपूर्वकं परमपुरुषार्थप्राप्तिरिति भावः । अन्ते प्रश्नोत्तरयोस्तात्पर्यमाहुः **लौकिकयपीति** । सर्वथा प्रपन्ना दृष्ट्वाऽदेयमपि स्वरूपानन्दं दत्तवानिति तु वस्तुस्थितिः ।

१०-३०-०.

भगवतो रसात्मकत्वेन तत्स्वरूपमध्यपातित्वमेतासामिति च। पूर्वमन्यत्र विवाहाभावे रसस्वरूपमेव न सम्भवति, यतस्तद्रसस्वरूपमर्यादा तथा। एतादृशेर्थे विषयत्वेनोभयोः प्रवृत्तिः, अतोनुचितमिदमिति बुद्धिः कस्यचिचेत्स्यात्, वस्तुतस्तु उपेक्ष्य एव सः, तथापि प्रभुः सर्वोद्धारक इति तादृशस्याप्यलौकिकी बुद्धिर्यथा भवति, तथा वक्तव्यमिति प्रश्नतात्पर्यम्। शुक'स्तुष्यतु दुर्जन' इतिन्यायेन तन्मतमेवानुसृत्योत्तरितवान्। अन्यथाग्रे 'गोपीनां तत्पतीना'मित्यनेन परदारात्वस्यैव दूषितत्वेन तद्दोषाप्रसक्त्या 'तेजीयसां न दोषाये'ति निषेधोनुपपन्नः स्यात्, 'नैतत्समाचरे'दित्यादिरपि। एवं सति "कुत एव बन्ध' इत्यन्तमुक्तरीत्योक्तम्, अग्रे तु वस्तुस्थितिमनुसृत्येति भावः। नृत्यबन्धादेरुपयोगमाहुः **रसात्मक** इति। नृत्यबन्धाभ्यामुद्बुद्धे रसे भोगः संपन्न एवेति स्वरूपेणैवानन्ददानाच्च। जलानिलयोः क्वोपयोग इत्याशंक्याहुः जलं वायुश्चेति। रमणं जलस्थलभेदेन द्विविधम्। तत्राद्ये जलं सामग्री, द्वितीयेऽनिलः, तयोस्तथात्वे हेतुः स्वामिनीभगवतोः श्रमः। शीतत्वं जलानिलनिष्ठो हेतुरत्र सामग्रीत्वभवने। तथा च जलं वायुश्च रमण, उक्तहेतुभ्यां सामग्री। जायत इति योजना। जायत इति पदादपूर्वा सा भगवल्लीलार्थमेव तदैव जायत इति ज्ञाप्यते। **शीतादिति** भावप्रधानो निर्देशः। ननु भरतवात्स्यायनप्रणयनं हि जीवार्थम्। तथा च तदुक्तरीत्या प्रवृत्तस्य जीवस्यापि तथानन्दसम्भवादत्रावैशिष्ट्यापत्तिः। न च प्रभुस्वरूपमेव विशेषः। तस्योद्बुद्धरसात्मकत्वेन तदुद्बोधकानामप्रयोजकत्वादिति चेत्। मैवम्। अत्र हि रसात्मकं स्वरूपमेवोच्यते। तच्चोद्बोधकविशिष्टमेवोद्बुद्धम्, न तु केवलम्। अन्यथा रसात्मकत्वं न स्यात्। तत्स्वरूपस्यैव तथात्वात्। तच्च विशेषतो न भावयितुं शक्यमज्ञानादिति तज्ज्ञानार्थं भरतवात्स्यायनाभ्यां तत्स्वरूपं निरूपितम्, एवं भगवता नृत्यमकारि, एवं च रमणमिति। जीवास्तु ब्रह्मपरां श्रुतिमिवैतदपि द्वयं जीवपरमिति ज्ञात्वा प्रवृत्ताः क्लिश्यन्ति परमिति बुध्यस्व। एतदेवाहुः **कृष्णो भुङ्क्ते न चापर** इत्यनेन। तत्र हेतु**रुत्तम**मिति। क्षराक्षराभ्यामुत्तमं पुरुषोत्तमस्वरूपात्मकमित्यर्थः। न हि भगवत्स्वरूपमन्येन भोक्तुं शक्यमिति भावः। एतल्लीलाया भूमौ आकट्यकरणे प्रयोजनमाहुः **अत्रैवेति**। आधिदैविकत्वे संपन्ने हि पुरुषोत्तमभजनं साक्षात्सम्पद्यते। तच्च वैकुण्ठे भवति। प्रभुस्तु अस्मिन्नेव लोके आधिदैविकं रूपं जीवानां प्रकटं यथा भवति तथा भुङ्क्त इत्यर्थः। एतल्लीलाश्रवणेपि तथा भवतीति तथा। **उत्कृष्टमिति**। मोक्षसुखादपीति शेषः। **प्रमाणेन** वचनैरित्यर्थः। **प्रमेयेण** स्वरूपेणेत्यर्थः।

**इत्थं भगवतो गोप्य** इत्यत्र। **विपरीतभावेने**त्यादि। नागरीवत्कुतकोपहतमतयो न भवन्तीति तथा। **ननु ता वाच** इत्यादि। अनुभवविरोधित्वाद्वचनानां भगवति चाप्तत्वनिश्चयादिति भावः। **मनसि चिकित्सायामेवेति**। मिथो विरुद्धत्वज्ञान एवेत्यर्थः। प्रकृते भगवद्वचनानुभावात्पूर्वसान्निध्यानुभवोऽधुना सम्पन्न इति नानुभवविरोधोतो न सन्देह इति भावः।

१०-३०-१.

**गोपीमण्डलमण्डित** इत्यत्र । **उत्तरोत्तरेति** । उत्तरोत्तरक्षणसम्बन्धिभिरित्यर्थः । **पूर्वपूर्वेति** । पूर्वपूर्वक्षणसम्बन्धीत्यर्थः ।

१०-३०-३.

**जगुर्गन्धर्वपतय** इत्यत्र । **अन्यथा भगवद्धस्तेत्यादि** । अत्रायं भावः । यथा भगवल्लीलामात्रोपयोगिनो नटा इव विश्वावसुप्रभृतयः, तथा भगवद्रहस्सदनादिमात्रोपयोगिक्रियाशक्तिमन्त इन्द्रादयो दिक्पालेभ्यो भिन्नाः सन्ति, ते त्वेतद्भुजदण्डमात्रावलम्बाः । तयो रसरूपत्वेन रसात्मकक्रियाशक्तिप्रधानानामेव तत्र स्थितेरुचितत्वात् । अतः सुष्ठूक्तं **भगवद्धस्तेत्यादि** ।

१०-३०-९.

**काचित्समं मुकुन्देनेत्यस्याभासः** । **उत्पन्नस्य नादस्येत्यादि** । अत्रायं भावः । अयं नादो न लौकिकः, पूर्वसिद्धो वा, किन्त्वलौकिकोऽपूर्वः । स च भगवतोऽन्यभावनिवृत्तिपूर्वकं स्वमात्रविषयकभावोत्पत्त्यर्थं प्रत्येकं कृतः । अयं च स्वामिनीनामप्युक्तभावानुरूपभगवद्विषयकभावविशेषोत्पत्तौ रसानुभावको भवति । मूलकारणत्वात्स्वामिनीगानस्य तथात्वम् । इदमेवामृतमयत्वम् । सा च भगवन्नादेनेति तथा कृतः । अपरञ्च । स्वामिन्याः स्वरजात्युन्नयने प्राधान्योक्त्या प्रभोस्तत्सहभावोक्त्या ततः सकाशादस्य माधुर्य लक्ष्यते । अन्यथा प्रभोस्तारनादेनाखामिभवे रसाभास एतद्वैयर्थ्यं च स्यात् । साम्ये तूभयोः स्वातन्त्र्येण करणात्परस्परानुगुणत्वेन च मिथो रसानुपयोगित्वप्रसंगः । स्वयं नादस्वरूपमज्ञात्वा भगवन्नादं श्रुत्वा तत्स्वरूपनादकरणेपि तथा । अतो भगवद्विचारितानुपूर्वी स्वय ज्ञात्वा तथैवोन्नीतवतीति ज्ञेयम् । पूर्णरसोदयो भगवति जात इत्यपि ज्ञापनाय तदधीनत्वमपि ज्ञापयितुमेवं कथनम्, नायिकाप्राधान्यस्य एतद्रसस्वभावरूपत्वात् । एवं सति तारनादसाध्यजगत्पूरणं मधुरेण न भवति। अन्यधर्मनिवृत्तौ ह्येतेन पूरणं भवति । तदर्थमेतत्स्वरूपे रसाभिज्ञा निरूपिकाश्चैता एवेति । यथा 'तं त्वौपनिषदं पुरुष'मिति श्रुतेस्तदुक्तमेव ब्रह्मस्वरूपम्, तथैतन्निरूपितधर्मवदेव पुरुषोत्तमस्वरूपम्, नान्यधर्मविशिष्टमित्येतद्गानस्योपनिषद्वाक्यरूपत्वादेतच्छ्रवणेन भगवति प्राकृतधर्मराहित्यज्ञानं स्वस्मिंश्च तत्सम्बन्धित्वेनान्यधर्मराहित्यं तज्ज्ञानं च भवति । तदनन्तरं भगवदानन्दानुभवो भवति । एतत्प्रभुगानकार्यम्। एवं सत्येतेन जगत्पूरणं भवत्येवेति सर्वमवदातम् ।

१०-३०-१०.

**काचिद्रासपरिश्रान्तेत्यत्र** । **भगवतः स्थिरत्वायेति** । कदाचित्प्रभुर्गदाभवष्टभ्य तिष्ठति चलति वा । यथेतस्ततश्चरणस्खलनं न भवति, तथा तद्गृहीतस्कन्ध एव यथापूर्वं मण्डलं नृत्यं चानुवर्तयतीति ज्ञाप्यत इत्यर्थः । **पृष्ठाधिरूढालिङ्गनमिति** । 'रमणचरणमेकेनोरुणाक्रम्य खिन्नश्वसितमपरपादेनाश्रयन्ती तदूरुम्। निजमथ भुजमेकं पृष्ठतोऽसार्पयन्ती'त्यादिना रसशास्त्रे निरूपितम् ।

१०-३०-११.

**हृष्टरोमा** चुचुम्ब हेत्यत्र । **सदानन्दत्वादिति** । चुम्बनेन हि रस आस्वाद्यते । अधरादिवद्वाहौ न रसोतः कथं तथेत्याशंकानिरासायेदमुक्तम् । चन्दनालेपतात्पर्यमाहुः **विवेकधैर्येति** । अंगरागस्यानुभावात्मकत्वेन प्रचुरभावविशेषजननात्तेन तयोर्नाश इत्यर्थः । बाहौ तथा कृतिर्न लोकसिद्धाऽतः सखीनां समक्षं कथमेवं करोमीति विवेकः । एकान्तसमयप्रतीक्षया स्थितिर्धैर्यकार्यम् ।

१०-३०-१२.

**कस्याश्चिन्नाट्यविक्षिप्तमित्यत्र** । **अनेन तस्यै स्वविद्येति** । यथा सर्ववेदान्तवाक्यानां निष्पीडितोर्थो ब्रह्मविद्या, तथोपनिषदादिवागधिपतिना रसात्मकेन स्वान्तरेव भक्तविषयकस्नेहकलाभिर्निष्पीड्य स्थापितं ताम्बूलचर्वितमिति तथेत्यर्थः । दानप्रयोजनमाहुस्तेनेयमेवेति । विप्रयोगदशायामुपस्थितमरणनिवर्तकवाक्यकथनेन सखीनां जीवयित्री भविष्यतीत्यर्थः । ब्रह्मविद्या हि ब्रह्मप्रापिका । अत्रापीयं स्वामिनी प्रियं प्रापयिष्यतीति भावः ।

१०-३०-१३.

**नृत्यती गायतीत्यस्याभासः** । **अपरा पुनर्वैराग्यात्मकमित्यादि** । अत्रायं भावः । स्वस्यापि स्नेहातिभरेण विप्रयोगासहिष्णुत्वेऽन्यासां समाधानं न सम्भवतीति, तदापि यथान्यासां समाधाने शक्तिर्भवति, तथा पूर्वदत्तज्ञानकार्यसिद्ध्यर्थं क्रियाशक्तिरूपमच्युतीयत्वेन तदापि कार्यक्षममच्छिद्रत्वेन फलाव्यभिचार्यब्जत्वेन तदापि तापकार्यनिवर्तकं तथाऽकरोदिति तापनिवर्तकत्वं ज्ञानसहायत्वं च वैराग्ये प्रसिद्धम् । यद्यपि स भावोन्याप्रतिबध्यस्वभावस्तथापि प्रभुसम्बन्धित्वेन यथा स तथा तथा हस्ताब्जमपि तथेति । तदोभयोरनुवृत्त्योभयकार्यसम्भवेन विचित्रो महारसात्मको भाव उत्पद्यत इति भावः । ननु पूर्वोत्तरश्लोकोक्तनायिकयोर्मिथो भेदेनेदं सर्वमनुपपन्नमिति चेत् । मैवम् । अत्र ह्यैश्वर्यादिषड्गुणरूपा एता एव । अत एतद्विशिष्टमेव स्वरूपं भगवच्छब्दवाच्यमिति निरूप्यते । धर्मयोर्भेदश्चावश्यकः, तथापि धर्म्यभेदात्सर्वोपपत्तेः । तथाच भगवतो ज्ञानवैराग्ये वियोगदशायां स्वामिनीनामेवार्थ उपयुज्येत इत्युक्तं भवति । एतेन तस्मिन्समये प्रभोरपि रसात्मकत्वेन स्वामिनीविरहजभावकार्यशान्तिरेताभ्यां भवतीति सूच्यते ।

१०-३०-१४.

**गायन्त्यस्तं विजह्रिर इत्यत्र** । **इयं क्रिया शक्तिरूपेति** । शक्तिरूपा भगवत्सामर्थ्यरूपेत्यर्थः । तस्मिन्सति स्वातन्त्र्यमुचितमिति भावः ।

१०-३०-१५.

उपक्रमात्प्राप्तेपि नृत्ये यत्पुनर्वाद्योक्तिपूर्वकं नृत्यकथनं तत्कञ्चन विशेषमाश्रित्येति तमाहुः **अतः परं राधादामोदरवदिति** । अथवा रसावेशजनिता मर्यादारहिता क्रिया विहार इति तदुक्त्योत्तरस्यादिना पूर्वस्यावसानमिति न्यायवत् पूर्वनृत्यविरामो ज्ञाप्यते । तथा सति पुनर्नृत्योक्तिरुचिता । तच्चेत्पूर्ववदेव

१०-३०-१६.

स्यात्तदा तत्त्यागो न स्यात् । रसार्थमेव तत्करणात्तदुदयं विना तत्त्यागासम्भवात् । एवं सत्यपूर्वरसार्थमेवापूर्वमेव नृत्यमथोच्यत इति ज्ञायते । तदेवाहुरतः **परमित्यादिना । कर्णोत्पलालकेत्यत्र । स्वतो चेत्यादि** । श्रमाभावज्ञापकधर्मश्रीकथनेन रसावेशादेवैतदपि नृत्यं जायत इति तस्मिन्भवति सति स्वत एव पूर्वविहारनिवृत्तिर्जातेति सूच्यत इत्यर्थः । अथवा । क्रीडाया अनिवृत्तिः क्रीडानिवृत्तिः । श्रमाभावसूचनेन पूर्वक्रीडाया निवृत्तिर्न स्वामिनीनामशक्त्येति सूच्यत इत्यर्थः । **गोप्य** इति । **भगवत एवेत्यादि** । भगवत्साम्येन नृत्यकृतिर्न पूर्वशिक्षया गोपजातीयानां, तत्रापि कुलवधूनां, तदसम्भवात्, किन्तु तथा रसाविर्भावो येन तथा नृत्यं स्वत एवाभूदिति ज्ञापनायेत्यर्थः ।

**रेमे रमेश** इत्यस्याभासे । **ननु प्राकृतीभिरित्यादि** । अत्राप्राकृतीत्वं निरूपयितुं तद्विपरीतधर्मोक्तिः पूर्वपक्षे । सिद्धान्तस्तु ब्रह्मानन्दरूपत्वेनाप्राकृती रमा । भगवांस्तु तदीशत्वेनाप्राकृतीरमणैकस्वभावः, तेनात्र रमणोक्त्यैवाप्राकृतीत्वमप्युक्तमेव भवतीति भावः । किञ्च । स्वामिनीनामप्राकृतत्वे का नाम शंका, यत एतत्सम्बन्धद्वारैव रमापि प्रभुसम्बन्धं प्राप्तवती, नान्यथेत्याहुः **रमापि भगवदाज्ञयेत्यादि** । तदुक्तं 'श्रयत इन्दिरे'त्यादि । तथा च स्वामिनीषु प्रभोः स्नेहभरदर्शनेन स्वयं तत्र प्रविश्य तद्द्वारा प्रभुसम्बन्धं प्राप्तुमिच्छन्त्यपि तन्महत्त्वस्फूर्त्या स्वयं न प्राविशत्, किन्तु तदार्तिं दृष्ट्वा तन्निवृत्त्यर्थं प्रभुणाज्ञापिता तथाकरोदिति ज्ञापनायोक्तं **भगवदाज्ञयेति** । अपरञ्च । यदि नागरीवदस्मदतिरिक्तायाः प्रभुसम्बन्धो मा भवत्विति चित्तकौटिल्यं स्यात्, तदा रमा न तथा कर्तुं शक्नुयात्, एतास्तु सर्वथाङ्गीकृतव्रजसम्बन्धिन्य इत्यतिसौजन्यादिगुणवत्य इति सुखाराध्या इति रमायास्तथाकरणमित्याशयेनाहुस्ता **अप्यधिष्ठानयोग्या** इत्याहेति । नन्वेतद्रसप्राप्त्यर्थं ह्येतदाज्ञापनम् । सा चोभयोरपि दम्पतित्वभावस्य जागरूकत्वेनात्रासंभाविता । एवं सति प्रियस्यापि पूर्वभावविलक्षणभावोत्पत्त्या रसाभासप्रसंगेन पूर्वरसस्यापि भंजिकेयमाज्ञा, स्वोधःस्पर्शमप्यसहमाना शिक्यस्थमपि क्षीरं नीरे पातयन्ती गौरिव।अतस्तत्सम्पादनमनुचितम् । किञ्च । ब्रह्मभावे हि ब्रह्मानन्दाविर्भावो, रमा चैतद्रूपा । स्वामिन्यस्तु ततोऽधिकभगवद्रसभाववत्योऽतस्तत्सम्बन्धोऽत्राशक्यवचन इत्याहुर्नन्वेत**दप्यनुचितमित्यादिना** । अत्रार्भकदृष्टान्तेन समाहितेरयमाशयः । यदुक्तं रमावेशे रसाभासप्रसंगः पूर्वरसविच्छेदश्चेति । तत्रोच्यते । यथा स्वप्रतिबिम्बं पश्यन् बालो दर्पणादौ गृहादिप्रतिबिम्बे सत्यपि स्वप्रतिबिम्ब एव रमते, नतु तदन्यस्मिन् । अत एव मूले स्वपदोपादानम् । तथा स्वामिनीषु रमासमागमेपि स्वस्य रसरूपत्वेन तदात्मकान् भावान्यत्र दृष्टवांस्तत्रैव तदनुरूपभावचेष्टावानेव रेमे, नतु रमास्फूर्तिरपि, येन भार्यात्वज्ञानेन पूर्वरसविच्छेदः स्यात् । तस्य रसस्य तादृक्स्वभावत्वादेव तथात्वं प्रभोः । अर्भकत्वस्वभावस्य तथात्वात्तस्यैव । रमायास्तु भगवति भर्तृभाववत्त्वेन न मुख्यरसप्राप्तिः, अत एव

१०-३०-१७.

'नायं श्रियोंग उ नितान्तरते'रिति श्रीमदुद्धववचनम् । किन्तूक्तभावविशिष्टप्रियांगसंगिव्रजांगनांगसंगित्वेनैव पूर्वमननुभूतजातीयः कश्चनानन्दविशेषः समजनि, येन सर्वविस्मृतिरभूत् । एतेनैव रमाप्रवेशे स्वामिनीनां भाववैलक्षण्येन पूर्वरसविच्छेद इति निरस्तम् । न हि प्रतिबिम्बाश्रयस्तज्ज्ञानं लोके क्वचिद्दृष्टचरम् । ज्ञानस्यात्मधर्मत्वेन तत्र तदसम्भवात् । अपिच । स्वामिनीनां भ्रमोऽथ तज्ज्ञानेपि न काचित्क्षतिः । यतो रसाभासभावाभासैर्मुख्यो रसः पोष्यते । प्रकृते च तदावेशतः क्षणमात्रं तथा भावोऽग्रिमक्षणजायमानरसविशेषपानुभावक इतीष्ट एव । अतः प्रस्तुतस्वौघोमारधारामेरेण शिक्यस्थभाण्डान्यप्यतिशयेन पूरयन्त्यद्भुता गौरिवेयमाज्ञेत्युचिततरा । यच्चोक्तं ब्रह्मभावाभावात् तदानन्दरूपाया रमायाः सम्बन्धोनुपपन्न इति तत्रोच्यते । न हि ब्रह्मभावात्मकसाधनेनाविर्भवद्ब्रह्मानन्दो रमा । तस्य तद्विशिष्टेषु पुरुषेष्वप्याविर्भावात् । अस्याः पुरुषोत्तमैकनिष्ठत्वात्, किन्तु पुरुषोत्तमस्य रसात्मकत्वेन स यावद्विधस्तावद्विधोयं निरूपणीयः । तथा च स्निग्धदम्पतीभावोऽप्येकस्तत्प्रकार इति तदात्मकानन्दप्रकाशिका । 'अर्धो वा एष आत्मनो यत्पत्नी'ति श्रुतेः स्वयमपि तदर्धत्वेनानन्दरूपा । ब्रह्मणः पुरुषोत्तमस्य या शक्तिः सा रमा ब्रह्मानन्दशब्देनोच्यते । तथा च एतादृश्याः सम्बन्धयोग्यतास्तीत्यत्र प्रवेश उपपद्यत इति । स्वामिनीनां भ्रमोऽथ रमाननुसन्धानपक्षमाश्रित्य 'बालको ही'त्यारभ्य 'स्थापयित्वे'त्यन्तो ग्रन्थ उक्तः । अनुसन्धानपक्षमाश्रित्य ब्रह्मेत्यादिः । अत्र ब्रह्मपदेनोद्दीपकानुभावकवाकृतिभिराविर्भावितो व्यभिचारिभावपुष्टो मुख्यो रस उच्यते । अविकृतो नित्योऽयं रस इति ज्ञापनाय ब्रह्मपदोपादानम् । ब्रह्मानन्दपदेन पूर्वोक्तो मुख्यरसपोषको रमावेशजनितो भावविशेष उच्यते । ननु स्वसामर्थ्यादिस्थापनेनैव चेद्रमणम्, तदा स्वत उत्तमनायिकात्वाप्राप्त्या स्वामिनीषु भगवतश्च स्वसामर्थ्यादियोजनव्यासंगेनोत्तमरसाननुभवप्रसंग इत्यरुच्या पक्षान्तरं वक्तुं तामुद्भावयन्ति नन्वेतदपीत्यादिना । सामर्थ्यादि योजयित्वा रमणे क्लिष्टकर्मत्वप्रसंगेनानुचितमिदमित्यर्थः । पक्षान्तरे दृष्टान्तस्याभासमाहुः किमनेनेति चेदिति । स्वामिनीनामेवार्थे अस्या लीलायाः क्रियमाणत्वाद्रमावेशेन रमणेन स्वामिनीनां किं फलं सम्पादितवानित्यर्थः । इयमाशंका दृष्टान्तेनापास्यते । तथाहि । यदा यशोदारोहिण्यादिसमक्षं तत्संकोचतः स्वयमाश्लेषाद्यकरणेनात्यार्तानां व्रजसुन्दरीणामार्तिहरणार्थं बालभावव्याजेन तदुरस्सु विविधविहारान् करोति, तदैतासां रसरीत्यैव रसपूर्तिरार्तिहरणं च भवति, अन्यासां तु विचित्रबालचेष्टात्वभानेन बाललीलारसानुभव एव भवति, एवमिहापि स्वामिनीनां निजरसभावानुरूप एव रसानुभवो रमायास्त्वेतत्प्रसंगेन निजभावानुरूप एव स इत्यर्थः । तथा च दृष्टान्तद्वयमत्र ज्ञेयम् । यथार्भको रेमे तथेत्येकः, अग्रिमश्चापरः । सान्निध्यात्स एव तथाविधो यथेति । अत्रावृत्तेनार्भकपदेन लौकिकः स उच्यते । द्वितीयो दृष्टान्तः पूर्वोक्तप्रकारक एवेत्याचार्यैरत्र नोक्तः । एवं सति रमाप्रवेशत एवात्र रमणयोग्यतेति कश्चिन्मन्येतेत्यरुच्या पक्षान्तरमाहुः यद्वेत्यादि ।

**कामार्दिताः शशाङ्कश्चेत्यत्र** । एकस्मिन् वाक्य उक्तयावद्धर्मविशिष्टेन येन समं यस्योक्तस्यानुक्तस्योभयोर्वा समुच्चयस्तस्य तयोर्वा तावद्धर्मवत्त्वमावश्यकमिति चन्द्रेपि कामार्दितत्वं चकारेण बोध्यते । तत्रैतस्मिन्वाक्येऽनुक्तोऽकलङ्कश्चन्द्रोप्यनेन समुच्चीयत इत्याहुः **आनन्दमयोऽपीति** । अग्रे लौकिकेन्दोर्निरूपणम् । उक्तसमुचितमर्थमाहुः **चकारादित्यारभ्य तथा चन्द्रोऽपीत्यन्तेन** । **भगवति निवेशनार्थमित्यारभ्य जात इत्यन्तेनालौकिकस्येन्दोः** कथनम् । अन्यथा तथा **चन्द्रोपीत्य**तिदेशेनैव कामार्दितत्वं प्राप्तमेवेति पुनर्नोक्तं स्यात् । अत्रैवं निरूपणे नियामकमाहुः **अनेनाग्र** इत्यादिना । अत्रेदमाकूतम् । 'एवं परिष्वंगे'त्यादिना रसशास्त्रोक्तलीला रमणोक्त्या सहस्रवणादिकमपि प्राप्तमेव भवति । तस्य तावद्रूपत्वात्, परन्त्वखण्डरूपे भगवति स्वबुद्ध्या तन्नोपपादयितुं शक्यत इति गोप्यत्वाच्च प्रकटं न वक्तुं शक्यमित्यनेन प्रकारेण शुकदेवैर्ज्ञापितमित्याचार्यैस्तथाऽगादि । सोमस्य रेतोरूपत्वं श्रुतिसिद्धमिति नानुपपत्तिः काचिदंशनिवर्तन इति दिक् । ननु स्वरूपस्य रसात्मकत्वेनैव सर्वमुपपत्स्यत इति किमेतत्प्रवेशेनेति चेत् । मैवम् । अस्य रेतोरूपत्वात्तस्य चाध्यात्मिकरूपत्वेन स्वरूपान्तर्गतत्वात्तेन रूपेण प्रवेशस्यावश्यकत्वात् । न च तस्य तत्रैव स्थितेर्नेदं साधीय इति वाच्यम् । प्रकारबोधनपरत्वादस्या लीलायाः । अन्यथा तमिस्रायामियं लीला न स्यादिति ।

१०-३०-१९.

**आत्मारामोऽपि लीलयेत्यत्र** । **चन्द्रप्रवेशादिति** । रेतःपोषस्य भावपोषकत्वादिति भावः । **अस्यामपि दशायामिति** । प्रमाणसिद्धत्वेनोभयोरत्र विरोधाभावादिति भावः । एतद्विद्वन्मण्डने प्रपञ्चितमस्माभिः । वस्तुतस्तु लीला स्वरूपात्मिकेति तन्मध्यपातिन्योपि तथैवेत्यात्मरमणमेवात्रापीत्याशयेनाहुः **तत्रापि आत्मरमण एवेति** । अत एवाग्रे वक्ष्यति 'गोपीनां तत्पतीनां चे'ति श्लोकम् । लीलापदध्वनितमर्थमाहुः **यथा महानपीत्यादिना** । ईश्वरोऽपि सन्नायिकाप्राधान्येन स्वस्य गौणभावेन रेमे । तस्य रसस्य तथात्वादित्यर्थः ।

१०-३०-२०.

**गोप्यः स्फुरदित्यत्र** । **गाने हीति** । एवमत्र ज्ञेयम् । पूर्वश्लोकेन हि स्वाधीनभर्तृकात्वमुक्तम्, अस्मिन्नपि कुण्डलकुन्तलगण्डशोभा प्रियकरकमलसम्पादितैव । अत एवास्या मानधारणे हेतुत्वम् । स्वनिष्ठत्वेन सहजत्वमस्य । एवं सत्युत्साहविशेषो यो गानजनकः स रजोगुणशब्देनोच्यते । तथा च पूर्वं मानेन दुःखमभूदिति तादृशत्वाभावाय गुणगानमिति । अत्रैव **मूलभूतगुणेति** । भगवच्चातुर्यकार्यमित्यर्थः । गानजः पुष्टो भावविशेषोऽलौकिकेष्टसाधकत्वेन पुण्यपदेनोच्यते ।

१०-३०-२२.

**ताभिर्युत** इत्यस्याभासे । **तुल्याभिरिति** । निर्दोषपूर्णगुणत्वेन भावैरानन्दात्मकत्वेन च तुल्याभिरित्यर्थः । अत एव प्रतिपक्षः सम्पत्स्यते । रमणं जलस्थलभेदेन द्विविधम् । तच्च पूर्णरात्रिसाध्यम् । तत्रैकस्य पूर्तावितरस्यारम्भ इति महारात्रसमय इत्युक्तम् ।

१०-३०-२३.

**वैमानिकैरित्यस्याभासः । ननु देवैरिति ।** अविचारमसर्थं बहुभिरेकदा कृतः परिषेको लोके व्याकुलतासम्पादको दृष्ट इत्यत्रापि तथा सम्भावनयान्तरंगभक्तैः स्वामिनीषु शनैः परिषेकः कार्यो नैवमिति विज्ञप्तिः कथं न कृतेत्यर्थः । अन्यस्य भक्तस्यापि तदा दर्शनं दुर्लभम्, परन्तु पूर्वं विमानशतसंकुलमित्युक्तमिति तत्स्थितानां दर्शनं सम्भाव्यते । तेषां तु प्रभुलीलोपयोगिमण्डपस्थितिलक्षणसम्बन्धेनैव जनितानन्देन भगवदिच्छया पुष्पवृष्टिस्तुतिरसाभिनिवेश एव भवति, न तु दर्शनमपीति भावः । यद्यपि दर्शनेपि तैर्न किञ्चिद्वक्तुं शक्यम्, भगवदतिरिक्तस्यैतासु वक्तुमनधिकारात्, तथापि यदन्यत्र दुःखदं दृष्टं तदेताभिः कृतं प्रभोरतिसुखदमिति ज्ञापयितुमाचार्यैराभासस्तथोक्तः । अत एवात्तगजेन्द्रलील इत्युक्तम् । अत एवोत्क्षिप्तजलप्रतीकार उत्तानपाणिभ्यां सम्भवत्यपि प्रभुर्न करोति, प्रत्युत तदभिमुखमेव बाहू प्रसारयतीत्याशयेनाहुः सर्वे देवा इत्यादि । बाह्वोर्देवतारूपत्वेन तदवयवभूताङ्गुलीकरतलादीनामपि देवत्वमिति भावः । **अन्यथा लोके इति ।** भगवता निवारणे कृते स्वामिनीलक्षणे लोके तथा न भवेदित्यर्थः । (१०-३० २४.)

**यथा मदच्युदित्येतत्तात्पर्योक्तौ । ततः अविचारेणेति ।** पूर्वस्यां लीलायां देशकालनायिकाविचारपूर्वकं रमणं कृतम्, तदनन्तरं न तथेत्यर्थः । (१०-३०-२५.)

**प्रश्नतात्पर्यं तु लौकिक्यपि यदा दृष्टिरित्यत्र निरूपितम् ।**

**प्रतीपमाचरदित्यत्र । धर्मो नष्ट इत्यादि ।** अधर्मनाशधर्मस्थापनतत्करणतदुक्तितत्प्रश्नाणां पूर्वमुक्तानां प्रतीपा अर्था अनेनोक्ताः । (१०-३०-२८.)

**नैतत् समाचरेदित्यस्याभासः । ननु तेजीयसामपीत्यारभ्य न्यायादित्यन्तः ।** यद्यप्येतत्समाहितिर्नैतेन श्लोकेन भवति, तथाप्युत्तरार्धेऽन्यस्य कर्तुर्नाशोक्त्येश्वराणामनाशज्ञापनेन च समाहितिर्भविष्यतीत्याशयेनेदमप्युक्तमिति ज्ञेयम् । अन्तरङ्गैरेवेत्यग्रे वक्ष्यन्ति च । (१०-३०-३१.)

**इच्छयात्तवपुष इत्यत्र ।** वपुःशब्दस्य वपुष्प्राकट्यपरत्वमित्याचार्याणामाशयः । ( अत्रैवाग्रे **यथान्नभेदेनेति ।** यावद्यस्यान्नेन देहः पोषितो भवति, तावत्तदीयत्वेन लोके व्यवह्रियते । पुनरन्यस्यान्नेन पोषितः स एव तावत्तदीयत्वेनापि व्यवह्रियते । एवमेकदेहस्यान्नभेदेन भेदव्यवहार इत्यर्थः । ) (१०-३०-३५.)

**योन्तश्चरतीत्यत्र । वस्तुतस्तु नायमित्यादि ।** देहकृततत्तन्निषेधोत्र क्रियते । प्रभुस्तु स्वत एव पुमान् । अत एव श्रुतावेकस्मिन्नेव वाक्ये पुरुषं पुरुषविधमित्युक्तम् । (१०-३०-३६.)

( ) चिह्नान्तर्गतं श्रीहस्ताक्षरपुस्तके नास्ति ।

**भजते तादृशीः क्रीडा** इत्यत्र । **तत्तद्धर्मप्रवेशेति** । श्रोतॄणामिति शेषः । यल्लीलाश्रवणमेव भगवद्भावसाधकम्, तत्र तल्लीलामध्यपातिनां स्वरूपं किं वक्तव्यमिति भावः । १०-३०-३७.

**ब्रह्मरात्र** इत्यत्र । वासुदेवपदतात्पर्यमाहुः **यतो भगवानित्यादि** । दिवा विप्रयोगजार्तौ सत्यां दिनान्ते प्रियसंगमे य आनन्दो, न स सदा दर्शन इति सोऽत्र मोक्षपदेनोच्यते । १०-३०-३८.

श्रुतिसिद्धरसात्मत्वं प्रकटीकृत्य भूतले ।
क्रीडन्मल्लोचने शश्वच्छिशिरीकुरुते प्रभुः ॥ १ ॥

**इति त्रिंशोध्यायः ।**

---

**अथैकत्रिंशाध्यायं** विवृण्वन्त उक्तलीलानन्तरमन्यभजनं कुतुकादपि व्रजवासिनामनुपपन्नमित्याशंक्य इदं प्रकरणं न सर्वथा पूर्वप्रकरणमध्यपातीति ज्ञापनाय पूर्वप्रकरणार्थमनूद्यैतदुक्तितात्पर्यमाहुः **नामलीलात** इत्यारभ्य **हरिणैव स्थितमन्तेन** । नामलीलातो यो रसस्तदर्थमन्यभजननिवृत्तिपूर्वकमिदं प्रकरणमुच्यत इत्यर्थः । यथा रूपलीला स्वतन्त्रा, तथा नामलीलापीति ज्ञापनाय भिन्नोपक्रमेणैतत्प्रकरणारम्भः कार्यः । तत्रान्यभजननिवृत्तिपूर्वकं भगवन्माहात्म्यज्ञानमंगं तदर्थं तथोच्यते । **एवमुद्धृतभक्ता** इति । इन्द्रभजननिवृत्तिपूर्वकमित्यर्थः । एतावान्परं विशेषो यद्रूपलीलारसानुभवे वैष्णवधर्माणामपि त्यागोंगम्, नामलीलारसानुभवेऽन्यदेवताभजननिवृत्तिस्तथा, न तु विहितानां भगवद्धर्माणामपि । विधेरपि नामलीलामध्यपातित्वात् मर्यादापुष्टिभेदेन तस्या द्विविधत्वान्मर्यादामिश्रपुष्टिमार्गीयाः पूर्वाध्याये कथ्यन्ते । शुद्धपुष्टिमार्गीया द्वितीये । मर्यादामार्गस्य सदोपत्वज्ञापनाय शंखचूडप्रसंगः । १०-३१-०.

**रजनीं तां महाभागा** इत्यत्र । **अग्रिमानिष्टमिति** । सर्वथा परिग्रहो भाग्ये महत्त्वं तद्वत्त्वादेतेषामन्यभजने दुःखसम्भवः, उपेक्षायां तु सुखमेव भवेदिति भावः । १०-३१-४.

**स्वेन पाप्मनेत्यत्र** । **पूर्वं हीति** । ब्रह्मवृत्त्यपहारस्य सर्पयोनिफलकत्वादिति भावः । **प्रपन्नोऽस्मि महायोगिन्नित्यत्र** । **तव नैते पित्रादय इत्यादि** । सर्पत्वादीनाधिकारित्वादेवं कथनमिति ज्ञेयम् । १०-३१-१६.

**तदात्मवैभवमित्यत्र** । **यत्र क्रियाज्ञानादीनामिति** । तेषां प्रयोजनाभाव इत्यर्थः । **कदाचिदथ गोविन्द** इत्यत्र । **इयं हि लीलेत्यादि** । तत्तत्काल एव कर्मविधानान्नामलीला कालप्रधाना । स चोपाधिरूपत्वेन सर्व- १०-३१-१९.

क्षयिष्णुरन्यानपि कालयति, दैत्याश्च तादृशा इति तदनुगुणः कालो भवतीति कालप्रधाने मार्गे दैत्यानां बाधकत्वमावश्यकम्। राजसे मार्गे तामसानां प्रभावस्योचितत्वाच्च। एवं सति तन्निवारणे भगवन्माहात्म्येन जातेपि तत्र नामलीलात्वस्यैव प्रयोजकत्वात्तन्माहात्म्यं नामलीलापर्यवसाय्येव भवतीत्यग्रजाय मणिदानेन ज्ञाप्यत इत्यर्थः। अतएव प्रकृते शिवरात्रिरात्रिनिशामुखसंमाननान्युक्तानि। तत्र बाधनिवारणस्यावश्यकत्वायाहुः **लौकिकालौकिकेति**। लौकिकं शंखचूडवधश्चरणारविन्दस्पर्शमात्रेण ब्रह्मशापजाहित्वस्यापि नाशोऽपूर्वरूपसम्पत्तिश्चालौकिकम्। **ज्ञात एव**। लौकिकैः प्रत्यक्षतया ज्ञात एवेत्यर्थः। विपरीते बाधकमाहुरन्यथेति। लौकिकालौकिकमाहात्म्याननुभवे फलश्रुतेर्यथाश्रुतार्थस्य प्रत्यक्षबाधितत्वेन तथोत्प्रेक्षापरत्वं कल्प्येत। यथा यजमानस्य बर्हिर्मुष्टिरूपत्वं प्रत्यक्षबाधितमिति यजमानः प्रस्तर इति वाक्यं यागोपयोगित्वेन, उभयोस्तत्त्वेनोत्प्रेक्ष्यते यजमान इति कल्पयन्ति। वस्तुतस्तु लौकिकमानानुरोधेन वेदार्थबाधका भ्रान्ता एव। यतो लौकिकं मानमलौकिकार्थसमर्पणे न समर्थम्, अतो यथाश्रुतार्थ एव प्रामाण्यं श्रुतेर्मन्तव्यमितिभावः। **क्रियाशक्तिप्रधान** इति। इन्द्रत्वेन देवत्वात्तथेति भावः। **अनेन मध्यमाधिकारिणामिति**। प्रमाणरूपबलदेवपराणामपि युगपदङ्गीकारेणेति भावः। अतएवैतादृशानामधिकारिणामनन्यत्वभङ्गोपि नेत्याहुः **अन्यथेति**। आवेशमात्र इत्यर्थः। तेनैव तेषामङ्गीकारान्न तद्भङ्ग इति भावः। **अद्भुतविक्रम** इत्यस्य तात्पर्यान्तरमाहुः **केवलार्थपराणामिति**। अत्रायमर्थः। अद्भुतं हि लौकिकोपपत्तिरहितं मनस उल्लासकं भवति। प्रकृते वेदरूपरामस्य विक्रमः क्रियाशक्तिफलरूपो विचित्रः स्वर्गादिस्तन्निरूपकस्य वेदस्य श्रुतितात्पर्यविदुषां यथाश्रुतार्थपराणामुपयोगः। वस्तुतस्तु स्वर्गशब्देन 'यन्न दुःखेन सम्भिन्न'मिति वाक्यादात्मसुखमेवोच्यत इति तत्त्वनिबन्धे विस्तृतं पितृचरणैरिति तात्पर्यविदन्यभजनराहित्येन प्रभुमेव भजेत्। तथा च केवलार्थपराणामित्यस्य यथाश्रुत्यर्थपराणामित्यर्थो वेदपक्षे। भगवत्पक्षे तु स्वप्रयोजनपराणाम्, न तु निरुपधिभगवत्पराणामित्यर्थः। अत्र स्वरक्षा कामसुखं च स्वप्रयोजनम्। एवं सत्यधिकारिभेदेन भजनभेदात्फलभेदोपीति तदुपपत्त्यर्थमुभयरूपेण क्रीडेति भावः। विपरीते बाधकमाहुः **अन्यथेति**। उभयरूपेणैतल्लीलाया अकरणे शंखचूडवधः स्त्रीणां स्वप्रयोजनसमर्पणं चेति कार्यद्वयमेकेनैव रूपेण न सम्भवतीति तद्रक्षार्थं रूपान्तरं प्रकटनीयं स्यादित्यर्थः। नामलीलायां शब्दप्राधान्यं मत्वा पक्षान्तरमाहुः **वेदे वेति**। यदि साधनरूपेण यथाश्रुतार्थपराणामर्थनिरूपणं फलरूपेण च तात्पर्यविदुषामितरनिराकरणं न कुर्यात्तदा 'हिंसायां यदि रागः स्याद्यज्ञ एव न चोदने'ति वाक्य'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायत' इति वाक्याच्च यागादिविधीनां 'पञ्चपञ्चनखा भक्ष्या' इति वाक्यस्य तदितरभक्षणनिषेधपरत्ववद्यागातिरिक्तकर्मनिषेधपरत्वमेव सिध्यति, न तु यागविधानपरत्वम्। अकरणे

प्रत्यवायश्रवणादवश्यकर्तव्यताकत्वविधानपरत्वं चेत्येकस्यैव विधेः स्वार्थपरत्वं स्वार्थातिरिक्तनिषेधपरत्वं चेति द्विगुणा वृत्तिः स्यादित्यर्थः ।

**विरजाम्बराचित्यत्र । शुद्धा मायेत्यादि ।** वेदमार्गे हि द्विधा प्रवृत्तिः । कर्मजडत्वेनैका, भगवदिच्छां ज्ञात्वा भगवत्परत्वेन चान्या । उभयत्रापि माया सहकारिणी । तत्र रजस्तमोयुक्ताऽद्ये । एतद्रहिता द्वितीय इति तथेति भावः । १०-३१-२१.

**उदितोडुपतारकमित्यत्र । प्रमाणं चन्द्र इत्यादि ।** अत्रायं भावः । अत्र हि रामप्रभ्वोर्लीलोच्यते । तौ च प्रमाणफलरूपौ । सामग्र्यपि तद्रूपैवेत्युच्यते । तथा च रसप्रमापकत्वादिन्दुस्तथा । 'सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणी'ति श्रुतेः सुकृतफलानुभवसामयिकतेजोरूपत्वादुडूनां तदुदयोक्त्या फलोदयो ज्ञाप्यत इति । **मत्तालिजुष्टमित्यत्र । षट्पदत्वादिति ।** गत्यर्थशब्दानां ज्ञानार्थत्वाज्ज्ञानसाधनषट्कवत्त्वमत्र सूच्यते । तानि दर्शनरूपाण्येवेति सर्वज्ञत्वम् । १०-३१-२२.

**मणिमादाय भास्वरमित्यत्र । मणिग्रहणेन मणिगता देवतेति ।** गृहीतेति शेषः । तदधिष्ठानं विना भास्वरत्वाभावादन्यथा विशेषणं न वदेदिति भावः । **ताः कामयतीति पक्ष इति ।** वल इति शेषः । उपभोगायान्या अपि कामयत इति ज्ञापनाय बहुवचनम् । नन्वेवं चेद्देवताया एव ग्रहणमुचितम्, न तु मणेरपीत्यत आहुः **तत्रैवेति ।** मणिनियामकत्वलक्षणाधिकाररूपं देवतात्वं हि भगवद्दत्तम् । तच्च तत्रैव स्थिताया भवति । तथा च तत्रैव मणावेव स्थित्वा या देवतात्वं भजते तस्या अपीत्यर्थः । **यत्किञ्चित्करोतीति ।** यन्मार्गसम्बन्धि यत् करोति तत् तन्मार्गाधिष्ठातरि तथेत्यर्थः । प्रकृते प्रमाणमार्गसंबन्धिफलारम्भकमण्याहरणं कृतवानिति तथेति भावः । तर्हि सर्वमूलत्वाद्भगवतस्तत्रैवास्य स्थापनमुचितम् । प्रभुकरस्पृष्टस्य मुक्त्यभावश्चानुपपन्न इत्याशंक्याहुः **प्रमाणबलमेवेति ।** १०-३१-३२.

**द्वात्रिंशाध्यायार्थोक्तौ । द्वात्रिंशोऽन्तरित्यादि ।** यद्यप्यानन्दः सर्वत्रैवान्तरेवानुभूयते, तथापि बाह्यरमणे शरीरचेष्टयोरेव प्राधान्यात्स्वरूपस्य मूर्तत्वेन तदात्मकानन्दस्यापि तथात्वाच्छरीरेन्द्रियादिष्वपि स्वरूपतः स्थापितस्य मनसाऽनुभवो भवति । प्रकृते त्वन्तःसंगेन प्रकटेनानन्देन शरीरेन्द्रियादिषु बाह्यरमणेनेव धर्मा भवन्तीत्यभिप्रेत्यान्तरित्युक्तम् । **स्वानन्दं पूरयामास इतीर्यत इति** सम्बन्धः । ननु धर्मिस्वरूपविरहजदुःखनिवारणं धर्मरूपेण गुणगानेन कथं सम्भाव्यते । तत्रापि स्वरूपेणैवानन्दपूरणं चेत्यत आहुः **येनैवेति ।** यथा स्वरूपं पूर्णानन्दात्मकम्, तथा नामलीलापीति सर्वमुपपद्यत इत्यर्थः । यद्वा । येन स्वरूपलक्षणेन हेतुना पूर्वं तथा कृतवांस्तेनैवान्तःस्थितेनैवात्युद्रेकेण मुखकमलद्वारा निर्गतेनाधुनापि तथा कृतवानित्यर्थः । एतदेव विवृतमन्तः**प्रविष्ट इत्यादिना ।** यद्वा । यथा यथा स्वविषयिकां भक्तानामार्ति १०-३२-०.

पश्यति भगवांस्तथातथा मुदितो भवतीति वस्तुस्थित्या दिवा विरहजार्तिपूर्णानां सायं मिलने यो रसो भगवतः स न दिवा संगमे सतीति च येनैव स्वानन्देन स्वयं पूर्णानन्दो ज्ञातो भक्तैस्तादृशं तं पूरयामासेत्यर्थः । यद्यपि गुणगानं भावस्वभावादेव भवति, न तु प्रयोजनानुसन्धानेन, तथापि पूर्वभावस्थैर्यमप्यनेन भवतीत्याहुः **अन्तःप्रविष्ट** इत्यनेन । पूर्वं या नादद्वारा सुधा प्रविष्टा भावात्मकभगवदात्मिका 'रन्ध्रान्वेणोरधरसुधया पूरयन्नि'त्यत्र निरूपिता सा पूर्वोक्तप्रकारैर्बहिःफलानुभवपर्यन्तैः क्रमेण पुष्टा सती स्वविषयरूपं स्वपोषकं बहिःसम्बन्धमलभमाना तदर्थं स्वयं गुणगानरूपेण प्रकटाप्यलब्धविषया सती स्वप्राकट्यात्पूर्वमन्तःसाक्षात्प्रियप्राकट्यात्पुनस्तत्रैव स्वस्यान्यासां च श्रोत्रद्वारा प्रविष्टा तत्र स्वविषयं पोषकं प्राप्य सुस्थिरा जाता । तदेतदुक्तम**न्तःप्रविष्ट** इत्यादिना । युग्मश्लोकैर्गाने हेतुमाहुः **शब्दार्थयोरिति** । पूर्वं नादमात्रमनुभूतमिति नादप्राधान्येन अक्षण्वतामित्यादिना गीतम्, अधुना स्वरूपानुभवोपि साक्षाद्वृत्त इत्युभयोरपि महारसरूपत्वज्ञापनाय द्वाभ्यां कथनमुभयोरप्येकरूपत्वमिति ज्ञापनायैकवाक्यता चेत्यर्थः । संख्यातात्पर्यमाहुः **सर्वेष्विति** । निरूप्यते यत इति शेषः । अत्र हि वर्षे वर्षे यावतीं लीलां प्रभुः करोति, तावती सर्वा लीला क्रमेण स्वामिनीभिर्गीता, न त्वेतावन्मात्रेति ज्ञापनाय पूर्णवर्षस्य द्वादशमासात्मकत्वात् माससमानसंख्याका युग्माः श्लोका उच्यन्त इत्याहुः **अतोऽत्रेति** । किञ्च । उपक्रमोपसंहाराभ्यां चैकं युग्मं भवति, तेनाधिमासेपि यत्करोति तदपि स्वामिनीभिर्गीयत इति ज्ञाप्यत इत्याशयेनाहुः **आद्यन्त** इति । समाहारोऽत्र । तत्र प्रतिपाद्यं रूपमाहुः **प्रक्रम** इति ।

१०-३२-१. **गोप्यः कृष्ण** इत्यत्र । **केवलपदादिति** । गोत्रजयोषितामितिवदपकर्षज्ञापकधर्मानुक्तिपूर्वकं शुद्धभावज्ञापकगोपीपदात् रासमण्डलमध्यस्था एवोच्यन्ते, न तु पूर्वाध्यायोक्ता इत्यर्थः ।

१०-३२-२. अन्त्ययुग्मद्वयतात्पर्योक्तौ **जानाति भगवानेवेति** । **ततः पुंस्विति** । त्रिविधेष्विति शेषः । लतानां तरुमध्यपातित्वेन पुंस्वेव गणना कृता ।

**वल्गितभ्रुरित्यत्राभासे** । **मानुषभावादिति** । मानुषभावमनतिक्रम्य लीलां करोतीति तथोक्तम् ।

१०-३२-३. मुकुन्दतात्पर्योक्तौ **वेणुनादेनेति** । परोक्षवादोत्र कृतो, विवक्षितार्थस्य गोप्यत्वात् । **शुद्धिर्भगवद्भावान्यभावराहित्यम्, मोक्षो** भजनानन्दानुभवः ।

१०-३२-४. **हन्त चित्रमित्यत्र** । **सोमोत्पत्तौ निर्णय** इति । तत्रामावास्यायां सोमस्य दिवा स्थितिस्थानमुक्तम् । 'त्रिमुहूर्तं वसेदर्के त्रिमुहूर्तं जले वसेत् । त्रिमुहूर्तं वसेद्गोषु त्रिमुहूर्तं वनस्पता'विति । एवं सति दिनस्य द्वादशमुहूर्तात्मक-

त्वात्प्रतिमुहूर्तं यां यां लीलां प्रभुः करोति, सा सा लीलाऽत्र गीयत इति संख्यया ज्ञापितं भवति । लीलासहितो भगवान् हृदि प्रकट इति यदा यां लीलां प्रियः करोति, तदैव सैव लीला स्वामिनीहृदयेषु स्फुरतीति नानुपपत्तिः काचित्। **हारहास** इत्यत्र। केवलमुक्ताहारतुल्यत्वे चित्रता नास्तीति यथा रत्नैरित्युक्तम् । अधरप्रभाभिररुणत्वं दन्तानां सहजम् । हासविभागस्थैर्यसूचितमर्थमाहुः **अनेनेति** । भगवत्स्नेहेन सर्वात्मना मायाद्यपगमः प्रमाणबलम् । तत्स्थैर्यंकृत्वा तु तन्निराकरणं भवति । एवं सति स्नेहमायाकार्ययोः सहभावकरणेन भगवत्स्नेहवतोऽपि जगतो ब्रजीयजीवरूपस्य प्रपञ्चे विषयरूपे तथात्वं तथेत्यर्थः । इदमप्येकं चित्रम् । एतादृशस्य सूचितस्यार्थस्योक्तौ **हन्तेति** खेदोक्तिबीजम् । भगवति रागवतामन्यत्रापि रागदर्शने भक्तानां खेदोत्पत्तेरावश्यकत्वात् । अन्यथा तु स्नेहेन सर्वत्यागे तैः सह लोके लीला न स्यादिति तथा कृतिरिति भावः । लोके नैवं हासः सम्भवतीत्यत्राप्यसम्भावना मा भवत्विति प्रमाणमुक्तं **श्रुतार्थापत्तिरित्यादिना**। अग्रिमपदेप्येवमेव ज्ञेयम्। अचिरस्थायित्वधर्मसाम्येन विद्युत्पदेन धनं लक्ष्यते । यद्वा । हारवद्भगवदुरस्येव हासस्थित्या विभागस्थैर्यसूचिता या प्रपञ्चविषयिण्यासक्तिस्तामपि स्वविषयिणीमेव करोति । एवं सति प्रपञ्चे प्रपञ्चविषयको यो मोहस्तस्य स्वविषयकत्वेन जनकत्वं स्थिरीकृतं स्वस्मिन्निति टीकार्थः सम्पद्यते । स्वमात्रविषयकासक्तिजनकत्वं लोकेत्यप्रसिद्धमिति चित्रतात्र । एवमेवाग्रेपि ज्ञेयम्। अस्मिन्पक्षे **हन्तेति** हर्षे । अत्र न कस्यापि बलं प्रभवतीति ज्ञापनाय सम्बोधनम् । विशेषणयोर्मुख्यार्थोऽतिगोप्य इति पितृचरणैर्न लिखितः । अत एव स्वामिनीभिरपि गूढार्थज्ञानार्थं सावधानतया श्रोतव्यमित्याशयेनेदं श्रृणुतेत्युक्तम् । अस्माभिरप्यत एव न लिख्यते । तदनुग्रहवतां स्वत एव तत्स्फूर्तेः, अन्येषां तज्ज्ञानस्यानुचितत्वात् । भगवन्मात्रस्नेहवतोन्यधर्मनिवृत्तिः स्वाभाविकीति प्रमाणबलनिरासः ।

१०-३२-६. **कर्हिचित् सबल आलीत्यत्र । गोप्यतयायमर्थं** इति । एतेन कर्हिचिदेव सबलः, कर्हिचिदेव गोपैः सहित इत्यपि सम्बन्धो ज्ञाप्यते। तेन सदैकान्ते भोक्तैवेति स इत्यनेनोच्यते । **मुकुन्द** इत्यत्र । दर्शनसुखमात्रं मोक्षः, स्वरूपरसज्ञानं स्वरसस्थापनमिति ज्ञेयम् ।

१०-३२-८. **वनचर** इत्यत्र । **सात्त्विकभावापन्न** इति । वृन्दावनस्य रसोद्दीपकत्वेन स्तम्भादिसात्त्विकभावहेतुत्वात्तद्युक्त इत्यर्थः । आदिपुरुषस्य तद्रहितत्वेन श्रवणात्तस्माद्भेदेन वर्णनमुचितमिति भावः । **वनलतास्तरव** इत्यत्र । पञ्चधर्मयुक्ता इति । 'पश्यतैतान्महाभागा'नित्यादिनोक्ताश्चत्वारो भगवदीयत्वं चैकमिति तथा ।

१०-३२-११. एत्येत्यस्याभासे । ज्ञानरूपे चेति । आत्मन्येव ब्रह्मत्वेन ज्ञात इत्यर्थः ।

विदधत्प्रतपत्रमित्यस्याभासे । किन्तु राज्यमपीति । सुरभीकृतगोविन्दामिष-

१०-३२-१३. कवदस्यापि स्वाधिपतित्वेनैव वरणमिति तयोक्तम् ।

स्वरजातीरनयदित्यत्र । नूतनत्वेनेति । यद्यपि स्वरजातिप्रापकत्वमेव मूल उच्यते, निजशिक्षा इति विशेषणेनापूर्वत्वं च प्राप्यते, न तु नूतनो-

१०-३२-१४. त्पत्तिः, तथाप्यन्यज्ञानमपेक्ष्येदमुक्तमिति ज्ञेयम्, अतो नादब्रह्म नित्यमिति पूर्वग्रन्थाविरोधोपि ।

रववञ्चितचित्ता इत्यत्र । इदानीमेवोपयोग इत्यादिना प्रतीतिप्रकार-कथनम् । उपयोगो नायिकावदुपभोग इति यावत् । वेणुनादस्यैता-

१०-३२-१९. दृगनुभावो यदेतासामप्येवं भावस्तत्रान्यासां का वार्तेति भावः ।

वत्सलो व्रजगवामित्यत्र । गावो मुच्येरन्निति । एकैकेक्षणादिलीलारसस्य निरवधिमहारसत्वेनैकत्र निमग्ना नात्मानमपि जानीयुः, किमुतान्यदित्यर्थः ।

१०-३२-२२.

मदविघूर्णितेत्यत्र । रजोगुणो मुख्य इति उद्दीप्तो रसभाव इत्यर्थः । तस्मिन् स-त्त्वेव तत्करणात् । मदविघूर्णितेत्यत्र मदोत्रेत्यारभ्योक्तमित्यन्तम् । पूर्वानुभूत-

१० ३२-२४. विविधनायिकाविविधविलासस्मृतिधाराजनितानन्दसन्दोहानुभवः पूर्णावबोध इत्युच्यते । स चेतरनिस्मारक इति मदरूपः । सोधुना भवतीनामिव ममापि भवतीसम्ब-न्धस्मृत्यैव वनेपि मोदः, न त्वन्यनायिकाविषयिण्या क्रिययापीति ज्ञापयितुं ज्ञानप्रापकन-यनयोरेव मदः प्रदर्श्यते । ज्ञानमपि भवतीमात्रविषयकम्, न त्वन्यविषयकमपीति ज्ञाप-यितुं विघूर्णितत्वम् । तादृग्बहिःप्रसरद्रूपं न भवतीति तथा । प्रचुरप्रेमवतीनां तत्रापि दिवा क्लिष्टानां प्रियदर्शने तत्रैवात्मप्रवेशः स्यादिति तदभावायैपदेव मानं ददाति यावता पृथक्-स्थितिर्भवतीत्याशयेनाहुः स्वरूपस्थित्यर्थमित्यादि । यद्वा । इयदवधि पृथक्स्थित इति ज्ञानेन माने सम्भवत्यपि ज्ञापितार्थज्ञानेनेषदेव मानो भवतीति तथा । अथवा । उक्तज्ञापनेने-षदपि मानं धत्तीत्यर्थः । यद्वा । प्रचुरस्मरभाव एव मदस्तेन तथेति पूर्ववत् । यद्यप्ये-तादृशस्य स्वप्रियाभ्यः पूर्णमेव सम्माननं कर्तव्यं भवति, तथापि मध्येमार्गमन्येपि पश्यन्तीति तेषामनुचितत्वज्ञानं यावता न भवति, तावदेव कृतवानितीषन्मानदः । अत्र हेतुः कीर्तिमत्त्वमेव, अन्यथा तु लोका अन्यथा वदेयुरित्याशयेनोक्तं वनमालीति । ईषत्त्वे हेतुमाहुः त्रिष्वपीति । त्रिष्वपि पक्षेष्वित्यर्थः । ते सम्माननमानमानखण्डनरूपाः । रूपेणागतानां स्मितेक्षणादिना य आश्वासः स स्वल्प एव कार्यः सम्माननस्य । पृथक्स्वरूपस्थितिमात्रं मानस्य । पूर्णमानवतीनामशेषमानखण्डने सति प्रचुरप्रेमवत्त्वेन लोकाद्यनुरोधाभाववत्त्वात्तदैव स्वानुरूपं सर्वं कुर्युः । अतस्तत्खण्डनं तावदेव यावता

तदा लोकविगीतं न भवति । **बदरपाण्डुवदनमित्यत्र । ईषन्मानदत्वादिति।** अग्रे पूर्णमानप्रद इति तस्माद्विशेष इत्यर्थः । **मृदुगण्डमित्यत्र । मृदुत्वं भोगा-** र्थमिति । रसविशेषानुभवार्थमित्यर्थः । तदुक्तं 'अनंकुरितकूर्चकः शृतसितोपलाढ्यं पयस्ततोङ्कुरितकूर्चकः सलवणाम्बु तक्रं पयः । ततः पलितकूर्चकः क्वथितगुग्गुलूद्वेगकृद्व-चन्ति हरिणीदृशां सततमेव भावाश्रय' इति ।

**यामिनीपतिरिवैष** इत्यत्र । **नन्वहर्पतिरपीति** । चन्द्रदृष्टान्तेन दिवा सुखदानं न प्राप्यते, तस्यातथात्वात् । भगवांस्तु दिवापि सुखं ददातीति कथमयं दृष्टान्तो युज्यत इत्यर्थः । अंगीकृत्योत्तरमाहुः **सर्वालंकारेति।** १०-३२-२५. सर्वासामलंकारभूतो वृन्दमध्ये तिष्ठति यस्ता विहाय स्थातुमशक्तः परस्परगुणानु-वादश्रवणतद्भावानुभवजनितानन्दसमुद्रलहरीभिरार्द्रार्द्रो रसपोषायाप्रकट इव दिवा यः स एष इत्यनेन प्रदर्श्यते । इतोप्यानन्दपोष इति ज्ञायते । यथान्यासां लीलानां परिज्ञानं भावबलात्, तथा स्थितेरपि । परन्तु कादाचित्कमिदं ज्ञानम्, अन्यथा गानरस एव न स्यात् । तथा च दिवा निकट एवाप्रकटः सन्सुखयति प्रकारान्तरेण । दिनान्ते तु प्रकटः सन् दूरादेव चन्द्र इव तापनाशकः । यामिनीपतिपदाद्यथाग्रे यामिनीं पूर्णां साक्षा-द्भुङ्क्ते सः, तथा प्रियोप्यस्मान् भोक्ष्यतीति ज्ञाप्यते । **मोचयन् व्रजगवामित्यत्र । गवां चेति ।** सद्यःप्रसूतानामिति शेषः । यद्वा । यथा रात्रिजं विरहजं तापं दिवा स्वरूप-नादादिभिर्गवां मोचयति, तथा व्रजस्थिताः सर्वे तदेकनाथत्वेन तदेकपोष्यत्वेन तदधीन-प्राणादिधर्मत्वेन, यथा तद्देहप्राणादिरक्षार्थं दिवा ता वने नीयन्ते, तथा तदर्थं निशीति च गाव इवेति गोपदेन स्वामिन्य एवोच्यन्ते ॥

पितृपादाब्जकृपया निरोधविवृतिर्मया । स्फुटीकृता यथाशक्ति भक्तानां तुष्टये हरेः ॥ १ ॥
अनेनैव प्रकारेण निरोधविवृतौ बुधैः । छेत्तव्यः संशय इति तं प्रदर्श्योपरम्यते ॥ २ ॥
न हि व्रजवधूपदाम्बुजपरागरागं विना मनागपि विचारणे भवति शक्तिरस्मास्वतः ।
मया चिरविचारहृद्गततदीयतात्पर्यमाश्रितेन लिखितं सदा गिरिवरेशपादाम्बुजम् ॥ ३ ॥
संशयपङ्ककलंकितहृदया गोविन्दविट्ठतिविवृतौ ये । ते श्रीविट्ठलवाणीपायोभिर्निर्मलाः सन्तु ४

इति श्रीगोपीजनवल्लभचरणैकतानश्रीविट्ठलेश्वरदीक्षितविरचितो दशमस्कन्ध-प्रकरणद्वयविवृतिप्रकाशः समाप्तः ॥

श्रीगोपीजनवल्लभाय नमः ।

# भ्रमरगीताध्यायटिप्पणी ।

श्रीमद्विट्ठलेश्वरप्रकटिता ।

---

श्रीकृष्णः शरणं मम ।

विविधापराधकूटक्षमाक्षमांस्तातचरणयुगरेणून् ।
नत्वा तत्तात्पर्यं प्रकटीकुर्मो यथाशक्ति ॥ १ ॥
तस्मादरजसागत्य यादृग्भावः कृतो मम ।
तादृशेनैव तद्भावं वर्णयाम्यवशः क्वचित् ॥ २ ॥

ननु व्रजसीमन्तिनीनां 'ता मन्मनस्का' इत्यादिवाक्यैः प्रभुणा स्तुतानां ज्ञानोपदेशो निरोधविरोधी, तयोः सहानवस्थाननियमात् । एवं सत्यस्याध्यायस्यैतत्स्कन्धाप्रवेशश्च स्यात् । 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञान न च वैराग्य प्रायः श्रेयो भवेदिहे'ति भगवद्वाक्यादत्युच्चावस्थां प्रापितानां नीचावस्थाप्रापणमयुक्तं चेत्याशंकानिरासमध्यायार्थोक्त्यैव कुर्वन्ति चतुश्चत्वारिंशेऽध्याय इति । अस्मिन्नध्याये निरोधमेवाहेति संबन्धः । उद्देश्यत्वेन ज्ञानोक्तिव्यवच्छेदायैवकारः । 'त वीक्ष्ये'त्युपक्रमेण 'भक्त्युद्रेक व्रजौकसा'मित्युपसंहारेण च स्नेहस्यैवोक्तिः सम्यक्त्वम् । पूर्वमहर्निशं पूर्णो भगवद्भावो निरूपितः । अधुना तु यथा प्रियेण समं स्वसंबन्धव्यवच्छेदकोपस्थितावार्तिशयोऽनिर्वचनीयो भवति लौकिकानामपि, तथा तादृग्ज्ञानोपदेशश्रवणेनातितप्ततैलपतितजलबिन्दुसदृशेनात्युत्कटभावो वर्ण्यत इति पूर्वस्माद्विशेषः । ननूपदेशस्य न भावजनकत्वम्, किन्तु स्थितस्यैव प्राकट्ये हेतुत्वम् । एवं सत्येतदुक्तिर्व्यर्थेत्यत आहुः याते कृष्ण इति । अन्यथेति शेष. । हृदि सर्वदा प्राकट्यान्नैकट्याभावो बाधित इत्यत उक्त लोकरीत्येति । देहलीदीपन्यायेन लोकरीत्येत्युभयत्र संबध्यते । तथा सति लोकरीत्यैव याते, वस्तुतस्तु व्रज एव सदा प्रकट इत्यर्थः । लोकवन्नैकट्याभाव. पूर्वमपीति स्फुटमित्युक्तम् । यद्येतत्कथनं न स्यात्तदा बहिः प्राकट्याभावेपि कालक्षेपदर्शनात् सर्वेषां भक्तानां तथा मतिः स्यात्, तदभावार्थमेतत्कथनमावश्यकमित्यर्थः । ननु ज्ञानोपदेशश्रवणेनापि सा मनिर्मेविन्ध्येवेत्यत आहुः सेवकेनेति । ता उक्तप्रकारैर्निरुद्धा एव । तत्र हेतवः सेवकेनेत्यादिनोच्यन्ते । यदि ज्ञानमार्गे प्रवेशयेत्, ज्ञानमार्गीयेणैवोपदेशं

कारयेत् । सेवकेन कृत्वोपदेशं यत्कारितवांस्तेन भक्तिमार्ग एव प्रवेशोऽभिमतो, नेतरस्मिन्नित्यर्थः । किञ्च । एताः पूर्वं प्रयोजनवशान्न निरुद्धाः । तथासति प्रयोजने जाते निरोधो गच्छेत् । किन्तु शुद्धभावप्रसादितः प्रीतः प्रोवाच सस्मितम् । 'माऽसूयितुं नार्हथ तत्प्रियं प्रियाः । न पारयेह'मित्यादिवाक्यैः भगवतो व्रजसीमन्तिनीविषयिणी या प्रीतिस्तयैव ता निरुद्धाः, अतः कथमन्यथा कुर्यात् । अतो **ज्ञानेन** उपदेशजनितज्ञानेनापीत्यर्थः । तत्र प्रकारमाहुः **आत्मत्वेनेति** । नहि स्वात्मनः स्वेन समं वियोगः स्वविस्मृतिः स्वाहिताचरणं वा संभवत्यतस्तथाभूतासु किं समावेयमस्तीति स्वस्मिन्नसाधारणनिरुपधिस्नेहं प्रियस्य ज्ञातवत्य इति पूर्वस्मादतिविलक्षणः स्नेहभाव उत्पन्नः । अत एव मूले प्रियतमपदमुक्तमेवं **प्रियतमादिष्टमिति** । अथवा । **सेवकेनेत्यादिना** भगवतः कायवाङ्मनोभिरेतन्निरोध उच्यते । सेवकः कायरूपः, उपदेशो वाग्रूपः, प्रीतिर्मानसी । अत उपदेशजेनात्मत्वेन ज्ञानेनापि प्रियस्वरूपपरत्वमेवासाम्, न तु ज्ञानिनामिव स्वास्थ्यम्, अन्यथा 'कृष्णावेशात्मविक्लव'मिति न वदेत् । तथाचैतावत्पर्यन्तं स्वसत्ताज्ञानमपि स्थितम् । अतः परं तु तामपि न ज्ञास्यन्तीति पूर्वस्मादधिको निरोधः सेत्स्यतीत्यर्थः । अत एव **सर्वथेति**पदम् । एवं भक्तिमार्गविरोधं परिहृत्य ज्ञानोपदेशस्यावश्यकतामाहुः **वस्तुन** इति । 'विज्ञाय संदेशहर'मितिवाक्यात् स्वार्थमेवागत इति निश्चयेन मानोत्तिरिति निश्चयस्यापि दोषत्वम् । भगवदीयत्वनिश्चयाभाव उपालंभासंभवादिति भावः ।

**चतुश्चत्वारिंशाध्यायविवरणे** स्वामिनीभावेषु दोषशब्दप्रयोगस्यायमाशयः । लोके ह्यन्त्यावस्थाहेतुर्दोषो भवति, विरहभावस्य च तथात्वं प्रसिद्धमेव । यथातिप्रचुरे दोषे तीक्ष्णौषधदानं विषमाशीविषदंशश्च कार्येते मर्मस्थानेषु, तेन बहिःसंवेदनं तत्कालीनमरणनिवृत्तिश्च, ततो विविधरसैः शनैः शनैः सर्वात्मना दोषापगमे स्वाभाविकजीवनहेत्वन्नदानम्, तेन च सर्वात्मना स्वास्थ्यम्, तथात्राप्यत्यन्तप्राणबाधायां हि प्रिये दोषारोपः । स चाचिरादेवान्त्यावस्थाज्ञापको भवति, अतस्तं दृष्ट्वा तन्निवृत्त्यर्थमेवोक्तरूपसदृशोपदेशं दत्वा स्वयं प्रियभिषजा प्रेषित इत्युद्धवस्तादृशं तं दत्तवान् । तदा बाह्यानुसन्धानमभूत् । अत एव 'तत्संदेशागतस्मृती'रितिवचनम् । 'ततस्ताः कृष्णसंदेशैर्व्यपेतविरहज्वरा' इति ज्वरपदप्रयोगश्च । भगवतोऽत्रैव तात्पर्यमित्येतदेव फलत्वेनानूद्यते, न तु ज्ञानमार्गीयं ज्ञानम्, अन्यथान्ते 'कृष्णावेशात्मविक्लव'मिति न वदेत् । तर्हि ज्ञानोपदेशस्य कोपयोग इति चेत् । उच्यते । यथा योगिनो वपुर्योगसंस्कारसंस्कृतं सन्नाश्याद्युपद्रुतं भवति, तथा भगवानात्मेति महापुरुषोपदेशेन ज्ञानाख्यसंस्कारे संपन्ने विरहेन्त्यावस्था भवितुं न शक्नोतीति तत्रैवोपयोग इति । अत्रागतस्मृतित्वे विरहज्वरराहित्ये च हेतुः संदेशे प्रियसंबन्धित्वज्ञानमेव, न तु शास्त्रार्थोयमिति ज्ञानम् । अन्यथोपदेशपदमेव वदेदुभयत्र, न तु संदेशपदम् । किञ्च । ज्ञानोपदेशलक्षणसंदेशो युक्तरूप एव ।

तत्रोपक्रमे 'श्रूयतां प्रियसंदेश' इति संदेश एकत्वमेवोक्तम् । 'कृष्णसंदेशै'रिति बहुत्व पश्चादुच्यते । एवं च सति ज्ञानोपदेशस्य स्मृतानुपयोगो विविधान्तरङ्गवार्तानां तज्ज्वरापगम इति मन्तव्यम् । अत एव भगवतापि 'मत्संदेशै'रिति बहुत्वमुक्तं संदेशेषु । विप्रयोगे प्रियसंदेशस्यापि तत्तुल्यत्वभानेन तदा स्वास्थ्यस्य रसशास्त्रसिद्धत्वादपि । अपरञ्च । स्मृतिर्हि पूर्वानुभूतस्य, पूर्वमनुभवश्च निर्दोषपूर्णगुणस्य भगवत. । मध्ये विरहस्वाभाव्याद्दोषारोपक्षणे व्यभिचारिभावे जाते यथा पैत्तिकादिज्वरभरेण दोषवशात् प्रलापे सत्यञ्जनादिना प्रकृत्यनुसधानेन प्रलापनिवृत्तिः, न तु ज्वरस्यापि, तथोपदेशसंदेशेन विरहभरनिवृत्त्या पूर्वोक्तव्यभिचारिभावनिवृत्तिः, न तु विरहस्यापीति । अत्र वयं त्वेव मन्महे । पूर्वमुपक्रमे दुःखमेवोक्तम्, तत उपदेशः, तदनन्तरमपि 'हे नाथे' त्यन्तेन ग्रन्थेन क्लेशो निरूपितः । ततो विविधसंदेशैर्विरहतापनिवृत्तिर्भगवत्स्मारकत्वेन ज्ञानं चोक्तम् । ततोऽन्ते 'दृष्ट्वा स्त्रीणां भगवति कृष्णावेशात्मविक्लव'मिति सर्वदानुवर्तमानः क्लेश उक्तः । एवं सत्युपक्रमोपसंहाराभ्यां विरहभाव एव दृढो निरूपितो भवति । मध्ये यत् 'ज्ञात्वात्मानमधोक्षज'मित्युक्तम्, तत्तु 'असावहं, कृष्णोऽहं' 'पश्यत गति'मितिवत्कादाचित्क एव भाव उक्त इत्युपसंहारानुरोधान्मन्तव्यम् ।

नन्वेवं सत्युद्धवप्रेषणं किंप्रयोजनकम्, उक्तभावस्य सार्वदिकत्वादिति चेत् । अत्राप्युच्यते । उद्धवे हि प्रभोः परमा कृपा, अतः पूर्णो भगवद्भावो यादृशोऽस्ति, तादृशोऽत्र देयः । स च व्रजसुन्दरीष्वेव सिद्धः । पुंव्यक्तावसंभावितश्च । अतो मद्भाव एतादृश इत्युद्धवाय प्रदर्शनमेकं प्रयोजनम् । ततस्तद्दर्शनेन सततं तद्भावनया प्रियसंदेशहारकत्वेन तासामत्यनुग्रहेण चोद्धवेऽपि तज्जातीयभावोत्पत्त्यर्थमिति द्वितीयं प्रयोजनम् । विप्रयोगे प्रियसंदेशागमनेन यः कश्चन संतोषः स नान्यदा नान्यथा चेति तृतीयम् । 'मद्वियोगाधि'मितिवचनान्मध्ये मध्ये यदैव प्रियेणैवमेवं संदेशः प्रेषित आसीदिति स्मरिष्यन्ति, तदा च पूर्वनिलक्षणो भावो भविष्यतीति तुरीयम् । ज्ञानाद्भक्तिरधिका, यतस्तदुपदेशेऽपि भक्त्यैव तदुपमर्दो, न तु तेन भक्तेरिति निदर्शनार्थमपीति पञ्चमम् । अत एवैकादशे भगवद्वचनं 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे'ति । पित्रोः श्रीनिजजननमुक्तमेव । भगवतः स्वामिनीनां चान्योन्यसंदेशैरन्योन्यं ये भावा जायन्ते, तेनन्ता एवेत्यनन्तान्येव प्रयोजनानीति दिक् ।

प्रकरणार्थमाहुः बीजमिति । वक्ष्यमाणस्तोत्रादौ बीजं स्नेहः । स पूर्वं निरूप्यते । स्तोत्रोपदेशयोरनन्तरं दोषस्य प्रिये दोषारोपस्य मानस्य च निवृत्तिः, तया च पूर्वस्नेहोक्तिः । ततो ज्ञानस्य फलं प्रिये निर्दोषपूर्णगुणत्वज्ञानं स्वस्मिन्नल्पत्वज्ञानं च । तत उद्धववाक्यैः कृतार्थत्वम् ।

१०-४४-१. मानाद्दोषद्वयमिति । उपालंभो भ्रमरव्याजोक्त्या दोषोक्तिश्चेति द्वयम् ।

**जानीमस्त्वामित्यादिवाक्यप्रतिपाद्यार्थोक्त्यनन्तरं कस्याश्चिदेव तामस-**

१०-४४-४. **तामस्या** इति । अत्युत्कटभक्तिमार्गीयभाववत्त्वेन ज्ञानमार्गीयज्ञानोदय-संभावनारहिताया इत्यर्थः । सत्त्वरजस्तमांसि प्राकृतेभ्यो भिन्नानि भगवद्धर्मरूपाणि सन्तीति पूर्वमेव बहुधोक्तम् । समित्युपसर्गसूचितमर्थमाहुः तत्रापीति । भूपणादिसर्वसंपद्युक्त आगत इति । भर्तरि अपि कुशलं ज्ञायते तवापि तथेत्यर्थः । एवं कथने गूढाभिसन्धिमुद्घाटयन्ति **अन्यथेति** । स्वयमापद्ग्रस्तोऽन्यानुपेक्षेत चेत्, न दोषः स्यात्, सर्वतः कुशली स्वयमन्यान् दुःखितांश्चेदुपेक्षेत, तदा सा दोषायैव स्यात्, प्रकृते स्वोपेक्षाकरणात्तथात्वमिति भावः । दुःखिता अपि तदीयत्वममन्यमानाश्चेत्, तदा तदुपेक्षा न दोषाय स्यात्, न तु तद्विपरीतानामपीत्याशयेन स्वस्य केवलतदीयत्वमाहुः **भर्त्रेति**-पदेन । विवाहितो हि भर्ता भवति । अत्र तदभावेपि स्वस्य केवलतदीयत्वं वक्तुं तथोक्तम् । किञ्च । न पतित्वमात्रम्, किन्तु भरणकर्तृत्वमपि, एतादृशश्चेदुपेक्षते, तदा तासां जीवनमेव न भवतीति भावः ।

**पुंभिः स्त्रीषु कृतेत्यत्र** विवाहिताः पुमांसः स्त्रियश्च ज्ञेयाः । अत एव विरागे

१०-४४-६. श्रुत्युक्तत्यागोक्तिः । **स्नेहमेव कुर्वन्तीति** । न त्वपराधेपि क्रोधानुवृत्तिमिति भावः । अथवा । कुर्वन्त्येवेति संबन्धो ज्ञेयः ।

तत्र **सात्त्विकादिभावेष्विति** । आद्यो दृष्टान्तो राजससात्त्विकः । ततो राज-

१०-४४-८. सराजसः । ततस्तामसतामसः । ततस्तामसराजसः । ततो निर्गुणः । ततः सात्त्विकराजसः । ततस्तामससात्त्विकः । ततः सात्त्विकसात्त्विकः । ततः सात्त्विकतामसः । ततो राजसतामस इति दश ।

**मधुप कितवेत्याभासे । प्रथमं तामसतामसीति** । अत्रेदमाकूतम् ।

१०-४४-१२. विप्रयोगे प्रलापदैन्यादिवद्दोषारोपोपि व्यभिचारिभाव एव । तथा सति रसात्मकत्वाविशेषेप्यसुप्रभावोत्पत्तौ भगवद्धर्मरूपो रसात्मकः प्रमाणादि-सर्वबलनिरासकोत्युग्रस्तामसत्वेनोपचर्यमाणो यः स एव हेतुरिति वाच्यम् । भावानां मिथ उपमर्द्योपमर्दकभावस्तु 'रजस्तमश्चाभिभूय सत्त्वं भवति भारत । रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथे'ति प्रभुवाक्यात्सत्त्वादीनां यथा, तथैवेति तत्त्वमुपचारेणोच्यते । एवं सति रसात्मकप्रभुधर्म एवाविर्भवतीत्यारोपो दोषत्वायमिति न वक्तुं शक्यम् । भगवदितरास्मरणात्, स्मर्यमाणस्य तस्य स न वक्तुं शक्यः । इत एव नानुभूयमानस्य । प्रभुस्वरूपे तद्धर्मेषु वा दोषत्वाभावात् । ज्ञानवत आत्मस्फूर्तिश्चावश्यकी । एवं सति तदा तदभावादोषत्वेनैव प्रभुधर्मेषु ज्ञानादुच्यमानधर्मात्मकत्वमेव स्वामिन्यास्तदा संपन्नमिति तामसतामसीत्युक्तम् । श्रीमदुद्धवानामपि स्वामिन्या एतादृगवस्थादर्शनेन प्रभुरेतादृशीरेताः कथं न मिलतीति भावो दोषारोप इव जात इत्यपि ज्ञापनायैतत्स्वरूपत्व-

मेवोक्तम् । एतादृश्याः स्वामिन्या हृद्यागमनेनैतद्भावोदयात् । उपचारोयमित्यरुच्या पक्षान्तरमाहुः तद्भावयुक्ता वेति ।

**मधुप कितवेत्यत्र । मतान्तरभाषेयमित्यादि ।** अत्रायमाशयः । शुद्धपुष्टिमार्गीयभक्तानां ज्ञानमार्गबोधनं भक्तिमार्गविरुद्धतमम्, अतो न समाधिभाषायामस्य प्रवेशो वक्तुं शक्यः । वर्ण्यते चात्युत्कटो रसात्मकः स्नेहभावः । स एव हि परमपुरुषार्थरूपः । तद्विघातकश्च सः । यद्यपि ज्ञानस्य स्वातन्त्र्येणात्रानुद्देश्यत्वम्, किन्तु प्रिये दोषारोपमात्रनिवर्तकत्वेन, तथापि तदारोपस्यापि रसात्मकत्वाद्व्यभिचारिभावत्वेनास्थिरत्वाच्च न सर्वथा ज्ञानस्योपयोगः । न ह्येतावत्पर्यन्तं साधिते निरोधे काचिन्न्यूनतास्ति, येन ज्ञानमुपयुज्येत । तस्मात् सुष्ठूक्तं मतान्तरेत्यादि । कथने तूपपत्तिरियमेव । यत्संगमस्तदार्तिर्वा पुरुषार्थ इतिशास्त्रार्थः । एवं सति विप्रलंभे प्रिये दोषस्फूर्तौ स्वदुःखदत्वज्ञानं हेतुः । तथा सति स्वसुखदत्वेनोत्तमत्वं प्रियत्वं च सिध्यति, न तु स्वरूपतः । तथा सति स्नेहस्य निरुपधित्वं भज्येतेति तत्समाधानायात्मत्वेन बोधनम् । तथा सति भगवत्वेतासामेतासु च भगवतः सहजः स्नेहः सूचितो भवति । दुःखदत्वासंभवश्च । यथा स्वाधिष्ठितं देहं पीडयितुं जीवात्मा नोत्सहते, तथा स्वाधिष्ठितं जीवात्मानं भगवानित्युक्तं भवति । अत एव श्रुतिराह 'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा'मिति । तथा च विप्रयोगेन्तर्लाभः, संयोगे बहिरिति तदा तदा तत्तद्धर्माः स्नेहवशादाविर्भवन्ति । तावपि स्नेहजनितावेव, अन्यथा सर्वेषां तौ स्याताम् । तथा च स्नेहस्यैव दोषस्फूर्तिहेतुत्वं पर्यवसतीति निर्दोषत्वं प्रिये भाति । इदं तु मर्यादारीत्योच्यते, वस्तुतस्त्वत्युत्कटस्नेहेनैव दोषः स्फुरति, सोपि भगवद्भाव एवेति न भ्रमरूपो, न वा दोषरूपः । रसात्मकभगवत्स्वरूपमेतादृशमेवेति नाधिकं विचारणीयमत्रास्ति । अन्यथा रसाभाव (रसाभासः ?) एव सिध्यतीति नः प्रतिभाति । ज्ञानात् भक्तेराधिक्यमप्यनेन ज्ञाप्यते ।

**समाधिभाषायामिति ।** तत्र हि माहात्म्यज्ञानस्नेहौ कचिद्व्यस्तौ कचित्समस्तौ च निरूप्येते । प्रकृते तु 'काचिन्मधुकर'मित्यादिना प्रस्तुता कथा न तादृशीत्यस्याः कथायाः समाधिभाषात्वं तद्विरुद्धार्थकत्वं च विरुद्धमिति कस्यचिद्भाति, विहितस्नेहाभावेन भक्तिमार्गविरोधश्च तथा, स बोध्यते विरोधोत्र नास्तीति । तत्र मतान्तरभाषात्वं कामशास्त्रानुरोधित्वं चेति हेतुद्वयम् । अत्रेदं ज्ञेयम् । मर्यादामार्गीयमतात् पुष्टिमार्गीयं तत् मतान्तरमित्युच्यते । समाधौ तु व्यासैर्द्विविधोपि भक्तिमार्गो दृष्टः । 'अनर्थोपशमं साक्षाद्भक्तियोग'मिति वाक्यात् । तदर्थस्तु 'अनर्थोपशमं भक्तियोग'मिति पदेन साधनरूप उच्यते, 'साक्षाद्भक्तियोग'मिति पदेन फलरूपः । 'अजानतो लोकस्य' आद्यः । 'समाधौ दृष्ट्वा स्वयं विद्वानि'तिद्वितीयमपि तमुक्तवान् व्रजसीमन्तिनीषु । अयं पुष्टिमार्गीय इति मतान्तररूपः । एतादृशेषु ज्ञानोक्तिरपि तथा । कामशास्त्रानुसारेणैव पूर्वं स्व-

नन्दं दत्तवानित्यधुनापि तथैवोच्यत इति न कोपि विरोधः । तथाचेयं समाधिभाषैव । तथाचात्र समाधिभाषायां सत्यां भक्तिमार्गे च सत्युक्तरीत्या न विरोध इत्यर्थः ।

कालस्य दूतत्वमुपपादयन्ति **कालद्वारा** ह्रीत्यादिना । तत्तत्काले तथा तथा भगवत्पूजाध्यानस्तोत्रादेर्विहितत्वेन स स काल एव भगवत्प्रापकः, तदभावे तदकरणादिति भावः ।

**प्रियसखेत्यत्र । प्रथमपर्यायादित्यादि** । 'काचिन्मधुकरं दृष्ट्वे'त्यादिनोक्तः प्रथमः पर्यायः । तदेतद्दर्शनेन यादृशी बुद्धिर्जनिता तस्याः सकाशादन्यथा प्रकारान्तरेण बुद्धिमधुना जनयतीत्यागमनमपि तथैव संभावयतीत्यर्थः ।

१०-४४-२२.

कालपक्षे अर्थसंगतिमाहुः **हेमन्ते तासामित्यादिना** । पूर्वं वसन्ततोरागमनमुक्तम् । तथा च 'पुनरागा' इति पदात्तस्यैवाधुनाप्यागमनं वक्तुमुचितम्, न तु हेमन्तस्येति शंकां निरस्यन्ति **तासां साधनोपक्रम** इत्यादिना । अत्रेदमाकूतम् । पूर्वोक्तस्तु नेष्टसाधकत्वेन प्रतीतः, अधुना प्रतीयमानस्त्विष्टसाधकत्वेन प्रतीयते, तादृशश्च हेमन्त एव । व्रते कालस्याप्यङ्गत्वातेन तत्त्वमुच्यते । तथा च व्रततत्फलदानसमये पूर्वमागत आसीः, अधुना किं पुनरागा इष्टं साधयितुमित्यर्थः पर्यवसति । किञ्च । चैत्रादिकस्य संवत्सरस्य नवमो मासो, हेमन्तस्य प्रथमो मासो मार्गशीर्षो भवति । उक्तिश्चेयं नवमीति स एव तद्व्यापारविपर्यीक्रियते । गतस्य तस्यैवावृत्तिरसंभावितेतिशंकामावायाहुः **पुनर्दण्डकलितवदिति** । यथा गतोपि पुरुषः पुरुषान्तरेण दण्डेन प्रेरितः पुनरावर्तते, कुलालचक्रप्रादेशो वा, तथा पुनरस्मदिष्टं सिषाधयिषुस्त्वां प्रेषितवानित्यर्थः । कालो हि सर्वनियामकः, तस्मान्यप्रेरपत्वेनागमनमसंभावितमित्यत आहुः **सात्त्विक** इति । दोषाभावज्ञापनपूर्वकप्रियत्वादिज्ञानानुगुणत्वेन तथा । भक्त्यनुगुणत्वेन गुणातीतो वेत्यर्थः । प्रेषितो हि प्रेषकवाक्यमंगीकृत्यागत्य तदुक्तं वचनं निवेदयति । प्रकृते कालस्तादृश इति तस्मिंस्तद्धर्मानाहुस्तदीयेत्यादिना । कालपक्षे स्वस्य श्रुतिरूपत्वान्मन्त्रदेवतारूपत्वम् । तत्तत्काले कृतं पूजनादिकं मन्त्राधिष्ठातृदेवतावरेणैव फलितं भवतीति **वरैर्युक्त**मित्यर्थः । **विभज्यैवेति** । शक्तीनां भगवद्धर्मत्वेन तत्स्वरूपाश्रितत्वेपि पृथक्कार्यकरणार्थं तथेत्यर्थः ।

**सान्त्वयन् प्रियसंदेशैरित्यत्र । तत्रापि प्रियसंदेशेनैव, न तु स्वत** इति । अत्रायमाशयः । एतादृशीनां सान्त्वनं प्रभुप्रादुर्भावं विना तद्वाक्यानामप्यशक्यम्, किं पुनर्मम, तच्चावश्यकम्, तत्र स्नेहस्यैवायं सहजो धर्मो यत्तत्संबन्धिन्यपि तत्त्वेनैव भानम् । तेन शब्दार्थस्यानभिप्रेतत्वेपि प्रियसंबन्धित्वेन शब्दज्ञानेनैव तच्छ्रवणेनापाततः सान्त्वनं भविष्यतीति ज्ञात्वा श्रीमदुद्धवैर्विवक्षितमुक्तमितिज्ञापनाय प्रियपदमुक्तमिति । अत एवोपक्रमोपसंहारयोरपि 'श्रूयतां प्रियसंदेश'

१०-४४-२२.

इति, 'तत्संदेशागतस्मृती'रित्येवोक्तम्, न तूपदेशपदम् । वस्तुतस्तु संदेशोप्येतादृशीषु न वक्तुं शक्यः, तथापि प्रभोराज्ञा तथेति तत्पालनार्थमुक्तमित्याहुराज्ञा चेत्यादि । स्वरूपातिरिक्तस्य सान्त्वनहेतोः स्वस्याज्ञानेप्याज्ञानुभावेनैव सान्त्वनं भविष्यति, नो चेत्प्रभुः कथं वदेदिति हृदिकृत्वा वदन्तीति भावः । एतदवस्थादर्शने तादृग्वाक्यश्रवणेपि यदेतेषां वाक्प्रसवः स तु 'मत्सदेशैर्विमोचये' त्याज्ञानुभावेन, न तु स्वसामर्थ्येनेति ज्ञेयम् । वस्तुतस्त्ववश्यंभाव्यसामर्थ्ये प्रेषणवैयर्थ्यं ज्ञात्वा स्वसामर्थ्यमेव वरमिव दत्तवान् 'मत्संदेशैर्विमोचये'ति वचनेनेति प्रतिजानीमः ।

**अहो यूयमित्यादेराभासे । तासां स्वाभाविक** इत्यादि । षड्भिः स्तोत्रकरणे तात्पर्यमुच्यते । स्त्रीत्वादिस्तत्स्वभावश्च भगवद्गुणकृत एवेति । 'ता मन्मनस्का' इति भगवद्वाक्याच्च तद्धर्मा भगवद्धर्मा एवेति निर्दोषगुणरूपा एवेति ज्ञापयितुमैश्वर्यादिगुणसंख्यासमानसंख्याकैः श्लोकैः स्तवनमित्यर्थः । भगवद्गुणैः अन्तः स्थितभगवत्स्वरूपा इति तद्धर्मा एव वागादिरूपेणाविर्भवन्तीति तथेत्यर्थः । **साधारण्यार्थाविति** । कतिपयानामेव न पूर्णार्थत्वम्, किन्तु सर्वासाम् । लोका अपि न तथा, किन्तु सर्व इत्यर्थः । **तेषामिति** । लोकानामित्यर्थः ।

१०-४४-२३.

**भवतीनां वियोग** इत्यत्र । **जीवब्रह्मणोस्तु भेदेऽज्ञानमेव हेतु**रित्यादि । अत्रेदं प्रतिभाति । 'एतावानस्य महिमा अतो ज्यायांश्च पूरुष' इत्यादिश्रुतिभ्यो 'यस्मात्क्षरमतीतोह'मित्यादिवाक्यैश्च प्रपञ्चातीतत्वं पुरुषोत्तमस्य निर्विवादम् । 'एतावानस्य महिमा' 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतिभ्यः प्रपञ्चस्य विभूतिरूपब्रह्मात्मकत्वम्, पुरुषोत्तमस्य तदतीतत्वं चोपपद्यते । एवं पुरुषोत्तमलीलापदार्थानां पुरुषोत्तमात्मकत्वमेव, न तु पूर्वमध्यपातित्वमिति मन्तव्यम्, अन्यथा 'ते ते धामान्युश्मसी'त्याद्यृक्षु 'विष्णोः परमं पद'मिति न वदेद्, 'विष्णोः कर्माणि पश्यत' 'तद्विष्णोः परमं पद'मित्यादि च । एवं सति सर्वस्यापि लीलापदार्थस्यात्मरूपेण सह भवतीनां वियोगो न संभवति । न हि स्वेन साकं वियोगः संभवति । एतदेव मूले सर्वात्मनेति पदेनोक्तम् । सर्वात्मना सर्वथेत्यर्थः । तथाच तत्तद्देशकालज्ञानक्रियातत्करणादेरातृणस्तम्बस्य नित्यत्वेन श्रीरासोत्सवस्वनृत्यप्रभुबाहुगृहीतकण्ठानि स्वस्वरूपाणि पूर्वमनुभूतान्यद्यनापि वर्तमानैस्तैः साकमेतदवस्थापन्नानामपि स्वानामभेदज्ञापने पूर्वोक्तानामनिर्वचनीयनिरवध्यानन्दात्मकत्वात्तथात्वमेवाधुनापि स्वस्मिन्भातं भवतीति स्वास्थ्यं भवति । यद्यप्यस्य कादाचित्कत्वेन तस्य च सर्वोपमर्दित्वेन न सर्वात्मना स्वास्थ्यसंभावना, तथाप्यस्य प्रियसंगमरूपत्वेन निरवध्यानन्दरूपत्वेन भवतितरां तथात्वम्, येन तत्सामयिकोत्कटदुःखनिवृत्त्या किञ्चित्कालं सस्मितस्वामिनीमुखाब्जदर्शनेन स्वागमनसार्थकत्वज्ञानेन स्वस्यापि दुःखनिवृत्तिः । एवं सति भवतीनां मे वियोगो, मम च भवतीनां वियोगः, सर्वात्मना सर्वात्म-

१० ४४ २९.

रूपेण वर्तमानस्य मम न संभवतीत्यर्थः संपद्यते । अयमेवार्थोऽग्रे व्यक्तीकृतो **यथा** भूतानीत्यादिना । आश्रयकरणकर्मणामभेदश्चोक्तः । **आत्मन्येवे**त्यादिना । सृष्टिः स्वरूपस्थितिहेतुः, सोत्र प्रभुसंगम एव । हननं वियोगकरणम् । सर्वतिरोधायकत्वात् । तदपि रसार्थमेवेत्यनु पश्चात्पालये स्वरूपानन्ददानेन । अत एवान्ते पालनमुक्तम् । अत्र हेतून् क्रमेणाह **आत्मे**त्यादिना । आत्मानुभावेन सृजे, तदपि माया योगमायान्तरङ्गा लीलोपयोगिनी तदनुभावेन माने सति हन्मि, तेन सर्वतिरोधाने भूतेन्द्रियगुणस्वरूपेण पुनराविर्भूयात्, पालये । ननु देहाद्यध्यासवानात्मा प्रतीयत इति कथं भगवदात्मकत्वमिति चेत्तत्राह *आत्मा* **ज्ञानमय** इति । ज्ञानप्रचुर इत्यर्थः । लीलासंबन्धिदेहानामपि तदात्मकत्वात्तत्राहमिति ज्ञानं वास्तवमेव, न त्वविद्याकृतम्, यतः शुद्धोऽविद्यासंबन्धरहितः । अत्र हेतुर्व्यतिरिक्तः प्रापञ्चिकेभ्यो जीवेभ्य इति शेषः । तत्र हेतुर्गुणाश्रय इति । पुरुषोत्तमगुणाश्रयत्वात्तथा । न हि प्राकृतेषु लीलां स्वयं करोतीति भावः । स्वापाद्यवस्थावत्त्वेनापि प्राकृतत्वं न शङ्कनीयम् । यतः सुषुप्त्यादयो लीलोपयोगिन्या मायया संपादिता या वृत्तयस्ताभिः स संबध्यते । 'लोकवत्तु लीलाकैवल्य' मितिन्यायेन लोकमध्ये क्रियमाणा लोकसमानाकारा चेन्न भवेत्, तदा लीलारसो न भवेत् । अत एव व्यासैरपि लोकसमानाकारत्वम्, न तु लोकमध्यपातित्वमिति ज्ञापनाय लोकवदित्युक्तम् । ननु लीलाविषयिणी कस्यापि नैवं प्रतीतिर्दृश्यत इत्याशंक्य प्रतिबन्धकवशान्नैवं प्रतीतिर्लोकस्य, तदपगमे सा भवतीत्याशयेनाह **येने**ति । सर्वतो मनसो निवृत्तौ केवलभगवत्परत्वे तथैव प्रतिपद्यते जानातीत्यर्थः । नन्वेवं सति शास्त्रानेकत्वं कथमित्याशंक्य साधनप्रकारभेदत एव तद्भेदः, न तु तत्र फलभेदोप्यस्तीत्याह **एतदन्त** इति । नन्वेवं सति विशेषाभावात्संनिकर्ष एव कुतो न साध्यते, दुःखहेतुर्विप्रकर्षः किमर्थ इत्याशंकायां तत्तात्पर्यमाह **यथे**त्यादिना । अत्रेदमाकूतम् । पूर्वमनुभावितो यो भजनानन्दः स तु ब्रह्मानन्दतः शास्त्रीयभक्त्यानन्दतश्च कोटिगुणाधिकोऽनिर्वचनीयश्च भवति । तथा च संनिकर्षे स्वग्रिमाग्रिमनूतननूतनरसाकांक्षा तदनुकूलो यत्नश्च भवति, न तु पूर्वानुभूतलीलास्वरूपतलस्पर्शः कदापि । विप्रकर्षे तु मनआदीनां बहिःस्वविषयालाभेन्तर्विद्यमानमेव तं गृह्णन्ति, तदा यथा बहिः प्रकटात्प्रियाद्रसानुभवः पूर्वमासीत्तथान्तःप्रकटात्प्रियात् पूर्वस्मादपि विलक्षणो रसोनुभूतो भवति, यः संगमेपि दुरापः । अतो महारसदानार्थमेवैवंकरणम् । एतदेवोक्तं **मदनुध्यानकाम्यये**तिपदेन, **यथे**त्यादिना च । संगमे मदुपयोगित्वेन देहादिस्फूर्तिरप्यस्ति, द्वितीये तु सापि नास्तीत्यपि रसाधिक्यम् । एतदेवोक्तं **विमुक्ताशेषवृत्ती**ति विशेषणेन । एतेन रसानुभवे नैरन्तर्यमुक्तं भवति । बहिरनुसन्धाने तु तदेव बहिः साक्षात्संबन्धात्मकं फलं शीघ्रमेव साधयति । अतस्तथैव भविष्यतीत्याह **अचिरा**दित्यादिना । एतासां त्वधुनैव बहिःसंगमोभिलषितः, तदभावादस्मदनभिप्रेतामप्यस्मदधिकारविरुद्धामपि ज्ञात्वेश्वरभावेनाज्ञापितवान्, अनभिप्रेतमपि बलाद्वादयितुमित्यनाकर्णनीयमिदं भवति यद्यपि, तथापि

प्रियतमसम्बन्धीत्याकर्णनमावश्यकमिति तथा। एताभिः प्रियसंबन्धित्वेनैव श्रुतत्वात्तथैव फलिष्यति, न तूपदेशत्वेनेतिज्ञापनायाग्रे संदेशपदम्। एतेनैव 'ननु वयमिव भगवानपि पूर्वमस्मदयोगासहिष्णुरनुभूतः, अधुना तं कथं सहत' इत्याशंका निरस्ता। भगवदुक्तिष्वाज्ञात्वमेव प्रतीतम्, न तु प्रीतिवचनत्वम्। सा त्वीश्वरभावेनैव भवतीत्यैश्वर्यमेवाधुना स्वस्मिन् जानाति, ईशितव्यतामेवास्मासु जानातीति युक्तमनागमनम्। न चैवं भक्तिमार्गविरोध इति वाच्यम्। 'स्वागतं व' इत्यादिवचनवत्पूर्वतिरोधानवदस्यापि रसविशेषानुभावकत्वात्। एवमेव प्रभावपि ज्ञेयमिति दिक्। मतान्तरभाष्येयमित्याचार्यवर्यैः पूर्वमेवोक्तमिति नाधिकं शङ्कनीयं समाधेयं वास्त्यत्र। परन्तु 'यन्मायया दुर्जयया मुह्यन्ति ज्ञानकाशये'ति-वाक्याज्ज्ञानस्य मोहरूपत्वाद्धर्मिमात्रपराणामन्येन मोहासंभवात् तस्य फलत्वेन मोहकत्वासंभवान्न भगवद्भावच्युतिः कदापि भविष्यतीति सर्वं सुस्थम्। अत एव 'ज्ञानिनामपि वाक्येन न भक्तं मोहयिष्यती'त्याचार्यवचनमस्मत्सर्वस्वपालकमस्तीत्यतिनिश्चिन्ता वयम्।

ईश्वरस्य कृतौ वाचि पूर्वपक्षसमाहिती।
ब्रह्मादीनामप्यशक्ये तथापि स्वस्य सर्वथा ॥ १ ॥
तदीयत्ववशाद्धार्ष्ट्याद्यत्किंचित्कथयामि तत्।
क्षमन्तां तातचरणास्तेनैवाशेषमुत्तमम् ॥ २ ॥
यो बीजावापमारभ्य फलपाकावधि स्वयम्।
पोषितस्तं व्रजतरुं नाथो नापि जिहासति ॥ ३ ॥

इति श्रीमद्विट्ठलेश्वरविरचितभ्रमरगीताध्यायटिप्पणी।

# परिशिष्टम् ।

श्रीहरिः । **नम** इति । श्रीकृष्णस्य यत्पादाब्जे तयोस्तले तत्र यद्रञ्जिते कुङ्कुमपङ्के तयोः रुचे नमः । श्रीकृष्णपदेन भक्तसहितलीलारसाविष्टत्वं सूचितम् । तादृशस्य चरणयोरब्जत्वोक्त्या लीलायां परस्परसम्बन्धेन उभयोस्तापहारकत्वं सुखदत्वं च ज्ञापितम् । किञ्च । अब्जं विकसितं भवति । अत्रापि तत्तद्बन्धादिषु तत्तथैव भवति । अब्जे अरुणत्वं भवति । तदत्र सहजमपि विशेषतः कुङ्कुमपङ्केन तादृशम् । पद्मिनीनां तलमप्यारक्तं भवति । शृङ्गारादिषु कुङ्कुमपङ्केन रञ्जितमपि क्रियते । अत एव रुचे **नम** इत्युक्तम्, न तु पङ्काय, तदभावादिति । तत्कान्तेः सर्वोत्कृष्टत्वज्ञापनाय नमनमेवोक्तम् । तदेवाहुः **यदरुणमिति**. । मदीयं हृदयाम्बुजं यतः सम्बन्धेन शश्वदारक्तं जातम् । निरन्तरं तत्कान्तेः स्थित्या तदात्मकतया तादृशमेव जातमिति भावः । यद्वा । अत्र प्रभुचरणसरोजतलसम्बन्धि कुङ्कुमपङ्कमुक्तम् । तन्नायिकानामेव सम्भवति, न तु नायकस्येति कथमुपपद्यत इति चेत् । तत्रोच्यते । श्रीकृष्णपदेन गूढभावात्मकत्वम् । तेन तद्भावात्मकस्य विरचितप्रियावेषोचितसकलशृङ्गारस्य प्रभोश्चरणतलमपि तेन रञ्जितं क्रियत इति तत्स्मृत्वा तथोक्तम् । प्रियायास्तु पूर्वं तादृशमेवेत्युभयोश्चरणतलस्यारुणत्वमुक्तम् । अत एव पङ्कयोरिति द्विवचनं चोक्तम् । अन्यथा पङ्कस्यैकरूपत्वात्कथमेवं वदेयुः । तयो रुचे नम इति । तत्तलशोभां दृष्ट्वा प्रणयभरेणात्यातुरतया रसेन नमनम् । अन्यथा चरणं विहाय रुचे नम इति कथमुक्तं स्यात् । किञ्च । यत्सम्बन्धेन मामकं हृदयाम्बुजं सततमरुणं जातम् । रसात्मकतत्सम्बन्धेन हृदयमपि तल्लीलारसात्मकं जातम् । तादृशलीलासमये प्रियासहितप्रभुचरणतलं स्वकरतलेन यदा लालितं क्रियते, तदा तच्छोभादर्शनेन परमरसावेशेन तदात्मकतया तच्चरणतलं हृदये स्थाप्यते । तदा तदा तद्धृदयं पूर्वमप्यम्बुजत्वेन सरसं तथापि तदानीन्तनप्रचुरभावेनान्तर्लीलारसभरेण पुष्टं विशेषतो जातमिति तथोक्तम् । अत एव तादृग्लीलाविवरणमभूत् । सर्वदा तल्लीलात्मकमेव तिष्ठतीति शश्वदित्युक्तम् । किञ्च । यथा रविसम्बन्धेन कमलं विकसितं भवति, तदा तदरुणकान्तिसम्बन्धेनैतद्धृदयाम्बुजमपि विकसितम् । पुनस्तस्य तद्रसात्मकतया तद्रूपत्वमेव जातमिति तथोक्तम् । किञ्च । यथा प्रियमिलने तदात्मकतया प्रियरूपत्वं भवति, तथा तत्तलस्यारुणत्वे तत्सम्बन्धेन हृदयस्याप्यरुणत्वं युक्तमित्यारक्तादिपदानि विहायारुणपदोपादानादवगम्यते ॥ १ ॥

**नेमामि हृदये शेप इत्यस टिप्पण्यां । मूलेनुशयशब्दस्येत्यत्र ।**

---

१ पाचार्थीगोपेशानां स्यादिति प्रतिभाति । २ श्रीहरिरायाणामिति प्रतिभाति ।

मूले 'निरोधोऽस्यानुशयन'मिति वाक्येऽनुशयनशब्दो भावार्थक एव प्रतिभाति । यतोऽनुशयनं नाम भगवतो भावात्मकस्य सर्वात्मभाववति भक्तहृदये तथाविधाखिललीलाविशिष्टस्य प्रभोर्निगूढभावरूपेण स्थायितया स्थितिः । तथाचात्र स्कन्धे क्रियमाणाखिललीलायाः कथं निरोधशब्दवाच्यता । अन्यथा 'प्रपञ्चे क्रीडनं हरे'रित्याचार्यविवृतिविरोध इत्याशङ्क्य तस्योभयार्थकत्वनिरूपणायाहुः करणव्युत्पत्त्येति । पक्षे त्वित्यत्र तुरप्यर्थे । तथा मूले भावार्थकत्वपक्षेपि अनुशय्यतेऽनेनेति करणव्युत्पत्त्या तथाविधस्वरूपस्थितिसम्पादकलीलायामपि तद्रूपत्वमुच्यत इत्युभयार्थकोयमनुशयनशब्द इत्यर्थः । अत एवाचार्यवर्यैरग्रे तथैव निरूप्यते । 'प्रपञ्चविस्मृतिः सर्वा तदासक्तिश्च वर्ण्यते' 'प्रपञ्चे क्रीडनं हरे'रित्यादि । प्रपञ्चविस्मृतियुतासक्तिर्व्यसनमिति निरोध एव । भरतेन 'या तु व्यसनसम्प्राप्तिर्निरोधः स तु कथ्यत' इति तथैव तल्लक्षणाभिधानात् । तथा च भगवतो निरोधो भक्तेषु तत्परतया लीला, भक्तानां प्रपञ्चविस्मृत्या भावरूपस्य प्रभोः स्थायित्वं हृदये निरोध इति बोधितम् । यद्यप्येवं तथास्थितिर्निरोध इति सिध्यति । अत एवोद्धवेपि व्रजसीमन्तिनीचरणरेणुसम्बन्धिगुल्मलतादिषु स्वजननाभिलापसञ्चितातुलभाग्यसन्ततावेवैव स्थितिरुक्ता । स्वामिनीसम्बन्धितया तद्वारकतद्विषयकप्रसादवता प्रभुणा स्वामिनी, यतो विदुरसविधे तेना'प्यात्मनः परमां स्थिति'मित्यनेन सामान्यतः सा तथैवानूदिता । तथापि स्थितेर्धर्मान्तरवन्न स्वरूपतो भिन्नत्वं लेशतोपीति तादृगवस्थापन्नं स्वरूपमेव स्थितिशब्देनोच्यते । अत एव प्रभुभिराभासो निरोधरूपं भगवन्तं विवृण्वन्तीत्येवमेव निरूपित इति नानुपपत्तिः काचित् । 'रसो वै स' इति श्रुतेः 'स्थायिभावो रसः स्मृत' इत्यादिवाक्यैर्भगवतो रसरूपस्य स्थायिभावात्मकत्वं तच्छास्त्रप्रसिद्धमिति न तथाभासनिरूपणेऽपि रसस्वरूपविद्भिः संशयितव्यमिति दिक् । अयमर्थो निजाचार्यचरणाम्बुजभावनात् । भासते भाग्यराशीनां सततं हृदि तिष्ठति ॥१॥

श्रीगोपीजनवल्लभाय नमः । टिप्पण्यां तेन लोके सत्यं व्रत चेत्यारभ्य धर्मी चेति षोडशधेत्यन्ते ग्रन्थे सत्यं विनियते । लोके सत्यं वचनम् । व्रतमेकादश्याद्युपोषणादिरूपम्, लोके लौकिकं नियामकं सत्यं तप्ततैलादौ शपथरूपम् । वैदिकं द्वादशविधम् । भगवतो व्रतानि 'कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति' 'द्विःशर' मित्यादिना निरूपितानि । लोकानुसारेण देवहितकारिणो नियामकं भगवतो भगवद्वचनसत्यत्वम् । भूरादित्रयम्, कायादित्रयम् । इदमष्टविधं सत्यम् । लोके व्रतं शपथरूपं च सत्यमुक्तद्वादशविधं वैदिकं चेति द्विविधम्, लोके सत्यवचनम् । व्रतमेकादश्यादि तप्ततैलादौ शपथरूपं सत्यं चेदं त्रयं लौकिकत्वेनैकविधमुक्तद्वादशविधं वैदिकत्वेनैक-

---

१०. २. २६. १ इदं श्रीमत्कल्याणरायाणाम् ।

विधमिदं द्विविधमपि परत्वेनैकम्। शपथस्य नियामकत्वेनान्येषामुत्कृष्टत्वेन च परत्वात्। भगवतो व्रतं नियामकं भगवद्वचनं चेति द्विविधं, भगवद्धर्मत्वेनैकम्। मूरादयः फलरूपाः। कायादयः साधनानि। मूरादीनां फलत्वेन कायादीनां साधनत्वेन वैक्यम्। इदं चतुर्विधं सत्यं, प्रमाणरूपं सत्यं वेदो भगवद्धर्माः प्रमेयरूपं सत्यं सत्यस्य कारणरूपो भगवान् साधनरूपं सत्यं सत्ये स्थितः सत्यरक्षको भगवान्। फलरूपं सत्यं सत्यस्य लयस्थानमाधिदैविकसत्यरूपो भगवान्। भगवति प्रतिष्ठितं वस्तु सत्यं चैतदुभयं फलितसत्यत्वेन पञ्चमं सत्यम्। इदं पञ्चविधं सत्यम्। सत्यत्वेन परत्वेन साधनत्वेन ऐहिकफलमूलत्वात् फलत्वेन रमणादिकरणत्वेनेतिप्रकारैः पञ्चविधं सत्यं वेदे निरूपितम्। तदष्टविध एव प्रविशति। पूर्वोक्तमष्टविधप्रमाणादिरूपं पञ्चविधं चेति त्रयोदशधा। इदं त्रयोदशधा ज्ञानशक्तिद्वयं वेदो भगवद्धर्माश्च धर्मा चेति षोडशधा। वेदे भगवद्धर्माणां प्रमापकत्वात् प्रमाणत्वोपाधिना क्रियाशक्तिरूपं पञ्चविधसत्यमध्ये प्रवेशेपि द्रुतं भगवत्साक्षात्कारसाधकत्वेन तज्ज्ञानशक्तित्वेनापि निरूपणं न दोषाय, सर्वत्रोपाधिभेदेन भेदात्। इति सत्यविवरणम्।

श्रीकृष्णाय नमः॥ **निलायनैरित्यस्य विवरणे ब्राह्मणोपीत्यादेष्टिप्पणे** कारिकाभिरर्थनिरूपणे **सूक्ष्मरूपेणेत्यादि**। अत्र ब्राह्मणक्षत्रियभवनयोस्तात्पर्याणि यथाक्रमं निरूप्यन्ते, परोक्षवादप्रकाशनाय। तत्र यथा ब्राह्मणो नम्रतादिभिः कृत्रिमसूक्ष्मरूपेण स्वस्मिन् विश्वासमुत्पाद्य स्वकार्यप्रतिबन्धकनिवर्तकः। यतः सर्व एव शुद्धः साधुः प्रशान्तः, न चैतस्मात्किंचनान्यथा भविष्यतीति बुद्ध्या तादृशं तं विश्वस्य परिजननिकटस्थमपि रहसि विहाय स्वस्वकार्यायाव्यग्रा गच्छन्ति, तथा भगवानपि कृत्रिमतयाङ्गस्थापनादिना स्वस्मिन् शुद्धत्वादिकं विबोध्य सर्वेषां विश्वासमुत्पाद्य स्वलीलाप्रतिबन्धकनिवर्तक इत्यर्थः। तदेतदुक्तं **सूक्ष्मरूपेणेत्यारभ्य तेनैवापगत** इत्यन्तेन। **तेनैवेति**। विश्वासोत्पादनेन, नतु सामर्थ्यादिनेत्यर्थः। क्षत्रियभवनतात्पर्यमाहुः **स्वेष्टरूपमिति**। यथा क्षत्रियः स्वकीयानामन्यतः स्वतो वात्यार्तौ तन्निवर्तनाय स्वस्मिन् विद्यमानमेव तदनुकूलसामर्थ्यादिविशिष्टं युद्धोपयिकसकलसामग्रीसहितं तदिष्टं रूपं तत्प्रतिबन्धके निवृत्ते सुखे भाविनि प्रकटयति, तथा भगवानपि स्वतः परतो वा स्वजनार्तौ तदभावाय स्वस्मिन् विद्यमानमेव रसोपयोगिसकलसामर्थ्यवन्मन्मथायोधनानुकूलसकलसामग्रीविशिष्टनिजजनेष्टं रूपं तत्प्रतिबन्धकापगमे प्रकटयतीत्यर्थः। नन्वेकरसस्य ब्रह्मण एवं करणे किं तात्पर्यमित्याशङ्क्याहुः **भक्तार्तिहृतिरित्यादि**। अत्र हि द्वयं कर्तव्यम्, भक्तानामार्तिहृतिपूर्वकमिष्टप्रापणं तदतिरिक्तनिरोध्यनिष्ठप्रभुविषयकदोषारोपाभावश्च। तत्र प्रतिबन्धकाभावाय ब्राह्मणत्वप्राकट्ये प्रतिबन्धकसद्भावेन भक्तानामार्तिहृतिं क्षत्रियत्वानाविर्भावे तदिष्टप्राप्तिश्च न स्यात्। तस्माच्च स्वामिनीतरव्रजस्थेषु प्रभुविषयकदोषाभावश्चेत्यर्थः। तेषामपि निरोध्यत्वेन प्रभोः सर्वार्थमागतस्य तेषु तथाकृतेरुचितत्वात्। प्रभौ

स्वामिनीषु तल्लीलायां दोषारोपे तन्निरोधासिद्धेरिति भावः । पुनर्ब्राह्मणभवनतात्पर्यमाहुः कदाचिदिति । यथा ब्राह्मणो गुर्वाद्यधीन एव भवति, न स्वतन्त्रः, सर्वं कुर्वन्नपि तदनुज्ञयैव करोति, अनुज्ञापरतया निर्दोषश्च, तथा भगवानपि स्वभक्तपित्राद्यधीन एव, तदनुज्ञयैव च सर्वं करोति, भक्तानुज्ञापरतया भक्तिमार्गे निर्दोषश्चेत्यर्थः । एतादृश्यैर्थ आज्ञादातृत्वाय भक्तत्वमुक्तम् । अन्यथा अन्येषां भगवदिङ्गितातिरिक्तस्फुरणानियमात्तथा न स्यादिति भावः । पुनः क्षत्रियभवनतात्पर्यमाहुः क्वचिदिति । यथा क्षत्रियो गूढमन्त्रो महासाहसः सर्वथा स्वकार्यसाधको निर्भयः सर्वरसभोक्ता, तथा भगवानपि गूढः समन्त्रो वनसेवनान्महासाहसः कथञ्चिद्व्याजादिना सङ्केतितस्थले भक्तागत्या सर्वथा लीलारूपस्वकार्यसाधक इत्यर्थः । निर्भयत्वबोधनायैवानिशं रमत इत्युक्तम् । पुनर्ब्राह्मणभवनतात्पर्यमाहुः कदाचिद्भक्तेति । यथा ब्राह्मणः परमाग्रहः सकलासहिष्णुप्रतापवानसामर्थ्येऽपि चातुर्येणैव स्वकार्यसाधकः, तथा भगवानपि कदाचिदेव भक्तानां स्वामिनीनां ये पित्रादयस्तत्कृते एतत्सङ्गे न गन्तव्यमित्यादिरूपनिषेधेऽपि मया गृहीत्वैवैनां गन्तव्यमित्यतिविहिताग्रहः सर्वधर्षणक्षमप्रतापवान् बालभावेनासामर्थ्येऽपि व्याजादिप्रकल्पनचातुर्येण स्वेष्टदेशनयनरूपकार्यसाधक इत्यर्थः । पुनः क्षत्रियभवनतात्पर्यमाहु कदाचिदित्यारभ्य सर्वत इत्यन्तेन । यथा क्षत्रियः कुतुकावेशी स्वधर्मज्ञापनपरः प्रतिपक्षागतिशङ्कया सेनासहितो दुर्गादिस्थितवस्तुग्रहणाय विविधोपायकारी सकलप्रतिबन्धनिवर्तकश्च, तथा भगवानपि बालक्रीडाकुतुकावेशी कूर्दनादिना स्वसामर्थ्यज्ञापको लीलाकृतिपरिपन्थिसमागतिशङ्कया कपिसेनासहितः पुलिनस्थितभक्तप्राप्तये च विविधसेतुबन्धनाद्युपायकर्ता निजभक्तसुखप्राप्तिप्रतिबन्धनिवर्तक इत्यर्थः । पुनर्ब्राह्मणभवनतात्पर्यमाहु अन्यश्चेदिति । यथाभिमानेन स्वप्रयोजनप्रतिबन्धार्थमन्यस्मिन्नागते ब्राह्मणो निजाग्रहेणैव तन्निरासकः स्वविप्रत्वाग्रहेण तन्निरासको, न तु स्वसामर्थ्येन, ततश्च स्वकार्यसाधकः, तथात्र भगवानपि स्वसम्बन्धाभिमानेन भक्तैकत्र्यमन्यस्मिंस्तद्बहिर्भूते समागते सति स्वनालमानाग्रहेणैव तन्निरासको, न तु स्वसामर्थ्येन, तेन तथाकृतौ तादृशरूपे, तथा सामर्थ्यदर्शनेनान्येषां ज्ञानात् सम्यक् लीलासिद्धेः । ततश्चानेकविधलीलारूपस्वकार्यसाधक इत्यर्थः । पुनः क्षत्रियभवनतात्पर्यमाहुः स्थापयित्वैवेति । यथा क्षत्रियो दुर्गादिष्वन्यप्रवेशप्रतिबन्धकभटादिस्थापकः स्वगतिमात्रसाधननिधाता, तथा भगवानपि पुलिनादिष्वन्यगतिमभावितस्थलेषु रक्षकगोपादिस्थापकः स्वमात्रगतिसाधनसेतुबन्धविधातेत्यर्थः । अतः परं मर्ममेव रसमेकत्र स्थितमेवेत्यादितात्पर्यमाहुः भक्ता हीति । भक्ता हि भगवति प्रत्येकं स्पर्शादिविविधभाववन्तः, तथा भगवानपि तेषु । तथा चैकत्रैकस्यामेव स्वामिन्यां सर्वात्मनाखिलस्वामिनीजनमनःस्थितान् भावान् क्रमेणोत्पाद्य तत्तद्भावरसात्मत्वेन भुङ्क्त इत्यर्थः । एतेनात्र मुख्यो रसो निरूपितः । भोगे प्रकारान्तरमाहुः कदाचित्प्रत्येक-

मिति । कदाचित्कपिवदुत्प्लुत्य तत्र तत्र तस्यां तस्यां स्वामिन्यां स्थितः प्रत्येकमखिलान् भावरसान् भुङ्क्त इत्यर्थः । एकत्रेत्यस्य तात्पर्यान्तरमाहुः **अथवेति**। एकत्र पुलिने स्थितो वेणुवादनलीलया सर्वेषु भक्तेषु सङ्गतेषु अखिलानेव भावरसान् रासलीलास्थितानपि भुङ्क्त इत्यर्थः। एतेन मिश्ररूपेणाग्रे क्रियमाणाः सर्वा अपि लीला अत्र केवलरूपेण कृता इत्युक्तं भवति । अत एवोक्तमाचार्यैर्विवरणे **नतु तस्य क्वापि मर्यादा प्रतिबन्धिकेति** । अत्राप्युक्तम**त्युदारधीरिति** । बालो ह्युदारबुद्धिर्भवति । अत एवात्र परीक्षासाधनाद्यसम्पादकत्वं द्वितीयतृतीयाध्यायीयलीलयेव । एतेन लोकवेदातीतपुरुषोत्तमस्वरूपं सर्वलीलाविशिष्टमेतदिति समर्थितम् । उपसंहरन्ति **एतदेवेत्यादि, सुगोपित**मिति । आचार्यैस्तथोक्तमित्यस्माभिरपि तथैवोच्यत इत्यर्थः । अतः परं विवरणस्थमूलरूपलीलेत्यादेस्तात्पर्यमाहुः **एतदग्र इति** । **तद्भाव** इति । तात्पर्यवृत्तिनिरूपितोर्थः प्रकर्षेणोच्यत इत्यर्थः । **सम्यगिति** । नात्र पूर्ववत्परोक्षवादरीत्या निरूपणमित्यर्थः । **तदनुग्रहत इति** । स्वाचार्याशयस्यानुग्रहैकलभ्यत्वादित्यर्थः । **स्फुटमिति** । अयं भावः । प्रकटन एव पूर्ववत् परोक्षरूप इत्यर्थः । रसात्मकेतरब्रह्मधर्माणामत्र निरूपणेन तत्साम्यस्यात्र प्रकटत्वादिति भावः । तमेवाहुः **प्रमाणाख्यप्रकरण इति** । तदुपक्रमे हि तथा प्राकट्येन तादृगुत्सवहेतुतया पूतनासुपयःपानादिचरित्रैः स्वामिनीकृतरक्षया च शुद्धत्वं ब्रह्मत्वं च भगवति निरूपितम् । तदुपसंहारेपि यदि नोच्येत तदोपक्रमोपसंहारविरोधात्तद्द्वयं न सिध्येत्, अतस्तत्परिचायकलीलात्रयं प्रोक्तमित्यर्थः । तदेवाहुः **सर्वाज्ञातस्वरूपमिति** । पूर्वं प्रपञ्चरूपेणाविर्भावात्पूर्वं सर्वेषां सूक्ष्मरूपेण तद्दूरस्थत्वेपि तेषामज्ञातमित्यर्थः । 'न तं विदाथेति' श्रुतेः । सृष्ट्युत्तरं तु तज्ज्ञानसम्भवोऽपि । सर्गस्य मोक्षं प्रति कारणत्वात् । 'दैवी सम्पद्विमोक्षायेति' वाक्यादित्यर्थः । अनेन ब्रह्मणो निलायनलीलोक्ता । सेतुबन्धसूचितमर्यादाधारतयाक्षिप्तां जगद्रूपलीलामाहुः **रिरंसया तत इति** । ततस्तदनन्तरं प्रपञ्चरमणेच्छयाखिलजगद्रूपं जडजीवान्तर्यामिभेदभिन्नतद्रूपमात्मानं कृत्वा तत्र प्रपञ्चरूपेतिदुस्तराः सर्वथानुलङ्घ्या मर्यादाः स्वलीलासिद्ध्यैव बन्धमोक्षरूपक्रीडासिद्ध्यै कुरुत इत्यर्थः । ननु सेतुबन्धैः परपारस्थितप्राप्त्युपायभूतैर्न प्रपञ्चमात्रपर्यवसितमर्यादासूचनं भवतीत्यरुच्या पक्षान्तरमाहुः **यद्वेति** । प्रपञ्चातीतस्य स्वस्याप्तये प्राप्तये भक्तिमार्गान् सेतुबन्धरूपान् सर्वथानायासेन विवरणसाधनान् दृढान् कर्मादिवत् शैथिल्येन पातसम्भावनारहितानकरोदित्यर्थः । एवं जगद्रूपलीलां निरूप्य वेदरूपलीलां निरूपयन्ति **अशेषेति** । अशेषाः सकला या वेदशाखास्तासूक्तं निरूपितं यत्फलं स्वर्गापवर्गादिरूपं तद्भोगाय स्वसृष्टजीवानां तत्प्राप्तय आत्मनः पूर्वमेव विद्यमानां वेदरूपतां प्रकटीकृत्य नामलीलयापि रूपप्रपञ्चे क्रीडतीति सूच्यत इत्यर्थः । शुद्धब्रह्मतापरिचायकतच्चरित्रत्रयमत्राप्यतिदिशन्ति **तथात्वाय भक्ता इति** । भक्तिमार्गे भगवतो मूलचरि-

न्प्राकट्यं भक्तार्थमेवेति ज्ञापनायाहुः **भक्ता** इति । यथा भक्ताः सर्वं गृहादिकं परित्यज्य प्रभुप्राप्त्यै रह एकान्ते सङ्केतितवृक्षमूलाद्याश्रयेण स्थिताः, तथा भगवानपि तदर्थं रहः स्थितश्चेत्तदा सर्वाज्ञातस्वरूपतया निलायनक्रीडावत्वेन परः पराकाष्ठापन्नो लोकवेदातीतः पुरुषोत्तम इत्यर्थः । एतेन 'ये यथा मां प्रपद्यन्ते' इत्यादिमर्यादाकर्तृत्वेन लीलासृष्टिजगद्रूपलीलाप्युक्ता । नन्वियं प्रतिज्ञा सर्वसाधारणी, नासाधारणब्रह्मधर्मो, यतः सर्वेप्येवमेव स्वप्रपन्नेषु वदन्तीत्याशङ्क्याहुः **यतो नान्यप्रतिज्ञेयमिति** । एतादृक्प्रतिज्ञाकरणं भगवत एव सम्भवति, नान्यस्य, सर्वसामर्थ्याभावात् । परमफलप्रेप्सया प्रपत्तौ तद्दानाशक्तत्वात्, यतो मूलचरितमेवेदमिति भावः । सा केत्याकाङ्क्षायामाहुः । आदिपदेन 'न मे भक्तः प्रणश्यती' त्याद्या अनुसन्धेयाः । एतल्लीलाया मूलचरित्रत्वं प्रकारान्तरेणाहुः **साक्षादिति** । अस्यां भजनानुरूपभजनलीलायां साक्षात्स्वरूपदानम्, तच्च नान्यस्य सम्भवति । न हि साक्षात्स्वरूपं दातुमन्यः शक्तो, रसात्मकत्वाभावात्, मोक्षपर्यन्तमेव दातुं तच्छक्तेः, तत्र भगवतः प्राप्तिर्नत्वस्येति स्वरूपदानमप्येतल्लीलाया मूलचरित्रत्वे हेतुरित्यर्थः । वेदरूपलीलामप्यत्रातिदेष्टुं लीलासृष्टिस्थितस्वरूपमाहुः **लीलासम्बन्धीति** । अत्र लीलासृष्टौ सर्वं लीलासम्बन्धि । अत एव भगवदात्मकम्, लीलाविशिष्टस्यैव भगवत्त्वात् । अतस्तत्प्रवर्तकत्वमन्यस्य न सम्भवतीति स्वयमेव तत्प्रवर्तनाय तद्द्वारा सर्वफलभोगाय शब्दात्मकवेणुनादरूपेण प्रकटीभवतीत्यर्थः । एवं लीलात्रयमतिदिश्योपसंहरन्ति **एतत्सर्वमिति** । **गोप्यत्वं चापीति** । परोक्षवादरीत्या निरूपणेत्यर्थः ।

इति श्रीवल्लभाचार्यकृपामात्रसहायवान् । न्यरूपयन्निजस्वामिदासैस्तत्कारिकाशयम् ॥ १ ॥
विदन्त्वेतेन विद्वांसः श्रुतिसारमखण्डितम् । लोकवेदाद्यतीतं यत् पुरुषोत्तमसंज्ञकम् ॥२॥

---

१०-११-४१. १. श्रीहरिरायाणामिति ।

# शोधपत्रम् ।



श्रीमत्याष्टिप्पण्या मुद्रितपुस्तकवाचनारम्भकरणात् पूर्वमनेन शोधपत्रेण तत् संशोध्य वाचनीयमिति वैष्णवेभ्यो भगवदीयेभ्यो विज्ञप्तिः । मुद्रितपुस्तकस्थपाठाः केचित् क्वचित् मूलपुस्तकस्थपाठेभ्यः संस्कृता अपि सन्तीति नः प्रतिभाति । ते च श्रीमत्प्रभुचरणैरेव पश्चात् संस्कृताः स्युरित्यनुमीयते, परन्तु बहुवारं लेखकभ्रमात् मूलस्थपाठा विकृता अपि दृश्यन्ते, तत्र त एवादर्तव्या इति । क्वचित् ( पृष्ठ १४४ ) 'तक्रं पयः' 'सतत'मिति मूलपाठा एव 'तक्रोपमः' 'प्रियतमेषु' इत्यनुक्रमेण शोधिताः । ते च विद्यमानास्मद्दृष्टश्रीटिप्पणीपुस्तकेषु दृश्यन्ते । तथापि मूलस्था एव पाठास्तत्रास्माभिरादृताः । श्रीहस्ताक्षरलिखितमेतन्मूलपुस्तकमेव श्रीपुरुषोत्तमचरणैः रासपञ्चाध्यायीप्रकाशे पाण्डुलिखनत्वेनोपन्यस्तं । अतो मुद्रितपुस्तकस्थोचिततरपाठाः श्रीमत्प्रभुचरणैरेवादृता इति सुष्ठु निश्चीयते । क्वचित् टिप्पण्यां शोधः श्रीमद्गोकुलनाथचरणैरपि कृतो दृश्यते, क्वचित् पाठाश्च शोधिता इत्यतः पाठादरणे विवेकः कर्तव्य इति ।

| पृष्ठम् | पंक्तिः | मुद्रितपाठः । | मूलपाठः । |
|---|---|---|---|
| २ | १७ | दशविधलीलाभ्यो | दशलीलाभ्यो |
| ३ | ११ | तद् देवव्रतं | देवव्रतं |
| ४ | १५ | द्वादशस्कन्धे | द्वादशे स्कन्धे |
| ४ | १७ | अङ्गादीनि | अङ्गादीन् |
| ४ | १९ | तुकरीत्याहुरत | तुकरीत्यामित्याहुरत |
| ४ | २१ | पूर्वभाव इति मूलस्थः पाठः । आविर्भावेति पाठस्त्वनिष्टः । | |
| ४ | ३० | स्तनोपरि मूल्यममूल्योः इति टीका वर्तते. | |
| ५ | ३ | रूपत्वमुक्तवान् | रूपत्वमुक्तम् |
| ५ | १७ | 'वृष्णिभिः सह......संभवादपि तथा' इति हस्ताक्षरपृष्ठेषु न वर्तते, पश्चात् ग्रन्थकारैः लिखितमिति प्रतिभाति । | |
| ६ | ९ | कचित् | क्वचित् |
| ६ | १० | लीलानुपयोगिसंसारवतामिति मूलपुस्तके न वर्तते । | |
| ६ | ११ | संस्मृतिरपि | संसृतिरपि |
| ८ | २१ | असुर | आसुर |
| ८ | २४ | परात्परं | परस्य परम् । |
| ८ | २८ | आविर्वेदोत्याद्याभासः । | आविर्वेदोत्यस्याभासः । |
| १० | ८ | व्याकुर्वन्ति । अतः परमिति | व्याकुर्वन्ति अतः परमिति । |
| १० | ११ | एवमष्टविधत्वं सत्यस्य भगवतः कालरूपस्य । यदि- | एवमष्टविधत्वं सत्यस्य । भगवतः कालरूपस्य यदि- |
| ११ | ९ | अज्ञानमिद्धिस्थानं | अत्रैव अज्ञानमिद्धिस्थानं |
| ११ | ११ | स्वोक्तानाज्ञाया | स्वोक्तनाज्ञाया |
| १५ | २९ | ज्ञापयन्तीति | ज्ञापयन्ति |
| १५ | २८ | स्तुनिम्यामिति | स्तुनिम्यामपि |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः । | मूलपाठः । |
|---|---|---|---|
| १५ | २० | स्तुत्याः | स्तुत्योः |
| १५ | ३० | वैदिकोऽलौकिक | वैदिको लौकिक |
| १६ | १ | पूर्णमास | पौर्णमास |
| १६ | २ | चतुर्व्यूहात्मकश्चतुर्मूर्तिः । | चतुर्व्यूहात्मकश्चतुर्मूर्तिः |
| १६ | ८ | 'अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति भगवद्वाचीति मूले नास्ति । | |
| १६ | ११ | आधिदैविकादिरूपत्रितयं | आधिदैविकादित्रितयं |
| १६ | १६ | प्रतिपत्ति | प्रपत्ति |
| १८ | ७ | तद्दर्शनेपीति पाठः मूलस्थः । | तद्दर्शनेइतिटिप्पणमशुद्धम् । |
| १८ | २० | अष्टाक्षरा गायत्री | अष्टाक्षरा गायत्री । |
| १८ | २६ | पुष्टत्वं | पुष्टतरं |
| १८ | २८ | पुष्टत्वे | पुष्टतरे |
| १९ | २० | तदुक्तय | तदुक्तिः । |
| १९ | २६ | तिष्ठेदेव | तिष्ठेतैव |
| २० | ३ | तादृश | तादृग् |
| २० | ३० | सम्भवति | स भवति |
| २० | ३१ | भक्तार्थ | भक्तार्थं |
| २१ | २ | शेषे इदं सूत्रमिति मूले टिप्पणम् । | |
| २१ | १० | शास्त्र | शास्त्रीय |
| २१ | १३ | आहुः । तथा, | आहुः तथा । |
| २१ | १५ | तथा चैतादृश | तथा चैतादृशः |
| २१ | १९ | ज्ञायते | ज्ञाप्यते |
| २२ | ५ | दर्शनक्षणे इति पाठः मूलस्थः । लक्षणे लक्षणो वेति टिप्पणं न वाचनीयम् । | |
| २२ | ७ | अनिमित्त | अनिमित्तत्व |
| २२ | २६ | एवं सति | एवं सति न |
| २३ | १८ | तु मौख्यात् | तु लोके मौख्यात् |
| २३ | ३६ | लौकिकत्वं | लौकिकं |
| २४ | ७ | लीलाकरणे लौकिकत्वेन | लीलाकरणेऽलौकिकत्वेन |
| २४ | २५ | हीनत्वापादकत्वं | हीनत्वापादकं |
| २५ | ९ | जम्भा | जृम्भा |
| २५ | १९ | एव वोत्सवं | एवोत्सवं |
| २६ | ८ | अस्तु वा, | अस्तु वा तथा |
| २६ | २३ | यत्समपद्येति | यत्समपद्यतेति |
| २७ | २० | निरीक्ष्यमाण | निरीक्षमाण |
| २८ | ११ | अर्भकपदम् । मूले | अर्भकपदं मूले । |
| २८ | १६ | दोषापत्तिः | दोषत्वापत्तिः । |
| २८ | ३१ | ज्ञानस्य | ज्ञानस्य च |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः । | मूलपाठः । |
|---|---|---|---|
| २९ | १३ | तदज्ञापनम् । | तज्ज्ञापनम् । |
| २९ | १६ | धर्मास्फूर्तिः | धर्मास्फूर्तिः, |
| २९ | १७ | निरस्ता ज्ञेया । | निरस्ता । |
| ३१ | १९ | सहज | अत्रत्यं टिप्पणं न वाचनीयम् । |
| ३२ | ३ | मूले 'कंसस्यैतज्ज्ञानं स्वानिष्टमित्युक्तयेति नास्ति । | |
| ३२ | ११ | तस्य | तत्र,टिप्पणस्थः पाठः मूलस्थः। |
| ३२ | १२ | इति | इति । |
| ३२ | १९ | द्वितीयं टिप्पणं मूले नास्ति । | |
| ३२ | १९ | ज्ञानहेतुत्वेन | ज्ञाने हेतुत्वेन |
| ३५ | ६ | 'स्वमति' इत्युपरिटिप्पणपाठः मूले नास्ति । | |
| ३५ | २३ | रक्ष्यति | रक्षति |
| ३६ | १९ | भोगविषये | भोगविषये । |
| ३७ | ३० | तेनात्र | अत्रत्यटिप्पणस्थः पाठः मूलस्थः। |
| ३९ | ६ | 'तत्तावात्' इत्यत्र टिप्पणमशुद्धत्वान्न वाचनीयम् । | |
| ४० | ४ | या इत्यत्र टिप्पणं न वाचनीयम् । | |
| ४० | ७ | लीलायाः | लीलया |
| ४० | १२ | पूर्वं इत्यत्र टिप्पणमशुद्धत्वान्न वाचनीयम् । | |
| ४० | २० | तदपेक्षाभावात् | तदपेक्षाऽभावात् । |
| ४० | २२ | यत्नेन | यत्ने |
| ४१ | ५ | भगवद्वियोगे | भगवद्विप्रयोगे |
| ४१ | १५ | तद्रूपत्व– | तत्तद्रूपत्व– |
| ४१ | १८ | प्रकारकत्वा– | प्रकारत्वा– |
| ४१ | २६ | उक्तेश्च | उक्तिश्च |
| ४२ | २१ | यालौकिक | यालौकिक |
| ,, | २५ | तथाप्यनुचित | तथाप्यत्यनुचित |
| ,, | ३० | अनङ्गीकारात् । क्रूरे | अनङ्गीकारात् क्रूरे |
| ४३ | १५ | पुत्रव्यवहारः | पुत्रत्वव्यवहारः |
| ,, | २२ | ( पुष्टि ) पुष्टिमार्गे | पुष्टिपुष्टिमार्गे |
| ४४ | ३ | अतिक्रमणे | अतिक्रामणे |
| ,, | १० | सुतरां | ततस्तरां |
| ४५ | ६ | पूर्ववदेवोपालम्भाद् | पूर्ववदेवोपलम्भाद् |
| ,, | १९ | भगवतीत्यत्र भवतीति टिप्पणं न वाचनीयम् । | |
| ,, | २३ | सहमाननियमादित्यत्र भावेति टिप्पणं न वाचनीयम् | |
| ४६ | ८ | भवति । मूले | भवति मूले । |
| ,, | १५ | पुवं | पुव |
| ४७ | ४ | ब्राह्मणोपीति | ब्राह्मणोपीत्यादि |
| ,, | १३ | स्थापयिष्यान्य | स्थापयिष्यैवान्य |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः । | मूलपाठः । |
|---|---|---|---|
| ,, | २३ | स्वयमेव | स्वयमेव |
| ,, | १९ | द्वयमित्यत्र मूले टिप्पणमेवम् 'प्रकरणस्य प्रमाणत्वं शुद्धमहत्वं च तल्लक्षणायोगात् प्रमाणाभावात्' | |
| ५३ | ९ | तदनुवादकत्वशङ्का | तदनुवादत्वशङ्का |
| ५६ | २९ | न तेपीति | न तु तेपीति |
| ५७ | २० | –द्वारैव तथा | –द्वारैव तत्र तथा |
| ५८ | १३ | ज्ञायते | ज्ञाप्यते |
| ५९ | ९ | तेनाग्र गृहृन्तोपि | तेनाग्रामहवन्तोपि |
| ५९ | २९ | दशवाक्यानामर्थमुखवाक्यचित्त | दशवाक्यानामर्थमुखवाय |
| ५९ | ,, | पत्रान्ते टिप्पणं न वाचनीयम् । | |
| ६० | ११ | एवाचत्युः | एवाचक्षुः |
| ,, | १२ | तदन्ते च ज्ञापित– | तदन्ते च तद्ज्ञापित– |
| ,, | २४ | तदुच्यते | च तदुच्यते |
| ६१ | १३ | चिरस्थित्यादिकं | चिरं स्थित्यादिकं |
| ,, | २४ | व्यतिरिक्तेषु भक्तेषु तादृश– | व्यतिरिक्तेषु तादृश– |
| ,, | २६ | अपि 'वेदा | अपि वेदा 'वेदा, वेदा इत्यधिकं) |
| ,, | २७ | सार्वदिक– | त्रिपृष्ठे सार्वदिक– |
| ६२ | ४ | धारावत् मूलपाठः, | धारारूपेण इति पाठः न वाचनीयः। |
| ,, | ६ | इति तत्र | इति तत्त्द् |
| ६३ | ७ | सर्वात्मभावेन | सर्वात्मभावे |
| ६३ | २३ | लोके वेदा– | लोकवेदा– |
| ६३ | ३१ | ( रम् ) चरणानां | चरणानां |
| ६४ | ११ | यथैव तासामपि | यथैतासामपि |
| ६४ | १६ | प्रकटत्वाज्ज्ञान– | प्रकटत्वात्तज्ज्ञान– |
| ६४ | २४-२५ | रसस्यापि तत्वात् | रसस्यामितत्वात् |
| ,, | २७ | सम्बन्ध्यर्थो | सम्बन्ध्यर्थो |
| ,, | २९ | भगवान्निकट | भगवन्निकट |
| ६५ | १ | सर्वतत्वं | सर्वं तत्त्वं |
| ,, | ११ | वैतादृश्यं | वैतादृशं |
| ,, | २१ | गतमपि, | गतमपि |
| ,, | २३ | परमस्नेहो | परमः स्नेहो |
| ,, | २७ | स्त्रीपुंसेति | स्त्रीपुंसोरिति |
| ६६ | ५ | मन्त्राप्रयोजकं | मन्त्राप्रयोजनकं |
| ६७ | २ | त्वनेकविधसंस्कारः | त्वनेकविधः संस्कार |
| ,, | १८ | तु त्यागो | त्यागो |
| ६८ | १ | कोसले | कोशले |
| ,, | ३-६ | आदिवाराहे......इत्याचार्यैरुक्तम् ।' | मूललेखटीका |
| ,, | ८ | तदनुभवस्तु | तदनुभवश्च |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः । | मूलपाठः । |
| --- | --- | --- | --- |
| ,, | १८ | भगवानेवेति | भगवानेव चेति |
| ७० | ११ | अत | तत |
| ,, | १२ | स्वच्छन्दभोग | स्वच्छन्दं भोग |
| ,, | ,, | पत्रान्तटिप्पणं मूले नास्ति. | |
| ७१ | १८ | सन्निकट | तन्निकटस्थ |
| ,, | २४ | भयाभावज्ञानाभावात् | भयाभावज्ञानात् |
| ७२ | ८ | न तु साक्षाद् | न तु तत्र साक्षाद् |
| ,, | १० | पूर्वोक्तस्थितिर्नो | पूर्वोक्ते स्थितिर्नो |
| ,, | २४ | स्वानधीनत्वेन | स्वाधीनत्वेन |
| ७३ | १२ | मार्गीयत्वमित्यर्थः | मार्गीयत्व इत्यर्थः |
| ,, | १३ | स्वकीयकामरूपाणि | स्वीयकामरूपाणि |
| ,, | ,, | पत्रान्तटिप्पणं मूले नास्ति । | |
| ७४ | १४ | कर्दनोक्त्या | कर्पणोक्त्या |
| ७६ | ३१ | नुत्पादकत्वेन | नुत्पादकत्वे |
| ७७ | १९ | तद्धर्मत्वात्तद्धर्मत्व | तद्धर्मत्वात्तद्धर्मत्व |
| ७८ | १४ | जन्मेत्यत्र | जन्मेत्यस्य विवरणे |
| ७९ | ७ | परः | परः । |
| ७९ | १८ | नाशयित्वा नीतवानि | नाशयित्वाऽनीतवानि |
| ,, | २७ | ज्ञानमपेक्षितम् | ज्ञानमप्यपेक्षितम् |
| ८० | २-३ | दोषः स्वभोगे ज्ञेयः | दोषः अत्र स्वभोगयोग्यत्वाभावो ज्ञेयः । इति क्वचित् पाठः। |
| ८० | १ | इदं शोधपत्रं मूले नास्ति । | |
| ८० | ७ | किञ्च, मां ज्ञापयत | किञ्च, पूर्वं मां ज्ञापयत |
| ,, | ८ | दास्यन्ती'ति पात्रा- | दास्यन्ती'ति वक्तव्ये तथानुक्त्वा 'वो दास्यन्ती'ति पात्रा- |
| ,, | ११ | अग्रे दोषत्व- | अग्रे सदोषत्व- |
| ,, | १२ | वो दास्यन्ति | 'वो दास्यन्ति' |
| ,, | ,, | स्वमग्रानयेयुः | स्वयमग्रानयेयुः |
| ,, | १४ | तासामंशो | तासामप्यंशो |
| ,, | १८ | दुरेनाप्तसन्निवृत्ति- | दुरेनाप्तसन्निवृत्ति- |
| ,, | २२ | आधिदैविकं | आधिभौतिकं |
| ,, | ,, | -याध्यात्मिकानां | याध्यात्मिकपशात्मकानां |
| ,, | २३ | गोपानां याच्ञाभङ्गः | गोपानां च याच्ञाभङ्गः |
| ,, | २५ | तृप्तिर्भविष्यति | तृप्तिर्भविष्यतीति |
| ,, | ,, | आधिभौतिकश्च | आधिदैविकश्च |
| ,, | २६ | यज्ञीयावस्य | यज्ञार्थीयावस्य |
| ,, | २७ | ज्ञानेनाधि- | ध्यानेनाधि- |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः । | मूलपाठः । |
|---|---|---|---|
| ८१ | १५ | न तु स्वानु– | न स्वानु– |
| ८२ | ४ | एवं यथा | एवं सति यथा |
| ,, | २० | वाक्यमेव | वाक्यत्वमेव |
| ८४ | १२ | गृह्यमाणेपि पीतिमा– | गृह्यमाणपीतिमा– |
| ,, | ३१ | सम्भेव | सम्भवे |
| ८५ | १ | साधनानन्तरा– | साधनान्तरा– |
| ८७ | १४ | लोकनाथ– | ऽलोकनाथ– |
| ,, | ,, | पत्रांतटिप्पणं न ग्रंथकर्तृणाम् । | |
| ८८ | ५ | हेतुक | हैतुक |
| ,, | १२ | पञ्चविंशे | पञ्चविंशा |
| ८८ | २१ | दुपास्यानां न नमस्य | उपास्यानां नमस्य |
| ८८ | ३२ | एतदेवाहुः | एतदाहुः |
| ८९ | ८ | त्मकत्वेन | त्मत्वेन |
| ९० | १४ | स्वरूप- | स्वस्वरूप- |
| ९० | २४ | मूले श्रीकृष्ण इति नास्ति । | |
| ९१ | २९ | इयं फक्किका मूले एवं वर्तते–नन्वेवमाचार्यैः कुतो व्याकृतम् ? यथाश्रुतार्थस्यापि सुघटत्वात् । | |
| ९१ | ३० | शुद्धत्वेन तापहारकत्वेन | तापहारकत्वेन शुद्धत्वेन च |
| ९२ | १ | पूर्णानन्देन सतो गणितानन्दात् | पूर्णानन्देन गणितानन्दात् |
| ९२ | ५ | एवं सतीति मूले नास्ति । | |
| ९२ | ७ | ब्रह्महृदप्रापणं तत्र मज्जनं तत उद्धृतिश्चेति क्रियान्तरसमुदायः । | उच्यते च ब्रह्महृदप्रापणादिः । |
| ९२ | १८ | स्वरूपानन्ददाने | स्वरूपानन्दादाने इति मूलस्थपाठः टिप्पणे शुद्धः । |
| ९३ | १ | न्याये 'न तु तद्धानि'रिति नास्ति मूले । | |
| ९३ | २८ | सर्वस्वं | सर्वं स्वं |
| ९४ | १ | वचसा | वाचा सा |
| ९४ | १० | निकटागमनेति मुद्रितपाठ एव शुद्धः, टिप्पणस्थपाठस्त्वशुद्धः । | |
| ९४ | १८ | चरणाम्बुजरहं | चरणाम्बुरुहं |
| ९४ | २१ | प्रकटम | प्रकट |
| ९४ | २९ | मन्द | मान्द |
| ९५ | ३ | पूर्णस्वरूपानन्दो | पूर्णः स्वरूपानन्दो |
| ९५ | ९ | प्राधान्यमेव | प्राधान्यमेवमेव |
| ९५ | २६ | साधकत्वेन | साधनत्वेन |
| ९६ | ३ | तद्धर्मापनोदनं | सद्धर्मापनोदं |
| ९६ | १९ | न च मनस इति पाठो मूलस्थः शुद्धः, टिप्पणपाठस्त्वशुद्धः । | |
| ९७ | २७ | भगवद्धर्मप्रवेश | भवद्धर्मप्रवेश |
| ९८ | १५ | तदुक्त्वात्र | तदुक्तत्वात्र |

| पृष्टम् | पंक्तिः | मुद्रितपाठः । | मूलपाठः । |
|---|---|---|---|
| ” | २१ | कार्यं तत्तदा | कार्यं तत्तत्तदा |
| ९८ | — | टिप्पणस्थाः तासाम्, तदन्त इति पाठौ न वाचनीयौ । | |
| ९९ | १८ | स्वामिनीनां मनांसि | स्वामिनीमनांसि |
| ” | २० | चृप् | चृप् |
| ” | २१ | प्रकृते तु सर्वात्म– | प्रकृते सर्वात्म– |
| १०० | २१ | प्रयोजनकत्ये– | प्रयोजकत्वे– |
| ” | — | टिप्पणस्थपाठः न वाचनीयः । | |
| १०१ | १९ | यासां | येषां |
| १०१ | २४ | यथाशास्त्रमित्यादिना | यथाशास्त्रद्वयमित्यादिना |
| १०२ | ४ | निर्णायकन्याय– | निर्णायकं न्याय– |
| ” | १० | स्वरूपेणैव | स्वरूपेण |
| १०४ | ५ | प्रत्येकैकचरण | प्रत्येकैकश्चरण |
| ” | १६ | तथात्वात्तज्जनमेव | तथात्वासत्तज्जनमेव |
| ” | २३ | मुक्त्या तत्र | मुक्त्यात्र |
| ” | २६ | ततो | यतो |
| १०५ | ६ | भगवतः | भगवतः । |
| ” | १९ | मङ्गीकृत्य | मप्यङ्गीकृत्य |
| १०६ | ११ | सिञ्चनेन | सेचनेन |
| ” | १३ | किं किं | किं |
| १०७ | ८ | तदास्यं | दास्यं |
| १०८ | १९ | स्फुटीभविष्यतीति | स्फुटीभविष्यति । |
| ” | ३० | तथा । तदैव | तथा तदैव |
| ११० | १९-२० | तथा च श्रुतिः......हतस्रे'ति मूलेनास्ति । | |
| १११ | ४ | नत्वधिकसम्पादनं | नत्वधिकं सम्पादनं |
| ” | ११ | तेषामेवा– | तेषामाय– |
| ११२ | १ | तथाहत्यर्थकः प्रयत्नः | तथाहत्यर्थकप्रयत्नः |
| ११२ | १५ | निरोधानास्फूर्तिरिति | निरोधानस्फूर्तिरिति |
| ११३ | ८-९ | पर स्वद्दर्शनजात्योक्त | पर स्वदर्शनजात्योक्त |
| ११३ | २२ | मित्यत्र | मित्यस्य |
| ११६ | २ | पूतनामुपय.पान– | पूतनामुपान |
| ११६ | २ | दत्तायाः मुक्तिं | दत्तायामुक्ति |
| ११६ | ११ | स दृष्टवर्ता | दृष्टवती |
| ११६ | २० | टिप्पणस्थ आराधनलक्षणमिति मूलपाठः । | |
| ११६ | २१ | गोविन्देत्यारभ्य भाष्येति कचिन्नास्ति । | |
| ११८ | २३ | प्रतिबन्धश्च | प्रतिबन्धकश्च |
| ११८ | २६ | अतोय– | अथ– |
| ११९ | ५ | स्फुरद्रूपाः | स्फुरिता |

| पृष्ठम् | पंक्तिः | मुद्रितपाठः । | मूलपाठः । |
|---|---|---|---|
| ११९ | १० | गत्वाऽब्रवीत्– | गत्वेति नास्ति । |
| ११९ | १४ | अत एव दत्तात्वम् | अतो दत्तात्वम् । |
| १२२ | ९ | सर्वं कार्यम् | कार्यमिति नास्ति । |
| १२२ | १० | आविर्मूर्तः | आविर्भूतः |
| १२३ | ६ | कन्दर्पेणेति | कन्दर्पेणेति । |
| १२३ | २८ | त्यक्ष्यामि | त्यक्ष्ये |
| १२३ | ३० | गाढत्वादमौचेति टिप्पणस्थपाठः मूलपाठः । | |
| १२८ | १७ | विमुच्य | विमुच्यते |
| १३१ | ९ | दानाच्च । | दानाच्च |
| १३२ | १६ | तत्स्वरूप– | तत्सरूप |
| १४४ | ४ | तर्क पयः इति मूलपाठः । | तक्रोपम इति शोधितः पाठ । |
| १४४ | ५ | लवतमेयेति मूलपाठः । | प्रियतमेऽवेति शोधितपाठः । |

| पृष्ठम् | पंक्ति | मुद्रितपाठ । | मूलपाठः । |
| --- | --- | --- | --- |
| ११९ | १० | गत्वाऽब्रवीत्– | गत्वेति नास्ति । |
| ११९ | १४ | अत एव दक्षात्वम् | अतो दक्षात्वम् । |
| १२१ | ९ | सर्वं कार्यम् | कार्यमिति नास्ति । |
| १२२ | १० | आविर्भूतं | आविर्भूत |
| १२३ | ६ | कन्दर्पेणेति | कन्दर्पेणेति । |
| १२३ | २८ | श्लक्ष्यामि | श्लक्ष्ये |
| १२३ | ३० | गाढतादर्शवेति टिप्पणस्थपाठः मूलपाठः । | |
| १२८ | १७ | विमुच्य | विमुच्यते |
| १३१ | ९ | दानाच । | दानाच |
| १३२ | १६ | तत्स्वरूप– | तत्सरूप |
| १४४ | ४ | तक पय इति मूलपाठ । | सक्रोपम इति शोधित पाठ । |
| १४४ | ५ | सततमेयेति मूलपाठ । | प्रियतमेदिवति शोधितपाठ । |

---

# मुद्रितपुस्तकानि ।

| | | |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. १– ०–० |
| २ | निरोधलक्षणम् । पञ्चविवरणसमेतम् । | रु. १– ०–० |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । | रु. १– ०–० |
| ४ | जलभेदः । चतुर्विवरणसमेतः ।<br>पञ्चपद्यानि । द्विविवरणसमेतानि ।<br>सेवाफलम् । विवरणत्रयम् । | रु. १–० –० |
| ५ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०–१०–० |
| ६ | तैत्तिरीयोपनिषद्भाष्यम् । जयगोपालभट्टकृतम् । | रु. १– ०–० |
| ७ | शृङ्गाररसमण्डनम् । श्रीविट्ठलेश्वरप्रकटितम् । | रु. २– ८–० |
| ८ | श्रीमधुराष्टकम् । पञ्चविवरणसमेतम् । | अमूल्यम् । |
| ९ | प्रेमामृतम् श्रीविट्ठलेश्वरकृतविवृतिसमेतम् ।<br>परिवृढाष्टकम् श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०– ८–० |
| १० | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १– ०–० |
| ११ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | यन्त्रस्था । |
| १२ | त्रिविधनामावली टीकासमेता । | यन्त्रस्था । |
| 13 | Discuss how far S'aṅkaracharya truly represents the view of the author of the Brahma-Sûtras. ( Zala Vedanta prize Essay ) | Rs. 1 0 0 |

प्रापणस्थानम्—

१. चुनीलाल बुकसेलर, बडामंदिर भूलेश्वर, मुंबई.

२. नडीयाद पुष्टिमार्गीय पुस्तकालयः, नडीयाद.

३. पंडित मुख्याजी गोकुलदासजी, श्रीविट्ठलनाथ पाठशाला, कोटा, राजपुताना.

४. पंडित गट्टूलालजी पाठशाला, केथिड्रलस्ट्रीट भूलेश्वर, मुंबई.

Printed by Ramchandra Yesu Shedge, at the Nirnaya-sagar Press, 23, Kolbhat Lane, Bombay.

Published by Mulachandra Tulsidas Telivala B. A., LL. B., Vakil, High Court C. P. Tank Road, Girgaon, Bombay

॥ श्रीनवनीतप्रियो जयति ॥

महानुभावश्रीहरिरायचरणानां श्रीवल्लभानाञ्च टिप्पणीभ्यां समलङ्कृता, श्रीपुरुषोत्तमचरणविरचितप्रकाशेन विशदीकृता, श्रीमद्विट्ठलेशप्रभुचरणनिर्मिता

# ॥ श्रीवृत्रासुरचतुःश्लोकीविवृतिः ॥

गोस्वामिकुलावतंसगोस्वामिश्रीजीवनाचार्यात्मजविद्यानुरागिगोस्वामिश्रीमद्रणछोडलालचरणानां निखिलप्रबन्धेन प्रादुर्भूता

शास्त्री चिमनलाल हरिशङ्कर. | शास्त्री हरिकृष्ण वीरजीभाई.
"साहित्यभूषण" "शुद्धाद्वैतरत्न" | "शुद्धाद्वैतविशारद"

इत्येताभ्यां संशोध्य

श्रीजीवनाचार्यपुष्टिमार्गसिद्धान्तकार्यालयात्

प्रकाशिता गुर्जरगिरानूदिता च

संवत् १९७८, सन् १९२२

मूल्यम् ०-१०-० दशाणकाः

# प्रस्तावना

श्रीमदाचार्यचरणे षोडशग्रन्थ—चतुःश्लोकीथी पुरुषार्थचतुष्टयनुं स्वरूप दर्शाव्युं. प्रमाणमूर्धन्य श्रीमद् भागवतमां श्रीकृष्णचंद्रनी दशविध लीलानुं निरूपण करतां षष्ठस्कन्ध पोषणलीलानुं गान करे छे, आ पुष्टिनिरूपक षष्ठस्कंध उपर स्वकृत विवरण नहि होवाथी आ चतुःश्लोकी उपर आचार्यचरणोए स्वविवृति करी षष्ठस्कंधना साररूप पोषणलीलानुं अने पुरुषार्थचतुष्टयनुं स्वरूप दर्शाव्युं. आ चतुःश्लोकीना चार श्लोको पैकी प्रथम त्रण उपर श्रीप्रभुचरणनुं विवरण छे, अने चतुर्थ श्लोक उपर श्रीआचार्यचरणनुं विवरण छे परंतु चारे श्लोकनुं विवरण श्रीप्रभुचरणे स्वनामथी ज प्रकट कर्युं छे.

साम्प्रदायिकग्रन्थोद्धारणप्रयत्नात्मा श्रीरणछोडलालजी महाराजे पोरबंदरमां निजपितृचरणसरण्यनुसार वैष्णवोने सांजरे नियमित रीते आ वृत्तचतुःश्लोकी टीकासहित उपदेशी. तेना श्रवणथी उत्सुक वैष्णवोए मुद्रण करावानी विनंति करतां आपे तेने यावत्प्राप्य टीका सहित मुद्रण करवानी आज्ञा करी. अने ते "श्री जीवनाचार्य पुष्टिसिद्धांतकार्यालय" तरफथी अमे छपावी प्रकट करीए छीए. आ विवरण ग्रन्थ उपर श्रीहरिरायजी, श्रीवल्लभजी, श्रीपुरुषोत्तमजी, आ त्रण आचार्योनी टीका उपलब्ध छे. आ त्रणमां श्रीपुरुषोत्तमजीनी टीका पुष्टिभक्तिसुधामां प्रकटी छे. अने तेनो अनुवाद पण श्रीछगनलाल शास्त्रीजीए प्रकट कर्यानुं संभळाय छे. परन्तु श्रीहरिरायजी अने श्रीवल्लभजीनी टीका मुद्रित थइ नथी. श्रीपुरुषोत्तमजीनी टीकानो अनुवाद तो जाणे यथाकथंचित् कोइने प्राप्य छे, तेथी अत्रे श्रीहरिरायजीनी टीकानो अनुवाद मुक्यो छे. मुद्रणनी शुद्धता अने भाषान्तरनी सरलता माटे अमाराथी बनतो प्रयत्न अने पुरतुं ध्यान आप्युं छे छतां जीवगतदोषथी अथवा प्रेसना अनवधानथी अशुद्धि दृष्टिपथमां आवे तो तेनी क्षमा प्रार्थिए छीए. शुद्धमुद्रण माटे नीचे प्रमाणे टीकाओनी प्रतिओ मेळवी हती. अने ते टीकानी प्रतो अर्पनारनो परम उपकार सर्वथा सर्वदा अविस्मरणीय छे अने तेवी ज रीते "श्रीजीवनाचार्यपुष्टिसिद्धान्तकार्यालय" तरफथी उत्तरोत्तर प्रकट थतां पुस्तको माटे पुस्तक प्रदानथी साहाय्य करी उपकृत करशो. एवी आशा राखीए छीए.

भाषान्तरनी सरलता माटे कृष्णदास अने वल्लभदासनो संवाद योज्यो छे. जेमां प्रश्नकर्त्ता कृष्णदास छे अने सिद्धान्त कहेनार वल्लभदास छे.

नीचे प्रमाणे प्रतिओथी आ पुस्तकनी शुद्धि करी छे.

(१) चतुःश्लोकी उपर श्रीगुसांइजीनी टीकाः—

(२) आ टीकानी बे प्रतिओ श्रीजीवनाचार्यजीना सरस्वती भंडारमांथी उपलब्ध थई हती.

(૨) બૃહન્મંદિરાધીશ્વર શ્રીગોકુલનાથચરણોએ પણ આ ટીકાની બે પ્રતિનું દાન કર્યું હતું.

(૧) મોહમયીસ્થ શ્રીલાલબાવાના મંદિરના મહારાજશ્રી શ્રીરણછોડલાલજીના સંગ્રહમાંથી આ ટીકાની એક પ્રતિ મળી હતી.

(૧) પુષ્ટિભક્તિસુધામાં પ્રકટ થયેલી ટીકાનો પણ એક પ્રતિ તરીકે ઉપયોગ કર્યો હતો.

**(૨) શ્રીપુરુષોત્તમજીનો પ્રકાશઃ—**

(૧) નિત્યલીલાસ્થ ગોસ્વામી શ્રીજીવનાચાર્યશ્રીના સંગ્રહમાંથી એક પ્રતિ ઉપલબ્ધ થઈ હતી.

(૨) પુષ્ટિભક્તિસુધામાં પ્રકટ થયેલ બીજી પ્રતિ તરીકે હતી.

**(૩) શ્રીહરિરાયજીની ટિપ્પણીઃ—**

(૧) એક પ્રતિ ગોસ્વામી શ્રીજીવનાચાર્યશ્રીના સંગ્રહમાંથી પ્રાપ્ત થઈ હતી.

(૨) બીજી ગોસ્વામી શ્રીગોકુલનાથજી મહારાજશ્રીએ સ્વસંગ્રહમાંથી આપી હતી.

(૩) ગોસ્વામી શ્રીરણછોડલાલજી મહારાજશ્રીના સંગ્રહમાંની હતી.

**(૪) શ્રીવલ્લભજીની ટિપ્પણીઃ—**

(૧) ગોસ્વામિ શ્રીગોકુલનાથજી મહારાજશ્રીના સંગ્રહમાંથી.

(૨) મોહમયીસ્થ શ્રીદાઉજી મંદિરવાલા શ્રીદ્વારકેશલાલમહારાજશ્રીના સંગ્રહમાંથી.

આ પ્રમાણે શ્રીગુસાંઇજીની ટીકા છ પ્રતિઓથી શ્રીપુરુષોત્તમજીનો પ્રકાશ બે પ્રતિઓથી શ્રીહરિરાયજીની ટિપ્પણી ત્રણ પ્રતિઓથી શ્રીવલ્લભજીની ટિપ્પણી બે પ્રતિઓથી શુદ્ધ કરી છે.

શ્રીગોકુલનાથજી મહારાજ પાસે જ્યારે અમો પુસ્તકો લેવા માટે ગયા ત્યારે "શ્રીજીવનલાલજી મહારાજ સાથે તો અમારે પરસ્પર પુસ્તકપ્રદાનનો વ્યવહાર જ છે." આવા ઉત્તમ વ્યવહારનું સ્મરણ કરાવી સહર્ષ જે ગ્રંથમુદ્રણમાં ગ્રંથપ્રદાનથી સહાય આપવાનું આપે સ્વીકાર્યું એ આપનો વિદ્યાનુરાગ અમને ઉપકાર મનાવે છે.

ભગવદ્ધર્મપરાયણ મગનલાલ શાસ્ત્રીજીએ તેમજ શુદ્ધાદ્વૈતભૂષણ પંડિત શ્રીરમાનાથ શાસ્ત્રીજી તથા પંડિત શ્રીબાલુનંદાઓ પણ અમોને સમયોચિત સૂચના કરી ઉપકૃત કર્યા છે.

આ સ્વલ્પ પ્રયાસ અમો શ્રીજીનેશાચાર્યના ચરણકમલમાં સવિનય અર્પીએ છીએ.

શાસ્ત્રી ચીમનલાલ હરિશંકર
સાહિ..

શાસ્ત્રી હરિકૃષ્ણ વિરજીભાઈ
શુદ્ધાદ્વૈતવિશારદ.

# ગુર્જરાનુવાદમાં વિષયાનુક્રમણિકા.



॥ श्रीनवनीतप्रियो जयति ॥

॥ श्रीकृष्णाय नमः ॥

॥ श्रीगोपीजनवल्लभाय नमः ॥

॥ श्रीमदाचार्यचरणकमलेभ्यो नमः ॥

महानुभावश्रीहरिरायचरणानां श्रीवल्लभानाञ्च टिप्पणीभ्यां समलङ्कृता, श्रीपुरुषोत्तम-चरणविरचितप्रकाशेन विशदीकृता, श्रीमद्विठ्ठलेशप्रभुचरणनिर्मिता

# ॥ श्रीवृत्रासुरचतुःश्लोकीविवृतिः ॥



ननु पुरुषार्थाश्चत्वारस्तत्र त्रिवर्गविघातं भगवानेव करोति मोक्षस्तु भक्तानामेव नापेक्षित इति भक्तिमार्गे न कोपि पुरुषार्थः सिद्ध्यतीत्याशङ्क्य भक्तिमार्गीयं तच्चतुष्टयं भिन्नमेवेत्याह–चतुर्भिः,

पूर्वमिन्द्रं प्रति प्राह ततो भक्त्याग्रतो हरिम् ।<br>
दृष्ट्वा तत् प्रार्थयामास पुष्टिर्दृष्टफला यतः ॥ १ ॥<br>
आद्ये तु पुष्टिमार्गीयो धर्मः स्मरणकीर्तने ।<br>
सेवा चेति त्रयं तेन प्रार्थितः स निरूप्यते ॥ २ ॥<br>
आत्मनश्चाधिकारित्वमुत्तमं दीनभावतः ।<br>
प्रार्थनीयतया तस्य साधनं च कृपोच्यते ॥ ३ ॥

धर्मं प्रार्थयन् प्रथममधिकारित्वं स्वस्य निरूपयति, अहमिति,

**अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।<br>
मनः स्मरेतासुपतेर्गुणानां गृणीत वाक् कर्म करोतु कायः ॥ १ ॥**

हे हरे, अहं तव पादैकमूलदासानुदासो भवितास्मि भविष्यामीत्यर्थः । ननु सर्वस्यापि दुःखात्यन्ताभावोपेक्षितः स च मोक्षं विना न भवतीति किं दास्येनेत्यत आह–हरे इति, अत्रायं भावः, दास्ये हि त्वमेव दासानां त्रिविधमपि दुःखमपनयसि, मोक्षे तु ज्ञानं, तच्च तव धर्मस्तेन धर्मापेक्षया धर्म्याश्रयणमेव युक्तं, किञ्च मोक्षे दुःखनिवृत्ता-वपि प्रभुकृपया मम दुःखं गतमतोहं सुखेन वर्ते इति भावस्तु दुर्लभ एव, भेदाभावात्,

दास्ये तु न तथेत्याशयेनास्मच्छब्देन भेदमुपपादयति–अहमिति। ननु दास्यं कथं सेत्स्यतीत्यत आह–तवेति त्वदीयोऽहमित्यर्थः तेनावयोः सेव्यसेवकभावः सहज इति सूचितम्, अन्यथा त्रिवर्गविघातमसुरत्वेपि सति कथं कुर्याः, ततो मोक्षे चानधिकार उक्तः, एवं चेत् कथं दास्यं न करोपीत्यत आह–भवितेति, जीवस्य त्वदीयत्वेपि देहस्यासुरत्वेनायोग्यत्वाद्देहान्तरे दासो भविष्यामीत्यर्थः, अतस्त्वदनुग्रहेणैव तथा भवितेत्यत्र विश्वासमाह–अस्मीति। साक्षात्प्रभुदास्ये हि स्वस्य दीनभावो गच्छतीति परम्परादासत्वमुक्तं, यद्वा, प्रभुदास्ये हि स्वस्य सर्वोत्तमत्वाभिमानेन भक्तान्तरे अपराधसम्भवात् प्रभुदास्यादपि भ्रंशो भवेत्तच्चानुभूतं चित्रकेतुदशायाम्, अतः परम्परादासत्वेन दैन्यमेवोचितमिति भावः।

अथवा तवेत्यादिपदसमुदायेन मोक्षादिक्रमेण वक्ष्यमाणपुरुषार्थचतुष्टयेप्यधिकाररूपं चतुर्विधं दास्यमुच्यते, तत्र पुष्टिमार्गे मोक्षो हि भजनानन्दानुभवः, स च देहेन्द्रियप्राणान्तःकरणयुक्तानामेव, 'अक्षण्वतां फलमिदं न परं विदाम' इत्यत्र श्रुतिप्रतिपादितः, तत्र चाधिकाररूपं प्रभुदास्यं 'भवाम दास्यः' 'पुरुषभूषण देहि दास्य'मिति श्रुतिवाक्याद्तस्तवेति पदान्मोक्षाधिकाररूपं प्रभुदास्यमुक्तमतस्तवेत्यसमासः, अन्यथा त्वत्पादेति वदेत्, तव पादावेवैकं मूलं येषां ते तथा, अर्थाद्व्रजस्थितभक्ता एव, 'तेङ्घ्रिमूलं प्राप्ता' इति तेषामेवोक्तेः, तेन कामाधिकाररूपं तद्दासत्वमुक्तमन्यथा कामासिद्धेः, अत एवोक्तमाचार्यचरणैः 'तद्द्वारा पुरुषाणां च भविष्यति न चान्यथे'ति। अनुपदेन तद्दासदासत्वमर्थाधिकाररूपमुक्तम्, ततस्तव दासत्वं धर्माधिकाररूपमुक्तम्।

ननु सत्सङ्गाभावेप्येवम्भावस्तव कथं जात इत्यत आह–भूय इति, पूर्वमहं चित्रकेतुर्दास एव स्थितोऽतः पुनरपि तथा वितेति भावः। एवं स्वस्याधिकारचतुष्टयं प्रतिपाद्य तरतमभावादादौ धर्मं प्रार्थयते मनः स्मरेतेति। असुपतेरिति गुणानामिति च कर्मणि षष्ठी, तथा च मनः असुपतिं स्मरेत चिन्तयेत्, स्मरणस्यात्मसुखैकसाधनत्वादात्मनेपदम्। वाक् तस्यैव गुणान् गृणीत कीर्तयेत्, कीर्तनस्यापि मुख्यः स्वार्थ एव परार्थस्त्वानुषङ्गिक इत्यात्मनेपदम्। कायस्तस्यैव कर्म सेवां करोतु, सेवा तु यथा प्रभोः सुखं भवति तथा क्रियते, न तु तत्राणुमात्रमपि स्वार्थपरत्वमतः परस्मैपदम्। स्मरणकीर्तनयोः श्रवणाधीनत्वेनान्यकथनसापेक्षत्वाद्द्विरुक्तः। सेवायां स्नेह एव नियामकः, स च प्रभुकृपैकसाध्य इति तत्राशीर्निरूपिता॥ १॥

(१) भा० १०, २१, ७ (२) भा० १०, २९, ३९ (३) भा० १०, २९, ३८. (४) भा. १०, २९, ३८ (५) भा स्क १०, २६, १

एवं मनोवाक्कायभेदेन त्रिविधमपि धर्मं सम्प्रार्थ्यार्थं निरूपयति–न नाकपृष्ठमिति।

**न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम्।**
**न योगसिद्धीरपुनर्भवं वा समञ्जस त्वा विरहय्य काङ्क्षे ॥२॥**

लौकिको वैदिकश्चार्थस्त्रिविधः प्राकृतैर्गुणैः।
क्रमेण ते भगवतो गुणैः षड्भिर्निराकृताः ॥ १ ॥
स्वर्गभूमिरसैश्वर्यं सात्त्विकादि तु लौकिकम्।
मोक्षश्च पारमेष्ठ्यं च सिद्धयश्चेति वैदिकम् ॥ २ ॥
प्रवृत्तिधर्मसाध्यत्वात्सामान्यं तत्तु लौकिकम्।
निवृत्तिधर्मसाध्यत्वाद्विशेषाद्वैदिकं परम् ॥ ३ ॥
प्रत्येकमेव ते चार्था न तु सम्भूय कुत्रचित्।
भगवत्यखिलात्मत्वाद्भवन्त्येव तथा हि ते ॥ ४ ॥
अतोऽर्थो भगवानेव पुष्टिमार्गेऽङ्गमन्यतः।
सर्वतो नैरपेक्ष्यं च तथात्र विनिरूप्यते ॥ ५ ॥

आदौ लौकिकसात्त्विकमर्थं निराकरोति–न नाकपृष्ठमिति, नाकः स्वर्गस्तस्य पृष्ठं राजासनम्, इन्द्रासनमितियावत्, तच्च नश्यति कालान्तरे, अतस्त्वय्यखण्डितैश्वर्यस्य विद्यमानत्वात्तन्न काङ्क्षे नेच्छामीत्यर्थः। वैदिकराजसमर्थं निराकरोति–न पारमेष्ठ्यमिति, परमेष्ठी ब्रह्मा, रजोवतारत्वात्तत्स्थानं राजसम्, तत्र च 'ब्रह्मणा सह मुच्यन्ते' इति वाक्यात्पारतन्त्र्येण फलसिद्ध्या स्ववीर्यहानिरेव, त्वयि चाखण्डितवीर्यस्य विद्यमानत्वात्तदपि न काङ्क्षे। लौकिकराजसमर्थं निराकरोति–न सार्वभौममिति, सर्वभूमेरीश्वरत्वे हि सर्वत्र लोके यशो भवति, तच्च दानादिसापेक्षत्वादौपाधिकं सावधिकं च 'तैर्द्वायसं तीर्थ'मिति वचनात्स्वरूपतोऽपि दुष्टं 'राज्यान्ते नरकं ध्रुव'मिति वचनादवसानतोऽपि तथा, त्वयि चानवद्ययशसो विद्यमानत्वात्तदपि न काङ्क्षे। लौकिकतामसमर्थं निराकरोति–न रसाधिपत्यमिति, रसेत्युपलक्षणं तेनाधोलोकाः सर्वे निरूपिताः, तत्र च भूम्यपेक्षया सुखभोगोऽधिकः स च श्रिया भवति, सा च त्वया बलेरपहृता दत्ता च, त्वयि चानपायिन्याः श्रियो नित्यं विद्यमानत्वात्तदपि न काङ्क्षे। वैदिकतामसमर्थं निराकरोति–न योगसिद्धीरिति, अपक्वयोगिनो हि सिद्धिबलेनापेक्षितविषयान् संसृज्य भोगं कुर्वन्ति तेन योगादपि भ्रष्टा भवन्तीति तेषां ज्ञानं भ्रान्तमेव, त्वयि च नित्याखण्डितज्ञानस्य विद्यमानत्वा-

(१) भा. स्कं. १-९-१०।

त्ता अपि न काङ्क्षे । वैदिकसात्त्विकमर्थं निराकरोति–अपुनर्भवं वेति, '[1] सत्त्वात् सञ्जायते ज्ञान'मितिवचनाज्ज्ञानस्य सात्त्विकत्वेन तत्साध्यमोक्षस्यापि तथात्वमुच्यते, स च गणितानन्दत्वेन त्वदानन्दांश एव न तु त्वम्, तत्रापि सेव्यसेवकभावेन नान्योन्यं सापेक्षता भेदाभावादतस्तस्यार्थत्वाभावायापुनर्भवपदम्, जन्माभावातिरिक्तविशेषाभावात्, त्वं तु पूर्णानन्दो भक्तसापेक्षश्चेति '[2] मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपी'ति वाक्यादतो भक्तातिरिक्तरागाभावेन त्वय्यखण्डितवैराग्यस्य विद्यमानत्वात्तमपि न काङ्क्षे । मर्यादाया मोक्षस्तुरीयपुरुषार्थः स च पुष्टौ हेयत्वेनार्थमध्ये गणित इत्यनादरद्योतनार्थं वेत्युक्तम्, यत्र मोक्षस्याप्यनादरस्तत्रान्येषां किं वाच्यमिति च । तर्हि कोर्थस्तवापेक्षित इत्यत आह–समञ्जसेति, हे समञ्जस पूर्णत्वात्सकलार्थरूप, अतस्त्वा त्वां विरह्य्य पृथक्कृत्योक्तार्थानहं न काङ्क्षे, किन्तु त्वामेव सर्वार्थरूपत्वादर्थत्वेन काङ्क्षे निरन्तरमिच्छामीत्यर्थः । यद्वा उक्तार्थान्पृथक्कृत्य त्वामेव चार्थत्वेन काङ्क्षे ॥ २ ॥

एवमर्थं निरूप्य कामं निरूपयति–अजातपक्षाइवेति ।

अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा मनोरविन्दाक्ष दिदृक्षते त्वाम् ॥ ३ ॥

पुष्टिमार्गे हरे रूपदिदृक्षा मनसोस्य हि ।
कामो निरूप्यते तत्र दृष्टान्तत्रितयं यथा ॥ १ ॥
द्वितयं लौकिकं प्रोक्तमेकं शास्त्रीयमुत्तमम् ।
लौकिकस्त्रिगुणीभूय दृष्टान्तः स्याद्लौकिके ॥ २ ॥
अन्यथैकतरेणापि सिद्धेर्थे त्रितयेन किम् ।
क्षुद्रूपो लौकिकः कामो रसरीत्या तु शास्त्रतः ॥ ३ ॥
प्रभोस्तु रसरूपत्वात्स्वस्यैकत्वेन चोत्तमः ।
अयमेव हि दृष्टान्तस्तेनान्ते चैकतोदिता ॥ ४ ॥

हे अरविन्द ? मनुस्त्वां दिदृक्षत इति सम्बन्धः । नेत्रयोरम्बुजत्वेन तद्दिदृक्षया मनसो मधुपत्वं बोधितम् तथाचारविन्दे विकसिते मधुपस्य कामः सिद्ध्यति नान्यथेति तथा दृष्टिं मयि संपादयेति प्रार्थितम्, दिदृक्षाहेतुभूतं स्वरूपसौन्दर्यं च संबोधनेन ध्वनितम् । मनसः स्वतन्त्रत्वायास्मच्छब्दप्रयोगाभावः । किञ्च, दिदृक्षा दृशो धर्मः, स च मनसो निरूप्यते, तेन सर्वेन्द्रियाणामपि मनःसंनिकर्षात्पूर्णः कामो निरूपितः, अन्यथा भजनानन्दानुभवो न स्यात्

(१) गीता अ १४, १७ । (२) भा ९-४ ६८ । * अध्युषितमित्यपि पाठः ।

तस्य सर्वेन्द्रियैकवेद्यत्वात्। प्रभोः पूर्णकामत्वेन क्रियाफलस्यात्मगामित्वायात्मनेपदम्। मनसश्चञ्चलत्वान्मधुपत्वबोधनेन च कामान्तरं संभवतीति तदभावाय दृष्टान्तमाह—खगा इवेति, यथा पक्षिणः कदा किमानीय दास्यतीति मातरं द्रष्टुमिच्छन्ति, खगानां नियतभक्ष्याभावादनियतस्य च क्षुधार्ततयार्थसिद्धत्वात्तदत्र नोक्तम्, तदपि न सर्वदा किन्तु कियत्कालपर्यन्तमेवेत्याह—अजातपक्षा इति, पक्षोदयानन्तरं न तथेति तावदेव दृष्टान्ततेत्यर्थः। तथाचात्र क्षुदुपाधिकृतत्वमनियतविषयत्वमनियतकालत्वं चेति दूषणत्रयं संभाव्य द्वितीयं दृष्टान्तमाह—स्तन्यं यथेति। वत्सतरा अतिबालवत्सास्ते यथा कदा स्तन्यं प्राप्स्याम इति तदिच्छन्ति तथेत्यर्थः। तेषां स्तन्यमात्रैककामत्वादत्र तदेव प्रोक्तम्, मातुरभावे तद्बुद्ध्या परस्या अपि स्तन्यं पिबन्तीति तदनुक्तिः। अत्रापि नियतविषयत्वेऽपि वत्सतरपदादनियतकालत्वं क्षुदुपाधिकृतत्वं चेतिदूषणद्वयं संभाव्य तृतीयं दृष्टान्तमाह—प्रियं प्रियेवेति, प्रियपदादुभयत्र निरुपाधिकस्नेहो निरूपितः, स्नेहस्य तथात्वं तदभिज्ञेनोक्तं 'आविर्भावदिने न येन गणितो हेतुस्तनीयानपी'ति, तेनोपाधिदूषणमत्र परिहृतम्, व्युषितमिति प्रवासिनमित्यर्थः, तेन गमनक्षणमारभ्यागमनावधि दिदृक्षाया एकरसत्वादनियतकालत्वं चापास्तम्। विषण्णेतिपदादनियतविषयत्वं च, अन्यथा विषादासम्भवात्, एवं दोषत्रयाभावादयमेव दृष्टान्तो युक्त इत्याशयेन स्वस्यैकत्वादत्राप्येकवचनमुक्तमन्यथा पूर्ववदत्रापि बहुवचनं वदेत्, बहुषु तथात्वस्यासंभवात्, अत एवान्ते च निरूपणं कृतम्, पूर्वोक्तद्वयमेकदेशाभिप्रायेणेति तत्कथनमपि नानुपपन्नम्। किञ्च, प्रिया हि विप्रयोगे केवलं विषादमात्रं न करोति किन्तु, प्रिये विविधरसभावानन्तःप्रकटयति, प्रकारान्तरेण जीवनमेव न स्यात्, जाते च जीवने प्रियत्वं तु बाधितं स्यात्। स्वस्य पुरुषत्वेन स्त्रीदृष्टान्तान्यथानुपपत्त्या च तज्जातीयरसभाव उक्तः, अतो रसस्यातिगोप्यत्वादयं भावः प्रियापदेनाभिव्यज्यते, विषादस्य तु बहिरप्यनुभूयमानत्वादन्यज्ञानविषयत्वाच्च तथाविशेषणम्, एवमनेकरसभावविशिष्टं विषण्णं च मनस्त्वां दिदृक्षते, न तु दर्शनमात्रमिच्छति, तत्तु पूर्वमर्थत्वेन काङ्क्षितत्वादत्रानुपपन्नं विशेषाभावात्, अन्यच्च, अस्मच्छब्दप्रयोगो हि देहाध्यासकृतो भवति साम्प्रतं तु रसानुभवयोग्यदेहाभावाद्वृत्रशरीरस्य च तत्प्रतिबन्धकत्वादध्यासाभावान्मन एवोक्तं न तु ममेति। दृष्टान्ते च तदध्यासस्य दृढत्वात्प्रियेति निरूपितं न तु मनः, अन्यथा प्रियेवाहं दिदृक्षे इति दृष्टान्तसाधर्म्ये वक्तव्ये मनो दिदृक्षत इति न वदेत्, अतो रसमार्गीयः कामो रसदृष्ट्यैव पूरणीय इति तथा सम्बोधनेन प्रार्थितम्॥ ३ ॥

---

१ तिंठतेति गदुस्तके पाठः। * अज्ञानविषयत्वादपीति पाठः।

एवं कामं निरूप्य मोक्षं निरूपयति—ममोत्तमेति,

**ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ।**
**त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ ४॥**

पुष्टिमार्गे हरेर्दास्यं धर्मोऽर्थो हरिरेव हि ।
कामो हरेर्दिदृक्षैव मोक्षः कृष्णस्य चेद् ध्रुवम् ॥ १ ॥

पुष्टिमार्गे* मोक्षो निरूप्यते,

श्रीमद्वल्लभाधीशमहाप्रभुचरणकमलरेणुभ्यो नमः ॥

## अथ श्रीहरिरायचरणविरचिता टिप्पणी ।

श्रीवल्लभाचार्यपदः स्वीयसर्वार्थसम्पदः ॥
प्रणमामि तदुक्तार्थबोधनाय मुहुर्मुहुः ॥ १ ॥

[१] अथ श्रीवल्लभाचार्यचरणाः पुष्टिमार्गे धर्मार्थकामानां पूर्वपद्येषु स्पष्टत्वमवगम्यमानत्वान्मोक्षमात्रस्य सन्दिग्धत्वादतिविलक्षणत्वाच्च तन्निरूपयन्ति—पुष्टिमार्ग इति, पुष्टिर्हि प्रभोरनुग्रहः स च फलदानेच्छा, सापि द्विधा, केवला विशिष्टा च, तत्र केवला निःप्रकारा, साधनं प्रकारस्तद्रहिता, विशिष्टा ससाधना सैव फलप्राप्त्युपायतया मार्ग इत्यर्थः । तत्र **मोक्षो निरूप्यत** इत्यर्थः ।

## अथ श्रीपुष्टिमार्गीयमुक्तिविवृतिप्रकाशः ।

दशदिगन्तविजयि–श्रीपुरुषोत्तमपाद–प्रणीतः ।

श्रीकृष्णाय नमः

प्रणम्य श्रीमदाचार्यचरणाँस्तत्कृपाबलात् ।
तदीयां पुष्टिमार्गीयमोक्षोक्तिं विवृणोत्ययम् ॥ १ ॥

[१] अथ श्रीमदाचार्यचरणाः पुष्टिप्रवाहमर्यादायां पुष्टेर्मार्गत्वस्य विवृतत्वेन तत्र पुमर्थानामवश्यवक्तव्यत्वात् पुष्टेः षष्ठस्कन्धार्थत्वेन तत्र सपरिकरायास्तस्या निरूपितत्वात् तत्रत्यैर्वाक्यैरेव तान्विवरिषवः पूर्ववाक्येषु धर्मार्थकामानां स्पष्टत्वात्तुरीयस्य चास्पष्टत्वात्तन्निरूपणं प्रतिजानते—**पुष्टिमार्गे मोक्षो निरूप्यत** इति,† "पोषणं तदनुग्रह" इतिलक्षणवाक्यात्पुष्टिरनुग्रहः, स च धर्मान्तरमिति भक्तिहेतुनिर्णये स्थितम्, स एव फलसाधनत्वान्मार्गः । तत्र मोक्षो (भा० २, १०, ६.) " मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिरि "तिवाक्योक्तलक्षणकमन्यथारूपत्यागपूर्वकं स्वरूपेणावस्थानम् । निरूप्यते इतरवैलक्षण्येन ज्ञाप्यत इत्यर्थः ।

---

१. इयं चतुर्थश्लोकविवृतिः श्रीमदाचार्यचरणानामेवेति तट्टिकात्रयेणावगम्यते दृश्यते चैतत्प्रमापत्रपेट्युपलब्धे ग पुस्तके । * पुष्टिमार्गीय इत्यपि पाठः । † भा. २, १०, ४.

तत्र स्थितौ बन्धो नामाहन्ताममतास्पदेष्वासक्तिस्तदन्येषु सङ्गश्च, तस्य सहेतुकस्याभावो मोक्षश्च, पुष्टिस्तु तद्विपरीता, तत्र व्यवस्थया मोक्षद्वयमाह—**ममोत्तमेति।**

टिप्पणी—[२] अत पर पुष्टिमार्गे बन्धमोक्षाभ्या वैलक्षण्य निरूपयन्ति तत्र स्थिताविति, तत्र स्थितौ पुष्टिमर्यादाया बन्धोऽहन्ताममतास्पदेषु पुत्रदारगृहधनादिषु आसक्तिः सर्वात्मना तन्निष्ठमनोवृत्ति, तदन्येष्वासक्तिविषयान्येषूदासीनेषु सङ्गश्च तस्य बन्धस्य सहेतुकस्य तदुत्पादककारणकलापसहितस्य योऽभावः स मोक्ष इत्यर्थ । पुष्टौ तद्वैपरीत्यमाहु — पुष्टिस्त्विति, पुष्टिः पुष्टिमार्गस्ताभ्या बन्धमोक्षाभ्या विपरीता, पुष्टिमार्गे बन्धो हि पुत्रादिष्वासक्तिविषयेषु भगवदीयत्वेनानासक्तिरुदासीनेषु भक्तेष्वसङ्गश्च, तदभावो मोक्ष । भगवदीयेषु पुत्रादिष्वासक्तिर्भगवद्भक्तसङ्ग्य च मोक्ष इति वैपरीत्यमित्यर्थ ।

प्रकाशः— [२] ननु "प्रसङ्गमजरं पाशमात्मनः कवयो विदुरि"ति ( भा० ३, २५, २० ) "स्नेहपाशैर्निबध्नाति भवान्सर्वमिदञ्जगदि"त्यादिवाक्यैर्बन्धस्य स्पष्टत्वेन तदभावरूपमोक्षस्यापि तथात्वात्तस्य च मार्गमात्रतुल्यत्वादपार्थोय प्रयास इति शङ्कायामाहु —तत्रेत्यादि, मोक्षस्येतरवैलक्षण्येन ज्ञाप्यतया वैलक्षण्यप्रतियोगिनोऽवश्यवक्तव्यत्वे, स्थितौ उपादेयतया प्रतियोगिभूतायाम्, बन्धः ससारकारणभूत उक्तविध, तस्य सहेतुकस्य "तत्र सत्वं निर्मलत्वादि"[1]त्यादिगीतावाक्योक्तहेतवो गुणास्तत्सहितस्य बन्धस्याभावो ब्रह्मसादिर्मोक्षः। पुष्टिः पुष्टिसरणी, तद्विपरीता विरुद्धलक्षणा, तथा च तत्र ससारास्पदेषु प्रसङ्गासक्ती मोक्षस्तदभावश्च बन्ध इत्यर्थ । तत्र मोक्षस्तु अत्र स्फुटिष्यति, बन्धस्तु तृतीयस्कन्धनवमाध्याये ब्रह्मस्तुतौ "अन्धापृतार्त्तकरणा" इत्यस्य सुबोधिन्या व्युत्पादित । ये पूर्वजन्मनि अज्ञात्मभावचिन्तनपरा स्तेभ्य. स्वोक्तनिवृत्तिमार्गकरणाद्भगवान्प्रसन्नो भूत्वा सत्यादिलोकेष्विह वा किञ्चित्प्रसाद प्रयच्छति तदा नेदमस्माकमपेक्षितमिति ततो विमुखा अज्ञात्मभावचिन्तनेनैव "माप्तदेहावसानाश्चे"तिश्लोकोक्तरीत्यैव सञ्चरन्तीति स्वमुक्तत्वाभिमानेन भगवद्दत्तप्रसादागृहाणा ऋषीणामप्येव भाव इति ।

श्रीकृष्णाय नम

# अथ श्रीमद्वल्लभानामियं टिप्पणी।

ममोत्तमेतिश्लोकविवरणे तत्रेति मोक्षविषये इत्यर्थ, स्थिताविति मर्यादामार्ग इत्यर्थ । पुष्टिमोक्षभेदबोधकतया प्राक्तन्निरूपणस्यावश्यकत्वात्। तद्विपरीतेति, स्वरूपत साधनत फलतश्चेत्यर्थ । स्वरूप कृपया नि साधनाङ्गीकार., साधन गृहस्थितिपूर्वक भजनम्, फल साक्षाद्भजनानन्दानुभव । अत एव फलप्रकरणे प्रमाणनिष्ठात्यागेन तदनुभव, नो चेत् द्विजदारवन्निष्ठायां गृहगमनमेव स्यात्। तत्र व्यवस्थयेति, पुष्टिमार्गे व्यवस्थयेत्यर्थ ।

---

१ गीता १४, ६

**मोक्षो हि द्विविधः, पुष्टिमर्यादया पुष्टिपुष्ट्या च। † (मर्यादायां ज्ञानेनैव मुक्तिः, पुष्टौ च ज्ञानेन भक्त्या वा मुक्तिः ) भगवत्पारोक्ष्यापारोक्ष्याभ्यां व्यवस्था, प्रत्यक्षेपि भगवति**

---

**टिप्पणी—**[ ३ ] अथ पुष्टेः शुद्धमिश्रभेदेन द्विविधाया मोक्षैक्यस्य बाधितत्वाद्व्यवस्थया तद्द्वयमाहुः—**तत्रे**ति, पुष्टिमार्गे व्यवस्थयैकेन पद्येनार्द्धाभ्यां मार्गभेदेन मोक्षद्वयमाहेत्यर्थः। **ममोत्तमे**ति **मोक्षो हि द्विविध** इति, कर्मभिः संसारचक्रे भ्रमणेन भगवदीयत्वप्रकारेण पुत्राद्या सत्तया, चोत्तमश्लोकजनसख्यं मोक्ष इति द्विविध इत्यर्थः। उपायद्वैविध्यमाहुः—**पुष्टिमर्यादये**ति, पुष्टिमर्यादा ह्यनुग्रहे साधनसाहित्यम्। पुष्टिपुष्टिश्च तत्र तद्राहित्यमिति भेदः।

[ ४ ] ननु प्रकारभेदेपि तत्सख्यस्यैकरूपतायां कथं व्यवस्थया द्वैविध्यमित्याशङ्क्याहुः—**भगवत्पारोक्ष्ये**ति, पुष्टिमर्यादामोक्षरूपसख्ये भगवत्पारोक्ष्यं शास्त्रार्थतया गुणगानकर्तृशुकादिसख्ये तथात्वस्य स्पष्टत्वात्। अत एव * “**मथुराया व्रजङ्गता**” इत्यादिषु परोक्षेणैव कथनम्। पुष्टिपुष्टौ तु गुणगानविषयलीलाविशिष्टप्रभोरपारोक्ष्यम्, ‡ “**नन्दसूनुरय**”मित्यादिषु तथाके- स्त्वन्माययेत्याभिमुख्योक्तेश्च स्पष्ट एव व्यवस्थया भेद इत्यर्थः।

**प्रकाशः—**[ ३ ] ननु मार्गैक्ये साधनस्य समानतया वैजात्याभावात्फले कथं भेद इत्यत आहुः—तत्रेत्यादि, तथा च मार्गे अवान्तरभेदान्मोक्षभेद इत्यर्थः।

[ ४ ] ननु किंनिबन्धनो भेदः, कथं च मोक्षभेद इत्यत आहुः—**मोक्षे** हीत्यादि। वेदोक्ताः कर्मज्ञानभक्तयो मर्यादेति पुष्टिप्रवाहमर्यादायां स्थितम्, तेष्वत्र प्रकरणवशाद्विहितज्ञानभक्ती ग्राह्य, योगोपासनादिग्रहणे त्रयो वा, तथा च तया ताभ्यां तैर्वा मिश्रितोऽनुग्रहः पुष्टिमर्यादा, तयैकः। अनुग्रहान्तरेण मिश्रितोऽनुग्रहः पुष्टिपुष्टिस्तयेतर इति भेदनिबन्धकमुक्तम्। स्वरूप- भेदकमाहुः—भगवदित्यादि, तथा चाद्यया भगवतः परोक्षानुभवः, इतरया च प्रत्यक्षानुभवः, इति ताभ्यां कृत्वा भक्तरूपावस्थितिरूपमोक्षस्यापि स्वरूपभेद इत्यर्थः।

[ ५ ] एवं श्लोकार्थं सङ्गृह्य पूर्वस्य गुणभावं स्पष्टयितुं पूर्वार्द्धस्थपदानि विवृण्वन्तः पूर्वश्लो- केषु हरेसमश्वसारविन्दाक्षपदैः संबोधनेन भगवत्प्रत्यक्षतायाः स्पष्टत्वादत्रापि संबुद्धिः संभाव्यते, तथा सति हे उत्तमश्लोक! उक्तविधस्य मम जनेषु सख्यं न भूयादिति जननादिधर्मवत्सख्या- भावप्रार्थनं श्लोकार्थो भवति, स चाऽपुनर्भवपर्यन्तमनाकाङ्क्षतो मनसा भगवन्तं दिदृक्षतश्च प्रतिबन्धकनिरासस्य प्रागेव जातत्वात्तादृशां सख्याभावे स्यादेव निरस्त इति न युज्यतेऽतः समासमादृत्यान्य एवार्थो वक्तुमुचित इत्याशयेनाहुः—प्रत्यक्षेपीत्यादि, अप्रत्यक्षत्वादिनापि सम्बो-

श्रीवल्लभटि०—ननु एकस्मिन्नेव मार्गे कथं व्यवस्थाभेदः? तत्राहुः—**भगवत्पारोक्ष्ये**ति, पुष्टिमर्या- दास्थाः परस्परं गुणसमाजनेनान्तःप्रकटेनैव भगवता पूर्णतां मन्वानाः लोकोपकारिणः शुकादय इवात्मारामा रमन्ते। शुद्धपुष्टिमार्गीयास्तु साक्षाद्बहिःसंबन्धमन्तरा नैतावतैव पूर्णतां मन्वत इति एतत्कृतो व्यवस्थाभेदः। अत एव फलप्रकरणे भगवद्भावसम्पत्त्या गुणगानेन च न तापशान्तिः, पश्चादाविर्भूते एव तस्मिंस्तच्छान्तिः।

ननु पुष्टिमर्यादास्थाः कदाचित्प्रत्यक्षे भगवति प्रमाणनिष्ठां परित्यज्य तमेव गृह्णीयुस्तदा कथं

---

† इयं पङ्क्तिर्नहि कैश्चिदपि टीकाकारैर्व्याख्याता तथा “घ” “च” पुस्तकयोरपि नोपलभ्यते।

* भा० १०, ६, ३१ ‡ भा. १०, ३९ ४.

शास्त्रार्थत्वाय उत्तमश्लोकजनेष्विति समासः। भक्तसंवलित एव भगवांस्तद्द्वारा फलं द-

---

टिप्पणी—[ ९ ] नन्वस्ति भगवान् शास्त्रार्थे “ १वेदैश्च सर्वै”रितिस्मृते “ त त्वौपनिषदं पुरुषमिति”श्रुते “ सर्ववेदान्तप्रत्ययमि”ति न्यायाच्चातस्तत्प्रास्त्यर्थं तज्ज्ञानार्थं च तथाप्रतिपादकभक्तमत्यापेक्षा इति तदुपायापेक्षा। तत्र परोक्षे भगवति गुणगाने भक्तवाक्यप्रतिपाद्यतया तदपेक्षा। प्रत्यक्षे वचसा गौणतया न शास्त्रार्थता, साक्षादनुभूयमानत्वादिति तैदुत्तर तैदुपायरूपभक्ता नापेक्ष्यन्त इति तदा किमिति तत्सख्यप्रार्थनमित्याशङ्क्याहु—प्रत्यक्षेपीति।

उत्तमश्लोकजनेष्वितिसमासेनैकार्थतावोधकेन प्रभोर्भक्तानां च परस्पर सापेक्षता सूचिता। तथा च भक्तानां प्रभुसंवलितत्वमेव तत्सापेक्षत्वं, प्रभोश्च तद्द्वारैव फलदातृत्वमिति सापेक्षत्वात्प्रत्यक्षेपि प्रभौ भक्तापेक्षासत्त्वान्न भक्तप्रतिपाद्यतारूपशास्त्रार्थत्वव्याहतिरित्यर्थं। एतेन प्रभुस्वरूपमनुभूयमानमपि भक्तनिरूपितमेव विदितं भवतीति भाव।

प्रकाशः—

धनानुरोधेन यौद्धसन्निधानस्य “ *अहं समाधाय मनो यथाह सङ्कर्षणस्तच्चरणारविन्द ” इतिवाक्यात्पूर्वंसर्वस्मरणस्य चावश्यवाच्यत्वात्तस्यैकान्तभक्तत्वमवश्य वाच्यम्, तथा तादृशस्या सुत्यागावसरे भीष्मसुत्ताविव भगवदनुकम्पा, तया दर्शनदानं चावश्य मन्तव्यम्, तथा सवि कानुपपत्ति प्रत्यक्षे ? तस्मादुक्त प्रत्यक्ष इति। एव यद्यपि भगवान्प्रत्यक्ष इति मम त्वदीयेषु जनेष्विति वक्तव्यम्, तथापि यदेवमुक्त तेन उत्तमैर्यथार्थशास्त्रार्थविद्भि श्लोक्यते कीर्त्यत इत्युत्तमश्लोकः। उत्तमा परापरविद्यागोचरा वा श्लोका कीर्तिर्यस्य स तथा। तस्य ये जना, “न कर्मबन्धन जन्म वैष्णवाना च विद्यते, विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिण”इति वाक्यात्तादृशजन्मयुक्तास्तेष्विति य समास स शास्त्रार्थत्वाय, भगवत शास्त्रार्थरूपत्व ज्ञापयितुमित्यर्थं। अत्र “ क्रियार्थोपपदस्य च कर्मणि स्थानिन ” इत्यनेन तुमुन प्रयोगे चतुर्थी। फलेभ्यो यातीतिवत्।

ननु शास्त्रार्थत्वमुत्तमश्लोकपदीयसमासेनैव प्राप्यते, न तु पदत्रयसमासेन। तथा च तादृशत्वेन सम्बोध्य प्रतिबन्धकाभावप्रार्थन सत्सङ्गादौ पर्यवसास्यतीति कथ सम्पूर्णस्य तथात्व इत्यत आहु भक्तेत्यादि। तथा च वैयासकिः स भगवानथ विष्णुरातमि”त्यत्रव तादृशानत्सङ्गे

श्रीवल्लभटि०—तद्वेदस्त्वाहु—प्रत्यक्षेपीत्यादि। कदाचित्तथात्वपि तेषां शास्त्रार्थत्वमेव। गुणसमाजनरूपेण शास्त्रेणैवार्थं पुरुषार्थो यस्य वे तथा। तद्भावस्तत्त्व तदर्थमित्यर्थं। समासतात्पर्यमाहु—उत्तमेति। उत्तमै शुकादिभि शास्त्रद्वारा श्लोक्यत एव न तु पुष्टिस्थैरिव बहिरनुभूयते। तत्सम्बन्धिनो जना। पयोगमानां भगवतश्च श्लोकितृश्लोक्यभाव एव सम्बन्धो न त्वन्योपि वाक्यान्वया तेषु समासेन पदैकत्ववत्तदर्थैकत्वमपि ज्ञापितमिति तद्देव त इत्यर्थं। तादृग्जनेषु सख्यप्रार्थनया तत्समानशीलव्यसनत्व सिद्धौ मुक्तता सिद्धति सत्यस्य मोक्षरूपत्व सिद्धमिति स एव प्रार्थ्यते।

ननु भगवत्सख्यमेव कुतो न प्रार्थ्यते तत्राहु—भक्तसंवलित इति। तादृग्जनसख्यद्वारा वैकुण्ठादौ लक्ष्म्यादिभक्तसंवलित एव फलरूप स भवतीत्येकत्।

---

१ गीता १५, १५। २ प्रत्यक्षोत्तरम्। ३ प्रत्यक्षोत्तरत्वा * भा० ६, ११, २१

दातीति पौरुषसभाजनञ्च ( " येन्योन्यतो भागवता" इति तृतीयस्कन्धे दर्शनकारणं पौरुषसभाजनमुक्तं ) फलम् । भक्तेषु दास्यपर्यन्तस्य साधनत्वात्सख्यं प्रार्थयते।

टिप्पणी—[६] ननु प्रकटे प्रभौ फलरूपे तत्सख्यं क्वोपयुज्यते तस्य तु गुणगानसाधनत्वादतः कथं शास्त्रार्थत्वप्रत्यय इत्यत आहुः—पौरुषसभाजनञ्च फलमिति । उभयत्रापि पारोक्ष्यापारोक्ष्ययोः पौरुषसभाजनं लीलाभिनन्दनं विषजलाप्ययेत्यादिरूपं तदेव फलं, स्वरूपस्य तु गुणगानावसरमात्रप्राकट्यस्य तद्रूपस्य तदनुभवाधीनानुभवस्य तच्छेषत्वमिति तस्यैव फलतया प्राकट्येपि तद्भक्तसख्योपयोगेन शास्त्रार्थत्वसिद्धिरिति भावः ।

[७] ननु भक्तानामीदृशत्वे तेषु दास्यमप्रार्थयित्वा साम्यसम्पादकं सख्यं कथं प्रार्थितवानित्याशङ्क्याहुः—भक्तेष्विति । भक्तेषु " मद्भक्तपूजाभ्यधिके "त्यादिना श्रवणमारभ्य दास्यपर्यन्तस्य सर्वस्य सख्यरूपफलसाधनत्वात्फलप्रकरणत्वात् फलरूपं सख्यमेव प्रार्थयत इत्यर्थः ।

प्रकाशः—

तेष्वाविष्टो भगवांस्तद्द्वारा फलतीति पदत्रयसमासमहिम्ना लभ्यते, तदभावे तु केवलेन सम्बोधनेनोदासीनतया सत्सङ्गाक्षेपात्प्रार्थनमसङ्गतं स्यादतः पदत्रयसमास एवादरणीय इत्यर्थः ।

[६] ननु तादृशसत्सङ्गेपि शास्त्रार्थरूपस्य परोक्षेण प्रकाशात्तत्र चानुभवामीति प्रत्ययाभावात्कथं फलतीत्युच्यत इत्यत आहुः-पौरुषेत्यादि । " नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः । येन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणी-" त्यत्र श्रीकपिलदेवैर्भगवदीयानां परस्परासक्तिपूर्वकं भगवत्पौरुषसम्माननरूपं जीवतां साधनमुक्तं, तदपि " प्रायेणं मुनयो राजन्निवृत्ता विधिषेधतः, नैर्गुण्यस्था रमन्ते स्म गुणानुकथने हरेः" " परिनिष्ठितोपि नैर्गुण्य उत्तमश्लोकलीलया, गृहीतचेता राजर्षे आख्यानं यदधीतवान्" "तदहं तेभिधास्यामि" "निवृत्ततर्षैरुपगीयमानाद्भवौषधाच्छ्रोत्रमनोभिरि-" त्यादिषु गुणातीतानां स्वरूपावस्थितानां रतिविषयत्वेन च कथनात्फलम् । तथा च तद्दानेन फलतीत्यर्थः । यद्वा चः समुच्चये । तथा च यथा काव्यश्रवणे वर्णनीयस्य परोक्षज्ञानेऽपि विगलितवेद्यान्तर आनन्दो लौकिकानां, तथात्र स्वानन्दवद्गुणांश्च सभाजयन् स तथेत्यर्थः ।

[७] नन्वेतादृशं फलं श्रवणेपि भवति यथा परीक्षितः, तत्रापि "नातितृप्ये जुषन्युष्मद्वचो हरिकथामृतम् " " येन येनावतारेणे"त्यादीनां गुणसभाजनवाक्यानां दर्शनात् । तत्र च वक्तुरपेक्षया हीनभावस्य स्फुटत्वात् सङ्गममात्रमेव तदर्थं प्रार्थ्यं, सख्ये को विशेष इत्यत आहुः-भक्तेष्वित्यादि । इमानि वाक्यानि सभाजनप्रयोजकानि न तु सभाजनरूपाणि । स्वरूपादि-

श्रीवल्लभटि०—तत्र तादृशैः सह गुणसभाजने देहधर्मनिर्यापणपूर्वकं ब्रह्मानन्दादप्यधिकविलक्षणरसानुभवो भवतीत्यपरं फलम्, तदप्युक्तं पौरुषसभाजनञ्च फलमिति । तेन तत्सख्ये फलद्वयमिति तत्प्रार्थनेत्यर्थः । भगवत्सख्ये तु ■ एवैकं फलमिति कदाचिदर्जुनवत् (गीता. अ. ११–७–४१) "यच्चावहासार्थमसत्कृतोसी "ति वाक्येनापराधसंभवोपीति न तत्प्रार्थनेति भावः ।

१ भा. १०,३१,३. २ भा. ११, १९, २१. । ३ भा. ३, २५, ३४. । ४ भा. २, १, ७. । ५ भा. २, १, ९ । ६ भा. २, १, १० । ७ भा. १०, १, ४. । ८ भा. ११. ३. २. । ९ भा. १०, ७, १.

सर्वथा स्वतन्त्रत्वाय स्वनिष्ठभक्तविषयकीर्त्तनम् । गुणसभाजने स्वस्यापि स्वातन्त्र्यार्थं,

---

टिप्पणी—[८] ननु तन्निरूपितसख्यमप्रार्थ्य मम उत्तमश्लोकजनेष्विति षष्ठीसप्तमीभ्यां निष्ठताविषयताबोधिकाभ्यां कथं स्वनिष्ठतद्विषयकसख्यप्रार्थनमित्यत आहु·—सर्वथा स्वतन्त्रत्वायेति । सख्यस्य भक्तिमार्गीयमोक्षतया स्वातन्त्र्यमुचितं, तत् स्वनिरूपितत्वे तन्निरूपितत्वे वा तस्य व्याहन्येत । अत· स्वनिष्ठभक्तविषयसख्यकीर्त्तनमित्यर्थः[1] । एतेनैतन्मार्गीयमोक्षस्यासाधनसाध्यत्वमुक्तं भवति ।

[९] ननु पौरुषसभाजनं हि फलं तदस्वातन्त्र्ये न भवति, तथा सति श्रवणमेव भवेन्न सभाजनमिति फलप्रतिबन्धकतया न सख्यं मोक्ष· । सभाजनविशिष्टस्यैव तस्य तथात्वादित्यत आहुः—गुणसभाजन इति । गुणानां सभाजने अभिनन्दने स्वस्यापि स्वातन्त्र्यार्थं स्वस्यापि

प्रकाशः—

ज्ञानपूर्वकतदनुवादस्य सभाजनत्वात्। "कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिन" इत्यादौ तथा दर्शनात्। परीक्षिद्वाक्यानां गुणादिज्ञानार्थत्वात्। अतस्तादृशभावस्य वक्तृप्रोत्सकत्वेन साधनत्वम्। तच्च दास्यपर्यन्तानां तुल्यं, सख्यस्य तु तदीयस्वरूपमानसजनकत्वमिति विशेषात्तत्प्रार्थनमित्यर्थः ।

[८] नन्वभयं विशोकत्वमपारतन्त्र्यं च मोक्षलक्षणं "अभयं वै जनक प्राप्तोसि" "स्मर्तव्यश्चेच्छताभयं," "तरति शोकमात्मवित्" "तदस्य संसृतिर्बन्धः पारतन्त्र्यं च तत्कृतमि"त्यादिवाक्यात्। प्रकृते तु "निवृत्ता विधिपेधत" इत्यनेन "एष ह वा व तपतीति" श्रुत्यर्थस्फुरणात्तेयां भयाभावशोकाभावयोः सत्त्वेपि सख्यस्य ससम्बन्धकत्वेन पारतन्त्र्यान्न मोक्षत्वमित्यत आहुः—सर्वथेत्यादि । तथा च दयाप्रश्रयादिवत् ससंबन्धकत्वेपि स्वधर्मत्वेन तेषु विद्यमानः सख्यरूपो धर्मो मत्सम्बन्धोप्यस्त्वित्याशयेनात्र स्वनिष्ठस्य भक्तविषयस्य सख्यस्य कीर्तनं घृतद्रवत्वनैमित्तिकत्वेपि तस्य विद्यमानतया सर्वथा स्वातन्त्र्यं ज्ञापयितुं, तेन न मोक्षत्वहानिरित्यर्थः ।

[९] ननु सख्यस्य स्वतन्त्रत्वेपि स्वस्य सख्येन श्रोतृत्वे वक्तृपारतन्त्र्यान्मुक्तत्वहानिस्तेपाञ्च जनत्वेनोपान्त्यादिभावविकारदशापत्तौ प्रतियोग्यभावेन सख्यस्याप्यभावे देशकालपरिच्छेदात् सख्यस्य मुक्तित्वहानिरित्यत आहुः—गुणेत्यादि । तथा च बहूनां युगपद्वक्तृत्वासम्भ·

श्रीवल्लभटि०—ननु स्वाधीनत्वात्तादृग्जनदास्यमेव कार्यं तेन गुणसभाजनमपि सेत्स्यतीति किं सख्यप्रार्थनयेत्यत आहुः—सर्वथेति । तद्दास्ये लोकतः स्वातन्त्र्येपि दास्यव्यासङ्गेन तत्सभाजने सर्वथा तन्न स्यादिति तदर्थं स्वस्मिन् विद्यमानस्य लोकविषयसख्यधर्मस्य भक्तविषयक कथनमित्यर्थः ।

ननु गुणसभाजको महान् "मुक्तानामपि सिद्धाना नारायणपरायण. । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुन" इति वाक्यादेक एव भवति । तत्समाजनञ्च तदधीनमतः ततः स्वातन्त्र्यमसमाचित तदपि तत्सख्ये सति भवति तादृशेन तदप्यसभाविनमिति किं तत्प्रार्थनयेत्यत आहुः—गुणसभाजने स्वस्यापीत्यादिना । जनेषु इति बहुवचनतात्पर्यं, न हि तादृश एक एव किन्तु

---

१ वा इति पक्षान्तरे सख्यस्य भक्तनिष्ठनिरूपितत्वे सति स्वातन्त्र्यं व्याहन्येत. २ सख्यस्य, ३ भगवत्प्रार्थनेन ।

मुक्तेरपरिच्छेदार्थं बहुवचनम् । जनत्वादेव स्वातन्त्र्येण न दोषसंबन्धः। संसारस्य चक्रत्वादेव परिभ्रमणविषयोपार्जनक्लेशाभावः ।

---

टिप्पणी—

तत्कर्तृतया मुख्यत्वार्थं, मुक्तेः सख्यरूपाया अपरिच्छेदार्थं निरवधित्वाय, उत्तमश्लोकजनेष्विति बहुवचनमित्यर्थः । बहूनां सत्त्वे सत्रयाग इव न कस्यापि स्वातन्त्र्यमस्वातन्त्र्यं च । तथा च तन्मण्डलमध्यपाते स्वस्यापि स्वातन्त्र्यमिति भावः ।

[ १० ] ननु तेषु दैन्यमेवोचितं न स्वातन्त्र्यं, तथा सति स्वतन्त्रेषु स्वातन्त्र्यस्येश्वर इव दोषजनकत्वादित्याशङ्क्याहुः—जनत्वादेवेति । तेपि जनास्तदिच्छया जननादिधर्मयुक्ताः प्रभ्वधीना अस्वतन्त्रा इति तेषु गुणसभाजनार्थं स्वातन्त्र्ये न दोषसंबन्ध इत्यर्थः ।

[ ११ ] ननु भगवद्भक्तेषु सख्यं मोक्षस्ते च दुर्लभा इति क्व तत्संबन्धसंभावना इत्यत आहुः—संसारस्येति । संसारस्य अहंताममतात्मकस्य चक्ररूपतया तत्र स्थितो नैकत्र तिष्ठति परं भ्रमति, यतोहंताममते प्रतिक्षणं नूतने भवतोऽतः परिभ्रमणं विषयो यस्य तद्भक्तसख्यस्य तस्योपार्जनविषयकः क्लेशाभाव इत्यर्थः । चक्रस्थितस्यानायासेन तत्प्राप्तेः ।

प्रकाशः—

बाहुल्येन तेषां श्रोतृत्वस्फोरणात्स्वस्य वक्तृत्वे स्वातन्त्र्यसिद्धया प्रतियोगिबाहुल्येनैकप्रतियोगितिरोधानेपि वैशेषिकप्रतिपन्नसमवायवत्सख्यस्याप्यपरिच्छेदसिद्धया च न स्वस्य मुक्तत्वहानिर्न वा सख्यस्य मुक्तित्वहानिरित्यर्थः ।

[१०] ननु स्वस्य वक्तृत्वेन स्वातन्त्र्ये भक्तावज्ञादोषः सम्बध्येतेत्यत आहुः–जनत्वादित्यादि । तेषां शास्त्रार्थज्ञातृभक्तत्वेपि जननादिधर्मयोगेनास्वतन्त्रत्वबोधनात्तत्र स्वातन्त्र्येण दोषो न सम्बध्यते । यथा ज्ञानिषु सनन्दनस्य, तथेत्यर्थः ।

[११] ननु मोक्षे दुःखासम्भेदस्य सुखावच्छेदकत्वात्प्रकृतमोक्षसुखस्य श्रोतृसापेक्षत्वात्तादृशश्रोतृप्राप्तेर्विचयनसापेक्षत्वात्पौरुषस्य ज्ञानविषयत्वे सभाजनसिद्धेर्ज्ञानस्य च श्रवणेन जायमानस्य वक्त्रधीनत्वाद्वक्तृप्राप्तेरपि विचयनसापेक्षत्वाच्च प्रयासापरया दुःखसम्भेदेन तादृशस्य कथं मोक्षत्वमित्यत आहुः–संसारस्येत्यादि । चक्रे भ्राम्यन् हि तं तं देशं शीघ्रमुपयाति सदृशविसदृशौ संयुनक्ति वियुनक्ति चेति न तत्र तत्सम्पादनप्रयासः । तथा च परिभ्रमणस्य विषयोपार्जनं च ताभ्यां यः क्लेशस्तदभावोत्र संसारस्य चक्रत्वकथनेन सूचित इति दुःखसम्भेदाभावात्तत्सख्यस्य मोक्षत्वहानिरित्यर्थः ।

श्रीवल्लभटि०—

बहव इति न ततः स्वातन्त्र्यमसंभावितमिति स्वस्यापि स्वातन्त्र्यार्थमित्यनेनैकं तात्पर्यम् । तत्सख्याधीनं तदिति तत्सख्यमपि नासभावितमिति मुक्तेरपरिच्छेदार्थमित्यनेनापरम् । तदर्थं बहुवचनम् । अन्यथा तेषु बहुत्वं न वदेदित्यर्थः । तेन यथा ते तत्सभाजनेऽन्यापेक्षारहितास्तथा तत्सख्येन तद्गतभूयोधर्मवत्त्वेनाहमपि स्यामित्याशयः । मुक्तेरिति सख्यरूपमुक्तेरित्यर्थः ।

जनत्वादिति । तेषामपि जननधर्मवत्त्वेन तत्साम्ये स्वातन्त्र्येण न तत्संबन्धः । स्वस्मादधिकधर्मवत्त्व एव तत्संभवादित्यर्थः । संसारेत्यत्र । परिभ्रमणेन सख्यविषयतादृग्जनोपार्जनक्लेशाभाव इत्यर्थः ।

क्लेशसाधनपदेन कृपया साधनसंपत्तिश्च सूचिता । योग्यायोग्यदेहानां बहुधाजातत्वादिदानीं तदभावार्थं प्रार्थना । क्लेशे स्वामिनामग्रहणस्य हेतुत्वेनायुक्तत्वात्कर्मपदम् । आवश्यकत्वाय स्वपदम् । निरवधित्वाय बहुवचनम् ।

---

टिप्पणी—[१२] ननु तथापि भगवद्भक्तसख्ये किं साधनं, न हि ते संसारपरिभ्रमणमात्रेण मिलन्ति तत्सङ्गस्य भवापवर्गसाधनत्वात् "भवापवर्गो भ्रमत" इति वाक्यादित्याशङ्क्याहु:—क्लेशसाधनेति । क्लेशसाधनपदेन परिभ्रमणपदेन कृपया सतां तत्सख्यसाधनसंपत्तिः सिद्धिः सूचितेत्यर्थः । ते हि कर्मभिर्भ्रममाणमवलोक्य सहजकरुणा कृपालवो भवन्ति । सैव च साधनमिति तथेत्यर्थः । एतेन भक्तिमार्गस्य साशस्यापि निःसाधनत्वं द्योतितं, न हि तदीयोंऽश कोपि साधनैः सिद्ध्यति ।

नन्वेवं सति कथं प्रार्थनेत्याशङ्क्याहु:—योग्यायोग्येति । संसारचक्रभ्रमणेन योग्यायोग्यदेहा बहवो जाता इतीदानीं क्लेशेन स्वधर्ममविचार्यापि तदभावार्थं प्रार्थना, न फलार्थमित्यर्थः ।

[१३] ननु कथं भक्तिमार्गीयस्य वृत्रस्य सख्योपयोगिचक्रभ्रमणहेतुत्वेन कर्म युज्यते इत्यत आहु:—क्लेश इति । स हि भक्तिमार्गीय एवेति भ्रमणरूपे क्लेशे हेतुत्वेन स्वामिनो नामग्रहणमयुक्तमिति हेतुत्वेन कर्मोक्तवानित्यर्थः । ननु तानि कर्माणि त्यक्तव्यानि भ्रमणसाधनत्वादित्यत आहु:—आवश्यकत्वायेति । स्वकृतत्वेनावश्यमोक्तव्यतया कर्माणि न त्यक्तुं शक्यन्त इति भावः । ननु किं बलं कर्मणा स्वसाध्यत्वादित्यत आहु:—निरवधित्वायेति । बहुवचनेन कर्मणा निरवधित्वमुक्तं, नहि कश्चिदिति वाक्यात् ।

प्रकाशः—[१२] ननु तथापि संसारपदेन क्लेशसाधनतापि स्फुरतीति कथं दुःखासम्भेद इत्यतस्तत्तात्पर्यमाहु:—क्लेशसाधनेत्यादि । तथा च तेन पदेन भगवन्तं प्रति तथा सा सूचितेति तदर्थं तत्पदप्रयोगो न क्लेशबोधनायेति न दुःखासम्भेद इत्यर्थः ।

नन्विदं सूचनं प्रार्थनाफलकं तथा सति कथं क्लेशाभाव इत्यत आहुः—योग्येत्यादि । तथा चेतः परं भगवद्दययाऽन्तिमदेहभावनादित प्रागेव क्लेशो, न त्वेतदुत्तरमपीति न दुःखसम्भेद इत्यर्थः ।

[१३] ननु कार्यमात्रं प्रति भगवदिच्छायाः कारणत्वेन क्लेशेपि तस्या एव तथात्वादीदृशभक्तस्य तत्स्फुर्तेरेवोचितत्वात् कथं तदनुक्तिरित्यत आहु:—क्लेश इत्यादि, बहुवचनमित्यन्तम् ।

आवश्यकत्वायेति । तत्फलभोगावश्यकत्वाय । तथा च तत्रोचितं, किन्तु कर्मपदमेवोचितम् । तथेदृशक्लेशे प्रार्थनाप्युचितेत्यर्थः ।

ननु "जनो वै लोक एतस्मिन्नविद्याकामकर्मभिः, उच्चावचासु गतिषु न वेद स्वां गतिं भ्रमन्नि"त्यत्र त्रयाणां भ्रमणकारणत्वसिद्धेः कथं कर्ममात्रस्यैव कारणत्वेन कथनमित्यत

श्रीवल्लभटि०—

क्लेशेति । क्लेशसाधनं संसारस्तत्पदेनेत्यर्थः । तत्र पतितस्य चेत्तादृग्जनसम्बन्धरूपसाधननिष्पत्तिः, सा तयैवेत्यर्थः

---

१ भा. १०, ६१, ५४. २ सहजकृपालुत्वेन । ३ भक्तिमार्गीयस्य भगवति अप्रार्थनात्वग्रहणम्. ।
४ गीता ३, ९.

**चक्रपरिभ्रमणे दण्डस्येव मुख्योपयोगे तृतीया। अस्या मुक्तेर्गौणत्वाय नात्र प्रार्थनापदप्रयोगः। तथा च तादृशभगवद्भक्तसख्यं पुष्टिमर्यादायां मोक्ष इत्युक्तम्।**

---

टिप्पणी—ननु संसारचक्रभ्रमणे साधनान्तराणामविद्याकामादीनां सत्त्वात्कथं कर्ममात्रं तत्साधनत्वेनोक्तमित्यत आहुः—**चक्रपरिभ्रमण** इति। सर्वेषां निमित्तकारणत्वेपि कारणता भोगविषयत्वेन मुख्योपयुक्तानां कर्मणामेव। घटे दण्डस्येवेति ज्ञापनाय तृतीयेत्यर्थः।

[ १४ ] नन्वर्थतः प्रार्थनासिद्धावपि तद्वाचिपदप्रयोगाभावतात्पर्यमाहुः—**अस्या** इति। अस्याः पुष्टिमर्यादामुक्तेर्द्वितीयापेक्षया गौणत्वज्ञापनायात्र प्रार्थनापदानुक्तिः। निर्गलितार्थमाहुः—**तथा चेति**। एतादृशं पूर्वोक्तधर्मविशिष्टं चक्रभ्रमणादिक्लेशाप्राप्यं भगवद्भक्तसख्यं पुष्टिमर्यादायां मोक्ष इत्युक्तम्।

**प्रकाशः—**

आहुः—**चक्रेत्यादि**। कर्माभावे ताभ्यां तयाभ्रमणाभावस्यानुभवसाक्षिकत्वाद्भ्रमणे मुख्योपयोगः कर्मणामेवातस्तेषामेव तथात्वं बोधितमित्यर्थः।

[१४] ननु भवत्वेवं तथापि सख्यं प्रार्थयत इति यदुक्तं तदसङ्गतम्। प्रार्थनावाचकपदस्यात्रानुपलम्भादतो व्याख्यानं सर्वमेव सन्दिग्धमित्यत आहुः—**अस्या इत्यादि**। तथा च तद्प्रयोगमात्रेणोक्तेऽर्थे न सन्देह इत्यर्थः। सिद्धमाहुः—**तथा चेत्यादि**। पुष्टिप्रवाहमर्यादाया "तस्माज्जीवाः पुष्टिमार्गे भिन्ना एव न संशय" इति जीवभेदं पूर्वोक्तहेतुभिर्निगमयित्वा भगवद्रूपसेवार्थं तत्सृष्टिः, तेषां स्वरूपादिभिर्भगवत्तुल्यत्वं, सेवासिद्ध्यर्थमौपचारतम्यं चोक्त्वा तेषां शुद्धमिश्रभेदेन द्वैविध्यं प्रतिज्ञाय मर्यादामिश्राणां गुणज्ञत्वं लक्षणमुक्तं, तत्र भगवद्रूपसेवार्थं सृष्टत्वे सति स्वरूपादिभिर्भगवत्तुल्यत्वे सति सेवार्थमौपचारतम्यवत्त्वे सति भगवद्गुणज्ञत्वं मर्यादामिश्रपुष्टजीवत्वमिति फलति। तथा "**वैदिकत्वं लौकिकत्वं कापट्यात्तेषु नान्यथा। वैष्णवत्वं हि सहजं ततोन्यत्र विपर्यय**" इत्यन्यथारूपज्ञापनपूर्वकं सामान्यलक्षणं त्रयाणां तत्रोक्तम्। तन्मूले "**नैकात्मतां मे**" "**प्रायेण मुनयः**"[1] "**परिनिष्ठितोपी**"त्येतेषु "**तत्राभवद्भगवान् व्यासपुत्रः**"[2] "**तं द्व्यष्टवर्षं**" "**द्वैपायनाच्छुको जज्ञे भगवानेव शङ्करः। अंशांशेनावतीर्योर्व्यां संप्राप परमं पदं**" "**तं स्कन्द इत्याचक्षते**" सुहृत्तमदिदृक्षितभङ्गे "**गोविन्दभुजगुप्तायां द्वारावत्यां कुरूद्वह। अवात्सीन्नारदोभीक्ष्णं कृष्णोपासनलालस**"[3] इत्यादिभिः शुकसनत्कुमारनारदेषु स्फुटम्, तथा "कायेन तु फलं पुष्टावि"ति पुष्टिफलस्य स्वरूपसाध्यत्वं तत्रोक्तम्। तदत्र "**वैयासकिः स भगवानि**"त्यनेनोक्तम्। तेन लौकिकत्ववैदिकत्वरूपा इत्यर्थः। अत्रापि पूर्वकक्षा परीक्षिति, उत्तरकक्षा सनत्कुमारादिषु ज्ञेया। छान्दोग्ये सनत्कुमारनारदसंवादे सर्वात्मभावविवरकतया तस्मिंस्तथात्वस्य शस्यवचनत्वाच्छ्रुतिगीतार्थनिर्णयस्य भजनार्थतायाः सुबोधिन्यां निर्णीतत्वाच्चेति। अयं मोक्षः प्रायस्तुरीयाश्रमाणां हंसपरमहंसानामेवेति भाति। उदाहरणस्य तेष्वेवोपलम्भादिति दिक्।

श्रीवल्लभटि०—अस्या इति। शुद्धपुष्टिमुक्त्यपेक्षया गौणत्वादित्यर्थः।

---

१ भा. १, १९, २६. । २ भा. १, १९, २५. । ३ भा. ११, २०, १. ।

द्वितीयमाह—त्वन्माययेति। समासादेव भिन्नतया न मायामोहनम्।

टिप्पणी—[ १५ ] पुष्टिपुष्टिमोक्षं वक्तुं सजातीयत्वबोधनायाभासमाहुः—द्वितीयमाहेति। द्वितीयं भक्तिमार्गीयं मोक्षमाहेत्यर्थः। तस्य मर्यादाऽप्राप्यकेवलपुष्टिप्राप्तिप्राप्यत्वात् तत्सजातीयत्वसिद्धिरित्यर्थः। त्वन्माययेति। संसारचक्रे भ्रमतो भगवदिच्छया कुटुम्बासक्तस्य न किन्तु, त्वन्मायया तदासक्तस्य मे भूयादिति संबन्धः। पूर्वस्माद्वैलक्षण्यमाहुः—समासादेवेति। त्वन्माययेतिसमासेन तस्याः स्वरूपसंबन्धित्वमुच्यते। सा च स्वरूपसंबद्धैव तदर्थं मोहयति न तु पृथग्भावेन लीलार्थमेव तस्याः प्राकट्यादत एव तदुपक्रमे तस्या आज्ञार्पणम्। वैष्णवीं व्यतनोन्मायामित्यादिष्वपि सैवोक्ता। सा च भगवान् यत्र प्रकटीभूय लीलाः करोति तत्रैवोपयुज्यते, तदभावे लीलाऽसंभवात्। एवं सति पुष्टिपुष्टिमोक्षस्य प्रकटलीलाविशिष्टप्रभुस्वरूपान्तररमणरूपत्वात् तदुपयोगित्वेन गृहादिष्वासक्त्यपेक्षणात् त्वन्माययेत्युक्तम्। पूर्वत्र तु पारोक्ष्येण साक्षाल्लीलाऽसंभवान्नासक्तेरुपयोगः। माया तु तत्रापि भगवदीया परं न स्वरूपसंबन्धिनी, "मम माये—" तिव्यत्यासेन कथनात् तरणोक्तेश्च। अत एवात्रोक्तं न भिन्नतया प्रभुपृथग्भावेन मायामोहनमिति, किन्तु प्रभुरेव तया मोहयतीत्यर्थः।

[१५] प्रकाशः—अतः परं पुष्टिपुष्टिमोक्षं विवरितुमाहुः—द्वितीयमित्यादि। ननु "प्रसङ्गमजरं पाशमात्मनः कवयो विदुः। स एव साधुषु कृतो मोक्षद्वारमपावृतं" "त एते साधवः साध्वि" "सत्सङ्गेन हि दैतेया" इत्यादिवाक्यैः सत्सङ्गस्य मोक्षद्वारत्वात् पूर्वोक्तवाक्येषु गुणगानस्य फलत्वसाधनाच्च पुष्टिमर्यादामोक्षरूपत्वं तत्सख्यस्योचितम्। तच्च पूर्वार्द्धे भूयादित्यदूरान्वयाङ्गीकारेण सिद्धम्।

अतः परमुत्तरार्द्धे देहाद्यासक्तिबोधकं स्वविशेषणमवशिष्यते, निषेधो नाथपदञ्च। तथा सति देहाद्यासक्तिनिषेधः प्रार्थनीयत्वेन फलिष्यतीत्यासक्तिरूपो मोक्षः कथमत्र कथं वा देहाद्यासक्तेर्मोक्षत्वमित्याकाङ्क्षायां भगवदपरोक्षज्ञानेन पुष्टिपुष्टिमोक्षस्य पूर्वं व्यवस्थापितत्वादत्र तादृशत्वेन तस्या मोक्षत्वं वक्तुं देहाद्यासक्तिजनकमोहने विशेषमाहुः—समासादित्यादि। मायाशक्तिर्हि मोहने अधिकृता। तत्र यदि "माया चाविद्या च स्वयमेव भवतीति" श्रुत्या मायाविद्ययोरभेद आद्रियते तदापि "ससर्जाग्रेन्धतामिस्रमथ तामिस्रमादिकृत्। महामोहञ्च मोहञ्च तमश्चाज्ञानवृत्तय" इति "तामिस्रमन्धतामिस्रं तमो मोहो महातम" इति द्वादशविंशाध्यायवाक्ययोः पर्वक्रमभेदेनाविद्याभेदस्य तृतीयस्कन्धसुबोधिन्यां विंशाध्याये भगवत्कर्तृकत्वकथनपूर्वकं व्युत्पा-

१ गच्छ देवि व्रजं भद्रे इति। २ भा. १०, ८, ४३.। ३ गीता ७, १४. मम माया दुरत्ययेति गीतावाक्ये मन्मायेति पदं नोक्तम् तत्र मायाया मोहरूपत्वात् तस्यास्तरणमुचितम् न तु लीलारूपमायायास्तरणम्। ४ भा. ३, २५, २४. । ५ भा. ११, १२, ३.। ६ भा. ३, १२, २.। ७ भा. ३, २०, १८.।

**पूर्वस्मादेतस्य विशेषस्त्वत्पदेनोक्तः । आभिमुख्यञ्च । त्वदिच्छया प्राप्तस्यात्मात्मजादिषु सख्यं पुष्टिपुष्टिमोक्षः ।**

टिप्पणी—[ १६ ] ननु को विशेषो मोहस्यैकजातीयविषयत्वादित्याशङ्क्याहु –**पूर्वस्मादिति** । पूर्वस्मात् मोहादेतस्य पुष्टिपुष्टिमोक्षाय मोहस्य विशेष आदरणीयत्व मोक्षाङ्गत्वादिरूपस्त्वत्पदेन प्रकारतया तत्सम्बन्धसूचकेनोक्त इत्यर्थ । यद्वा, नन्वेतस्मिन्नपि मोक्षे मायामोहस्य तुल्यत्वात्को विशेष इत्यत आहु –**पूर्वस्मादिति** । एतस्य पूर्वस्मात् मोक्षाद्विशेषस्त्वत्पदेनोक्त । एतत्सम्बन्धिमायाया अपि सदा स्वरूपसाहित्यादिति भाव । किञ्चात्र मोक्षे विशेष प्रकारान्तरेणाप्युपपादनीय इत्याहु –**आभिमुख्यं चेति** । एतत्प्रार्थनावसरेपि यत्र वृत्रस्य प्रभुप्राकट्यम्, अन्यथा त्वत्पदं न प्रयुञ्ज्यात् । तत्र तदनुभवे तस्य का वार्तेति भाव ।

प्रकाशः—

दनात्पूर्वापेक्षयोत्तमत्वस्य च ततोपि देहाहङ्कारो भगवत्सेवौपयिकत्वादुत्कृष्ट इति पञ्चमपर्वव्याख्यानेन सूचनाद्भगवद्वैमुख्येन महाभोगेच्छारूपस्य तत्प्रथमपर्वणा इन्द्रे वर्तमानस्य मदभङ्गपुतहरणलीलोपयोगिताया, भोगेच्छारूपस्य द्वितीयस्योग्रसेनादौ, अज्ञानस्य तृतीयस्य "सैषो नष्ट स्मृतिरि"त्यादौ, मोहस्य चतुर्थस्य कालियदमनादौ, महामोहस्य पञ्चमस्य सेवौपयिकताया सर्वत्र स्फुटत्वाच्च तदुत्तमतायाः स्फुटत्वेन प्रकारभेदो मोहने। यदि च "विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणां । मोक्षबन्धकरी आद्ये मायया मे विनिर्मित" इतिवाक्ये कार्यकारणभावोक्त्या भेद आद्रियते तदाप्यविद्याकृत मोहन संसाराय, मायाकृत तु भगवल्लीलार्थं, तदपि "वैष्णवीं व्यतनोन्मायां प्रजास्नेहमयीं प्रभुरि"त्यादौ स्फुटम् । प्रकृते च तदभिप्रेतमतस्तव माया त्वन्मायेति साक्षात्सम्बन्धबोधकात् त्वदविनाभूता माया त्वन्मायेति वा तथाभूतात्समासादेव भिन्नतया भगवत्सम्बन्धराहित्येन केवल संसारार्थतयेति यावत् । तथा न मायामोहनमित्यर्थ ।

[१६] ननु शक्तेः शक्तिमदविनाभावस्य साक्षात्सम्बन्धस्य च सर्वजनीनत्वात् सर्वतन्त्रसिद्धत्वाच्च सर्वत्रैव तथात्वेन प्रागपि वैष्णव इति पूर्वजन्मीनस्यापि देहपुत्राद्यासक्तिरूपमोहस्य तथात्वेन तस्य च बन्धकताया मूले पुत्रशोकशापादिकथया स्फुटत्वेन प्रकृते तत को विशेषो ? येन मोक्षत्वमिष्यत आहु –पूर्वेत्यादि । अविनाभावस्यानुक्तसिद्धत्वेन तद्बोधकपदोक्तिप्रयोजनाभावेपि या तदुक्तिसेदानीं प्रार्थ्यमानस्य मोहस्य तच्चिकीर्षितलीलार्थत्व बोधयतीत्येष पूर्वस्माज्जन्मनो विशेष इत्यर्थ ।

ननु भवतु लीलार्थत्व तथापि मायामोहो भगवदज्ञानस्य "ये[1] संवसन्तो न विदुर्हरिं मीना इवोडुपमि"त्यादिषु सिद्धत्वात् परोक्षज्ञानमपि चेद्दूरे कुतस्तर्हि प्रत्यक्षसभावनेति पूर्वोक्तव्यवस्था तु भज्येतैवेत्यत आहु –**आभिमुख्यं चेति**, तद्धि भगवतो नाभिमुख्ये, प्रकृते

श्रीवल्लभटि०—पूर्वस्मादित्यत्र । पूर्वत्र माया भिन्ना, तस्याश्च परित्याग । अत्र तु स्वरूपाभिन्नेति न तत्परित्याग, प्रत्युत स्वरूपविषयकासक्तिजनकत्वेन फलसाधकत्वाद्गुण एव, अतो विशेषस्तेनेत्यर्थ । आभिमुख्यञ्चेति । प्रत्यक्ष एव त्वत्पदव्यवहार इति तत्प्रार्थनायामेव भगवदाभिमुख्यमितीदमपि विशेषहेतुरित्यर्थ ।

१ त्वत्पदेन मायाया श्रीकृष्णसामञ्जस्येनेति स्पष्टोऽर्थं । २ भा १०, ८, ४४

त्वत्सेवौपयिकत्वेन चित्तस्य तेष्वासक्तिं नाथपदेन प्रार्थयते । तेषां नाथत्वे तथा भवतीत्यर्थः । चक्र एव परिभ्रमतः सख्यं न भगवदिच्छया हिरण्यकशिपुप्रभृतिष्विव कुटु-म्बासक्तस्य, सर्वथानन्यत्वभङ्गप्रसङ्गात् ।

---

टिप्पणी—[ १७ ] ननु त्वन्माययेति को विशेषो ? यथाकथञ्चिदपि पुत्रादेर्भगवदीयत्वेन तदासक्त्या तत्सख्यस्य मोक्षत्वादित्याशङ्क्याहुः—चक्र एवेति । चक्र एव परिभ्रमतस्तत्सख्यं भवतु, अनन्यत्वात्तेः पुष्टिमर्यादामोक्षरूपत्वाच्च, न तु भगवदिच्छया स्वावतारकारणीभूतया, हिरण्यकशिपुप्रभृतिषु यथा दैवगत्या प्रह्लादे पुत्रतया आसक्तिः सख्यञ्च पुत्रवात्सल्यरूपं, अन्यथा न शिक्षां दापयेत्, तथा कुटुम्बासक्तस्य मे न भूयात्किन्तु त्वन्माययेत्यर्थः । सोपि पुरा भक्त एव शापेनासुरो जात इति साम्येन प्रार्थनां तज्जातीयां मन्येत प्रभुरितिभिया निषेधप्रार्थ-नमिति भावः ।

ननु तथापि भगवद्भक्तासक्तेस्तत्सख्यस्य विद्यमानत्वात् को दोष इति चेत्तत्राहुः—सर्वथेति । भगवन्मायामन्तरा केवलं भगवदीयपुत्राद्यासक्तावप्यनन्यत्वभङ्गस्तदंशे तैत्संबन्धास्फूर्तेः । न हि अनन्याः कदाचिदपि तदसंबद्धं किञ्चिदपि स्मरन्ति । दृष्टं च हिरण्यकशिपौ प्रह्लादासक्त्या शिवभ-जनमतोऽन्यथा सर्वथैवानन्यताभङ्ग एव । तस्मात् त्वन्माययैव तथासक्तस्य सख्यं भूयादितिभावः ।

प्रकाशः—

प्रत्यक्षं भगवन्तं प्रति युष्मत्पदोक्त्याभिमुख्यं सूच्यते, तेन यथा “ वैष्णवीं व्यतनोदि”त्यादौ मोहनं तथाभिप्रेतं, तत्र प्रत्यक्ष इति न व्यवस्थाभङ्गलेशोपीत्यर्थः ।

[१७] उक्तं विशेषं निगमयितुं पूर्वं जातयोः सख्यासक्त्योः स्वरूपं परिच्छिन्दन्तः प्रथमं सख्यं परिच्छिन्दन्ति—चक्र एवेत्यादि । पूर्वं नारदाङ्गिरसोर्मर्यादापुष्टभक्तयोर्यत्सख्यं तत्स्वकर्मभिः संसारचक्रे भ्रमत एव । अत एव “ ज्ञात्वान्याभिनिवेशं ते पुत्रमेव ददावहमि”त्यन्तान्यङ्गि-रोवाक्यानि, अमेध्यिकाशापो वृत्रदेहाप्तिश्च न भगवदिच्छया परीक्षित इव न कर्मबन्धत्या-जिकया तयेति, पौर्वत्रिकसख्यस्वरूपं परिच्छिन्नम् । तेन एतादृशभगवद्भक्तसख्यं पुष्टिमर्यादायां मोक्ष इत्यत्रापि कर्मबन्धत्याजिकया भगवदिच्छयेति विशेषणीयमिति बोधितम् । अतः परमासक्तिं परिच्छिन्दन्ति—हिरण्येत्यादि । अत्र सख्यपदरहितां पूर्वफक्किकामनुपज्ज्यासक्तिपदं चाध्याहृत्य योजनीयम् । तथा च तत्प्रभृतिष्विव स्वस्यापीतः पूर्वं वृत्रदेहे चित्रकेतुदेहे च शापप्रयोजकशिवो-पहासादिना तथात्वादासक्तिरपीतः प्राक्तना चक्रे परिभ्रमत एव । न तु कर्मत्याजकपूर्वोक्तमो-हसंपादकभगवदिच्छयेत्यर्थः । तेनैवं प्राक्तनोभयस्वरूपनिष्कर्षेण प्रार्थ्यमानयोर्विशेषो निगन्तव्य इति भावः ।

श्रीवल्लभटि०—चक्र एवेत्यत्र । यद्यपि हिरण्यकशिपुप्रभृतिषु भगवदिच्छया शापेन लोके जातेषु तत्कुटुम्बिनां सख्यमुत्तमश्लोकजनसख्यम्, तथापि तन्न मोक्षरूपम् । कुटुम्बित्वेनोपाधिप्रयुक्तत्वात् । भग-वदीयत्वप्रयुक्तमेव तत्तया, सर्वथाऽनन्यत्वबाधकत्वात् । तथा च तत्रैव परिभ्रमतस्तद्भूयादित्यर्थः । तदिच्छां विना तज्जनानां जन्माभावात्कुटुम्बित्वेन सख्याभाव इति भगवदिच्छयेत्युक्तम् ।

---

१ पुत्राद्यासक्त्यंशे सति । २ भगवत्संबन्धास्फूर्तेः । भा. ६, १६, २०. ।

कृतार्थत्वं तु नाथपदप्रयोगादेव सूचितम् । तदन्ते च प्रार्थना, *' भगवदीयत्वेनैव परिसमाप्तसर्वार्था ' इतिसिद्धान्तात् ।

---

टिप्पणी—[ १८ ] नन्वयं प्रकारस्तु लीलासृष्टिस्थेष्वेव, वृत्रस्य तु कथमेवंकथनाधिकार इत्यत आहुः—कृतार्थत्वं त्विति । स हि तद्भावहृद्यागत्यैव कृतार्थः पूर्णसर्वार्थः । न ह्येतदतिरिक्तमन्यस्य किञ्चित्फलं भवति । रसानुभवस्तु तेषामेव । अन्यः कामयमानोप्ययोग्यः पैतेदतस्तद्भावस्फुरणेन भगवदीयत्वसिद्ध्या कृतार्थ एव । अन्यथा नाथपदं न प्रयुञ्ज्यात् । न हि केचिदप्यभगवदीया भगवन्तं नाथत्वेन संबोधयन्ति, तदनधिकारात् । अनधिकारकृतस्य दोषावहत्वाच्च । प्रकृते तत्कथनाधिकारसिद्धौ सिद्धं तथात्वमिति भावः ।

[ १९ ] नन्वेवं सति फलान्तरानभिलाषिणः प्रार्थना न घटत इत्याशङ्क्याहुः—तदन्ते चेति । नाथपदप्रयोगान्तेपि या सख्यप्रार्थना सा भक्तिसिद्धान्तबोधनाय । तत्र हि भगवदीयत्वमेव परमपुरुषार्थः । " भगवदीयत्वेनैव परिसमाप्तसर्वार्था " इतिवाक्यात् । स च तत्सख्येनैव भवतीति ज्ञापनाय तथाप्रार्थनमिति भावः ।

प्रकाशः—[१८] नन्वस्त्वेवं तथाप्यग्रे प्रार्थितं सेत्स्यतीत्यत्र किं गमकमत आहुः—कृतार्थेत्यादि । पूर्वसन्दर्भे भक्तत्वस्य स्फुटत्वादत्र च नाथपदप्रयोगेण दैन्याविर्भावबोधना"द्भक्तानां दैन्यमेवैकं हरितोषणसाधनमि"ति सर्वत्र दर्शनेन भगवत्तोषादिति तत्प्रयोगादेव तत्सिद्धिः सूचितेत्यर्थः ।

[१९] नन्वत्रासक्तिरूपैव कृतार्थतेत्यत्र किं गमकमत आहुः—तदन्त इत्यादि । इदं वाक्यं पञ्चमस्कन्धीयषष्ठे ऋषभचरितसमाप्तावस्ति, तत्र च पूर्वगद्ये चरित्रश्रवणश्रावणयोः फलं भक्तिरिति " भगवति तस्मिन् वासुदेव एकान्ततो भक्तिरनयोरपि समनुवर्त्तते" इत्यनेनोक्ता । तदग्रिमे " यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसारतापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्त्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्था" इति वर्तते । तत्र संसारावस्थावस्थितानां कवित्वेन भगवद्गुणगातॄणां भक्तिजन्यसुखेन भगवद्दत्तपरमोक्षानादरपूर्वकं भगवदीयत्वधर्मेण सर्वतः सम्यक्प्राप्तसर्वपुरुषार्थत्वमुक्तम् । तावता " सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत । दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः" " स एव भक्तियोगाख्य आत्यन्तिक उदाहृत"

श्रीवल्लभटि०—ननु सर्वसाधनापेक्षारहितेन कृतार्थेन पुष्टिमोक्षः प्रार्थ्य इति तत्राहुः—कृतार्थत्वं त्विति । सर्वसाधनैस्त्वं चेन्नाथस्तदा न किञ्चित्कर्तव्यमिति त्वत्पदेन तत्सूचितमित्यर्थः । तदन्ते चेति कृतार्थत्वान्ते । पुष्टिमोक्षप्रार्थनेत्यर्थः । पुष्टिमोक्षस्वरूपमाहुर्भगवदीयत्वेनैवेत्यनेन ।

---

* भा० ५-६-१७. १ अयोग्यमिच्छन्पुरुषः पतत्येव न संशयः । २ लीलासृष्टिस्थत्वम् । ३ भा. ३, २९, १३+१४. ।

धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थं माया क्रमादेहाद्यध्यासं करोति । तत्र देहाध्यासे धर्मसिद्धिः प्रसिद्धा । पुत्रापेक्षया अन्यार्थस्योत्कृष्टस्याभावादर्थसिद्धिः ।

---

**टिप्पणी**—[ २० ] नन्विदमद्भुतमिवाभाति यन्मोक्षे मायातत्कार्यसंबन्धसाहित्यमित्याशङ्क्य मोक्षेऽद्भुतत्वसाधनाय वैलक्षण्यं निरूपयितुमाहुः—धर्मार्थेति । अत्रायमाशयः मर्यादामार्गीयमोक्षे हि तन्मात्रानुभवो न धर्मार्थकामानां प्रत्युत विरुद्धत्वं च । प्रकृते तत्साहित्याविरुद्धत्वादिबोधनायात्मात्मजदारगेहेष्वासक्तचित्तस्येत्युक्तम् । यतो माया क्रमात् देहेन्द्रियादिक्रमाद्देहाद्यध्यासं चतुर्विधपुरुषार्थसिद्ध्यर्थं करोति । तत्रैकेनैव देहाध्यासेन धर्मार्थकाममोक्षान्तान्साधयति । एवमिन्द्रियाद्यध्यासेनेति क्रमो ज्ञेयः ।

[ २१ ] तत्र देहाध्यासं विवृण्वन्ति तत्रेति । तत्रैतेष्वध्यासेषु देहाध्यासे धर्मसिद्धिः प्रसिद्धा, तदध्यासवतामेव तत्राधिकारात् । अर्थसिद्धिरपि देहाध्यासेन यतः पुत्ररूपस्योत्कृष्ट-

**प्रकाशः**—

इति च स्मारितम् । तेन तादृशपरमभक्तियुजां संसारस्य मुक्त्याधिक्यं यत्र स्फुटति, तदत्रापि स्ववि-शेषणनाथपदप्रयोगाभ्यां स्फुटवीति वदन्ते तादृशसिद्धान्तं हृदि कृत्वा प्रार्थनैव तादृशालक्ति-पक्षवार्थत्वगमिकेत्यर्थः । सिद्धान्तादिति ल्यब्लोपे पञ्चमी ।

[२०] ननु भवत्वेवं तथापि त्रिवर्गस्य गृहाश्रमे संसिद्धेर्मोक्षस्येतरेषु संसिद्धेः प्रकृते च दारात्मजपदाभ्यां गृहाश्रमबोधनात् तस्मिन्नितरेतरविरुद्धचतुर्वर्गानुभवसिद्धिर्न बुद्धिमधिरोहतीत्याकाङ्क्षायां तदनुभवप्रकारमाहुः–धर्मेत्यादि । मायेति पूर्वोक्ता । करोतीति पुष्टिपुष्टिभक्तानां करोति ।

[२१] तत्रेति । तेष्वध्यासेषु । प्रसिद्धेति । ब्राह्मणत्वाद्यभिमानाभावे वासन्तिकाधानादिकरणायोगात्तदुपदेशशास्त्रादरतत्करणाभ्यां प्रसिद्धा । पुत्रेत्यादि । पुत्रे प्राणाधिकप्रियत्वभानात्तत्र ममतारूपस्तत्साकल्यवैकल्ये स्वसाकल्यवैकल्यमानात्नाशे देहप्राणवियोगाच्च तदाद्यर्थेऽहन्तारूपो वा प्राणाध्यासस्तस्मिन् सति तदुपार्जनप्रयत्नात् प्राणाध्यासेर्थसिद्धिः । प्रसिद्धेत्यध्याहारेण

श्रीवल्लभटि०—भगवदीयत्वेन सर्वार्थपरिसमाप्तौ प्रकारमाहुः—धर्मार्थकामेति । माया यथा सर्वपुरुषार्थसिद्ध्यर्थं जीवस्य देहाद्यध्यासं करोति, तं विना तदसंभवात्, तथा लिलोपयिकी माया पुष्ट्यङ्गीकृतस्य भगवदीयत्वेन तमुत्पादयति न तु लोकवदित्याशयः । तेन तत्तद्विषयेष्वपि तदीयत्वेनैव रागो न त्वन्यथापीति सिद्धम् । तत्रेति चतुर्विधाध्यासेष्वित्यर्थः । प्रसिद्धा लोक इति शेषः । तथात्र तदध्यासेन भगवद्दास्यसिद्धिरित्यर्थः । लोके यथेन्द्रियाध्यासेनार्थसिद्धिस्तथात्र भगवत्सेवौपयिकत्वेन पुत्रादिना तत्सिद्धिः । मूले अर्थनिरूपण आत्मजपद यदुक्त तदाशयमाहुः—पुत्रापेक्षयेत्यनेन । पुत्राभावे अन्यार्थस्याप्यप्रयोजक-

स्त्रिया कामसिद्धिः प्रसिद्धा । * 'भक्तानां गृह एव विशिष्यते' इति न्यायान्मोक्षः।

टिप्पणी—

स्यार्थस्य तदध्यासेनैव सिद्धेः । कामसिद्धिरपि स्त्रीसापेक्षा देहाध्यासमूलैव । गृहासक्तिरपि तन्मूलैव

[ २२ ] चतुर्विधस्यापि मोक्षरूपत्वमाहुः—भक्तानामिति । भगवन्मायया लीलोपयोगि पदार्थत्वेन तत्रासक्त्या तन्निरोधेन ब्रह्मभावापेक्षया गृहमेव भक्तानां विशिष्टं, यतो ब्रह्मभावेऽखिलपुरुषार्थाननुभव इन्द्रियादिवैफल्यं च । अतोऽलौकिकदेहप्राप्त्या प्रभुप्राकट्येनाखिलपुरुषार्थरूप लीलायास्तद्भक्तसाहित्येनान्तररमणात्मकोनुभवो मोक्ष इति सिद्धम् ।

प्रकाशः—

योऽयम् ।तेष्वेव ममतारूपोऽध्यासो वा । मूले पुत्रपदमर्थमात्रोपलक्षकमित्याशयेनैवमुक्तम् । स्त्रियेत्यादि । अत्र इन्द्रियाध्यासः स्त्रियामेव, ममतादि वा तेन कामसिद्धिस्तथेत्यर्थः ।

[२२] भक्तानामित्यादि । † "ब्रह्मानन्दे प्रविष्टानामात्मनैव सुखप्रमा । सङ्घातस्य विलीनत्वाद्भक्तानां तु विशेषतः" "सर्वेन्द्रियैस्तथा चान्तःकरणैरात्मनापि हि । ब्रह्मभावात्तु भक्तानां गृह एव विशिष्यते " इति निबन्धकारिकाभ्यां, ‡ " पश्यन्ति ते मे रुचिरावतंसप्रसन्नवक्त्रारुणलोचनानि । रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति" तैर्दर्शनीयावयवैरुदारविलासहासेक्षितवामसूक्तैः । हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते" इति श्रीकपिलदेववाक्यद्वयार्थः सङ्गृहीतः, तदुक्तन्यायान्मोक्षानिच्छापूर्वकभगवदेकतानतारूपान्मोक्षस्तच्चिकीर्षितलीलोपयुक्तगृहासक्तिपूर्वकभगवदानन्दानुभवरूपो मोक्षः । गोपिकादितुल्यानां प्रसिद्ध इति योजना । तथा च दृष्टत्वात्परस्पराविरोधो व्रजभक्तादीनामिवेत्ययं प्रकार इत्यर्थः ।

श्रीवल्लभटि०—

स्यात्, तेन तत्सिद्धिरित्यर्थः । उत्कृष्टत्वन्तु भगवदर्थसंपादितार्थरक्षकत्वेन मुख्यतया सेवौपयिकत्वेन वंशजननद्वारा परम्परया सेवानिर्वाहकत्वेनैकविंशतिपुरुषोद्धारकत्वेन च । लोके पुनस्स्वार्थत्वेन प्रसिद्धत्व भावात् सा नोक्ता ।

स्त्रियेति । तया यथा विषयार्थं कामसिद्धिः प्रसिद्धा तद्वदत्रापि सेवायामुभयोश्चित्तचाञ्चल्याभावाय भगवदीयपुत्रोत्पत्त्यैव तत्सिद्धिरित्यर्थः । भक्तानामिति । यथा तेषां भजनोपयोगित्वेन विविधलीलारसानुभावकत्वेन शून्यस्थितितुल्यमोक्षापेक्षया गृहमेव विशिष्यते तन्न्यायेनैतस्यापि पुष्टिमार्गीयत्वात्तन्मार्गीयधर्मत्तभावभावनया भजने तथैव परमानन्दानुभवे स ततो विशिष्यते । अयमेव "सोऽश्नुते सर्वान् कामान् सहे"त्यत्र मुख्यतया निरूपितः पुष्टिमार्गीयो मोक्षो, न तु कैवल्यम् ।

* निबन्धशास्त्रार्थप्रकरणे का० ७१. † निबन्ध शा. ९३+९४. ‡ भा. ३, २५, ३५+३६

चित्तस्य वासुदेवात्मकत्वान्मोक्षप्रकरणत्वाच्चित्तपदप्रयोगः । क्रीडाप्रतिबन्धकत्वा-त्प्रकृते विरोधाच्च निषेधप्रार्थना ।

---

टिप्पणी—[ २३ ] ननु कथमस्य तदधिकत्वेपि मोक्षरूपत्वं, चित्तासक्तेः संसाररूपत्वा-दित्याशङ्क्याहुः—चित्तस्येति । चतुर्विधेऽन्तःकरणे चित्तस्य वासुदेवात्मकत्वात्तस्य च मोक्षदातृ-त्वात्तद्वाचिचित्तपदप्रयोगेण मोक्षरूपत्वं सिद्धमित्यर्थः । किञ्च, प्रकरणमपि मोक्षस्येतिज्ञापनायापि चित्तपदप्रयोग इत्याहुः—मोक्षप्रकरणत्वादिति ।

[२४]ननु भगवन्मायाजनितासक्तिमात्रं प्रार्थ्येत, किं केवलासक्तिनिषेधप्रार्थनेनेत्यत आहुः—क्रीडाप्रतिबन्धकत्वादिति । केवलासक्तिनिषेधाभावे 'अप्रतिषिद्धमनुमतं भवती'तिन्यायेन भग-

प्रकाशः—[२३] प्रकृते तादृशोनुभवप्रकारो विवक्षितोन्तःकरणाध्याससाध्यश्चेत्यत्र किं गमकमत आहुः—चित्तस्येत्यादि । *यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् । यदाहुर्वा-सुदेवाख्यं चित्तं तन्महदात्मकमितिकपिलवाक्येन सर्वेष्वन्तःकरणेषु चित्तस्य वासुदेवात्मकत्वात् सृष्टिस्थितिप्रलयमोक्षकर्तृषु प्रद्युम्नादिषु चतुर्षु वासुदेवस्य मोक्षदातृत्वादत्र मोक्षप्रकरणादत्र चित्तपद-प्रयोगः । तथा च स एवोक्तप्रकारानुभवस्य तस्यान्तःकरणाध्याससाध्यतायाश्च विवक्षितत्वगमक इत्यर्थः । अनेन तादृशासक्तेर्मोक्षत्वे युक्तिरपि स्मारिता । तथा हि यत्रेदं चित्तस्य वासुदेवात्मकत्व-बोधकं वाक्यं तत्रैव मनसोऽनिरुद्धत्वबोधकमहङ्कारस्य सङ्कर्षणत्वबोधकं च वाक्यमस्ति, तेन तत्त-दन्तःकरणाधिदैविकत्वं तेषां व्यूहानां तत्र सिद्धम् । भक्तान्तःकरणरूपाश्च त एव । किञ्च, यो योऽ-ध्यासः स सर्वोप्यहङ्काराध्यासमूलकः, अहङ्कारश्च सङ्कर्षणात्मकः, तत्रास्याहमित्यध्यासस्तदहङ्ग्रहो-पासनातुल्यकक्षो भवति, अहङ्ग्रहोपासना च सर्वतापनीयसिद्धा । तथा च सा यथा मोक्षफल-कत्वान्मोक्षरूपा तथायमध्यासोपि मोक्षफलकत्वान्मोक्षरूप इति तन्मूला देहाद्यासक्तिरपि तथेति ।

[२४] ननु सर्वमिदं तदोपपद्येत यदन्तरा नप्रयोगो न स्यात्, दृश्यते च स इति नायमर्थः साधीयान् । किन्तु स्वकर्मभिः संसारचक्रे भ्रमतो मम उत्तमश्लोकजनसख्यं भूयात् तस्य प्रार्थ-नीयत्वे हेतुः त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य नेति "भवापवर्गो भ्रमतो यदे"ति-वाक्याद्देहाद्यासक्तौ तन्न भवतीति तदभावपूर्वकतत्सख्यमात्रप्रार्थनेत्ययं युक्त इत्यत आहुः—क्रीडे-त्यादि । उत्तमसख्यस्येति शेषः । अयमर्थः, त्वया ह्येतस्यासाधुत्वेन अनुपपत्तिमात्रमविवक्षितत्व-

श्रीवल्लभटि०—चित्तस्येति । चिती संज्ञान इति धातोश्चित्तं ज्ञानात्मकम् । तच्च सत्त्वजन्यम् । तदधिष्ठाता वासुदेव इति तदात्मकत्वमुक्तम् । इतः पूर्वं त्रिभिः श्लोकैः पुष्टिमार्गीयपुरुषार्थत्रयमुक्तम् । अत्र तन्मार्गीयो मोक्षो निरूप्यते इति तत्प्रकरणत्वम् । "ज्ञानान्मोक्ष" इतिन्यायेन चित्तपदप्रयोगो मूले । तेन शुद्धज्ञानात्मकत्व एव तस्य यथा मोक्षसाधकत्वं तथा शुद्धपुष्टिमार्गीयभावात्मकत्व एव तन्मोक्षसाध-कत्वमित्यर्थो ज्ञापितः । क्रीडेति । संसारहेतुभूतमायामोहापगम एव तद्गृहे भगवान् क्रीडतीति तत्प्रतिबन्ध-

---

* भा० ३, २६, २१. १ भा० १०, ५१, ५४.

कृतवान् । वस्तुतस्त्वन्याचार्येषु रसात्मकपुरुषोत्तमप्रतिपादकत्वाभावात् श्रीवल्लभाचार्या एव ग्राह्या नान्ये । तस्मात् दैवोद्धारार्थप्रादुर्भावात् तत्सुकृत तदुद्धारक सुष्ठु कृत

---

यज्ञदत्तो ममायमात्मेतिवदिति चेन्न। इमां शङ्कामपहर्तुं सूत्रकार सूत्रमसूत्रयत् 'तन्निष्ठस्य मोक्षोपदेशा'दिति। अर्थस्तु भाष्ये श्रीमदाचार्यचरणैर्निगदित इति ततोऽवधेय। अत्र श्रीमदाचार्यत्वाच कात्मशब्दोपादानेन 'सत्य ज्ञानमनन्त ब्रह्म' 'आनन्दमात्रकरपादमुखोदरादि' 'आनन्दमयोऽभ्यासा'दिति श्रुतिसूत्रै 'सत्यादिगुणसाहस्रैर्युक्तमौत्पत्तिकै सदे'ति श्रीमदाचार्योदितवाक्येन चान •दमयत्वमनेकानन्दमयगुणार्णवत्वमप्राकृतसौन्दर्यसौकुमार्यलावण्ययौवनाद्यनन्तकल्याणगुणनिधित्व स्वाभाविकज्ञानबलैश्वर्यशक्तितेज सौशील्यवात्सल्यमार्दवार्जवसौहार्दसाम्यकारुण्यमाधुर्यौदार्यचातुर्यस्थैर्यपराक्रमसत्यसङ्कल्पकृतित्वकृतज्ञताद्यसख्येयगुणार्णवत्व सूचितम् । प्रादुर्भूत कृतवान् प्रादुर्भावितवानित्यर्थ । 'तस्यैवात्मानुभावप्रकटनहृदयस्याज्ञया प्रादुरासी' दित्युक्त श्रीमत्प्रभुचरणै । नन्वात्मपदेनान्याचार्याणा ग्रहणमस्तु, किमिति श्रीवल्लभाचार्याणामेव ग्रहणमिति चेत्तत्राहु वस्तुतस्त्वित्यादिना । रसात्मकेति । रसात्मकप्रतिपादन वस्तुतस्त्वन्याचार्यैर्न कृतमिति भाव । यद्वा रसात्मकपुरुषोत्तमस्य प्रतिपादन यस्मिञ्छास्त्रे तद्रसात्मकपुरुषोत्तमप्रतिपादक शास्त्र तस्य भावस्तत्त्व, तस्य शास्त्रविषयस्याभावात् रसात्मकपुरुषोत्तमप्रतिपादकशास्त्रमन्याचार्यप्रतिपादक न भवतीत्यतोऽत्रात्मशब्देनान्ये न ग्राह्या इत्यर्थ । अत्र प्रकरणे पुरुषोत्तमस्य 'रसो वै स' इतिश्रुत्या रसत्वेन निरूपणाज्जीवस्य रसस्यैव लाभो 'रस ह्येवाय लब्ध्वा' त्यनया निरूपणात् पुरुषोत्तमप्राप्तिसाधनीभूत श्रीमदाचार्याणामपि रसरूपत्व, प्रकरणार्थस्य नियामकत्वात् । तथाच काव्यप्रकाशादौ 'सयोगो विप्रयोगश्च साहचर्य विरोधिता । अर्थ प्रकरण लिङ्ग शब्दस्यान्यस्य सन्निधि ॥ सामर्थ्यमौचिती देश कालो व्यक्ति स्वरादय । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतव' इति । श्रीमदाचार्याणा रसरूपत्व तु यथा रसेषु शृङ्गारस्य प्राधान्येन तत्सयोगविप्रयोगोभयात्मकत्वेन श्रीमदाचार्येषु 'तत्सारभूतरासस्त्रीभावपूरितविग्रह' इतिवाक्यात् तदुभयात्मकत्वम् । किञ्च 'कृष्णाधरामृतास्वादसिद्धिरत्र न सशय' इति सर्वोत्तमस्तोत्रपाठमात्रेण जीवानामपि रसाप्ति, किंतु तत्र 'विरहानुभवैकार्थसर्वत्यागोपदेशक' इतिवाक्यात् 'स्वामिन् श्रीवल्लभाग्रे क्षणमपि भवत सन्निधाने कृपात प्राणप्रेष्ठव्रजाधीश्वरवदनदिदृक्षार्तितापो जनेषु । यत्प्रादुर्भावमाप्नोत्युचितनरमिद यत्तु पश्चादपीत्य दृष्टेऽप्यस्मिन्मुखेन्दौ प्रचुरतरमुदेत्येव तच्चित्रमेत'दिति वाक्याच्च वियोगरसानुभावकत्वम् । किञ्च 'यन्ङ्ग दाशुषे त्व' मिति श्रुत्या 'अग्निर्मुख यस्य तु जातवेदा जात' इति श्रीभागवतवाक्याच्च । 'अग्निर्वै मुख' मिति श्रुतेश्च 'श्रीकृष्णास्य कृपानिधि' रिति वाक्याच्च श्रीमदाचार्याणा रसरूपपुरुषोत्तमास्यत्वेन पुरुषोत्तमावयवत्वस्य पुरुषोत्तमरूपत्वेन रसरूपत्व स्पष्टमेवेत्यलम् । अन्याचार्येषु सुदर्शनशङ्खनुमदङ्गराद्यवतारेषु शृङ्गाररसस्याभावस्तु स्पष्टमेव । तदुद्धारकमिति । तेषामुद्धारो यस्मिन्

भगवत्सेवादिकृतिरूपं जीवान् प्रति, उच्यते उपदेशः क्रियते । तदन्योपदेशनिषेधमाह ' यद्वै तत्सुकृतं तस्मात् ' इति । वै निश्चयेन यद्वल्लभाचार्योक्तं तदेव सुकृतं नान्यत् । तदुपदेशफलमाह 'रसो वै सः । रसꣳ ह्येवायं लब्ध्वाऽऽनन्दी भवती'ति । रसः रसात्मकफलरूपः श्रीकृष्णः । वै इति निश्चयेन सः यो ' ब्रह्मविदाप्नोति पर ' मित्यत्र परशब्देन रसात्मकफलरूपः पुरुषोत्तमः प्रतिपादितः ।

ननु ' ब्रह्मविदाप्नोति पर'मित्यत्रोक्तफलात्मकपुरुषोत्तमस्य कथं रसरूपत्वं यस्य स इति तच्छब्देन परामर्शः क्रियते इत्याशङ्कानिरासायानन्दमयाधिकरणे ' ब्रह्मणा विपश्चिते'त्यस्य व्याख्याने श्रीमदाचार्यचरणैर्व्याख्यातं 'विपश्चिता विविधं पश्यच्चित्तम् । पृषोदरादित्वात्पश्यच्छब्दावयवस्य यच्छब्दस्य लोपं कृत्वा व्युत्पादितो विपश्चिच्छब्दस्तेन विविधभोगचतुरेण सह सर्वान्कामानश्नुत इत्यर्थः ।' ' रसꣳ ह्येवायं लब्ध्वानन्दी भवती'ति रसं नित्यलीलास्थरसात्मकपुरुषोत्तमं अयं जीवः हीति निश्चयेन श्रीमदाचा-

---

तत्कर्म नामोपदेशब्रह्मसम्बन्धादिरूपमित्यर्थः । सुष्ठुकृतमिति 'अपदु सुपु स्य कु'रिति सूत्रेण सुपु पठात् स्यावातो क्तप्रत्यये पत्वे ष्टुत्वे सुष्ठु इति रूपम् । भगवत्सेवादीति । ब्रह्मसम्बन्धादिना सर्वदोषनिवृत्तौ भगवत्सेवायामधिकारो भवतीति भाव । उच्यते । श्रीमदाचार्यैरिति शेष । उक्तम् श्रुत्यर्थादिकम् । नान्यदिति अन्योक्तमित्यर्थः । 'न ह्यन्यो वागधीशा'दित्यादिनान्यव्याख्यातश्रुत्यर्थस्य भ्रान्तिग्रस्तत्वादिति भाव । श्रीभागवतार्थस्याप्यन्यप्रोक्तस्य याथार्थ्याभावात् । ' अर्थं तस्य विवेचितुं न हि विभुर्वैश्वानराद्वाक्पतेरन्यस्तत्र विधाय मानुषतनुं मां व्यासवच्छ्रीपतिरि'ति सुबोधिन्यारम्भे श्रीमदाचार्यैः स्वयमेवोक्तत्वादिति भाव । रसात्मकफलरूप इति रसस्यैव लाभोक्त्या फलत्वमिति भाव । ' त्वयि सर्वरसे ' ' मल्लानामशनि'रित्यादिश्रीभागवतवाक्याभ्यां सर्वरसरूपत्वम् । तच्छब्दस्य पूर्वपरामर्शकत्वादाहु य इत्यादि ।

नन्वित्यादि । ब्रह्मविदित्यत्रोक्तफलात्मकपुरुषोत्तमस्य स इति तच्छब्देन यस्य परामर्शं क्रियते, तस्य कथं रसरूपत्वमित्याशङ्कानिरासायेत्यन्वय । इत्यर्थ इति । एतत्पर्यन्तं श्रीमदाचार्यचरणोदितं व्याख्यानम्, 'एतदग्रे एतेन परप्राप्तिपदार्थ उक्तो भवति, शुद्धपुष्टिमार्गीयादस्य भक्तस्य स्वातन्त्र्यं भोग उच्यते, सहभावोक्त्या ब्रह्मणो गौणत्वम्, अत एव भक्ताधीनत्वं भगवत स्मृतिष्वप्युच्यते । 'अहं भक्तपराधीन ' 'वशे कुर्वन्ति मां भक्त्ये'त्यादिवाक्ये'रिति तत्रैव निरूपितं तै । एतेन विविधभोगचातुर्यविशिष्टतानिरूपणेन रसरूपत्वं स्पष्टमेव । भक्तस्य मुख्यत्वप्रतिपादनेनात्र रसरूपत्वं स्फुटम् । शृङ्गारे नायिकाया प्राधान्यात्तच्च व्रजसुन्दरीष्वेवेति भाव । इदंशब्दस्य पुरोवर्तिपदार्थवाचकत्वेन श्रीमदाचार्यात्तरूपविशिष्ट इत्याहु श्रीमदाचार्योक्ते-

**योक्तसुकृतविशिष्ट एव जीवो नान्यः लब्ध्वा प्राप्य आनन्दी भवति सेवाफलोक्तफल यथाधिकारं अलौकिकसामर्थ्यं सायुज्य सेवोपयोगिदेहो वैकुण्ठादिष्विति फल लब्ध्वा आनन्दमयविग्रहो भवतीत्यर्थः । अग्रे ' को ह्येवान्या'दित्यादिभिस्तु पुरुषोत्तमवर्णनम् ।**

**किञ्च ' वेदैश्च सर्वैरहमेव वेद्य ' इति भगवद्वाक्यात् पुरुषोत्तमपरत्वं वेदमात्रस्य**

---

त्यादि । जीव इति । शुद्धपुष्टिमार्गीय इत्यर्थ । नान्य इति । अन्यो मर्यादाप्रवाहस्थ इत्यर्थ । प्राप्येति रसपदेनान्वय । आनन्दी भवतीति । च्विप्रत्ययोऽत्र । एव च यदा भगवानानन्द ददाति, तदाऽऽनन्दी भवति । आनन्ददान चाविद्यानिवृत्तिपूर्वकालौकिकभगवत्सेवोपयोगिदेहसपत्तौ पश्चाद्विरहभावेऽतितीव्रत्वेन सर्वोपमर्दिना शरीरप्राणेन्द्रियान्त करणानि नश्यानि स्युर्यदि तत्तद्रूप ब्रह्म तेपु तेषु न प्रविष्ट स्यात्, जीवे त्वानन्दमय प्रविशतीति रसात्मकत्वात्तान त्वात्मत्वमेव विरहभावमनुभूय पश्चात्प्रादुर्भूत प्रभुस्वरूप प्राप्य प्रभुरानन्ददान करोति तदानन्दी भवतीत्यभिप्रेत्याहु **सेवाफलोक्तमित्यादि** । फलप्रकरणे ' एव कार्ये योगमायाया ' इति प्रतीकमुपादाय टिप्पण्या ' रसꣳ ह्येवाय'मित्यस्यार्थ उदित । सर्वात्मलक्षण स्थायिभावो रसस्तमेव लब्ध्वाऽऽनन्दवान् भवति, तादृशे प्रभु स्वरूपानन्द ददाति । तथा लाभश्चानेन भगवद्दत्त एव प्राप्यते, नान्यथेति सूच्यते । एवकार सर्वत्रानुषज्यते । तथाहि । रसमेव लब्ध्वा यथा त लब्ध्वा तथा भवत्येव तथा मृत्वाऽऽनन्द्येव भवति, न तु लौकिकवदु स्थपीति चेत्युक्त श्रीमत्प्रभुचरणै । **सेवोपयोगिदेह** इत्यादि । तथा चाणुभाष्ये आनन्दमयाधिकरणे'ऽस्माल्लोकात्प्रेत्ये'ति वाक्ये इतशब्दप्रयोगात् प्राकृतगुणमय प्रपञ्चमतिक्रम्य गुणातीत प्रपञ्च साक्षात्सेवोपयोगि प्राप्नोतीत्यवगम्यते इत्युक्त श्रीमदाचार्यचरणै । यद्यपि सायुज्यपदेन पुरुषोत्तमस्य स्वरूपे लीनत्व जीवस्य, तथापि सह युनक्तीति सयुक् सयुजो भाव सायुज्यमिति व्युत्पत्त्या सायुज्यशब्देन पुरुषोत्तमलीलानुभवत्वम्, अन्यथा ' सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चितेति' श्रुतिप्रतिपादितभोगानुपपत्ते । अत एव श्रीमदाचार्यचरणै 'जीवस्य ब्रह्मण्येव लयेन लीलारसानुभवेन नाश एव स' इत्यानन्दमयाधिकरणेऽणुभाष्ये । इदमेव मोक्षस्वरूपम् । श्रीवैष्णवाना मते तु चरमशरीरजनकादृष्टजन्यभोगानन्तर भगवच्छेषत्वप्रमितिपूर्वकातुलनानाविधकैङ्कर्ययोग्यत्वे सति नित्यज्ञानानन्दाविर्भावो मोक्ष इति । अस्यार्थ । चरम यच्छरीर तज्जनक यददृष्ट तज्जन्यो यो भोग सुखान्यतरसाक्षात्कार इति यावत् तदनन्तर या भगवच्छेषत्वप्रमिति । शेषत्व मत्तोऽयमुत्कृष्टोऽहमस्मादपकृष्ट इति यावत् । तद्योगे सति नित्यौ यौ ज्ञानानन्दौ तयोराविर्भावो व्यक्ति मोक्ष इति । अत्रापकृष्टताग्रन्थवाहुल्यभयान्नेह प्रतन्यते । श्रीमदाराध्यचरणैरलौकिकेत्यायुक्त इद लक्षणमस्मन्मतान्नातिरिच्यते ।

'सर्वे वेदा यत्पदमामनन्ती'ति श्रुत्या सर्वेषा वेदाना वेदान्ताना च श्रीमत्पुरुषोत्तमपरत्वेन श्रीमदाचार्याणा पुरुषोत्तमाभिन्नत्वेन श्रीमदाचार्यपरत्व तेषामित्याहु किञ्चेत्यादि न कोऽपि शङ्कालेश इत्यन्तम् ।

स्पष्टम् । आचार्याणां पुरुषोत्तमत्वं भगवतोक्तम् 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचि' दित्यत्र मामिति स्वाभेदेन निर्देशात्तद्रूपेण व्याख्याने न किञ्चिद्बाधकमिति भावः । किञ्च श्वेताश्वतरोपनिषदि 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति मन्त्रेण देवगुरुभक्त्योः साम्यं श्रावितम्, तेन गुरुत्वाच्छ्रीमदाचार्यपरत्वेन श्रुतिप्रतिपादने न कोपि शङ्कालेशः ।

किञ्च तत्स्वरूपप्रतिपादकनिगमः प्रदृश्यते । तथाहि 'नमो ब्रह्मणे नमोऽस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः। नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि ।' अस्यार्थः । नमो ब्रह्मण इति । ब्राह्मणरूपधारिणे श्रीवल्लभाचार्याय नमः ॥

---

श्रीमदाचार्यपरत्वेनान्यच्छ्रुतिव्याख्यानं चिकीर्षवस्तदवतारयन्ति किञ्चेत्यादि । श्रुतिमनूद्य तदर्थमाहुः नमो ब्रह्मण इतीत्यादि । 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापति'रित्यमराद्ब्रह्मशब्दार्थमाहुः ब्राह्मणरूपधारिण इति । 'पृथिवी वैश्वानरः संवत्सरो वैश्वानरः ब्राह्मणो वैश्वानर' इति निरुक्ते वैश्वानरस्य ब्राह्मणत्वम् । तचास्मिन्नवतार इत्याहुः श्रीवल्लभाचार्याय नम इति । अत एवात्रानन्तर्ये एवाग्निपदं सामानाधिकरण्येनोपात्तम् । श्रुतिरपि 'विप्रं विप्रासोऽवसे देवं मर्तास ऊतये । अग्निं गीर्भिर्हवामहे' । अर्थस्तु विप्रं विप्ररूपधारिणम् । विप्रपदेन श्रोत्रियत्वं सूचितम् । तस्य च 'स एको मानुष आनन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितॄणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितॄणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्ये' त्युपनिषत्सु मानुषानन्दमारभ्य ब्रह्मानन्दानुभवस्य निरूपणात् परमानन्दकत्वं परं किमित्युक्ते 'यः सर्वान्तर आनन्द' इति श्रीमदाचार्यैरणुभाष्ये उक्तत्वाच्छ्रोत्रियानन्दस्य सर्वान्तरे विद्यमानत्वेन परब्रह्मत्वं 'पूर्णानन्दः पूर्णकाम' इतिवाक्येन अकामहतत्वं श्रीमदाचार्येषु निरूपितमित्येतादृशं श्रोत्रियत्वमत्रैवेति । न चात्र गणितानन्दस्य श्रोत्रियानन्दानुभवत्वेनाक्षरब्रह्मत्वम्, न तु परं ब्रह्मत्वमिति वाच्यम्। 'आनन्दः परमानन्दः' 'पूर्णानन्दः पूर्णकाम' इति 'वस्तुतः कृष्ण एवे'ति वाक्यैश्च पूर्णानन्दत्वं पूर्णपुरुषोत्तमत्वमिति दिक् । अग्नि श्रीवल्लभा-

चार्यम् । 'हुताशनावतारस्तु वल्लभो लक्ष्मणात्मज' इति सम्मोहनतन्त्रात् 'वैश्वानरो वल्लभाख्य' इतिवाक्याच्च । विप्रास विप्रा । 'आज्जसेरसुगि' तिसूत्रेणासुगागम । 'वेदाभ्यासाद्भवेद्विप्र' इति वचनाच्छब्दब्रह्मपरब्रह्मविद मेधाविनो भक्ता दैविजीवा वसे विदु । 'वस आच्छादने' इति धातोर्लिटि इटि एत्वे रूपसिद्धि , आच्छादनार्थकस्यानेकार्था धातवो भवन्ती'तिमहाभाष्यात 'सेधतेर्गता' वित्यस्मि सूत्रे गताविति ग्रहणसामर्थ्यात् 'कुर्दखुर्दगुर्दगुद क्रीडायामेवे'ति भीमसेन निर्दिष्टार्थे एवकारग्रहणाच्च धातूनामनेकार्थत्वाज्ज्ञानार्थकत्वम् । अत एव निरुक्तकारै 'वसेर्विदु' रित्युक्तम् । छान्दसत्वेन पुरुषवचनव्यत्यय । श्रीमदाचार्यसेवका श्रीमदाचार्यस्वरूप शास्त्रोऽपि जानन्तीति भाव । 'प्रतिक्षणनिकुञ्जस्थलीलारससुपूरित ।' 'रासलीलैकतात्पर्य ।' 'गोवर्धनस्थि त्युत्साहस्तल्लीलाप्रेमपूरित' इत्यादिवाक्याच्छ्रीपुरुषोत्तमलीलानुभविनमित्यभिप्रेत्याह देवमिति । क्रीडार्थक दिवुधातो पचाद्यच । श्रीमदाचार्याणामवतारो भूतले दैविजीवोद्धारार्थमित्यभिप्रेत्याह मर्तास । यद्वा दैवा मर्त्यलोके प्रादुर्भूतास्तदुद्धारार्थमवनितले श्रीमदाचार्याणा प्राकट्यमिति भाव । यद्वा मर्तास अविद्यासम्बन्धेन मरणादिधर्मविशिष्टा दैविजीवास्तेषा मरणादिदोषनिवृत्तये प्राकट्य स्तुतिश्च क्रियते भक्तैरिति भाव । 'सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिण । भवान्तसम्भवा दैवात्तेषामर्थे निरूप्यत' इति श्रीमदाचार्यचरणोक्ते तेषा यथान्तमत्त्व सिद्ध्यति तथा निरूप्यत' इति तद्विवृतौ निगदितम् । स्तुतिप्रयोजनमाह ऊतये इति । 'ऊतियूतिजूति सातिहेतिकीर्तयश्चे'तिसूत्रेणावतेरूतिशब्दो निपातनात् । रूढश्चाय लीलाया 'पुष्टिदोपनिवृत्त्यर्थ मूतीर्लीला निरूप्यत' इति श्रीभागवतनिबन्धे श्रीमदाचार्यचरणोक्ते 'ऊतीर्लीला द्विधा प्रोक्ते'ति श्रीधरस्वामिनाप्युक्तम् । एवञ्च लीला अनुभवितुम् । 'तुमर्थाच्च' इतिसूत्रेण चतुर्थी । यद्वा ऊति शब्देन कामना गृह्यन्ते । अवते कान्तिरप्यर्थ । कान्ति कामना । भक्ताना कामनास्तु भगवल्लीलानुभवरूपा एव । अन्यपदार्थस्य जातमात्रस्य तस्या 'यस्तु आशिष आशास्ते न स भृत्य स वै वणिगि'ति श्रीभागवतवाक्याद्दासत्वभङ्गापत्ति । अग्नि श्रीवल्लभाचार्य । गीर्भि निग मरूपाभि हवामहे प्रीणीमहे तर्पयाम इत्यर्थ । यद्यपि 'हु दानादनयो'रिति पठित तथापि सोऽयं ऽनतुगुणो भवतीति प्रीणनार्थो गृह्यते । तथात्र महाभाष्ये प्रीणनमप्यस्यार्थो भवतीति । रूप सिद्धिस्तु जुहोते कर्तरि लट् तस्योत्तमपुरुषबहुवचने 'व्यत्ययो बहुल'मित्यनुशासनात् आत्म नेपदे 'कर्तरि शवि'ति शपि गुणे दीर्घे 'टित आत्मनेपदाना टेरे' इति सूत्रेण टेरेत्वे बोध्या । तेन चात्र 'शपो लुक्' 'बहुल छन्दसी' त्यनुशासनात्तदभाव इति प्रीणनार्थकधातुना स्तुत्यादिना गुणश्रवणेन श्रीमदाचार्याणा प्रसन्नतति ध्वन्यते । 'स्वयशोगानसहृष्यद्धृदयाम्भोजविष्टर' इति वाक्यात् । एवञ्च सेवा स्तुतिरेव कर्तुं शक्येति ध्वनितम् । अत एव श्रीप्रभुचरणैरन्यभक्तैश्च श्रीमदाचार्यस्तुत्यादिप्रकरण क्रियते । एवञ्च अग्नि विप्रमिति सामानाधिकरण्येन ब्रह्मणे ब्राह्मणरूपधारिण इति व्याख्यान युक्तमेवेति दिक् ।

ननु श्रुतौ श्रीवल्लभाचार्येतिनामोच्चारणं न कृतं कथं तत्परत्वेन प्रतिपाद्यत इति चेन्न । श्रीवल्लभाचार्यनिष्ठाः सर्वे धर्माः श्रुतौ स्पष्टतया प्रतिपादिता इति धर्मैर्धर्मि श्रीवल्लभाचार्यस्वरूपं निश्चीयते । यथा चत्वारिशृङ्गेतिश्रुतिर्महाभाष्यकारैर्धर्मसादृश्येन व्याकरणशास्त्रपरत्वेन व्याख्याता, तथात्र श्रीमदाचार्यपरत्वेन प्रतिपाद्यते । ननु ब्राह्मणरूपधारणं श्रीवामनादीनामवतारेष्वपि वर्तते तेनेयं श्रुतिर्वामनरूपप्रतिपादिका स्यात्तद्व्यावृत्त्यर्थमाह नमोऽस्त्वग्नय इति ।

---

सर्वे धर्मा इति । अप्राकृता इत्यर्थः । दृष्टान्तद्वारासानां प्रमाणमाहुः यथेत्यादि । श्रीवामनादीनामिति । आदिशब्देन श्रीव्यासश्रीपरशुरामश्रीकपिलादीनां संग्रहः । नमोऽस्त्वग्नय इति । ननु 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति' । 'न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्तन्ते तद्धाम परमं मम'ेति श्रुतिस्मृतिभ्यां श्रीमत्पूर्णपुरुषोत्तमस्याविषयत्वं सूर्यादीनामग्नेश्च प्रतिपादितमिति कथमग्नेः पुरुषोत्तमाननाधिष्ठातृत्वं संमोहनतन्त्रादिषु श्रीमदाचार्याणामग्निरूपत्वं वर्णितमिति तेषां पूर्णपुरुषोत्तमत्वं कथम्? 'अग्निर्मुखं यस्य तु जातवेदा'इत्यादि तु विभूतित्वबोधकमिति चेन्न, पूर्वोदाहृतश्रुतिसूत्रादिभिर्वक्ष्यमाणैश्च ब्रह्मत्वमेव । अलौकिकाखिलब्रह्मनिष्ठजगदुदयस्थितिलयादिलोकोत्तरविलक्षणासाधारणकार्यकर्तृत्वेन श्रुत्यादिषु प्रतिपादनाद'दग्निर्वै मुखमि'ति श्रुत्यैकवाक्यतया ब्रह्मणोऽवयवस्य ब्रह्मत्वाच्छ्रीमत्पुरुषोत्तमाऽऽननाधिष्ठातृश्रीमद्वैश्वानरश्रीमदाचार्याणां ब्रह्मत्वम् । अत एव 'श्रीकृष्णास्यं कृपानिधि'रिति श्रीमत्प्रभुचरणैरगादि । अत्र निषेधे कुतोऽयमग्निरितीदंशब्दप्रयोगात्तस्य च लौकिकाग्निविषयत्वात् । अन्यथा 'त्वमग्ने द्युभिरि'ति 'अग्निमीळे पुरोहित'मित्यादिश्रुतयो भारतवचनान्यपि विरुध्येरन् । तदेवोपपाद्यते 'त्वमग्ने द्युभिस्त्वमाशुशुक्षणिस्त्वमद्भ्यस्त्वमश्मनस्परि । त्वं वनेभ्यस्त्वमोषधीभ्यस्त्वं नृणां नृपते जायसे शुचिः' ॥ अस्यार्थः—हे अग्ने, त्वं द्युभिः 'सुरलोको द्योदिवौ द्वे' इत्यमराद्दिवशब्दस्य स्वर्लोकवाचकत्वात् तेन चात्र तत्स्था लक्ष्यन्ते । स्वर्लोकस्य सुखैकरूपत्वेन 'यन्न दुःखेन संभिन्न'मिति श्रुतिनिरूपितस्वर्लोकस्थितदैविजीवैः सह जायसे, श्रीवल्लभाचार्यनाम्ना प्रकटोऽसि । 'हुताशनावतारस्तु वल्लभो लक्ष्मणात्मज'इति वाक्यात् । श्रीमदाचार्याणां भक्तदुःखनिरासकत्वमाह । त्वं नृणां दैविजीवानां भक्तानां आशुशुक्षणिः आशु शीघ्रं शुचं शोकं क्षणोतीति व्युत्पत्त्या शोकनाशकोऽसि 'क्षणु हिंसाया'मिति धातोः 'सर्वधातुभ्य इन्नि'त्यौणादिकसूत्रेणेन्प्रत्यये, रूपं नित्यसापेक्षत्वादत्र वृत्तिः । यद्यपि 'रोहिताश्वो वायुसखः शिखावानाशुशुक्षणिरि'त्यमरान् रूढोयम्, तथापि'त्वमग्ने द्युभिस्त्वमाशुशुक्षणि'रित्यत्राग्ने इति सम्बोधनमुक्त्वा त्वमाशुशुक्षणिरित्युक्तम् । तेन योगरूढोऽयं पङ्कजवत् । तेनालौकिकश्रीकृष्णाननरूपाग्नावेवास्य वृत्तिः । शोकनाशकत्वसामर्थ्यवत्त्वं तस्यैव । कोशादिषु

यल्लौकिकाग्निवाचकत्वं तत्रांशांशिनोरभेदेन तत्त्वं बोध्यम् । शोकदूरीकरणेन महाकारुणिकत्वं श्रीमदाचार्येषु । अत एव ‘ महाकारुणिको विभु’ ‘रतिस्तुगस्तं प्रपद्ये’ हुताश’मित्युक्तमस्मत्परिवृढैः । ननु ‘ शृङ्गारहास्यकरुणारौद्रवीरभयानकाः । बीभत्साद्भुतसंज्ञौ च नाट्ये चाष्टौ रसा स्मृता:’ इति रसानां यथाक्रमं ‘ रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेति स्थायिभावाः प्रकीर्तिता’ इति करुणायाः शोकस्थायित्वेन तस्य चेष्टवस्तुविश्लेषजनितो रत्यनालिङ्गितोऽपरिमितो मनोविकारः शोक इतिलक्षणात् । यथा रघुकाव्येऽजस्य प्रलापे करुण एव रसस्तत्र तत्र बाधनिश्चयादिष्टवस्तुसमीहाया अभावात् । एवं च करुणरसस्यामङ्गलप्रायत्वात्तद्विशिष्टता प्रभौ नोचितेति । यदीष्टवस्तुप्राप्तितया रत्यालिङ्गितशोकस्तत्र रतिस्थायितया विप्रलम्भ एव रस इति चेत्सत्यम् । ‘आश्रितार्त्यग्निना हेम्नो रक्षितुर्हृदयद्रवः । अत्यन्तमृदुचित्तत्वमश्रुपातादिकृद्भवात् । कथं कुर्यां कदा कुर्यामाश्रितार्तिनिवारणम् । इतीच्छादुःखदुःखित्वमार्तानां रक्षणत्वरा । परदुःखानुसन्धानाद्विह्वलीभवनं विभोः । कारुण्यात्मगुणस्त्वेष आर्तानां भीतिवारक’ इति भगवद्गुणदर्पणे मधुराचार्योक्तेरिष्टवस्तुविश्लेषजनितरत्यालिङ्गितोऽपरिमितो मनोविकार' शोक इति । रतिविशिष्टस्थायितयात्र करुणरसः तद्विशिष्टता प्रभुषु । यत्तु मृत एव करुणरस इति। तदसाधु । विकृतदुग्धवत्तस्याप्रयोजकत्वात् । अत एव ‘भवभूतेः संबन्धाद्भूधरभूरेव भारती भाति । एतत्कृतकारुण्ये किमन्यथा रोदिति ग्रावा’ इति गोवर्धनोक्ति' संगच्छते । तथा च । ‘करुणादावपि रसे जायते यत्परं सुखम् । सुचेतसामनुभवः प्रमाणं तत्र केवलम् ॥ सर्वत्र करुणाख्यस्य रसस्यैवोपपादनात् । भवेद्रामायणादीनामन्यथा दुःखहेतुता ॥ तथात्वे रामपादाब्जप्रेमकल्लोलवारिधिः । प्रीत्या रामायणादीनां शृणुयाद्धनुमान् कथमि’ति गौडमतानुवर्तिभिर्भक्तिरसामृतसिन्ध्वानुक्तम् । नच रतिविशिष्टतया विप्रलम्भ एवेति वाच्यम् । विप्रलम्भे उभयनिष्ठरतित्वेनात्र दुःखाश्रितार्तिदूरीकरणत्वेन रतेरेकनिष्ठत्वान्महान् भेद । उभयनिष्ठत्वे ■ सहेतुकत्वे कारुण्याभावात शृङ्गारे तु एकनिष्ठरतौ रसाभास एव स्यादित्यलम् । प्रकृतमनुसरामः । सर्वतः श्रैष्ठ्यमाह—त्वमित्यादि । त्वमबादिभ्य' श्रेष्ठोसि कारणं त्वमेवासि । अबादिग्रहणं सर्वस्य जगत उपलक्षणार्थम्। ‘भारतव्यपदेशेन ह्याम्नायार्थश्च दर्शित’ इति श्रीभागवतवाक्यात् भारतस्य वेदार्थरूपत्वात्तदत्र मानम् । तथा हि । खाण्डवदाहप्रसङ्गे मन्दपालस्तुतौ सर्वसुखरूपत्वं सर्वान्तर्यामित्वं पूर्वमुपपाद्य सृष्टिकर्तृत्वं स्वव्यतिरेकेण जगतोऽभावत्वमाह पद्येनैकेन । ‘त्वया सृष्टमिदं विश्वं वदन्ति परमर्षयः । त्वदृते हि जगत्कृत्स्नं सद्यो नश्येद्धुताशने’ति ब्रह्मत्वमुपपाद्यान्तरङ्गभक्ता समर्पितदेहागारादयः ‘कर्माण्येकं तस्य देवस्य सेवे’ति पुरुषोत्तमवाक्यात् तनुजावित्तजामानसीसेवाकर्तारो नमनमात्रेण लीलाप्रवेशरूपां गतिं प्राप्नुवन्तीत्याह । ‘तुभ्यं कृत्वा नमो विप्राः स्वकर्मविजितां गतिम् । गच्छन्ति सह पत्नीभिः सुतैरपि च शाश्वती’मिति । अत्र स्वकर्मणा भगवत्सेवारूपेण विजितां गतिं लीलाप्रवेशरूपां दारादिभिः सह गच्छन्तीत्यर्थः। तथा च श्रीमदाचार्यचरण-

नमनफलमुदितं श्रीमत्प्रभुचरणैः । 'पितृपदसरसिजनतिततिविनिहतविश्वाशुभै'रिति टिप्पणीप्रारम्भप्रतिज्ञावाक्ये । पालनं संहारश्च तवैव कर्मणी इत्याह । 'त्वामग्ने ज्वलनादाहुः खे विपक्वाः सविशुतः । दहन्ति सर्वभूतानि त्वत्तो निष्क्रम्य हेतय' इति । हेतयो ज्वालाः । जगत्सृष्टिस्त्वत्त एवेत्याह । 'जातवेदस्त्वयैवेदं विश्वं सृष्टं महाद्युते । तवैव कर्म विहितं भूतं सर्वं चराचरम् ।' सर्वस्वरूपात्मकत्वं सर्वाश्रयत्वमाह द्वाभ्याम् । 'त्वय्यापो विहिताः पूर्वं त्वयि सर्वमिदं जगत् । त्वयि हव्यं च कव्यं च यथावत्संप्रतिष्ठितम् । त्वमेव दहनो देव त्वं धाता त्वं बृहस्पतिः । त्वमश्विनौ यमो मित्रः सोमस्त्वमसि चानिल' इति । आप इति भूतान्तरोपलक्षणम् । 'त्वमेव दहन' इत्यनेन लौकिकोऽग्निस्तव विभूतिरित्युक्तम् । एवं च सर्वान्तर्यामित्वं सर्वकर्तृत्वं सर्वभोक्तृत्वं सर्वरूपत्वं सृष्ट्याद्यलौकिककार्यकर्तृत्वं प्राकृताग्नेर्न सम्भवतीत्यलौकिकोऽग्निर्ब्रह्मरूपः पुरुषोत्तमाननाधिष्ठाताऽऽस्यानमित्यादि वैश्वानर इति श्रुतिसूत्रप्रतिपादितः स इति बोध्यम् । न च मुनिना स्वपुत्ररक्षणार्थमेव स्तुतिः कृता तत्र स्वकार्यगौरवादसंभवन्तोऽपि धर्मास्तस्मिन् प्रतिपादिता इति वाच्यम् । 'धर्मज्ञानां मुख्यतमस्तपस्वी शंसितव्रतः । आसीन्महर्षिः श्रुतवान्मन्दपाल इति श्रुतः । स मार्गमाश्रितो राजन्नृषीणामूर्ध्वरेतसाम् । स्वाध्यायवान् धर्मरतस्तपस्वी विजितेन्द्रिय' इति तत्र पूर्वमेवोदितत्वात् तस्याप्तत्वात्स्वकार्येऽप्यन्यथा भाषणं न संभवति । 'अनुभवेन वस्तुतत्त्वस्य कात्स्न्येन निश्चयवान् रागादिवशादपि नान्यथावादी यः स स ' इति चरके पतञ्जलिः । एवं सर्वश्रेष्ठत्वमुपपाद्य त्वमेव दैवीजीवानां पालक इत्याह नृपते इति । नृशब्देन भगवद्भक्तास्तेषां पतिः स्वामी तेषां रक्षक इत्यर्थः । त्वं शुचिः सदा पवित्रोऽसि ' तदाऽहं वल्लभकुले द्विजाचाररतेऽमले'इति ब्रह्माण्डवचनम् । अनेन भवत्स्मरणेन अन्येषामपावित्र्यं नश्यतीति सूचितम् । यद्वा शुचिः शृङ्गाररसरूपोऽपि । ' शृङ्गारः शुचिरुज्ज्वल'इत्यमरः । एतेन रसरूपत्वं श्रीमदाचार्येषु बोधितं तदुपपादितमेव पूर्वम् । किञ्च अग्निमीड इत्यादिमन्त्राणामर्थ उच्यते । अग्निर्वै मुखमि'ति श्रुतेः ' अग्निर्मुखं यस्य तु जातवेदा' इति श्रीभागवतवाक्यात् वैश्वानरस्य पूर्णपुरुषोत्तममुखारविन्दाधिष्ठातृत्वनिश्चया'दग्निर्वै देवानामवमो विष्णुः परम ' इति ब्राह्मणे उक्तत्वात् तस्य प्राधानिकत्वनिश्चयेन ' हुताशनावतारस्त्वि'त्यादिवाक्याच्छ्रीमदाचार्याणां तद्रूपत्वात् ' प्रधानेषु कृतो यत्नः फलवान् भवती'ति महाभाष्यकारैरुक्तत्वादृग्वेदप्रारम्भेऽलौकिकाखिलगुणसागररूपश्रीमद्भगवन्मुखाधिष्ठातृहुताशनरूपश्रीमदाचार्यप्रतिपादकसूक्तमारभ्यम् । तत्र केचिन्मन्त्रा मया व्याख्यायन्ते । तत्राद्यो मन्त्रः । ॐ अग्निमीडे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ १ ॥ एतन्मन्त्रावतरणे— अथातोऽनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामोऽग्निः कस्मादग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयतेऽङ्गं नयती'ति निरुक्तकारैर्गदितम् । तत्र पृथिवीस्थान उक्तवक्ष्यमाणश्रुत्यादिरीत्या पृथिव्यामवतीर्णः श्रीवल्लभाचार्योऽग्निः अग्रणीः सर्वतः श्रेष्ठ इत्यर्थः । यद्वा अग्रं मुख्यं प्रकृष्टं पदं ' यत्र दुःखेने'ति लक्षितं व्यापिवैकुण्ठाख्यं नयतीत्यग्रणीः 'सत्सूद्विषे'त्यादिना क्विप् ' अग्रग्रा-

माभ्या नयतेर्णो वाच्य ' इत्यनेन णत्वम् । अग्रं प्रकृष्टं पुष्टिभक्त्याख्यं फलं यज्ञेपु प्रणीयते प्रापयति । अनेन यज्ञादिकरणेन भक्तिप्रतिबन्धनाशकत्वेन यज्ञादीनां भक्तिमार्गसाधकत्वं सूचितम् । ' यागादौ भक्तिमार्गैकसाधनत्वोपदेशक ' इति वाक्यात् । अङ्गं नयतीति ' अङ्गं गात्रान्तिकोपायप्रतीकेपु प्रधानके ' इति विश्वकोशादङ्गं प्रधानं मुखं नयति भक्तेपु प्रापयतीत्यर्थो बोध्य· । मन्त्रार्थस्तु 'ओमिति ब्रह्म ओमितीदं सर्वं ओंकार एवेदं सर्वं' 'प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः । अपूर्वोऽनन्तरो बाह्योऽनपरः प्रणवोऽव्ययः । सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च । एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् । प्रणवं हीश्वरं विद्यात् सर्वस्य हृदयस्थितम् । सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचती'ति माण्डूक्योपनिषदि 'ओंतद् ब्रह्म ओंतद्वायुः । ओंतदात्मा ओंतत्सत्यम् ओंपुरोर्नम'इत्यादिश्रुतिषु ' ओमित्येकाक्षरं ब्रह्म ' ' प्रणवः सर्ववेदेषु गिरामस्म्येकमक्षरम् ' ' आद्यं तु अक्षरं ब्रह्म त्रयी यस्मिन् प्रतिष्ठिता । वाङ्मयं प्रणवः सर्वं तस्मात्प्रणवमभ्यसेदि' त्यादिस्मृतिषु प्रणवस्य ब्रह्मत्वनिश्चयादओङ्काराग्निशब्दयोर्वाच्यवाचकयोरत्यन्तभेदाभावात् सामानाधिकरण्येनान्वयः । ओंविश्वं विष्णुरित्यादिवत् । किञ्च ' ओंकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कण्ठं भित्त्वा वहिर्यातौ तस्मान्माङ्गलिकावुभावि'ति पुराणान्तरवाक्यान्मङ्गलवाचकत्वेनाग्निशब्देऽन्वयादग्नावपि मङ्गलमयत्वं ज्ञेयम् । किञ्च मङ्गलरूपप्रणवस्य प्रारम्भे मङ्गलकर्तव्यता वेदसूचितेत्यप्येतत् ' ओमभ्यादान ' इति सूत्रादत्र प्लुतः । एवं च अग्निं परब्रह्म श्रीवल्लभाचार्याख्यं ' आचार्यो भगवानग्नि'रिति वाक्यात् । ' हुताशनावतारश्च गोपरूप· सुदर्शनः ।' ' हुताशनावतारस्तु वल्लभो लक्ष्मणात्मज ' इति संमोहनतन्त्रादग्निपदमत्र श्रीमदाचार्यवाचकम् । ईडे अहं स्तौमि । कर्तात्र मन्त्रद्रष्टा । स्तुत्यर्थकधातोः प्रयोगेण श्रीमदाचार्येषु परमैश्वर्यं ध्वनितम् । स्तुतिप्रयोजकीभूतगुणानामीश्वर एव सत्त्वात् प्रथममेव श्रीमदाचार्याग्निस्तवकरणेन सर्वत्र प्राधान्यमस्यैवेति ध्वनितम् । नन्वत्राग्निपदेन आचार्याणां ग्रहणं कथमिति शङ्कानिरासायाचार्यवाचकपदमाह । पुरोहितमिति । 'गर्ग· पुरोहितो राजन् ' 'यदूनामहमाचार्य ' इति श्रीभागवतवाक्याभ्यां पुरोहिताचार्ययो· पर्यायत्वमत पुरोहितं श्रीवल्लभाचार्यमित्यर्थ । अत एवा'चार्यो भगवानग्नि'रित्युक्त श्रीप्रभुचरणै । ननु यज्ञादिनैव सकलसिद्धिः श्रुत्यादिषु निरूपितेति किं श्रीमदाचार्यस्तुत्यादिनेत्यत आह यज्ञस्य देवमिति । यज्ञकर्तारं यज्ञभोक्तारमित्यर्थ. । ' यज्ञभोक्ते'ति वाक्यात् । अथवा यज्ञस्य देवं प्रकाशकमित्यर्थः । ' कर्ममार्गप्रवर्तक ' इति वाक्यात् यज्ञपतित्वेनास्य शरणेन यज्ञोदितफलप्राप्ति सुलभेति भाव. । याजकत्वमप्याह ऋत्विजमिति । याजकमित्यर्थः । ' ऋत्विजो याजकाश्च ये ' इत्यमरसिंहेनोक्तम् । एवं यज्ञकारयितृत्वमुपपाद्य यज्ञकर्तृत्वमाह । होतारं यज्ञकर्तारमित्यर्थ· । यज्ञकर्तेति वाक्यात् । एवं च यज्ञकर्तृत्वं याजकत्वं यज्ञदेवत्वं आचार्यत्वमित्यनेकधर्मविशिष्टत्वं अलौकिकहुताशनत्वज्ञापक संभवति न तु लौकिकाग्नौ । अनेकविविधधर्मवैशिष्ट्यमेव ब्रह्मत्वमिति । ननु

सर्वभजनसमर्थन्वेऽपि श्रीमदाचार्यस्तुतौ किं फलमित्याह रत्नधातममिति। रत्नानि दधातीति रत्नधाः 'क्विप् चे'ति क्विप् तेषु अतिशयितं 'अतिशायने तमबिष्ठना'विति तमप्। भगवद्भजनैकरत्नमित्यभियुक्तोक्तत्वात् भगवद्भजनरत्नपोषकेषु श्रेष्ठमित्यर्थः। निरुक्तौ तु रमणीयधनानां दातृतममित्युक्तं तत्र लौकिकधनानां क्षयिष्णुत्वेन रमयणीयत्वाभावात् भगवत्सेवौपयिकधनदातारमित्यर्थः। यद्वा 'भक्तरत्नपरीक्षक' इति वाक्यात् अन्तरङ्गभक्ता रत्नानि तेषु साक्षादनुभवैकगम्यानन्ददातृषु श्रेष्ठतममित्यर्थः। धाधातोर्दानार्थत्वं निरुक्तकारैरुक्तं तत्र धातूनामनेकार्थत्वात्तत्त्वं बोध्यम्। एतेन श्रीमदाचार्योपसत्तिरेव कर्तव्येति तदैव चानन्दानुभवो दासानामिति सूचितम्॥ ननु भवद्भिरेव स्तूयते किमन्यैः स्तुतः। तत्र प्राचीनैर्महर्षिभिः स्तुतो नूतनैश्च स्तोतव्य इत्याह द्वितीयमन्त्रेण 'अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत। स देवाँ एह वक्षति॥' शिष्टाचारप्रमाणं दर्शयति पूर्वेभिरिति। पूर्वैः प्राचीनैर्वृद्धैर्महर्षिभिरन्तरङ्गभक्तैरीडित इति शेषः। पूर्वशब्दाद्भिस् 'अतो भिस ऐस्' इति शास्त्रेण प्राप्ते सोऽनिवृत्तिः 'बहुलं छन्दसी'तिसूत्रेण। 'ऋषयः सत्यवचस' इत्यमरात् सत्यवचोभिः परमाप्तैः परावरज्ञैर्मन्त्रदर्शिभिरीडितः। एवञ्च स्तुतिप्रयोजकीभूतगुणाख्यना श्रीपूर्णपुरुषोत्तमपरब्रह्मण्येवेति तद्रूपमेव श्रीमदाचार्याणामिति निश्चितम्। अन्यथा परमाप्तैस्तैः स्तुतिविषयीकृतोऽग्निर्न स्यात्। आप्तलक्षणं तूक्तमेव। यदि स्तुतिः स्तुतिप्रयोजकीभूतगुणारोपेण कृता स्यात्तर्हि मिथ्याभाषणत्वेन ऋषित्वं भज्येत्। 'मूर्खो यः सोऽनृतं वक्ती'ति वक्ष्यमाणवाक्यान्मूर्खत्वापत्तिः। एवञ्च ऋषिभिः प्राचीनैः स्तुतिः कृता।

यथा भारते मन्दपालेन कृता। तत्पुत्रैश्च परमर्षिभिः। तत्र मन्दपालस्तुतिस्तु पूर्वमेवोपनिबद्धा। तत्पुत्रनिरूपितस्तुतिश्लोकाः कतिचिदुपन्यस्यन्ते। तत्र स्तुतिकर्तारो मन्दपालेन जरितानाम्न्यां स्वपत्न्यां जरितारि-सारिसृक्व-स्तम्बमित्र-द्रोणेतिनामानश्चत्वारः शार्ङ्गिण उत्पादितास्तेषां ब्रह्मवादित्वमुदितम्। तत्र 'तस्यां पुत्रानजनयच्चतुरो ब्रह्मवादिन' इति। एवञ्च ब्रह्मवादिभिः स्तुतेर्निरूपितत्वात् कृष्णवर्त्मनः परब्रह्मत्वमुररीकार्यम्। अत एव स्तुतिसमाप्तौ श्रीमदग्निनाप्युक्तम् 'ऋषिर्द्रोणस्त्वमसि ब्रह्मैतद्व्याहृतं त्वया। ईप्सितं ते करिष्यामि न च ते विद्यते भय'मिति। एवञ्च परब्रह्मत्वं सिद्धमेव श्रीमद्वैश्वानरस्य। अस्यैव स्तुतिर्निगदिता तैः। तथाहि जरितारिणा 'ऊर्ध्वं चावाञ्च सर्वत्र पृष्ठतः पार्श्वतस्तथा। अर्चिषस्ते महावीर्य रश्मयः सवितुर्यथे'त्यनेन सर्वव्यापकत्वम्। सारिसृक्वस्तुतौ 'माता प्रणष्टा पितरं न विद्मः पक्षा जाता नैव नो धूमकेतो। न नस्त्राता विद्यते वै त्वदन्यस्तस्मादस्मान्पाहि बालांस्त्वमग्ने' इति। अस्य प्रकृतार्थस्तु स्पष्ट एव। अन्तरस्तु श्रीभागवते 'पिता न स स्याज्जननी न सा स्याद्गुर्न स स्यात्स्वजनो न स स्यात्। बन्धुर्न स स्यात्सुहृदो न स स्यान्न मोचयेद्यः समुपेतमृत्यु'मिति वाक्यात्। अत्र माता प्रणष्टा अस्मदुद्धरणेऽसमर्था। पितरं पालकं भगवद्धर्मरक्षकं न विद्मः न जानीमः।

पक्षा जाता नैवेति स्वस्यासामर्थ्यमुक्तम् । पक्षा स्वस्य हितकारिणो नैव जाता । धूमकेतो हे श्रीवैश्वानर । अत्र धूमकेतुपददानेन स्वसेवकशत्रुनाशकत्व ध्वनितम् ' रोपदृक्पातसम्प्लुष्टभक्तद्विड्भक्तसेवित' इति सर्वोत्तमस्तोत्रे । न नत्राता त्वदृते त्वदन्य न नत्राता अस्माकमुद्धारक न कोपि वै निश्चयेन नास्ति । तस्मादस्मान् बालान् सर्वथा असमर्थान् त्राहि रक्ष स्वदर्शनदानेनासुरमतान्ध्यनिवृत्त्या जीवयेति भाव । हे अग्ने, लौकिकाग्निषु एतादृशोद्धारकत्वाभावादग्निशब्देनालौकिकाग्निपरब्रह्म श्रीमद्वल्लभाचार्या एव गृह्यन्त इति भाव । न नत्राता विद्यते वै त्वदन्य इत्यनेन पुष्टिमार्गीयाणामन्याचार्येण नार्थसिद्धिरिति सूचितम् ।

पुनर्लौकिकविलक्षणस्वरूपनिरूपणपूर्वक श्रीमदाचार्यशरण प्रार्थयन्ति । 'यदग्ने ते शिव रूप ये च ते सप्त हेतय । तेन न परिपाहि त्वमार्तान्न शरणेपिण ' । अस्यार्थ । हे अग्ने, यत् ते तव शिव कल्याणकारक भगवदाननाधिष्ठातृश्रीवल्लभाचार्याख्य रूपम् । एतेन जगदमङ्गलनाशकत्व ध्वनितम् ( ध्वन्यते ) । ये च ते सप्त सप्तसंख्याका श्रीमद्गिरिधरादय पौत्रा हेतय ज्वाला प्रदीप्यमाना तेन रूपेण तैश्चेति वचनविपरिणामेनान्वय । 'असति विशेषानुशासने विशेषणविशेष्ययो समानविषयत्व तन्त्र' मित्यनुशासनात् । अस्मान् जीवान् पाहि उद्धरेत्यर्थ ॥ स्तम्बमित्रस्तुतौ ' सर्वमग्ने त्वमेवैकस्त्वयि सर्वमिदं जगत् । त्व धारयसि भूतानि भुवन त्व बिभर्षि च । त्वमग्ने हव्यवाहस्त्व त्वमेव परम हवि । मनीषिणस्त्वं जानन्ति बहुधा चैकधापि च । सृष्ट्वा लोकाँस्त्रीनिमान् हव्यवाह काले प्राप्ते पचसि पुन समिद्ध । त्व सर्वस्य भुवनस्य प्रसूतिस्त्वमेवाग्ने भवसि प्रतिष्ठे'ति सर्वरूपत्व सर्वजगदाधारत्वं भूतधारकत्व सकल्पोपरत्वमग्निरूपत्व हव्यवाहत्व विद्वज्जनवेत्तृत्वमनेकैकरूपत्व सकललोकोत्पादकत्व पालकत्व सहारकत्व निरूपितमिति नानाविधत्व सर्वभवनसमर्थपरब्रह्मान्तरा न सङ्गच्छते ॥ द्रोणस्तुतौ ' सूर्यो भूत्वा रश्मिभिर्जातवेदो भूमेरम्भो भूमिजाता-रसाश्च । विश्वानादाय पुनरुत्सृज्य काले [ स्वमेव ] वृष्ट्या भावयसीह शुक्र । इद वै सद्म तिग्मांशो वरुणस्य परायणम् । शिवस्त्राता भवास्माकमस्मानद्य विमोचये ' त्यलौकिकधर्मविशिष्टपरब्रह्मतया ऋषिभिरीडितो यथा तथा श्रीमदाचार्यावतारानन्तर नूतनै ऋषिभिर्भक्तैरीड्य स्तोतु योग्य । स्तुत्यादिना श्रीमदाचार्या प्रसन्ना भवन्तीति भाव । ' स्वयशोगानसहृष्टहृदयाम्भोजविष्टर ' इति सर्वोत्तमस्तोत्रे निगदित श्रीप्रभुभि । ' किमलभ्य भगवति प्रसन्ने श्रीनिकेतने' इति भागवतवाक्येन श्रीमदाचार्यप्रसादे सर्वेष्टसिद्धिरिति भाव ।

एव स्तुतिकर्तव्यतामुपपाद्य श्रीवल्लभाचार्या अवतीर्य देवान् नाममन्त्राद्युपदिशन्तीत्याह स इति । य सर्वभवनसमर्थपरब्रह्मत्वेनोपात्तोऽलौकिकोऽग्नि श्रीवल्लभाचार्य स एह इहेत्यर्थ । अवतीर्येति शेष । अस्मिन् भूलोकेऽवतीर्य देवान् दैविजीवान् वक्षति शरणमन्त्राद्युपदेश करिष्यतीत्यर्थ । अत्र व्यञ्जनलोप वक्ष्यतीत्यपेक्षिते । यथोक्त बृहद्देवतायाम् ' वर्णस्य वर्णयोर्लोपो बहूना व्यञ्जनस्य वे'ति । ' भराण्यग्ने षड्भि सम्भरन्ती'त्यत्र वर्णस्य लोप अभराणीत्यपे-

क्षिते। 'प्रिया तष्टानि मे कपि'रित्यत्र वर्णयोर्लोपः वृषाकपिरित्यपेक्षिते। 'अयं नाभा वदति वल्गुवो गृहे'। 'दनो विश इन्द्र मृध्रवाच' इत्यादौ बहूनां लोपः अयं नाभानेदिष्ठ इत्यपेक्षिते। 'तत्वा यामी' त्यत्रैकवर्णलोपः यानामीत्यपेक्षिते। 'अघासु हन्यन्ते गाव' इत्यत्र व्यञ्जनलोपः मघास्वित्यपेक्षिते इति तदुदाहरणं बोध्यमित्यर्थः॥ २॥

अतःपरमन्यमन्त्रेण सर्वतःश्रेष्ठ्याद्यनेकधर्माधारत्वनिरूपणपूर्वकं श्रीमदाचार्याणामन्तरङ्गभक्तसाहित्येन प्रादुर्भावमाहुः। 'अग्निर्होता कविक्रतुः सत्यश्चित्रश्रवस्तमः। देवो देवेभिरागमत्' ॥ ३॥ अर्थस्तु। अग्निः श्रीवल्लभाचार्यः। होता तृप्तिकारकः सर्वेषां पालक इत्यर्थः। 'प्रीणनमप्यस्यार्थो भवती'ति महाभाष्यात्। यद्वा श्रीमत्पुरुषोत्तमतृप्तिकारकः। 'व्रजाधिपतिरिन्दिराप्रभृतिमृग्यपादाम्बुजः क्षणेन परितोषितस्तदनुगत्वमेवास्तु मे' इति श्रीमत्प्रभुचरणोक्तेः। अग्निमीड इत्याद्यमन्त्रे होतारमितिपदेन हवनकर्तृत्वमुपपादितमतोऽत्र तृप्तिरूपोऽर्थ एव ज्यायान्। कविः 'संख्यावान् पण्डितः कवि' रित्यमरात् कविः पण्डित इत्यर्थः। 'श्रीभागवतगूढार्थप्रकाशनपरायणः। साकारब्रह्मवादैकस्थापको वेदपारग.। मायावादनिराकर्ता सर्ववादिनिरासकृ'दित्यादिवाक्योक्तं सूचितमेतेन। यद्वा कविः धीमानित्यर्थः। 'धीमान् सूरिः कृती कृष्टि' रित्यमरः। एतेन 'मेधावी छिन्नसंशय'इत्यागमोक्तलक्षणवैशिष्ट्यं ज्ञेयम्। यद्वा लोकोत्तरवर्णनकरणशालीत्यर्थः। क्रतुः क्रतुरूप इत्यर्थः। 'क्रतुर्धर्मश्च यन्मय' इति श्रीभागवत उक्तम्। सत्य इति सत्यात्मक इत्यर्थः। 'यदा यदे' तिवाक्यात् सत्यवचनोऽस्मि। यतः श्रीवल्लभाचार्यनाम्नावतीर्णोऽस्मीति भावः। 'सत्यात्मकं त्वां शरणं प्रपन्ना' इति श्रीभागवते सत्यात्मकत्वं यथा श्रीकृष्णे तथा श्रीमदाचार्याणां तत्त्वमिति भावः। सत्यविशिष्टत्वमनुक्त्वा यत्सत्यपदमुक्तं तेन यज्ञानन्दयोरुपलक्षकं तत्। 'सत्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुत्युक्तं श्रीमदाचार्येषु प्रसिद्धमिति भावः। 'सत्यादिगुणसाहस्रैर्युक्त' मित्यादिवाक्यादन्यगुणानामप्युपलक्षणम्। सत्यविशेषणेन सत्यादयो रूपादभिन्ना एवेति सूचितम्। श्रीमदाचार्याणां गुणगानं कर्तव्यमित्यभिप्रेत्य विशेषणमाह चित्रश्रवस्तममिति। चित्राणि विविधलीलाकर्मानुरूपाणि श्रवांसि श्रवणीयानि नामान्यस्येति चित्रश्रवाः अतिशयेन चित्रश्रवा इति चित्रश्रवस्तम इत्यर्थः। 'अतिशायने तमबिष्ठना' विति तमप्। अतिशयित्वं च विविधावतारापेक्षया बोध्यम्। एतेन श्रीमदाचार्यगुणलीलानुरूपनामश्रवणादि कर्तव्यमवश्यमिति सूचितम्। यद्वा चित्रं श्रवो यशो यस्यासौ चित्रश्रवाः अतिशयेन स इति चित्रश्रवस्तमस्तमित्यर्थः। एवं श्रीमदाचार्याणां सकलाप्यायकत्वं पण्डितत्वं यज्ञमयत्वं सत्याद्यनेकगुणार्णवत्वं परब्रह्मत्वं श्रवणीयलीलागुणनामत्वं निरूप्य शुद्धपुष्टिमार्गीयभक्तिप्रथनाय श्रीमदाचार्याणां नित्यलीलास्थान्तरङ्गभक्तसाहित्येन प्रादुर्भावमाह देवेत्यादि। दिवुधातोः क्रीडार्थकत्वाद्भगवल्लीलाम्बुधिभराक्रान्तरूप इत्यर्थः। तथाच श्रीमत्प्रभुचरणैः 'स्फूर्जद्रासादिलीलामृतजलधिभराक्रान्तसर्वोऽपि शश्व' दित्युक्तम्। देवैः भगवल्लीलामध्यपातिभिरन्तरङ्गभक्तैः सह

आगमत् । भूतले इति शेष । आगमनत्वोक्तौ श्रीमदाचार्याणा व्यापिवैकुण्ठादौ स्थिति सूचिता, नित्यत्व च ध्वनितम् ॥ ३ ॥

एव श्रीमदाचार्याणा सान्तरङ्गभक्ताना प्रादुर्भावमुक्त्वा श्रीकृष्णास्यरूपत्व निरूपयन् प्रार्थयति । यदङ्ग दाशुषे त्वमग्ने भद्र करिष्यसि । तवेत्तत्सत्यमङ्गिर ॥ ४ ॥ अर्थस्तु । हे यदङ्ग यस्य श्रीभगवतोऽङ्ग मुख हे श्रीवल्लभाचार्य, 'अग्निर्वै मुख' मिति श्रुते । 'श्रीकृष्णास्य कृपानिधि'रितिवाक्यात् । 'अग्निर्मुख यस्य तु जातवेदा जात क्रियाकाण्डनिमित्तजन्मा। अन्त समुद्रे विदधत् स्वधातून् प्रसीदता न स महाविभूति'रिति श्रीभागवतवाक्याच्च । एतदर्थस्तु । यस्य श्रीभगवतो मुख जातवेदा अग्नि श्रीवल्लभाचार्य जात भूतले इति शेष । धरण्या प्रादुर्भूत इत्यर्थ । 'जातवेदसे सुनवा'मेति श्रुतौ, जातमिद चराचर स्थित्युत्पत्तिप्रलय'मिति निरुक्तकारैरुक्तम् । तेन ब्रह्मत्वमुक्तम् । जात वेदो धन यस्मादितिव्युत्पत्तौ भगवद्भजनधनरूप प्रादुर्भावकर्तृत्वेन भक्ताना सकलदारिद्र्याभावतया कल्याणकारकत्व श्रीमदाचार्येषु । यद्वा जात वेदो यस्मात्स जातवेदा । 'नि श्वसितमस्य वेदा', 'नि श्वसितमेतद्यदृग्वेद' इति श्रुते, 'दैवोद्धारप्रयत्नात्मे'ति वाक्यात् प्रादुर्भावस्य दैवोद्धारहेतुकत्वात् दैवोद्धारश्च भगवद्भजनरूप कर्मप्रादुर्भावेनेति तदर्थ प्रादुर्भाव इत्याह क्रियाकाण्डनिमित्तजन्मेति । 'कर्माण्येक तस्य देवस्य सेवे'ति पुरुषोत्तमवाक्यात् क्रियाशब्देन भगवत्सेवन तस्या काण्ड तत्प्रतिपादक वेदादिशास्त्र प्रकरण तन्मोहकमतप्रचारतया लुप्त तदुद्धारार्थमेव जन्म प्रादुर्भावो यस्य स । यद्वा कर्ममार्गप्रवर्तनार्थमेव प्रादुर्भाव इत्यर्थ ।'कर्ममार्गप्रवर्तक' इति वाक्यात् । श्रीभागवतार्थस्य दुरवगाहतया 'अर्थ तस्य विवेचितु न हि वरो वैश्वानराद्वाक्पते' रितिवचनात् श्रीमदाचार्याणामेव याथार्थ्यप्रकाशकत्वम्, अतस्तत्पदयाथार्थ्य प्रकटयन् जात इत्याह अन्त समुद्र इत्यादि । अत्र समुद्रशब्दस्तत्सदृशे लाक्षणिक । सादृश्य च गाम्भीर्यवत्त्वेन 'श्रीभागवतपीयूषसमुद्रमथनक्षम' इति वाक्यात् समुद्रशब्देन श्रीभागवताख्यसमुद्रो बोध्य । तस्मिन् स्वीयान् स्वाभिमतान् धातून् शब्दान् प्रपचन् याथार्थ्य प्रकटयन् 'सर्वं धातुजमाहे' त्यभियुक्तोक्तत्वाद्धातूनित्युक्तम् । गोप्यत्वेन वर्णन च 'परोक्षप्रिया इव हि देवा' इति श्रुतेर्वाच्यम् । यद्वा अन्त समुद्रे जगति स्वीयाना भक्ताना धातून् शरीरान् प्रपचन् शुद्धीकुर्वन् । 'धातुर्देहरसादिक' इत्यनेकार्थ । सर्वस्वनिवेदनेन तेषामपक्ष निरस्यन्निति भाव । स महाविभूति श्रीमत्पुरुषोत्तमो नोऽस्माकमुपरि प्रसीदतामित्यर्थ । एवञ्चात्राङ्गपदेनाननस्य ग्रहणम् । एव श्रीमदाचार्याणा श्रीकृष्णास्यरूप मुक्त्वा श्रीकृष्णानन्ददातृत्वमभिप्रेत्याह दाशुषे । 'दाश्वान्साह्वानि'ति सूत्रेण निपातितोऽयम् । भगवदानन्ददात्रे तुभ्यं श्रीवल्लभाचार्याय नम । 'अदेयदानदक्षश्चे'तिवाक्यात् । यन्नामावर्तन कुर्वता 'कृष्णाधरामृतास्वादसिद्धिरत्र न सशय' इत्युक्त श्रीमत्प्रभुभि । 'नम स्वस्ती'ति सूत्रेण नम शब्दयोगे चतुर्थीविधानात्तदध्याक्षिप्यते । हे अग्ने श्रीवल्लभाचार्य, भद्र करि-

नन्वग्निरूपत्वं सूर्यादिलोकस्थदेवाना सम्भवति तद्व्यावृत्त्यर्थमाह नमः पृथिव्यै । पार्थिवरूपधारणेनास्मिँल्लोके प्रादुर्भावः सूचितः । किमर्थं प्रादुर्भाव इत्याशङ्कानिरासायाह नम ओषधीभ्यः । दैवीजीवाना भवरोगनिवारणार्थमोषधीरूपम् । वस्तुतस्तूद्धारार्थमिति यावत् । ननु हिरण्यकशिपुमारणेन श्रीनृसिंहस्यापि प्रह्लादोद्धारकत्व तादृशरीतिव्यावृत्त्यर्थमाह नमो वाचे। अस्मिन्नवतारे उद्धारस्तु वाण्या वचनद्वारा भक्तिमार्गोपदेशेन वाण्योद्धारे

---

ष्यसि ब्रह्मसम्बन्धादिना सर्वेगबनिवर्तनेन साक्षात्पुष्टिपुरुषोत्तमसेवौपयिक कल्याण जीवं करिष्यसीत्यर्थ । करिष्यसीत्यनेन तेषामसामर्थ्यं ध्वनितम् । 'यमेवैष वृणुते तेन लभ्य' इति श्रुते । यद्वा मायामतनिरसनेन भक्ति ब्रह्मवादस्थापनरूप कल्याण करिष्यसीत्यर्थ । ननु दुर्घटत्वात्पुरुषोत्तमप्राप्ते साधनमन्तरा कथ तत्प्राप्तिस्तत्राप्तिश्चेति तत्राह तवेत्यादि । तव तत् 'सकृदेव प्रपन्नाये' त्यादि 'यदा यदा हि धर्मस्ये' त्यादि वाक्यम् । सत्यम् त्रैकालिकाबाध्यम् । तच्छब्दस्य बुद्धिस्थपरामर्शकत्वात् अस्तीत्य याहार । सत्यप्रतिज्ञ इत्युक्त सर्वोत्तमे । सत्यलक्षण तु 'प्रधान धर्मबीज यद्धित पूत प्रिय नृणाम् । गम्भीर मधुर वाक्य सत्य तच्चोत्तम विदु । लुब्धोऽर्थार्थी छली धूर्तोऽसमर्थो ग्रामिक प्रिय । मूर्खो य सोऽनृत वक्ति तद्दोषविरही तनु' रिति । कीदृशम् ? सत्यम् इत् श्रीमत्पुरुषोत्तमप्रापक 'इण् गतौ' णिजन्तात् क्विप् । 'ह्रस्वस्ये'ति तुक् । यद्यपि 'सकृदेवे'ति 'यदा यदे'ति च वाक्य पुरुषोत्तमस्य तथापि श्रीमदाचार्याणा भगवन्मुखरूपत्वात्तवेत्युक्तम् । श्रीमदाचार्याणा भवता लाभे प्रपन्नत्व भक्ताना सिद्ध्यति, ते तु समारासक्तनया क्षणमपि गृहादि त्यक्तुमसमर्था इति तेषामुद्धारार्थं तत्निकट गमनशीलोऽसीत्यभिप्रेत्य सम्बोधयति हे अङ्गिर हे गमनशालिन्, पृथ्वीपावनार्थं भक्तानामुद्धारार्थमित्यर्थ । यद्वा 'प्रतिक्षण निकुञ्जस्थलीलारसप्रपूरित' इति वाक्यात् कुञ्जात्कुञ्जान्तरगमनशील । यद्वा 'तत्सारभूतरासस्त्रीभावपूरितविग्रह' इति वाक्यात् रासनृत्यशालिन्, अङ्गेर्गत्यर्थादङ्गिरा इत्यौणादिकसूत्रेणासिप्रत्ययो रुडागमश्च निपातित । यद्यप्यय ऋषौ रूढस्तथापि तदनुपयोगाद्यौगिक एवेत्यर्थ । एवञ्च श्रीमदाचार्याणा श्रुतिभारतादिवचनै पूर्णपुरुषोत्तमत्वम् । निषधादिक तु लौकिकाग्नेरिति । एतेना'ग्ने शिवस्य माहात्म्य तामसेषु प्रकीर्तित' मित्यपि व्याख्यातमिति दिक् ।

प्रकृतमनुसराम —'पृथिवी वैश्वानर' इति निरुक्तकारोक्ते श्रीमदाचार्याणा पृथिवीत्वेन, 'वस्तुत कृष्ण एव' त्यादिवाक्यात् पुरुषोत्तमत्वेन च, 'यस्य पृथिवी शरीर'मितिश्रुत्या तेषा पृथिवीशरीरत्वेन 'आनन्दमात्रकरपादमुखोदरादि' । 'आनन्दमयोऽभ्यासात्' । 'अरूपवदेव हि तत्प्रधानत्वात्' इत्यादिश्रुतिसूत्रस्तम्भै शरीरशरीरिणोरभिन्नत्वेन पृथिव्या इत्युक्तमित्यभिप्रेत्याहु पार्थिवरूपधारणेनेत्यादि । प्रादुर्भावात्पूर्वं श्रीकृष्णाननरूपत्वमिति भाव । बहुवचन तु विविधरोगोपशामकत्वनानेकौषधीत्वविवक्षयेति भाव । उद्धारार्थमिति । तथा च श्रीमदाचार्याणा 'दैवोद्धारप्रयत्नात्मे'ति नाम । वाग्रूपधारणमुद्धारार्थमित्यभिप्रेत्याहु अस्मिन्नवतार इत्यादि । 'दयया

कथं सामर्थ्यमित्याकाङ्क्षायामाह नमो वाचस्पतये । स्वस्वरूपं स्वयमेव प्रकाशितं 'अर्थं तस्य विवेचितु'मिति श्लोके पुरुषोत्तममुखारविन्दाधिष्ठातृरूपम् । ननु मुखारविन्दाधिष्ठातृरूपकथनेनांशावतारत्वं स्यादित्याशङ्कानिरासायाह नमो विष्णवे । गुणावतारविष्णुरूपव्यावृत्त्यर्थमाह बृहते करोमि । व्यापकाय पूर्णपुरुषोत्तमरूपाय । ऋग्वेदे तु 'महते करोमी'ति पाठोऽस्ति, तस्मिन्नपि पाठे विष्णवे महते महाविष्णवे पुरुषोत्तमस्वरूपायेत्यर्थः । एतादृशविशेषणविशिष्टाय श्रीवल्लभाचार्याय नमः करोमि । नमः पृथिव्यायिति विशेषणेन प्राकृतदेहशङ्का प्राप्ता सापि परिहृता । एतादृशविशेषणविशिष्टाः श्रीमदाचार्या एव नान्ये।

ननु 'नमो ब्रह्मण' इति श्रुतेरर्थान्तरस्यापि प्रतीयमानत्वाच्छ्रीमदाचार्यपरत्वेनैव कथं प्रतिपाद्यते, पूर्वं केनापि न प्रतिपादितमितिचेन्न। 'यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये'ति वाक्येन यथा भगवतो भक्तानां भावनानुसारस्वरूपाकारकत्वं तथा देवस्यापि शब्दब्रह्मात्मकभगवद्रूपत्वाद्भक्तानां भावनानुसारेण स्वार्थप्रदर्शकत्वम्। अन्यथा निरुक्तौ 'चत्वारिशृङ्गे'ति श्रुतिर्यज्ञपरत्वेन व्याख्याता। सैव महाभाष्यकारैर्व्याकरणशास्त्रपरत्वेन व्याख्याता। उभावपिप्रामाणिकावुभौ। (ए)कतरस्याप्यर्थस्याप्रामाण्यं वक्तुं न शक्यते। तस्मात् यस्मिन् शास्त्रे श्रुत्यर्थो येन रूपेण प्रतिपादितस्तस्मि

---

निजमाहात्म्यं करिष्यन् प्रकटं हरिः । वाण्या यत्र तदा स्वास्यं प्रादुर्भूतं चकार हे' तिवाक्याद्भगवता वचनद्वारैव स्वमाहात्म्यख्यापनार्थमेव श्रीमदाचार्याणां प्रादुर्भावः कारितो भगवन्माहात्म्यप्राचुर्यवर्णनत्वेन वाग्रूपत्वमितिभावः । वाचस्पतय इति । 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेष्वि'तिसूत्रेण षष्ठीविसर्गस्य सत्वम् । अस्मादेव ज्ञापकात् षष्ठ्या अलुक् । 'पातौ च बहुल'मिति सूत्राद्बहुलमित्यनुवर्तते । तेन वाक्पतिरिति वाग्रूपत्वं वाक्पतित्वमुभयं सम्भवति, ब्रह्मणि सर्वभवनसमर्थत्वात् । स्वस्य रूपमिति वाक्पतित्वमित्यर्थः । 'वाक्पतिर्विबुधेश्वर' इति वाक्यात् । मुखारविन्दाधिष्ठातृरूपमिति 'निःश्वसितमस्य वेदा' इति श्रुतेर्वेदप्रादुर्भावकत्वेन तत्त्वं सुवचमितिभावः । अंशावतारत्वमिति । अवयवाश्रितदधिष्ठातृत्वस्याप्यंशत्वमितिभावः । गुणावतारेति । 'सत्त्वं रजस्तम इति प्रकृतेर्गुणाः स्यु'रिति श्रीभागवतवाक्योक्तगुणावतारव्यावृत्त्यर्थमितिभावः । व्यापकायेति । पूर्वोदाहृतवचनान्यत्र प्रमाणानि । महत इति । अस्य बृहच्छब्दस्यार्थ एक एव । महद्बृहतोश्च श्रेष्ठवाचित्वात् । तदेवाहुः पुरुषोत्तमस्वरूपायेति । 'वस्तुतः कृष्ण एवे'ति वाक्यात् । नम इति । 'नमो ब्रह्मण' इत्यादिषु पुनः पुनर्नमःपदोच्चारणेन नमनातिरिक्तमन्यत्कर्तुं न शक्यत इति ध्वन्यते । नान्य इति । अन्याचार्येष्वेतादृशधर्माभावादितिभावः । 'शब्दब्रह्माभवन्मय'मिति वाक्यात् 'वेदो नारायणः साक्षात्स्वयम्भूरिति शुश्रुम' इत्यादिवचनाच्च शब्दब्रह्मणो भगवतो भक्तेच्छानुसारार्थप्रकाशकत्वमित्यभिप्रेत्याहुः शब्दब्रह्मात्मकेत्यादि । तदेवोपपादयन्ति अन्यथेत्यादिना । अन्यथा व्याख्यानुसारार्थप्रदर्शकत्वाभावे ।

च्छात्रे स एवार्थ इत्यर्थः । अत एव विद्यारण्येन 'चत्वारिशृङ्गे'ति श्रुतिः साक्षादृपिप्रोक्तं वेदाङ्गार्थमपि दूरीकृत्य मणत्रपरत्वेन व्याख्याता। तथा हि । 'चत्वारि शृङ्गाः त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य। त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यांऽआविवेश ' । निरुक्तकारास्त्वेवमर्थमाहुः चत्वारिशृङ्गा इति । वेदा वा ये त उक्तास्त्रयोऽस्य पादा इति सवनानि त्रीणि । द्वे शीर्षे प्रायणीयोदयनीये। सप्त हस्तासः सप्त छन्दांसि। त्रिधा बद्धस्त्रेधा बद्धो मन्त्रब्राह्मणकल्पैः । वृषभो रोरवीति । रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिः । 'यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति । महो देव इत्येष हि महान्देवो यद्यज्ञो मर्त्यां आविवेशेत्येष हि मनुष्यानाविशति यजनाय तस्योत्तरा भूयसे निर्वचनाय' ।

महाभाष्यकारास्त्वेवमर्थमाहुः। चत्वारि शृङ्गाः शृङ्गाणि चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च। त्रयो अस्य पादाः त्रयः काला भूतभविष्यद्वर्तमानाः। द्वे शीर्षे द्वौ शब्दात्मानौ नित्यः कार्यश्च । सप्त हस्तासो अस्य सप्त विभक्तयः । त्रिधा बद्धः त्रिषु स्थानेषु बद्धः उरसि कण्ठे शिरसीति । वृषभो वर्षणात् । रोरवीति शब्दं करोति । कुत एतत् ।

---

द्वितीयव्याख्यानेतिपदस्यानन्तरमित्युभयोर्व्याख्यानमसङ्गतं स्यादिति शेषो बोध्यः । अत एवेति । भक्तेच्छानुसारिवेदार्थप्रादुर्भावादेवेत्यर्थः । ऋषिप्रोक्तमिति । शाकटायनयास्काद्युक्तमित्यर्थः । वेदाङ्गार्थमिति । निरुक्तव्याकरणयोर्वेदाङ्गत्वात्तदुक्तमित्यर्थः । तदेव वेदार्थस्य भक्तेच्छानुसारिव्याख्यानपरत्वेनेतिबोधनार्थं निरुक्तकारादीनामर्थमनुवदन्ति तथाहीत्यादिना । तत्र पूर्वं निरुक्तकाराणां व्याख्यानमनुवदन्ति निरुक्तकारास्त्वित्यादिना । सवनानि त्रीणीति । नीचमध्योच्चोच्चारणरूपाणीत्यर्थः । प्रायणीय इति । इष्टी एते । छन्दांसीति । गायत्र्युष्णिगनुष्टुब्बृहतीपङ्क्तित्रिष्टुब्जगत्यश्छन्दांसि । मन्त्रेत्यादि । अनुष्ठेयार्थप्रकाशनपरो मन्त्रः । मन्त्रब्राह्मणभेदस्तु—त्रैस्वर्येण पाठो मन्त्रः । ऐकस्वर्येण पाठो ब्राह्मणम् । श्रौतस्मार्तप्रतिपादनपरः कल्पः ।

एवं निरुक्तकाराणामर्थमनूद्य महाभाष्यकाराणामनुवदन्ति महाभाष्यकारास्त्वित्यादिना । तत्र शब्दशास्त्रप्रतिपाद्यस्य वृषभत्वेन निरूपणं कुर्वन्ति महाभाष्यकाराः चत्वारीत्यादिना । पदजातानीति । परा-पश्यन्ती-मध्यमा-वैखरीरूपाणि । अत एवाग्रे 'निपाताश्चे'ति चकारः सङ्गच्छते । नामाख्यातेति । नामशब्देन सुबन्तम् । नमन्त्याख्यातार्थंप्रति विशेषणीभवन्तीति व्युत्पत्तेः ।आख्यातं तिङन्तम् । उपसर्गनिपातयोः पृथगुपादानं गोबलीवर्दन्यायेन । त्रयः काला इति । लडादिविषयाः वर्तमानभूतभविष्यद्रूपाः । नित्यः कार्यश्चेति व्यङ्ग्यव्यञ्जकभेदेन । तत्र व्यङ्ग्य आन्तरङ्गः । व्यञ्जको वैखरीरूपः । सप्त विभक्तय इति । सुप इत्यर्थः । केचित्तु तिङामपरिग्रहप्रसङ्गान्पर्यवसानेन सह सप्त कारकाणि विभक्तिपदाभिधेयानीति व्याचक्षते । उरसीति । 'हकारं पञ्चमैर्युक्तमन्तस्थाभिश्च संयुतम् । औरस्यं तं विजानीया'दितिशिक्षायाम् । कण्ठे इति । आकारादयः । शिरसीति । 'स्युर्मूर्धन्या ऋटुरषा' इति शिक्षायां मूर्धन्या इत्यर्थः ।

रौतिः शब्दकर्मा । महो देवो मर्त्यामाविवेशेति महान् देवः शब्दः मर्त्या मरणधर्माणो मनुष्यास्तानाविवेश । महता देवेन नः साम्यं स्यादित्यस्येयं व्याकरणम् ।

रामानुजाचार्यानुयायिनस्त्वेवमर्थमाहुः चत्वारीति । यस्य परमात्मनश्चत्वारो वेदाः शृङ्गाणि । नित्यबद्धमुक्तरूपास्त्रयोपि पादाः । शुद्धसत्त्वं त्रिगुणसत्त्वं च द्वे शिरसी। महदादयः प्रकृतिविकृतयः सप्त हस्ताः । वृषभः श्रेष्ठो वासुदेवः त्रिधा संकर्षण-अनिरुद्ध-प्रद्युम्नतया त्रिधा बद्धः भूतः सन् सर्वं वस्तु रोरवीति । 'रु शब्दे' इति धातुः। व्यवहरति नामरूपवत्करोतीत्यर्थः । तादृशो महोदेवो मर्त्यान् चेतनाचेतनपदार्थान् अन्तरात्मतया प्रविवेशेत्यर्थः ।

विद्यारण्यस्त्वेवमर्थमाह । शृङ्गाः प्रणवस्य यान्यकारादीनि तानि चत्वारि अस्य प्रणवस्य प्रतिपाद्यन्ते । प्रणवरूपस्य ब्रह्मणस्त्रय पादाः पद्यते गम्यते ब्रह्मतत्त्वमेभिरिति पादाः। अध्यात्मं विश्वतैजसप्राज्ञाः । अधिदैवं विराड्ढिरण्यगर्भाऽव्याकृतानि । द्वे शीर्षे उत्तमाङ्गस्थाने

---

शिरः कण्ठ इत्यनेन मुखान्तर्गतकण्ठादिस्थानमुपलक्ष्यते । वर्षणादिति । वर्षतीति वृषभः। कामानां ज्ञानपूर्वकानुष्ठानफलत्वात् । महान्देव इत्यादि । महान् परब्रह्मस्वरूपो देवोऽन्तर्यामी। रूपशब्दो मर्त्येष्वाविष्ट इत्यर्थः । तदादेशफलमाह महतेति । परेण ब्रह्मणेत्यर्थः । साम्यं-सायुज्यम् । तदुक्तं भर्तृहरिणा 'अपि प्रयोक्तुरात्मानं शब्दमन्तरवस्थितम् । प्राहुर्महान्तमृषभं येन सायुज्यमिष्यत ' इति ।

रामानुजाचार्यानुयायिरचितमर्थमनुवदन्ति रामानुजेत्यादि । नित्यबद्धमुक्तरूपा इति । त्रिविधा जीवा इत्यर्थः । एतेषां लक्षणानि एतद्देशीयानां ग्रन्थे स्पष्टानि ग्रन्थबाहुल्यभयादप्रकृतत्वाच्च न लिख्यन्ते । शुद्धसत्त्वमिति । रजस्तमःशून्यद्रव्यवर्तिसत्त्वं शुद्धसत्त्वम् । त्रिगुणसत्त्वमिति । मिश्रितसत्त्वमित्यर्थः । तन्नित्यविभूतावुपचारात्तत्प्रवर्तकेश्वरे च रजस्तमःसहवर्तिसत्त्वं मिश्रसत्त्वम् । महदादय इति । प्रकृतयश्च ता विकृतयश्चेति प्रकृतिविकृतयः सप्त । तथाहि महत्तत्त्वमहंकारस्य विकृतिश्च प्रकृतेः । एवमहंकारतत्त्वं तन्मात्राणामिन्द्रियाणां प्रकृतिर्विकृतिश्च महतः। एवञ्च पञ्चतन्मात्राणि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्येति भावः । श्रेष्ठ इति। 'वृषभो वृष' इति विष्णुसहस्रनामवाक्याद्वृषभपदेन श्रेष्ठो वासुदेवो गृह्यत इति भावः । तत्र षड्गुणपूर्णो वासुदेवः । सङ्कर्षणेत्यादि । ज्ञानबलाभ्यां संकर्षणः । ऐश्वर्यवीर्याभ्यां प्रद्युम्नः। शक्तितेजोभ्यामनिरुद्ध इति गुणविभागेन भेद इति भावः । चेतनाचेतनपदार्थ इत्यादि । तेन कार्यकल्पना बोध्या । एवञ्च सूक्ष्मचिदचिद्विशिष्टं ब्रह्म कारणम् । स्थूलचिदचिद्विशिष्टं ब्रह्म कार्यमिति कारणादनन्यत्कार्यमिति विशिष्टाद्वैतमेतेषां संप्रदाय इति सूचितम् ॥

विद्यारण्योदितव्याख्यानमनुवदन्ति विद्यारण्यस्त्वित्यादि । अकारादीनीति । अकारोकारमकारा नादश्चेत्यर्थः । अध्यात्ममित्यादि । आत्मनि अधीत्यध्यात्मम् । विभक्त्यर्थेऽव्ययीभावः।

चिदचिद्रूपे द्वे शक्ती । तथैवास्य ब्रह्मणो भूरादयः सप्त लोकाः हस्तासः हस्ताः हस्तस्थानीयाः । त्रिधाबद्धः अकारोकारमकारेषु विश्वतैजसप्राज्ञैः विराड्हिरण्यगर्भाव्याकृतैश्च त्रिप्रकारेण सम्बद्धः वृषभः प्रणवो महस्तेजोरूपं ब्रह्मतत्त्वम् । रोरवीति अतिशयेन प्रतिपादयति । तदेव प्रतिपाद्यत्वं स्तुतिः क्रियते । महोदेवः परमेश्वरो मर्त्यान् मनुष्यदेहान् । आविवेश सर्वतः प्रविष्टः 'स एष इह प्रविष्ट आनखाग्रेभ्य' इति श्रुत्यन्तरात् ।

रामानुजाचार्यमतस्थैस्तु वासुदेवपरत्वेन व्याख्यातम् । तस्य च व्यूहान्तर्गतत्वात्तदपेक्षया पुरुषोत्तमपरत्वेन प्रतिपादनं सुवचम् । विद्यारण्यप्रतिपादितार्थे प्रणवपरत्वात् प्रणवस्य शब्दब्रह्मत्वेन पुरुषोत्तमप्रतिपादकत्वं पुरुषोत्तमस्य प्रतिपाद्यत्वं प्रतिपादकापेक्षया प्रतिपाद्यस्योत्कृष्टत्वात् । 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्य', इत्यनुशासनात् 'क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति वाक्याच्च । वस्तुतस्तु पुष्टिलीलाविशिष्टपुरुषोत्तमपरत्वेनैव व्याख्यानमुचिततरम् ।

तथाहि चत्वारिशृङ्गा इति । 'चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्यां आविवेश ॥' अस्य लीला-

---

अन्नमयकोशव्यष्ट्युपहितं चैतन्यं विश्वः । विज्ञानमयादिकोशत्रयव्यष्ट्युपहितं चैतन्यं तैजसो भवति । कोशादीनां व्यष्टिर्निकृष्टोपाधितया मलिनसत्त्वप्रधाना । एतदुपहितं चैतन्यमल्पत्वानीश्वरत्वादिगुणकं प्राज्ञ इत्युच्यते । एकाज्ञानावभासकत्वादस्य प्राज्ञत्वम् । चतुर्विधशरीरसमष्ट्युपहितं चैतन्यं वैश्वानरो विराडित्युच्यते । कोशत्रयसमष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः । चिदचिद्रूपे इति । जीवप्रकृतिरूपे इत्यर्थः ।

एवंविधप्रकानेकविधेच्छानुसारेण वेदार्थस्य स्फूर्त्या नमो ब्रह्मण इति श्रुतिरस्माभिः श्रीमदाचार्यपरत्वेन व्याख्यायते । तत्र रामानुजानुयायिविद्यारण्यव्याख्यानापेक्षयाऽस्मद्व्याख्यानस्य ज्यायस्त्वमत्रपक्षापेक्षयाऽक्षयिनः पटीयस्त्वात् प्रतिपादकापेक्षया प्रतिपाद्यस्य चेत्याहुः रामानुजाचार्यमतस्थैस्त्वित्यादि । पुरुषोत्तमस्योत्कृष्टत्वे प्रमाणमाहुः सर्वे वेदा इत्यादि । एतच्छ्रुत्यर्थभूतं श्रीगीतावाक्यं प्रमाणत्वेनोपन्यस्यन्ति वेदैश्चेत्यादिना । अहमेवेत्यनेनान्यव्यवच्छेदकैवकारेण मुख्यव्यावृत्त्यान्यपरत्वं नास्तीति सूचितम् । एतेन पुरुषोत्तमपरव्याख्यानस्य युक्तिमत्त्वं बोधितम् । तत्र पुरुषोत्तमस्वरूपं निर्दिशन्ति क्षरः सर्वाणीत्यादिना ।

योऽस्यार्थस्तमवोचाम पुरुषोत्तमवर्णनपूर्वकं पुरुषोत्तमप्राप्तिः श्रीमदाचार्यशरणेनैवेत्याशयेन श्रुतिं व्याकुर्वन्ति तथाहीत्यादिना । श्रुतिं निरूप्य अस्येति । इयं श्रुतिः साक्षात्पुष्टिपुरुषोत्तमलीलामध्यपातिन्यत प्रत्यक्षतो भगवन्तं निर्दिशतीति भावः । चत्वारीति । शृङ्गा इत्यत्र 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजाल' इतिसूत्रेण डाप्रत्ययः । चत्वारि शृङ्गाणि कस्या व्यक्तेरित्याकाङ्क्षायां यासां तानि ता व्यापिवैकुण्ठस्था गावः इत्याक्षिप्यते इत्यभिप्रेत्याहुः चत्वारि शृङ्गा

स्थभगवतः पुरुषोत्तमस्य चत्वारि शृङ्गाः चत्वारि शृङ्गाणि यासां ताश्चत्वारिशृङ्गाः चतुःशृङ्गविशिष्टा गावः व्यापिवैकुण्ठाख्यगोलोकस्था इत्यर्थः । गवां चतुःशृङ्गत्वं 'गावो यत्र भूरिशृङ्गा' इति श्रुतिव्याख्याने वक्ष्यामि । अथवा चत्वारि यूथानि शृङ्गाः प्रधानानि नित्यसिद्धायूथम्, श्रुतिरूपायूथम्, ऋषिरूपायूथम्, तुर्यप्रियायूथम्' च प्रधानाः । 'यूथं तिर्यक्समूहेपि वृन्दमात्रेपि भाषित'मिति विश्वः । 'शृङ्गः प्रधानमिच्छन्ती'त्यनेकार्थः । लीलास्थपुरुषोत्तमस्य प्राप्तिप्रकारमाह । त्रयः पादाः पद्यते लीला याभिरिति पादाः साधनरूपाः तनुजावित्तजामानसीसेवाः । भक्तिं विना सेवा न सम्भवतीति तदर्थं सेवासाधिके मुख्यभक्ती आह । द्वे शीर्षे सख्यात्मनिवेदने भगवत्कृतिसाध्यत्वेन शीर्षपदोपादानम् । अत एवाभ्यर्हितत्वाच्छ्रवणादिसप्तभ्यः पूर्वप्रतिपादनम् ।

---

यासामित्यादि । गवां चतुःशृङ्गत्वाप्रसिद्धेरितिसन्देहनिरासायाहुः नित्यसिद्धायूथमित्यादि । बृहद्वामनीयपुराणे श्रुतिभिर्विज्ञापितः पूर्णपुरुषोत्तमः स्वं रूपं दर्शयामास । तत्र 'नानारासरसोन्मत्तं यत्र गोपीकदम्बकम् । ततः कदम्बमध्यस्थः किशोराकृतिरच्युत'इति वाक्योक्तयूथम् । पद्मपुराणेपि श्रीकृष्णं प्रति व्यासवचनम् 'त्वामहं द्रष्टुमिच्छामि चक्षुर्भ्यां मधुसूदने'त्यारभ्य प्रार्थितः श्रीकृष्ण उवाच । 'व्यास त्वां दर्शयिष्यामि स्वरूपं वेदगोपितम् । गोपकन्यावृतं गोपैर्हसन्तं गोपबालकै'रित्यादिवाक्यैर्नित्यसिद्धायूथम् । बृहद्वामनीये भगवद्रूपदर्शनानन्तरं श्रुतय ऊचुः 'कन्दर्पकोटिलावण्ये त्वयि दृष्टे मनांसि नः । कामिनीभावमासाद्य स्मरक्षुब्धान्यसंशयम् । यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ति रमणं मत्वा चिकीर्षाजनि नस्तथा । श्रीभगवानुवाच । आगामिनि विरिञ्चौ तु जाते सृष्ट्यर्थमुद्यते । कल्पं सारस्वतं प्राप्य व्रजे गोप्यो भविष्यथे'तिवचोभिः प्रतिपादितं श्रुतिरूपायूथम् । अत्र 'यथा त्वल्लोकवासिन्यः कामतत्त्वेन गोपिकाः । भजन्ती'त्यनेनापि नित्यसिद्धा निरूपिताः । ऋषिरूपायूथस्तु पाद्मे उत्तरखण्डे 'पुरा महर्षयः सर्वे दण्डकारण्यवासिनः । दृष्ट्वा रामं हरिं तत्र भोक्तुमैच्छन् सुविग्रहम् । ते सर्वे स्त्रीत्वमापन्नाः समुद्भूताश्च गोकुले । हरिं संप्राप्य कामेन ततो मुक्ता भवार्णवा'दिति निरूपितम् । तुर्यप्रियायूथस्तु तुर्यश्चतुर्थो यः प्रियाया यूथः । 'जनिष्यते तत्प्रियार्थं सम्भवन्तु सुरस्त्रिय' इति श्रीभागवतपद्येन तस्य भगवतः प्रिया श्रीराधा तत्सेवार्थं सुरस्त्रियः सम्भवन्ति' त्यर्थः केनचिन्निरूपितः । तथोक्तं पाद्मे 'गोप्यस्तु श्रुतयो ज्ञेया ऋषिजा गोपकन्यकाः । देवकन्याश्च राजेन्द्र न मानुष्यः कथञ्चने'ति चतुर्विधत्वमुक्तम् तत्र श्रुतयः श्रुत्यवतारभूताः गोपकन्याशब्देन नित्यसिद्धा ज्ञेयाः मानुष्यत्वनिषेधात् । इदं चान्यरीत्योदितम् । वस्तुतस्तु 'नमत कृष्णतुर्यप्रिया'मिति श्रीयमुनाष्टके श्रीमदाचार्यचरणैरुक्ततया तुर्यप्रिया श्रीयमुना । तस्या यूथ इत्यर्थः । पद्यत इति 'पद गता'वित्यस्येदम् । पादा इति कर्मणि घञ् । मानसीसेवायाः फलरूपत्वम् । उत्कर्षेनामाधने इतरे । तथोक्तम् 'कृष्णसेवा सदा कार्या मानसी सा परा मते'ति श्रीमदाचार्यचरणैः । एतद्विवृतौ मानसी परा फलरूपेत्यर्थ इति श्रीप्रभुचरणाः । भक्तिमित्यादि ।

ननु सख्यस्योभयनिष्ठत्वाज्जीवानां कथं तत्सम्भवतीत्याशङ्कानिरासायाह । सप्त-
हस्तासः श्रवणादयः सप्त । ते जीवकृतिसाध्याः तत्करणेन भगवतो दासोपरि स्नेहसम्पा-

---

'स्नेहो भक्तिरिति प्रोक्त' इति पञ्चरात्रात् 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्रात् 'केवलेन हि भावेने'त्यादिवाक्याच्च भक्तिशब्दप्रवृत्तिः स्नेह एव । श्रवणादिषु भक्तिशब्दो लाक्षणिकः । तथा च भक्तिहंसे 'भक्तिपदशक्तिः स्नेह एव श्रवणादिषु तद्धेतुत्वेन भाक्त' इत्युक्तं श्रीप्रभुचरणैः । 'मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिये'ति लक्षणं लक्षणायाः । विस्तरस्तु बाहुल्यभयान्नेह तन्यते ।

श्रवणादय इति । 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदन' मिति श्रीभागवतोक्ता दास्यन्ता इत्यर्थः । श्रवणादीनां निगमनिरूपितत्वाभावसन्देहकान्दिशीकाः केचन सन्ति तेषां संशयनिरासाय श्रवणादिनवविधप्रतिपादनश्रुतयः प्रदर्श्यन्ते । तत्र प्रायशः श्रीमदाचार्यपरत्वेनापि व्याख्यायन्ते । तथाहि 'प्रतत्ते अद्य शिपिविष्टनामार्यः शंसामि वयुनानि विद्वान् । तं त्वा गृणामि तवसमतव्यान् क्षयन्तमस्य रजसः पराके' ॥ १ ॥ अस्यार्थः । हे शिपिविष्ट शरीरान्तर्यामिन् ! तत् ते तव नाम अथेदानीं प्रशंसामि कीर्तयामि । आर्यः श्रेष्ठस्त्वं सत्याद्यनन्तगुणार्णवत्वात् 'सत्यादिगुणसाहस्रैर्युक्त'मिति तत्त्वप्रदीपे श्रीमदाचार्यचरणाः । वयुनानि ज्ञातव्यानि । विद्वानिति नामोच्चारणे । शान्त्यादिगुणसम्पन्नस्य ज्ञातव्यं नावशिष्यते । तं त्वा गृणामीति गुणसंकीर्तनं करोमि । तवसं महान्तम् अतव्यान् अल्पोऽहं अस्य रजसः पराके परपाके क्षयन्तं निवसन्तम् । इयं श्रुतिः श्रीमदाचार्यगुणगानं कर्तव्यमित्यपि बोधयतीति द्वितीयार्थः प्रदर्श्यते । यथा 'ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत' इति वाक्यात्तच्छब्देन पुरुषोत्तम उच्यते । यथा 'यो बुद्धेः परतस्तु सः' इति गीतावाक्ये स इति तच्छब्देन पुरुषोत्तम इति व्याख्यातमभियुक्तैः । यद्यपि तत्र कामप्रकरणं 'ततो बुद्धेरात्मा ततो महान् । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गति'रिति श्रुतौ बुद्धेः परत्वेन परपुरुषस्यैवोपपादनात् । एवञ्च हे तत् पुरुषोत्तम । यद्वा प्रकर्षेण तनोति स्वमाहात्म्यं श्रीमदाचार्यद्वारा विस्तारयतीति तत् ते तव शिपिविष्टनामार्यः 'शिपिविष्टः प्रकाशन' इति विष्णुसहस्रनामवाक्याच्छिपिविष्टपदेन भगवानुच्यते । शिपिविष्टस्य पुरुषोत्तमस्य श्रीवल्लभ इति नाम यस्य स श्रीवल्लभाख्यः आर्यः । पूर्वोक्तरीत्या वर्णलोपः । तेन आचार्यः तस्य वयुनानि ज्ञानानि शंसामि कीर्तयामि । ज्ञानानीत्यस्य सुबोधिन्यादिग्रन्थरूपाणीत्यर्थः । तेषां कीर्तनेनैवास्मत्सिद्धिरिति भावः । श्रीमदाचार्याणां ग्रन्थप्रकटने सामर्थ्यमाह विद्वानिति । पण्डित इत्यर्थः । एतेनाप्तत्वमुदितम् । 'मूर्खो यः सोऽनृतं वक्ती'ति वाक्यात् । यद्वा विपश्चित्पर्यायोऽत्र विच्छब्दः । 'विद्वान् विपश्चिद्दोषज्ञ' इत्यमरकोशात् । तेन विविधभोगचातुर्यवत्त्वं लीलारसान्तःपातित्वमुदितम् । तेन श्रीमदाचार्याणां रसरूपत्वं ध्वनितम् । तं त्वेति । तं श्रीमद्वल्लभाचार्यं त्वां श्रीमत्पूर्णपुरुषोत्तमं च । 'विनापि चं

समुच्चयो भवती'ति महाभाष्यम् । गृणामि गुणगानरूपं कीर्तनं श्रीमदाचार्यगुणगानपूर्वकमेवेश्वर-भजनं कर्तव्यमिति सूचितम् । तवसमतव्यानिति पूर्ववत् । श्रीमदाचार्याणां महत्त्वेन स्वस्याल्पत्वेन च तेषु स्वामित्वं ध्वनितम् । अल्पत्वनिरूपणेन दैन्यं सेवकधर्म इति ध्वनितम् । अथवा शिपिविष्टस्य विष्णोः 'ततो निवृत्त आयातोऽपश्यत् भीमरथीतटे । द्विभुजं विठ्ठलं विष्णुं भुक्तिमुक्तिप्रदायक'मिति पद्मपुराणस्थगीतामाहात्म्योक्तं विठ्ठल इति नाम यस्य सः श्रीविठ्ठलेशः 'तदाहं वल्लभकुल' इत्यादिवाक्यनिरूपितः आर्यः श्रेष्ठः । शेषं पूर्ववत् ॥ १ ॥

अथ श्रीमत्पुरुषोत्तमसम्प्रदाय(नक)दानेऽर्चने परिचरणे च श्रुतिः । 'नू मर्तो दयते स निष्यन् यो विष्णव उरुगायाय दाशत् । प्र यः सत्राचा मनसा यजात एतावन्तं नर्यमाविवासात्' ॥ २ ॥ अस्यार्थः । यो मर्तः मर्त्यः गुरुगायाय बहुभिः कीर्त्यमानाय विष्णवे पुरुषोत्तमाय दाशत् दद्यात् सर्वं समर्पयेत् । यः सत्राचा समीचीनेन मनसा भगवति निश्चलेन प्रयजते भगवन्तं सेवयतीत्यर्थः । यजधातोः पूजार्थकत्वेपि प्रकृष्टार्थप्रोपसर्गविशिष्टत्वेन सेवारूप एवात्र यजतेरर्थः । सनिष्यन् फलमिच्छन् नु क्षिप्रं दयते प्राप्नोति अविशेषात्सर्वं फलं प्राप्नोतीत्यर्थः । ततः एतावन्तं महान्तं नर्यं नरेषु हितं विष्णुं आविवासात् परिचरेदित्यर्थः । श्रीमदाचार्यपक्षे तु नमो ब्रह्मण इत्यस्यां विष्णुत्वेनोपादानात् 'वस्तुतः कृष्ण एवे'ति वाक्याच्च विष्णुशब्देन श्रीवल्लभाचार्याणामपि ग्रहणम् । एवञ्च यो मर्त्यः मर्त्यलोके प्रादुर्भूतो दैवीजीवः उरुगायाय भक्तैर्गीयमानाय विष्णवे श्रीवल्लभाचार्याय दाशत् सर्वं समर्पयेत् । यः सत्राचा मनसा समीचीनेन मनसा अच्छलेन प्रयजते श्रीमदाचार्यं सेवयति सनिष्यन् श्रीमद्भगवत्सेवौपयिकालौकिकदेहादिकल-मिच्छन् नु क्षिप्रं दयते प्राप्नोति । श्रीमदाचार्याः सर्वदानसमर्थाः 'अलौकिकैकदानकृत्' 'अदेय-दानदक्षश्चे'ति प्रभुचरणोक्तत्वात् । तत एतावन्तं महान्तं सर्वतः श्रेष्ठमित्यर्थः । दैवोद्धारकर्तृत्वमाह । नर्यं नरेषु दैवीजीवेषु हितम् । आसुरावेशनिवर्तनपूर्वकदैवाविर्भावकारकम् एतादृशं श्रीमदाचार्यम् आविवासात् परिचरेदित्यर्थः । अनेन श्रवणकीर्तनादीनामुक्तानां संग्रहः । श्रीविठ्ठलानां ब्रह्माण्डादिषु श्रीकृष्णरूपत्वेन प्रतिपादनाद्विष्णुशब्देन तेषामपि ग्रहणमिति तत्परापीयमिति बोध्यम् ॥२॥

श्रीपुरुषोत्तमदास्ये श्रुतिः । 'त्रिर्देवः पृथिवीमेष एतां विचक्रमे शतर्चसं महित्वा । प्रविष्णुरस्तु तवसस्तवीयान् त्वेषं ह्यस्य स्थविरस्य नाम' ॥ ३ ॥ अस्यार्थः । एष देवः श्रीपुरुषोत्तमः शतर्चसं शतमर्चींषि यस्य एतां पृथिवीं त्रींल्लोकानित्यर्थः । महित्वा महत्त्वेन त्रिः त्रिविक्रमे विक्रान्तवान् । सोऽयं विष्णुः प्रास्तु प्रभुरस्तु स्वामी भवत्वस्माकम् । 'एको दधार भुवनानि विश्वे'ति वचनात् स्वामिन एव स्वामित्वस्याप्रार्थनीयत्वात् तद्दास्यं वयं भजामह इति तात्पर्यं लभ्यते । तवसस्तवीयान् महतो महानित्यर्थः । किमिति तस्यैतद्दास्यं प्रार्थ्यतेऽत आह । हि यतोऽस्य स्थविरस्य पुराणपुरुषस्य त्वेषं दीप्तं महत् नामास्ति । महतो हि दास्यमाशास्यं लोकानाम् । अनेन हेतुवन्निगदेन श्रीपुरुषोत्तमस्य दास्यमेव प्रार्थ्यते । स्वामी अस्त्वित्यनेन

दासत्वं स्थितम् । दासनिरूपितमेव स्वामित्वम् । श्रीमदाचार्यपक्षे तु एष देवः ' देव वैश्वानरैषे'ति वाक्ये ' विप्रं विप्रासोऽवसे देव'मिति श्रुतौ च देवशब्दस्य विशेषेणोपपादनवदत्रापि देवशब्दस्य तत्ता । एवञ्च देवः भगवल्लीलामध्यवर्तीत्यर्थः । ननु देवशब्देनात्रान्यदेवग्रहणं कुतो नेत्यत आह शतर्चसं शतमर्चीपि यस्य सः ।'हुताशनावतारस्तु वल्लभो लक्षणात्मज' इति वाक्यात् ' अग्निर्मुखं ' इत्यादिश्रुतेः श्रीवल्लभाचार्योऽग्निर्भगवन्मुखाधिष्ठाता । लौकिकाग्नेः सप्तार्चिष्ट्वेनात्र शतार्चिष्ट्वेनालौकिकत्वं स्पष्टमेव । एतां पृथिवीं महित्वा महत्त्वेन श्रेष्ठत्वेन । तत्त्वं च जीवोद्धारकर्तृत्वम् । त्रिः त्रिवारं विचक्रमे परिक्रमितवान् वारत्रयविविक्तितभूवलयपरिक्रमेत्यभियुक्तैरप्युक्तम् । ननु पूर्वोक्तधर्माः सूर्येपि सन्तीत्यत आह । विष्णुः पुरुषोत्तम इत्यर्थः । 'वस्तुतः कृष्ण एवे'ति वाक्यात् सः प्रास्तु प्रभुरस्तु । ' व्यवहिताश्चे'ति सूत्रेण व्यवहितोपसर्गप्रयोगः । गुणावतारविष्णुव्यावृत्त्यर्थमाह । तवसस्तवीयान् महतोमहानित्यर्थः । सर्वतःश्रेष्ठत्वेन पुरुषोत्तम इत्यर्थः । स्थविरस्य वृद्धस्य पूज्यस्य श्रेष्ठस्य नाम त्वेषं दीप्तिमदस्ति । त्वेषमित्यनेन चिद्रूपत्वमुक्तम् । तच्च सदानन्दयोरुपलक्षकम् । तेन सच्चिदानन्दात्मकं नामास्तीति भावः । एतेनालौकिकत्वमुदितं नाम्नः । त्वेषमितिविशेषणेन नामावर्तनकर्तृगामज्ञानान्धकारविनाशः सूचितः । एतेन जीवैः श्रीमदाचार्यनामावर्तनमवश्यं कर्तव्यमिति ध्वनितम् ॥ ३ ॥

अथ श्रीमत्पुरुषोत्तमस्मरणकीर्तने च श्रुतिः । ' विचक्रमे पृथिवीमेष एतां क्षेत्राय विष्णुर्मनुषे दशस्यन् । ध्रुवासो अस्य कीरयो जनास उरुक्षितिं सुजनिमा चकार' ॥ ४ ॥ इयं श्रुतिः श्रीमत्प्रभुचरणैरपि विद्वन्मण्डने लीलानित्यत्वप्रतिपादनप्रसङ्गे व्याख्याता । मयापि व्याख्यानं तदुपचीयते । एष विष्णुः श्रीपुरुषोत्तमः एतां पृथिवीं लोकत्रयं मनुषे स्वस्मरणशीलाय भक्ताय देवगणाय क्षेत्राय निवासाय दशस्यन् असुरेभ्योऽपहृत्य दास्यन् विचक्रमे विक्रान्तवान् । अनेन भगवतो माहात्म्यमुक्तम् । तत्र भगवन्माहात्म्यं किमु वक्तव्यं येषां भक्ता अपि माहात्म्यविशिष्टा इत्यभिप्रेत्याह ध्रुवास इति । अस्य भगवतः कीरयः कीर्तनशीलाः जनासो भक्ताः ध्रुवासः नित्याः । तत्त्वं तु ध्वंसाप्रतियोगित्वम् । उरुक्षितिं महान्तं निवासं सुजनिमा सुजन्मा श्रीकृष्णावतारैश्चकार । श्रीमदाचार्यपक्षे तु एष विष्णुः श्रीवल्लभरूपः तन्त्रेण विष्णुपदेन श्रीविट्ठलोऽपि गृह्यते । मनुषे स्तुवते दैविगणाय एतां पृथिवीं क्षेत्राय निवासाय दशस्यन् दास्यन् विचक्रमे परिक्रमितवान् । असुरमतप्रचुरतयाऽवनौ स्थातुमशक्ता दैवजीवास्तेषां स्थित्यर्थं मायामतनिर्दलनपूर्वकं भगवद्भक्तिप्रथनेन स्वास्थ्यतया भगवत्सेवनसिद्धौ तेषामवनौ निवासः सिद्ध इति भावः । तेषां नित्यत्वमाह । अस्य श्रीवल्लभाख्यस्य कीर्तनपरा भक्ताः नित्याः । कीर्तनशीलत्वेन तदुद्धारार्थमेवावतारः । किञ्चावतारेण धरण्या अपि महद्भाग्यमित्यभिप्रेत्याह उरुक्षितिमित्यादि । सुजनिमा सुजन्मा सोपसर्गनयाऽलौकिकः प्रादुर्भावोऽस्येति सूचितम् । उरु श्रेष्ठां महद्भाग्यवतीं क्षितिं चकार । अहो भूमिभाग्यं यत्र श्रीमदाचार्याः प्रादुर्भूताः सन्ति चेति भावः । 'भूमिभाग्यं महत्सुन्दर' इति सर्वोत्तमे श्रीप्रभुचरणाः । श्रीविट्ठलेशपक्षे तु 'देशान्तरे

गमिष्यामि मद्भक्तानां हिताय वै ' इति ब्रह्माण्डपुराणवाक्यात् पृथिवीं विचक्रमे । शेषं समानम् । अत्र श्रीमदाचार्याणां तदात्मजानां चावनिपरिक्रमणादिकं दैवोद्धारार्थमेव । 'दैवोद्धारप्रयत्नात्मे'तिवाक्यात् । एतेन वात्सल्यवत्त्वं ध्वनितम् । तल्लक्षणं तु आश्रितदोषभोक्तृत्वमिति केचन । ' आश्रितागस्तिरस्कारबुद्धिर्वात्सल्यमित्यपि । सुस्निग्धहृदयत्वं यद्दोषसौक्ष्म्यातिगं निजे । जने स्यात्तद्धि वात्सल्यं भक्तप्राणस्य वै हरेः । ममतामोहसंपर्कदृढीयांस्तनुजादिषु । यत्विच्छिलमनस्कत्वं विदुर्वात्सल्यमुत्तमा ' इति । अत्र दोषभोक्तृत्वं चासुरावेशनिवर्तनरूपम् । श्रीमदाचार्यविस्मरणरूपमेवागोऽपराधस्तस्य तिरस्कार इत्यर्थः ॥ ४ ॥

अथ श्रीमत्पुरुषोत्तमचरणोदकग्रहणे श्रुतिः । ' तदस्य प्रियमभि पाथो अश्यां नरो यत्र देवयवो मदन्ति । उरुक्रमस्य स हि बन्धुरित्था विष्णोः पदे परमे मध्व उत्सः' ॥ ५ ॥ अस्यार्थः । विष्णोः पुरुषोत्तमस्य परमे पदे चरणे अभि अभिषिक्तम् । उपसर्गाणां क्रियया असन्निधाने कर्तृकर्मादिसाधनसहितक्रियावाचकत्वात् मध्व मधुरस्य उत्सः निष्यन्दो वर्तते तत् अस्य पुरुषोत्तमस्य प्रियं पाथो जलं अहं अश्यां पिबेयम् । यत्र पादोदकपाने देवयवः देवं विष्णुं प्राप्तुमिच्छन्तो नरः नराः मदन्ति हृष्यन्ति स हि पुरुषः इत्था इत्थंप्रकारेण उरुक्रमस्य श्रीकृष्णस्य बन्धुः सुहृत् प्रियो भवतीत्यर्थः । यद्वा सः अहं इत्था इत्थं उरुक्रमस्य भगवतः सखा भवेयमिति भावः । तदनेन सख्यं निर्दिश्यते ॥ माध्वमतानुवर्तिनस्तु इत्थं व्याचख्युरिमाम् । उरुक्रमस्य विष्णोः परमे उत्तमे शालिग्रामचक्राङ्कितादिरूपे पदे स्थाने अभिषिक्तं भागीरथीगोदावर्यादिप्रस्रवणरूपं पाथः अश्यां पिबेयम् । यत्र पाने देवयवः देवत्वमिच्छन्तो नरः पुरुषाः मदन्ति सः तीर्थपानकर्ता अस्य विष्णोः बन्धुः प्रेमास्पदः हि श्रुत्यादिप्रसिद्धः मध्वः मुख्यप्राणावतारः श्रीमध्वाचार्यः इत्था इत्थं तीर्थपानं कृत्वा विष्णोः बन्धुः सुहृज्जात इत्यर्थः ॥ श्रीमदाचार्यपक्षे तु विष्णोः श्रीमन्नन्दकुमारस्य परमे सर्वतः श्रेष्ठे । ' ते ते धामान्युश्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयास ' इत्यादिश्रुतिप्रतिपादिते पदे श्रीगोकुलादिस्थाने मध्वः मधुररूपस्य श्रीयमुनावारिप्रवाहरूपं तत् भगवत्प्रियकर्तृत्वेन प्रसिद्धं ' प्रियो भवति सेवनात्तव हरेर्यथा गोपिका ' इति श्रीयमुनाष्टकवाक्यात् अस्य श्रीमद्वासुदेवस्य श्रीमन्नन्दकुमारस्य प्रियं ' मुररिपौ मुकुन्दप्रिये ', ' नमत कृष्णतुर्यप्रिया'मिति वाक्ये श्रीयमुनायाः प्रियत्वोपपादनेन तज्जलस्यापि तत्त्वम् । अभि अभिषिक्तम् । कैः कस्योपरीत्याकाङ्क्षायां श्रीगोपकुमारिकाभिः श्रीमद्यशोदानन्दनोपरि । तथाच ' सोऽम्भस्यलं युवतिभिः परिषिच्यमान ' इति श्रीभागवते । पाथः श्रीयमुनाजलम् । ' कबन्धमुदकं पाथः ' इत्यमरः । अहं अश्यां पिबेयम् । ' अश भोजन ' इति धातोः आशीर्लिङि उत्तमपुरुषैकवचने यासुडागमे मिपः अमादेशे अश्यामिति रूपम् । मन्त्रद्रष्टात्र वर्ता । यमुनाजलपानफलं तु ' नमोऽस्तु यमुने सदा तव चरित्रमत्यद्भुतं न जातु यमयातना भवति ते पयःपानतः । यमोऽपि भगिनीसुतान्कथमु हन्ति दुष्टानपि प्रियो भवति सेवनात्तव हरेर्यथा गोपिकाः ' इत्युक्तं श्रीमदाचार्यचरणैः । यत्र श्रीयमुनाजलपाने नरः सन्मनुष्याकृतिः

उरुक्रमस्य श्रीकृष्णस्य सः प्रसिद्धः । हिशब्दोऽतिशयं द्योतयति । अतिशयेन बन्धुः प्रियः श्रीवल्लभाचार्याख्यः 'वदति वल्लभः श्रीहरेरि'ति श्रीमदाचार्योक्तेः, 'प्रिया गोपीभर्तुः स्फुरतु सततं वल्लभ इति प्रथावत्यस्माकं हृदि सुभगमूर्तिः सकरुणे'ति श्रीमत्प्रभुचरणैरप्युक्तम् । देवयवो धार्मिकाः । 'मृगय्वादयश्चे'त्युणादिसूत्रेण निपातितो देवयुशब्दः । 'देवयुर्वाच्यलिङ्गः स्याद्धार्मिके लोकयात्रिके' इति मेदिनीकोशाद्धार्मिकवाचकत्वम् । देवत्वमिच्छन्त इत्यर्थे देवशब्दात्क्यजन्तात् 'क्याच्छन्दसी'त्युप्रत्ययः । धर्मशब्दो मुख्यया वृत्त्या भगवत्सेवापरः । तादृशा दैविजीवाः लीलामध्यपातिनश्च । विनापि चं समुच्चयो भवतीति महाभाष्यम् । इत्था इत्थं श्रीयमुनाजलपानेन मदन्ति हृष्यन्ति । 'मदी हर्षे' इत्यस्येदं रूपम् । एतेन श्रीयमुनाजलपानमवश्यं कर्तव्यमिति सूचितम् ॥ ५ ॥

अथ पादसेवने श्रुतिः—'यस्य त्री पूर्णा मधुना पदान्यक्षीयमाणा स्वधया मदन्ति । य उ त्रिधातु पृथिवीमुत द्यामेको दाधार भुवनानि विश्वा' ॥ ६ ॥ अस्यार्थः । यस्य पुरुषोत्तमस्य त्री त्रीणि मधुना पूर्णा पूर्णानि । जसः 'सुपां सुलु'गिति सूत्रेण डादेशः । एवमग्रेऽपि । त्रित्वं पादप्रक्षेपत्रित्वात् । अक्षीयमाणा पादप्रक्षपणे अक्षीणानि पदानि स्वधया अन्नेनोपलक्षणमेतत् । सर्वफलेनापि मदन्ति मादयन्ति तदाश्रितजनानिति भाष्यकारेण व्याख्यातम् । य उ त्रिधातु त्रिप्रकारं पृथिवीं उत द्याम् । किं बहूक्त्या । विश्वा विश्वानि सर्वाणि भुवनानि एकः दाधार दधारेत्यर्थः । श्रीमदाचार्यपक्षे तु यस्य पूर्णपुरुषोत्तमस्य त्री त्रीणि श्रीवल्लभाचार्य-श्रीगोपीनाथ-श्रीविठ्ठलाख्याभिधानानि रूपाणीत्यर्थः । श्रीमदाचार्याणां वक्ष्यमाणैः पूर्वोदाहृतवचोभिश्च पुरुषोत्तमत्वम् । श्रीविठ्ठलेशानां पूर्णपुरुषोत्तमत्वं ब्रह्माण्डपुराणवचनैः स्फुटमेव । तथाच श्रीदेवकीनन्दनचरणैर्गदितं श्रीवल्लभाचार्यगृहे श्रीमहालक्ष्मीदेव्यां श्रीगोपीनाथेन श्रीबलभद्रेणान्वितः स्वयं भगवान् श्रीमत्पूर्णपुरुषोत्तमः प्रादुर्बभूवेति चरित्रचिन्तामणौ, तैरेवाग्रे "दैवेष्वप्यासुरं भावं संकर्षणवदत्र यः । दृष्ट्वा हलं कलयते स गोपीशः प्रसीदतु' इति । ब्रह्माण्डपुराणवचनानि तु 'तदाहं वल्लभकुले द्विजाचाररतेऽमले । अवतीर्य परं रूपं दर्शयिष्ये मनोहरम् । पृथिव्यां भारते क्षेत्रे माथुरे मम मण्डले । गोकुलं मत्पदं नित्यं यत्रास्ते वै मुदावहम् । कालिन्दी सरितां श्रेष्ठा यत्र गोवर्धनो गिरिः । आदिमध्यावसाने वै वासो मे तत्र निश्चितम् । वर्तते विश्रुतं पूर्वं तत्र चास्ति परंतप । अति चान्तर्हितं रूपं सर्वलोचनगोचरम् । करिष्ये विमलं सौम्यं व्रजभक्तसुखावहम् । विठ्ठलेशेति विख्याति गमिष्ये जगतीतले । आदावहं चैकरूपो बहुरूपवरस्तत' इत्यादीनि । एतेषु श्रीमथुरागोकुलादिनिरूपणेन व्रजभक्तसुखावहमित्युक्त्या च येषु स्थानेषु श्रीकृष्णचन्द्रेण व्रजभक्तसुखावहा लीला कृता तथा श्रीविठ्ठलावतारेऽपि मया क्रियते । एवञ्च बलदेवावतारोऽप्यस्मिन्नवतारे सूचितः । कीदृशानि । मधुना आनन्देन पूर्णा पूर्णानि । मधोरानन्दसाधकत्वेनानन्दवाचित्वम् । यथा श्रीमदाचार्यचरणैः 'अन्तस्तद्धर्मोपदेशा'दिति सूत्रेऽणुभाष्ये हिरण्यशब्द आनन्दवाची लोके तस्यानन्दसाधकत्वादित्युक्तम् । 'आनन्दः परमानन्द' इति वाक्यात् 'परमानन्दविठ्ठल'

इति ब्रह्माण्डपुराणवाक्यात् श्रीबल्लदेवस्याक्षरब्रह्मत्वाद्ब्रह्मणश्चानन्दरूपत्वात् 'सत्यं विज्ञानमानन्दं ब्रह्मे'ति श्रुतेस्त्रयाणामानन्दरूपत्वम् । किमर्थमत्र प्राकट्यं भगवल्लीलायां दैविजीवप्रापकत्वेनो-द्धारार्थमित्यभिप्रेत्याह । पदानि पद्यन्ते गम्यन्ते लीलायां दैविजिवा एभिरिति तानि भग-वल्लीलाप्रापकाणीत्यर्थः । 'आचार्यवान् पुरुषो वेदे'ति श्रुतेः । ननु पुरुषोत्तमांशेन पुरुषोत्तमा-नन्दप्रादुर्भावत्वे नानन्दरूपत्वमेतेषामिति चेत्तत्राह । अक्षीयमाणानि केनाप्यंशेन न क्षीणत्वम् । अवतारासाधारणफलमाह । स्वधया मदन्ति स्वाद्यते या सा स्वधा 'ष्वाद आस्वादने' अस्मा-दौणादिक आप्रत्ययः दकारस्य धकारो ह्रस्वत्वं च पृषोदरादित्वात् । स्वाद्यते श्रीमद्व्रजसुन्दरी-भिर्या श्रीकृष्णाधरसुधा सेत्यर्थः । तया मदन्ति हर्षयन्ति स्वानिति शेषः । 'कृष्णाधरामृता-स्वादसिद्धिरत्र न संशयः' इति नामावर्तनफलश्रुतेः । एतेनासाधारणफलदातृत्वमेतेषु । यः पूर्णपुरुषोत्तमः त्रिधा श्रीवल्लभाचार्य–श्रीविठ्ठल–श्रीगोपीनाथरूपेण पृथिवीं उत द्यां दाधार पुपो-षेत्यर्थः । श्रीमदाचार्यरूपेण प्रादुर्भावतयाऽसुरमतविनाशनेन भगवत्स्नेहमार्गप्रथनेन च पृथिव्यु-द्धारमिति भावः । अत एव श्रीमदाचार्याणां नाम भूमिभारघ्नमिति । अस्मिल्लोके कर्ममार्ग-प्रवर्तकत्वेन देवानां सन्तर्पणतया स्वर्लोकपोषणमिति भावः । एकः स्वयं पुरुषोत्तमः सर्वाणि भुवनानि दधारेत्यर्थः ॥ ६ ॥

अथ समर्पणे सङ्कीर्तने श्रवणे च श्रुतिः—'यः पूर्व्याय वेधसे नवीयसे सुमज्जानये विष्णवे ददाशति । यो जातमस्य महतो महि ब्रवत्सेदु श्रवोभिर्युज्यं चिदभ्यसत्' ॥७॥ अस्यार्थ । यः पुरुषः पूर्व्याय कारणाय वेधसे कर्त्रे नवीयसे नित्यनूतनाय सुमज्जानये सुमतिः श्रीर्जाया यस्य तस्मै विष्णवे ददाशति ददाति अर्पयति अविशेषात्सर्वं देहेन्द्रियप्राणान्तःकरणादि-जातं जन्म । उपलक्षणमेतत् गुणकर्मणाम् । महतो महि श्रेष्ठम् । अस्य विष्णोः जातं जन्मादि ब्रवत् ब्रूयात् मः । इत् उ निपातौ अवधारणार्थौ । प्राप्नुयादेवेति । युज्यं सायुज्यम् । वर्णलोप उक्तरीत्या । चित् । इदं जन्मनो विशेषणम् । अभ्यसत् प्राप्नुयात् श्रवोभिः कीर्तिभिः । यद्वा श्रवोभिः श्रवणैः सन्निधानाज्जन्मगुणकर्मणां 'द्वा सुपर्णा सयुजा सखाया' इति मन्त्रवर्णात् युज्यं पुरुषोत्तमं चित् सच्चिदानन्दरूपमित्यर्थः । चिदित्युपलक्षणं सदानन्दयोः । तथा च 'तमु स्तोतार' इति श्रुतिविवरणे चिदित्युपलक्षणं सदानन्दयोरिति श्रीमत्प्रभुचरणैरुक्तं सिद्धान्तमुक्तावलीवि-वृतौ । अभि आभिमुख्येन अनुरागेण अभ्यसत् प्राप्नुयात् । श्रीमदाचार्यपक्षे तु पूर्व्याय ब्रह्मसम्बन्धादिप्रकाशनकारणाय विशेषेण दधाति भगवल्लीलामसौ वेधास्तस्मै वेधसे । भक्तेषु भगवल्लीलास्थापकायेत्यर्थः । नवीयसे अतिशयेन नूतनायेत्यर्थः । दर्शनीयतमत्वं प्राकृतगन्धशून्यत्वं च ध्वनितम् । सुमज्जानये श्रीमहालक्ष्मीवल्लभाय विष्णवे 'वस्तुतः कृष्ण एवे'तिवचनात् श्रीकृष्णरूपाय यो देहादि ददाशति अर्पयति स पुरुषः अस्य महतः पूर्णपुरुषोत्त-मस्य जातं जन्मादि ब्रवत् ब्रूयात् । समर्पणतो भगवद्गुणगानाद्यधिकारो भवत्यन्यथा तु न तथा प्रसादा इति भावः । 'आचार्यवान्पुरुषो वेदे'ति श्रुतेः । युज्यं सायुज्यं । उपलक्षणमेतत् । तेना-

लौकिकसामर्थ्यं सायुज्यं भगवत्सेवौपयिकदेहो वैकुण्ठादिष्विति, फलम् । अभ्यसन् प्राप्नुयात् ॥ श्रीविठ्ठलेशपक्षेप्यस्यार्थः । पूर्व्याय सर्वानन्दावधिभूतपरमानन्दाय । 'परमानन्दविठ्ठल' इति ब्रह्माण्डपुराणवचनात् । ब्रह्मानन्दस्यापि कारणीभूतानन्दरूपत्वं श्रीमत्प्रभुषु विशेषेण दधाति पुष्टिभक्तिमसौ वेधास्तस्मै श्रीमत्प्रभूणामवतारः पुष्टिभक्तिप्रथनार्थेवेति प्रागेवोक्तम् । 'मम भक्तिवितानाय विनाशाय च मायिना'मिति ब्रह्माण्डपुराणे उक्तम् । यद्वा वेधसे कर्त्रे नयवीसे नित्यनूतनाय । एतेन दर्शनीयतमत्वं 'दर्शनीयतमो वाग्मी'तिवचनात् । सुमतिः श्रीरुक्मिणी जाया यस्य 'राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि' इति विष्णुपुराणवचनात् रुक्मिणीरमणायेत्यर्थः । तथा च 'रुक्मिणीरमणः श्रीश' इति नामरत्न उदितम् । विष्णवे 'तदाहं वल्लभकुले द्विजाचाररतेऽमले' इत्यादि ब्रह्माण्डपुराणान्तर्गतभगवद्वचनेभ्यः श्रीविठ्ठलाय ददाशति सर्वं देहाद्यर्पयति । शेषं पूर्ववत् ॥ ७ ॥

अथ श्रवणकीर्तनादिसामान्यसेवने श्रुतिः—'प्र विष्णवे शूषमेतु मन्म गिरिक्षित उरुगायाय वृष्णे । य इदं दीर्घं प्रयतं सधस्थमेको विममे त्रिभिरित्पदेभिः ॥८॥' अस्यार्थः । प्रकर्षेण शूषं बलं एतु आयातु । मन्म महत् । किमर्थं । विष्णवे विष्णुं सेवितुं । 'तुमर्थाच्चे'ति सूत्रेण चतुर्थी । गिरिक्षिते वाचि तिष्ठते । विष्णुपदादेव सर्वत्रावस्थानप्रतीतेः पुनरुक्तिरिति चेन्न । अर्थविशेषद्योतनार्थत्वात् । तथाहि कस्यां वाचि तिष्ठत इत्यपेक्षिते उरुगायायेति सन्निधानात् यत्रैनं गायति तस्यां वाचि विशेषेण तिष्ठते इति लभ्यते । ततश्च 'मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारदे'तिस्मृतिमूलमेतत् । 'शङ्खचक्राद्यङ्कनं च नृत्यगीतादिकं तथा । एकजातेरयं धर्मो न जातु स्याद्विजन्मन' इति स्मृतिः लौकिकं गानं निषेधति 'ग्राम्यं गीतं न शृणुया'दिति वाक्यात् । विस्तरशस्तु इन्दिराया इति श्रुतिव्याख्याने निरूपयिष्यामः । अतश्चावश्यं सेवनीय इति भावः । वृष्णे कामवर्षिणे । अतोऽपि सेवनीय इति । य इदं दीर्घं प्रयतं नियतं सधस्थं स्थानं लोकत्रयं त्रिभिः एक इत् एव विममे विक्रान्तवानिति । इयं श्रुतिः श्रीगोवर्धनधारणसमयमपि वक्ति । तथा हि । गिरिः क्षित् तिष्ठति यस्मिन् स तस्मै श्रीमद्गिरिधराय प्रविष्णवे पुरुषोत्तमाय मन्म महत् शूषं बलं एतु आयातु इति श्रीमद्यशोदादीनां वचनं स्नेहर्द्धिमत् । आशिषि लोट् । योऽस्मै मम बालकः ससहायनः पर्वतं बिभर्ति ततस्तद्धारणयोग्यं बलं भवत्वस्मा इति भावः । विष्णुत्वेनोपादानं तु 'नारायणसमो गुणै'रिति गर्गवाक्यश्रवणात् गर्गोक्तं स्मृत्वा तदर्थानुवादमाहुः । उरुगायाय बहुभिर्गीयमानाय । अतोऽयं महानिति भावः । 'अनेन सर्वदुर्गाणि यूयमञ्जस्तरिष्यथे'ति वचनार्थमाहुः । वृष्णे सकलकामवर्षकाय । इदं माहात्म्यज्ञानमुक्तम् । नन्वेतादृशोऽयं तर्हि किमाशीर्भिर्युज्यते तत्र स्नेहं व्यञ्जयन्त आहुः । यः सप्तवार्षिकः इदं गोवर्धनधारणरूपं दीर्घं महत् प्रयतं प्रयत्नं कृत्वेति शेषः । सधस्थं स्थानं श्रीगोवर्धनं विममे दधार । बालके महत्कर्म दुर्घटमिति स्नेहवृद्ध्याऽऽशिषो दानम् । पुनर्माहात्म्यमाहुः । त्रिभिः पदेभिः स्थानैर्लोकैः इत् ज्ञातः । ये गत्यर्थास्ते ज्ञानार्था इति न्यायेन गत्यर्थ-

द्वनद्वारा सख्यात्मनिवेदनसाधकत्वाद्धस्तस्यानीयाः । नवधाभक्तिसहितसेवाकर्तुराह । सः सेवौपयिकपूर्वोक्तप्रकारकनवधाभक्तियुक्तो जीवः जातित्वादेकवचनम् । अस्य पुरुषोत्तमस्य लीलाया त्रिधा बद्धः । सेवाफलोक्तं यथाधिकार अलौकिकसामर्थ्यं सायुज्यं सेवोपयोगिदेहो वैकुण्ठादि्ष्विति फलत्रयेण सम्बद्धः । पूर्वोक्तसेवात्रयविशिष्टनवधाभक्तिर्जीवाना मतिदुर्लभेतितत्सिद्धयर्थं गुरूपसत्तिः कर्तव्येति गुरुस्वरूपमाह । वृषभः वर्षतीति वृषभः

कस्य ज्ञानार्थकत्वम् । एव च माहात्म्यज्ञानेऽपि स्नेहाधिक्यमिदमेव पुष्टिस्वरूपम् । यदि केवल स्नेहवृद्धिरेव तर्हि श्रीगिरिधरवारण दृष्ट्वा प्राणानव त्यजेयु । श्रीमदाचार्यपक्षे तु वृष भं एतु आयातु । मन्म महत् । किमर्थं । विष्णवे 'वस्तुत कृष्ण एवे'ति वचनात्पूर्णपुरुषोत्तमश्रीमदाचार्य सेवितु गिरिक्षिते वाचि तिष्ठते । 'वाक्पतिर्विबुधेश्वर' इति वचनाद्वाक्पतये उरुगायायेति पूर्ववत् । कृष्णे स्वकृमभक्तेच्छानुकूल्यपरकाय 'भक्तेच्छापूरक सर्वाज्ञातलीलोऽतिमोहन' इति सर्वोत्तमे । भक्तमनोरथपूरणार्थमेव पृथिवीपरिक्रमणमित्याह । य श्रीवल्लभाचार्य इद पृथिवीमण्डल दीर्घ महत् सधस्थ स्थान त्रिभि त्रिवार इत् गमनशील । यद्वा इत् ज्ञानविशिष्ट । मम परिक्रमणेन मायावादिमतान्धकारनाशपूर्वकभक्तोद्धारो भविष्यतीत्यभिज्ञ इति भाव । पपे । बहुवचन तु श्रेष्ठत्वापेक्षितमिति सूचनाय । विममे परिक्रमण कृतवानित्यर्थ ॥ ८ ॥

अथ श्रीमत्पुरुषोत्तमशरणतयावस्थाने श्रुति —'यो ब्रह्माण विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । त ह देवमात्मबुद्धिप्रकाश मुमुक्षुर्वै शरणमह प्रपद्ये' ॥ ९ ॥ अस्यार्थ । अह शरण प्रपद्ये 'निर्गुणा मुक्तिरस्माद्धि सगुणा सान्यसेवये'ति तत्त्वदीपे श्रीमदाचार्यचरणोक्तनिर्गुणमुक्तिमिच्छुर्मुमुक्षु । शरणमात्रेणैवाज्ञानान्धकारनिवृत्तिरित्याह । आत्मबुद्धिप्रकाशमिति । आत्मना जीवाना बुद्धिप्रकाशकमित्यर्थ । यद्वा आत्मन स्वस्वरूपस्य बुद्धेश्च प्रकाशकमित्यर्थ । ननु शरणगमनेऽज्ञानान्धकारनिवृत्तिरेव फलमिति चेन्न । भगवल्लीलानुभवमपि फलमित्यभिप्रेत्याह । देव लीलास्थपुरुषोत्तममित्यर्थ । एतादृशस्य शरणगमनेऽस्य लीलानुभवो भविष्यतीति भाव । विष्ण्वादिपदमनुक्त्वा यद्देवपदोपादान तेनायमर्थ सिद्ध । 'यो ब्रह्माणमि'त्यादि श्रीमद्भगवदतिशयप्रतिपादकमाहात्म्यज्ञानार्थमित्यर्थ । एवन नवविधभक्ते श्रुतिनिरूपितत्व सिद्धम् । अन्या अपि सन्त्येतदर्थप्रतिपादिका श्रुतयो बाहुल्यभयान्न निरूपिता ॥ प्रकृतमनुसराम । गुरूपसत्तिः कर्तव्येति । 'समित्पाणि श्रोत्रियं ब्रह्मनिष्ठ' 'स गुरुमेवाभिगच्छेत्' 'नैषा तर्केण मतिरापनेये'त्यादिश्रुति श्रुतिसिद्धेरर्थं । वृषभ इति । 'वृषु सेचन' इति धातो 'रिशृपवृञामीकिर च' इति सूत्रेण कप्रत्यये रूपसिद्धि । पात्रापात्रेति । 'स्त्रीशूद्रादुद्धृतिक्षम' इति वाक्यात् । पात्रत्व चाणमोक्तशिष्यलक्षणविशिष्टत्वम् तदभावकत्वमपात्रत्व तयोर्विवेकस्त विनेत्यर्थ । सर्वकरणसमर्थत्वादिति भाव । 'अदेयदानदक्षश्चे'ति वाक्याद्यत्केनापि दातुं न शक्यत तच्छ्रीकृष्णाधरामृत वर्षतीत्यप्यर्थ । एतेन परमकृपालुत्व परमसामर्थ्यवत्त्वं सूचितम् । कृपालक्षणं तु 'रक्षणे सर्वभूतानामहमेव परो विभु । इति सामर्थ्यसन्धान कृपा सा पारमेश्वरी ॥'

वर्षति मेघ उदकमिव । पूर्वोक्तसेवाद्युपदेशपात्रापात्रविवेकं विना भक्तेभ्योऽलौकिकसामर्थ्यं सायुज्यं सेवोपयोगिदेहो वैकुण्ठादिष्विति फलं वर्षति ददातीत्यर्थः । भातीति भः स्वतेजसा भक्तानां सकलदोषदूरीकरणद्वारा सर्वेपूज्यत्वेन भाति । वृषश्चासौ भश्चेति वृषभः । एतादृशगुरुस्तु श्रीवल्लभाचार्य एव ।

श्रीवल्लभपदार्थस्तु भानं भाः सम्पदादित्वाद्भावे क्विप् । भा विद्यते यस्यासौ भः अर्शआद्यच् । वदन्तीति वदः 'क्विप्चे'ति क्विप् । तान् वदो भक्तान् लाति गृह्णातीति वल्लः वल्लश्चासौ भश्चेति वल्लभः । यद्वा लभ्यत इति लाभः । पुंसि संज्ञायां घः । वदन्ति स्वाचार्यगुणगानं कुर्वन्ति ते वदो भक्तास्तेषां लभः प्राप्यो वल्लभः । यद्वा 'वनु याचन' इत्यस्मात् क्विप् । वन्वते याचन्त इतिवतः भगवत्प्राप्तिविषयकयाच्ञाकर्तारो भक्तास्ताँल्लातीति पूर्ववत् । नामैकदेशे नामग्रहणमितिन्यायादत्र भशब्देन वल्लभो ग्राह्यः । अथ परोक्षमियार्थं भश-

---

अथवा 'स्वसामर्थ्यानुसन्धानाधीनः कालुष्यमानसः । हार्दो भावविशेषो यः कृपा सा जागदीश्वरी ॥' 'कृप् सामर्थ्ये' इति धातोर्निष्पन्नः कृपाशब्द इति । भातीति भ इति । 'भा दीप्ता'विति धातोः 'अन्येष्वपि दृश्यत' इति डः प्रत्ययः । 'नक्षत्रमृक्षं भं तारे'त्यादिवत् । स्वतेजसेत्यादि । सकलदोषाः देहजीवनिष्ठाः 'अज्ञानाद्यन्धकारप्रशमनपटुताख्यापनाय त्रिलोक्यामग्नित्वं वर्णितं ते कविभिरपि सदे'ति श्रीप्रभुचरणैरगादि । वृषभ इति । वृषभशब्दार्थकत्वं श्रीवल्लभशब्दस्य बोध्यम् । तेन पर्यायतापि । तत्त्वं च भिन्नानुपूर्वीकत्वे सति एकार्थबोधकत्वम् । तथा हि । 'वल्ल संवरण' इति धातोर्वल्लते संवरणं करोति दासत्वेन वृणोति जीवानसौ स वल्लः पचाद्यच् । 'यमेवैष वृणुते तेन लभ्य' इति श्रुतेः । स चासौ भश्चेति वल्लभः । वृषभशब्दस्यार्थे पात्रादिविवेकं विना फलं वर्षतीत्युक्तौ वर्षणमत्र स्वदासत्वेनाङ्गीकारे सत्येवेत्येवं पर्यायतेत्यर्थः । 'त्वमग्ने वृषभः पुष्टिवर्धन' इति श्रुतौ वृषभत्वं श्रीमदाचार्याणामुक्तमित्यभिप्रेत्याहुः एतादृशगुरुस्त्विति । एवेति । श्रुतिनिरूपितवृषभत्वं वृषभपदार्थकत्वं चान्येषु नास्तीत्येवकारेणान्यस्य व्यवच्छेदः ।

श्रीवल्लभपदस्यार्थमाहुः श्रीवल्लभेत्यादिना । सम्पदादित्वादिति । दीप्त्यर्थकभाधातोः सकाशात्संपदादेराकृतिगणत्वादिति भावः । भ इति । 'यस्येति चे'त्यलोपः । दीप्तिविशिष्टत्वेनातितेजस्त्वातिशयौज्ज्वल्यादयो गुणा बोध्याः । वदन्तीति । 'वद व्यक्तायां वाचि' । अनुगृह्णातीत्यनेन श्रीमदाचार्यानुग्रहेणैव भगवत्प्राप्तिस्तद्विनान्यस्य साधनाभावो ध्वनितः । पुंसि संज्ञायां घ इति । समुदाये वृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति न्यायेन श्रीवल्लभपदैकदेशो लभ् इत्यत्र संज्ञात्वमस्तीति भावः । स्वाचार्यगुणगानमिति । 'स्वयशोगानसंहृष्टहृदयाम्भोजविष्टर' इति वचनाच्छ्रीमदाचार्यगुणगानस्यावश्यकत्वम् । तेषामिति । गुणगानकर्तॄणामित्यर्थः । 'क्विन्'ति अनुनासिकलोपविधायके 'गमः क्वा'विति सूत्रे 'गमादीनामिति वक्तव्य'मिति वार्तिकेनात्र नकारलोपे 'ह्रस्वस्ये'ति तुकि वदिति रूपम् । न्यायादिति ।

'विनापि प्रत्ययं पूर्वोत्तरपदलोपश्चे'ति वार्तिकसिद्धादिति भावः । 'दयया निजमाहात्म्यं करिष्यन् प्रकटं हरिः । वाण्या यदा तदा स्वास्यं प्रादुर्भूतं चकार हे'तिवाक्याद्वाण्या स्वमाहात्म्यख्यापनार्थमेव श्रीमत्पुरुषोत्तमैः श्रीमदाचार्याः प्रादुर्भाविता इत्यभिप्रेत्याहुः वाण्योप·देशेत्यादि । अत एवास्मिन्नवतारे 'उद्धारस्तु वाण्ये'ति श्रीमदाराध्यचरणैः प्रागप्युक्तम् । वाक्यादिति । 'सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणादि'ति श्रीभागवत·वाक्याच्चेति भावः ।

यथा श्रीमदाराध्यचरणैरत्रेयं श्रुतिः पूर्णपुरुषोत्तमवर्णनपूर्वकं पूर्णपुरुषोत्तमप्राप्त्यर्थं गुरू·पसत्तिः कार्येत्युक्त्वा श्रीवल्लभाचार्यगुरुस्वरूपनिरूपणं कृतम् । तथा श्रीमत्प्रभुचरणै'र्ज्ञानाधिको भक्तिमार्ग' इति सिद्धान्तमुक्तावलीपद्यविवरणे भक्तेः श्रेष्ठतां निरूपयितुं 'तमु स्तोतार' इति मन्त्रमुपन्यस्य तस्य विवरणे नामस्वरूपज्ञानार्थं गुरूपासत्तिः कार्येत्युक्त्वा गुरुस्वरूपनिरूपणं कृतम् । तन्निरूपणेन श्रीवल्लभाचार्यो गुरुरेव फलति, स एव श्रीमत्प्रभूणां ग्रन्थस्तदर्थश्च मया व्युत्पाद्यते । तथा हि —'तमु स्तोतारः पूर्व्यं यथा विद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामह' इति ॥ हे स्तोतारो मदुत्कर्षवर्णनपराः, पूर्व्यं सर्वकारणकारणरूपं तं लोकवेदप्रसिद्धं श्रीमत्पुरुषोत्तमं यथावद्विदन्ति तत्स्वरूपमिति तथाभूताः ऋतस्य सूनृतवाणीरूपस्य वेदस्य गर्भं रूपं स्वोदरस्थं वेदं विश्व·हितार्थं ब्रह्मणे उपदिष्टवान् इति । तथा जनुषा जन्मनैव संपूर्णं न तु क्षणयाममात्रेण पिपर्तन पूर्तियुक्तं सन्तुष्टं कुरुत । अत्र यथावित्त्वोक्त्या पूर्णज्ञानानां देहेन्द्रियप्राणान्तःकरणनीवाँस्तदर्थ·मेव तद्भजनार्थमेवोपयुक्तान् कुरुतेति भक्तिमार्ग एव विनियोग उपदिश्यते । तेन स्फुटमेव ज्ञानमार्गाद्भक्तिमार्गस्याधिक्यमवगम्यते । भक्तिं विना न कोऽपि पुरुषार्थः सिध्यतीति हृदयेनाह आस्य जानन्त इति । अग्रे देहादिविनियोगासक्तौ आसमन्ताज्जानन्तोऽखण्डशब्दब्रह्मरूपं न तु लौकिकशब्दस्वरूपमिति नामस्वरूपं जानन्तस्तदेव विवक्तन । विशेषणं चेदं अधिक·माहात्म्याद्यज्ञाने नाममात्रमुत्कीर्तयितुम् । एतेनैव भगवत्स्वरूपतन्माहात्म्यादिकं ज्ञातं भवि·ष्यतीत्याशयेनाह नाम स्वरूप चिदिति । चिदित्युपलक्षणं सच्चिदानन्दमित्यर्थः । नामस्वरूपा·ज्ञाने तदुपदेष्टृगुरूपसत्तिः कार्येत्याशयेनाह महस्त इत्यादि । ते त्वत्संबन्धिनं सुमतिं निर्दोष·पूर्णगुणत्वेन मदन्तं जानन्तं भगवद्भक्तं भजामहे । स च स्वतेजसा पराज्ञाननिरासक इत्याह मह इति । तेजोरूपमित्यर्थः । स्वहृदि सर्वदा श्रीकृष्णप्राकट्येनोत्सवात्मकमिति वा । एतेन ज्ञानिनां भक्तिमार्ग एवोपदिष्टो भवतीति श्रीमत्प्रभूणां ग्रन्थः ।

अत्र गुरूपसत्तिः कार्येत्युक्त्या 'श्रीकृष्णज्ञानदो गुरु'रिति वाक्याच्छ्रीवल्लभाचार्य एव तेनोरूपमित्यनेनान्येषां तत्त्वाभावाद्भगवन्मुखारविन्दाविर्भावादिद्वारिकैश्वानरस्तेजोरूप उदितः ।

**प्रकारमाह । रोरवीति भक्तान् प्रति वचनद्वारा पूर्वोक्तं सर्वं पुनः पुनः अतिशयेन रौति नाममन्त्रब्रह्मसम्बन्धमन्त्रग्रन्थाद्युपदिशति । उपदेशमात्रेणैव भक्तानामवान्तरफलमाह । महो**

सुमतिमित्यनेन शब्दब्रह्मवेत्तारम् । यद्वा सुमतिमित्यत्र सुष्ठु मतिर्महालक्ष्मीर्भार्या यस्य तं सुमज्ञानय इति वत् । एतेन पूर्णपुरुषोत्तमरूपतोक्ता । निर्दोषपूर्णगुणत्वेन भगवन्तं जानन्तमित्युक्त्या सर्वज्ञत्वं श्रीकृष्णज्ञानदातृत्वं च सूचितं साकारब्रह्मवादस्थापकत्वं वेदपारगत्वं च । 'श्रीकृष्णज्ञानदो गुरुः । साकारब्रह्मवादैकस्थापको वेदपारग' इति सर्वोत्तमे । उत्सवात्मकमिति । 'स्फूर्जद्रासादिलीलामृतजलधिभराक्रान्तसर्वोऽपि शश्वदि'ति प्रभुचरणाः । भजामहे सेवामह इत्यर्थः । सेवा च कायवाङ्मनोभिस्तदेकपरत्वेन तनुजावित्तजामानसीरूपा । एवंच श्रीमदाचार्यसेवकानामेव रसास्वाद इति दिक् ।

अथ चत्वारिशृङ्गेत्यस्य श्रीमदाचार्यपरत्वेनार्थः प्रदर्श्यते । तथा हि । 'वेदाः श्रीकृष्णवाक्यानि व्याससूत्राणि चैव हि । समाधिभाषा व्यासस्य प्रमाणं तच्चतुष्टयमि' ति तत्त्वदीपोक्तानि चत्वारि प्रमाणानि शृङ्गाः प्रधानानि । प्राधान्यं चैतदविरोधेनान्यप्रमाणप्रामाण्यवत्त्वम् । 'एतद्विरुद्धं यत्त्वस्य न तन्मानं कथंचने'ति तत्रैवोक्तत्वात् । 'अविरुद्धं तु यत्त्वस्य प्रमाणं तच्च नान्यथे'त्यपि तत्रैव । त्रयः पादाः विवेकधैर्याश्रयरूपाः । द्वे शीर्षे । शीर्षशब्दो मुख्यवाचकस्तेन श्रीगोपीनाथश्रीविठ्ठलनाथौ पुत्रौ आचार्यरत्नमिति वाक्याद्द्वयोः श्रीबलदेवश्रीकृष्णरूपत्वाच्छीर्षत्वेनोपादानम् 'भुवि भक्तिप्रचारैककृते स्वान्वयकृत् पिते'ति वाक्याज्जीवोद्धारार्थमेव स्ववंशप्राकट्यकरणाच्छ्रीमदाचार्यसप्तपौत्राणां करस्थानीयत्वमाह । सप्तहस्तासः श्रीगिरिधरश्रीगोविन्दश्रीबालकृष्णश्रीवल्लभश्रीरघुनाथश्रीयदुनाथश्रीघनश्यामाख्याः सप्त पौत्राः हस्तस्थानीयाः । यथा हस्तैः पदार्थग्रहणमेवमेतैर्जीवानामङ्गीकार इति भावः । अस्य श्रीवल्लभाचार्यस्य । वारद्वयमिदंशब्दोपादानेनान्तरङ्गभक्तानां श्रीमदाचार्यनैकट्यं ध्वनितम् । त्रिधा त्रिप्रकारेण भक्तिवर्द्धिन्युक्तेः स्नेहासक्तिव्यसनैर्बद्धः सकलकामपूरक इत्याह । वृषभः वृषभशब्देन धर्म उच्यते । तेन धर्मस्वरूपः धर्मरक्षणार्थमेवावतार इति सूचयितुं वृषभपदोपादानम् । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहमि'ति गीतोक्तं सूचितम् । यद्वा 'ऋषिवृषिभ्यां भ' इति सूत्रेण 'वृषु सेचने' अस्माद्भप्रत्यये वर्षति भक्तमनोरथानिति वृषभः । वर्षणार्थकधातुघटितप्रयोगेण यथा मेघादिवर्षणेन ताप उपशाम्यति तथा श्रीमदाचार्याणां कृपारसवर्षणेन सकलतापोपशामकतेति सूचितम् । किंच यथा मेघः स्वेच्छयैव वर्षति तथा श्रीमदाचार्या अपीति वल्लभपदस्यार्थ उररीकृतः । तत्र संवरणार्थकवल्लधातोरच्प्रत्यये वल्ल इत्यस्य निष्पत्तिः । स्वीकारश्च स्वेच्छयैवेत्यनुपदमेवोक्तम् । यमेवेति श्रुतेः । स चासौ भश्चेति पर्यायतया नामनिरुक्तिरुक्ता । श्रीमदाचार्या अवतीर्य भगवन्नाम्नैव जीवोद्धार इति सूचयितुं नामोपदेशादि कुर्वन्तीत्याह रोरवीति । नाममन्त्रब्रह्मसम्बन्धमन्त्रादि कथयति । ननु जीवानां दुष्टत्वा'ज्जीवाः स्वभावतो दुष्टा' इतिवाक्यात्तेषां दोषनिरसनमन्तरा नोद्धार इति ।

देवो मर्त्यां आविवेश भक्तानामविद्याया भस्मसात्करणार्थं महस्तेजः एतादृशो देवो रास-क्रीडास्थपुरुषोत्तमः मर्त्यान् पुष्टिमार्गीयजीवान् आविवेश देहेन्द्रियान्तःकरणेषु प्रविष्टः। 'प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुह'मिति वाक्यात् । पूर्वं व्याख्यातम् ।

चतुःशृङ्गविशिष्टा गावो व्यापिवैकुण्ठगोलोकस्थास्तत्र प्रमाणभूता श्रुतिः । प्रथमाष्टके तृतीयप्रपाठके षष्ठानुवाकेऽयं मन्त्रः—' ते ते धामान्युश्मसि गमध्ये गावो यत्र भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य विष्णोः परमं पदमवभाति भूरेः', ' विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा', 'तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ' । अस्यार्थः—ते तानि प्रसिद्धानि ते तव धामानि स्थानानि ते ते तव तव धामानि वा गोवर्धनाद्रिभूमापुरुषश्वेतद्वीपरमावैकुण्ठव्यापिवैकुण्ठादीनि वेदाः वयं गमध्ये गन्तुं उश्मसि कामयामहे । अथवा गमध्ये गच्छन्ति जीवा येषु तानि गानि गतिस्थानानि गानां मध्यस्तस्मिन् गतिस्थानेषु मध्ये यत्र यस्मिन् स्थाने भूरिशृङ्गा गावः महच्छृङ्गाः चतुःशृङ्गा वा । यथा ऐरावतस्य चत्वारो दन्तास्तथा अलौकिकाश्चतुःशृङ्गा

---

तत्राह मह इति । तेजोरूपस्तेन सकलदोषदाहकत्वमज्ञानाद्यन्धकारनाशकत्वं श्रीमत्पुरुषोत्तमानाधिष्ठातृतेजोरूपवैश्वानरत्वं निरूपितम् 'महस्ते विष्णो सुमतिं भजामहे' इत्युदाहृतश्रुतेः । ननु श्रीमदाचार्यशरणेन भगवल्लीलाप्राप्तिर्भविष्यतीत्यत्र किं मानमिति चेत्तत्राह । देवः श्रीमत्पूर्णपुरुषोत्तमलीलाविष्टः । तेन श्रीमदाचार्यशरणानां भगवल्लीलानुभवः सिद्ध एवेति भावः । जीवदेहदोषदाहकत्वं कया रीत्येत्यत आह मर्त्यान् मरणधर्मिणो मनुष्या जीवास्तान् । एतेन देहगतदोषा निरूपितास्तेषां दोषनाशार्थमाविवेश मन्त्राद्युपदेशकाले आविवेश देहेन्द्रियान्तःकरणेषु । एतेन श्रीमदाचार्याः श्रीमद्भगवल्लीलाविष्टाः प्रविशन्ति भक्तानां हृदय इति ध्वनितं यथा श्रीदामोदरदासश्रीसूरदासादीनामिति दिक् । एतेन 'नमो द्विशीर्ष्णे त्रिपदे चतुःशृङ्गाय तन्तवे । सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः' इति श्रीभागवतश्लोकोऽपि व्याख्यातः ।

श्रुत्यन्तरमवतारयन्ति पूर्वमित्यादि । अयं मन्त्र इति । तैत्तिरीये इति शेषः । अत्र मन्त्रद्वयम् । एकवचनं तु गवां चतुःशृङ्गप्रतिपादने प्रथमो मन्त्र इत्यभिप्रायेण । एवं श्रुतिपदेऽपि द्वितीयव्याख्यानं तु तत्प्रसङ्गतः ऋग्वेदेऽपि ' ता वां वास्तून्युश्मसि गमध्ये यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरी'ति ॥ व्याख्यानं तु प्रभुभिः कृतमेव विद्वन्मण्डने प्रसिद्धानीति तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतरूपार्थत्वादिति भावः । तव तवेति आदरे द्विरुक्तिः । रमावैकुण्ठेति । 'वैकुण्ठः कल्पितो येन लोको लोकनमस्कृत' इति श्रीभागवतप्रसिद्धः । गच्छन्तीत्यादि । ' अन्येष्वपि दृश्यन्त ' इति डप्रत्ययः टिलात्क्लिषः । अयास इति । यान्त्यनेन भगवत्सुखमिति याः अलौकिकदेहादयः तान् अस्यति क्षिपतीति याः स्वरूपहानिः न याः स्वरूपहानिर्येषां ते अयासः अलौकि-

गावो वर्तन्ते तत्र अयासः अनपायाः अपायः स्वरूपहानिः जले निमग्नस्य जलपानवत्। तद्रहिता भगवद्दर्शनाद्युपयुक्तनित्यालौकिकशरीरेन्द्रियादिवन्तस्तत्रत्याः सर्वेऽपि पदार्थाः नित्याः नित्यलीलास्थाने स्थितत्वादिति यावत्। यद्वा अयः शुभावहो विधिरिति भगवता सह क्रीडादिरूपो विधिस्तेन आसते स्वामिन्यः। 'तस्मात् एकाकी न रमते स द्वितीयमैच्छदेतावानासे' तिश्रुतेः तादृशस्थानस्योत्कर्षं वेदः स्वयमेवाह अत्राहेति। अत्रास्मिन् व्यापिवैकुण्ठे विष्णोर्बहुरूपमाहेत्यर्थः। तदुरुगायस्य तस्मिन् गोलोके उरुभिर्भक्तैः रासक्रीडायां गीयमानस्य भूरेः बहुरूपिणो महतो वा रसात्मकपुरुषोत्तमस्य रासं विना बहुरूपधारणं न सम्भवतीत्यर्थापत्त्या रासक्रीडा ज्ञायते। यथा रासक्रीडायां 'तासां मध्ये द्वयोर्द्वयो'रिति। 'कृत्वा तावन्तमात्मान' मित्यादीनि च।

अत्रापि नित्यलीलास्थानस्थत्वाद्रासादीनां सार्वदिकत्वं विष्णोः पुरुषोत्तमस्य परमं पदमवभाति स्वत एव प्रकाशकत्वम्। तदुक्तं गीतायाम् 'न तद्भासयते सूर्यो न शशाङ्को न पावकः। यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' ति सर्वापेक्षया परत्वं नित्यलीलास्थितिस्थानस्यैवेत्यर्थः। अन्तर्गलितार्थस्तु—हे यूपाभिमानिन् विष्णो, तत्र स्थानानि वयं तदेशं गन्तुं कामयामहे इत्यनेनात्युत्कर्षो दुर्लभत्वं च स्थानानां द्योतितम्। जीवानां गतिस्थानानां मध्ये यत्र बृहच्छृङ्गा बहुभृङ्गा वा गावो वर्तन्ते तत्स्थानस्थितपदार्था नित्याः गोलोकस्थितभक्तैर्गीयमानस्य रासार्थं भगवतो बहुरूपधारिणो विष्णोस्तत् परमं पदमवभाति तादृशमाप्त्यधिकारसिद्ध्यर्थहेतवे निष्कामकर्मणे यूपोऽस्मिन्नवटे तिष्ठतु। विधत्ते वैष्णवर्चा कल्पयति 'वैष्णवो वै देवतया यूपः स्वयैवैनं देवतया कल्पयती'ति ब्राह्मणवाक्यं प्रमाणमित्यनेन संहितासङ्गतावपि न विरोधः।

विष्णोः कर्माणि पश्यतेति। हे भगवदीयाः! विष्णोः गोलोकस्थितपुरुषोत्तमस्य

---

देहादिवन्त इत्यभिप्रेत्याहुः अनपाया इत्यादि। क्लिष्टकल्पनात्वादर्थान्तरमाहुः यद्वेति। स्वामिन्य इति। सन्तीति शेषः।

सार्वदिकत्वमिति। 'व्रजपुरवनितानां वर्धयन् कामदेवमि'ति पद्ये वर्तमानप्रयोगात्। गीतायामिति। 'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाती'ति श्रुतावप्युक्तम्। अत्राग्निनिषेधो लौकिकाग्निविषय इत्यवोचाम। संहितासंगतिविरोधं परिहरन्तः श्रुत्यर्थं व्याकुर्वन्ति 'हे यूपाभिमानिन् विष्णो,' इत्यारभ्य न विरोध इत्यन्तेन। वेदा इति बृहद्वामनीये वेदैः प्रार्थितो भगवान् स्वलोकं दर्शयामासेत्युक्तम्। कर्माणीति। सर्वेषां कर्मणां नित्यत्वेन सामान्यतः सर्वकर्मदर्शनमुक्तम्। सर्वेषां कर्मणां नित्यत्वं 'बहूनि सन्ति नामानि रूपाणि च सुतस्य ते। गुणकर्मानुरूपाणि तान्यहं वेद नो जना' इति श्रीभागवतवाक्ये सन्तीति वर्तमान प्रयोगाज्ज्ञेयम्। इदं यथा तथा श्रुतिस्मृतिप्रामाण्येन विद्वन्मण्डने निरूपितं प्रभुचरणैः।

कर्माणि पश्यत । भूरिशृङ्गा गाव इति कथनानुरोधाद्गोचारणादीनि कर्माणि, इन्द्रस्येति दिवीव चेति वक्ष्यमाणानुरोधाद्रासक्रीडादीनि कर्माणि, बहुवचनानुरोधान्नित्यलीलास्थानि कर्माणि सर्वाण्येव सम्भवन्तीत्यर्थः । पश्यतेति कथनेन तादृशभगवदीयानां दर्शनाधिकारः कथितः । तेन सेवाफलोक्तसेवोपयोगिदेहो वैकुण्ठादिष्विति फलं द्योतितम् ।

ननु यज्ञेनैव तत्फलप्राप्तिर्न साधनान्तरेणेत्याशङ्कानिरासायाह यतो व्रतानीति । देहलीदीपकन्यायेन व्रतादिसाधनस्य फलत्रयेपि सम्बन्धो बोध्यः । अतः फलप्राप्तिप्रकारमाह यतो व्रतानि पस्पश इति । यतः तादृशफलप्राप्तिहेतोः व्रतानि भगवदीयव्रतानि कात्यायनीव्रतादीनि ' सकृदेव प्रपन्नाये ' त्यादीनि च, तनुजावित्तजामानस्यादीनि वा पस्पशे सृष्टवान् श्रीमदाचार्यरूपेण प्रादुर्भूय निर्मितवान्वा । इन्द्रस्येति । परमैश्वर्यस्य विष्णोः । अथवाऽत्र विष्णुपदमनुक्त्वा यदिन्द्रपदोपादानं तेन यथा स्वर्गे इन्द्रस्य सदा रसाविष्टत्वं तथाऽस्यपुरुषोत्तमस्यापि रसाविष्टत्वम् । ' रसो वै सः । रसं ह्येवायं लब्ध्वाऽऽनन्दी भवती ' तिश्रुतेः । युज्यः सायुज्यं प्राप्तः सखा अलौकिकसामर्थ्यवान् । अत्र फलकथनात् नवधा भक्त्यन्तर्गतसख्यत्वं न सम्भवति, तस्य साधनत्वात् । तद्विष्णोः परमं पदं रसात्मकपुरुषोत्तमस्य नित्यलीलास्थानं सूरयः माहात्म्यज्ञानयुक्ताः स्नेहविशिष्टा भक्ता भगवदीयाः सदा दिवीव चक्षुराततं यथा भवति तथा पश्यन्ति । सदा नित्यली-

---

भगवदीयानामिति । ' त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजमि'ति श्रीभागवतवाक्येन । एवेत्यनेन भगवद्भक्तातिरिक्तानां नाधिकारः सूचितः ।

निर्मितवानिति प्रकटितवानित्यर्थः । ' बृंहणाद्ब्रह्मनामासावैश्वर्यादिन्द्र उच्यते ' इति ब्रह्माण्डपुराणवाक्यादिन्द्रशब्दस्य परमैश्वर्यविशिष्टश्रीपुरुषोत्तमरूपार्थत्वादत आहुः परमैश्वर्यस्येति । ' इदि परमैश्वर्ये ' इति धातुपाठादिति भावः । यद्वा गावो भूरिशृङ्गा इत्युक्तत्वात् गवामिन्द्र इत्यर्थः । ' त्वं नः परमकं दैवं त्वं न इन्द्रो जगत्पते । भवाय भव गोविप्रदेवानां ये च साधव ' इति श्रीभागवतवाक्यात् । अलौकिकेत्यादि । भवतीति शेषः । यतो हेतोर्व्रतानि पस्पशेऽतस्तेषु स्थितः सखा भवतीत्यन्वयः । यद्वा यतो हेतोर्व्रतानि भगवत्सेवौपयिकानि श्रीमदाचार्यरूपेण पस्पशे सृष्टवान् । अतः श्रीमदाचार्यैकशरणा भगवत्सेवादि कुर्वन्तस्तत् श्रीमत्पूर्णपुरुषोत्तमस्य परमं स्थानं सूरयः सदा पश्यन्तीत्यन्वयः । श्रीमदाचार्यान् विशिनष्टि । इन्द्रस्य श्रीमद्गोविन्दस्य युज्यः योग्यः अनुकूलस्तदीयहार्दप्रकटनकारकः अत एव 'तस्यैवात्मानुभावप्रकटनहृदयस्याज्ञया प्रादुरासी'दित्युक्तं प्रभुचरणैः । सखा प्रियः श्रीवल्लभाख्य इत्यर्थः । सूरय इति । शब्दपरब्रह्मवित्त्वं तत्त्वं शब्दब्रह्मणि भगवन्माहात्म्यप्रतिपादनात् परब्रह्मज्ञानं च ' भक्त्या मामभिजानाति '' 'भक्त्याहमेकया ग्राह्य' इत्यादिवाक्यात् । भक्तिश्च स्नेहरूपैवेत्यभि-

लायां गतेऽस्मिल्लोके स्थितेपि दिवीव यथा स्वर्गे लोके अप्राकृतचक्षुषा आततं अवलोकनविषयीभूतं भवति तथा गोलोकेऽलौकिकविग्रहविशिष्टा भगवन्तं पश्यन्ति । दिवीवेति स्वर्गदृष्टान्तकथनेन तत्र यथा रासादिक्रीडा । सा त्वनित्या । अत्र तादृशी नित्या रासादिक्रीडा । अत्र चक्षुःपदमेकादशेन्द्रियाणामुपलक्षणम् । तेन सर्वेन्द्रियैर्भगवत्स्वरूपमाततं व्याप्तं विषयीकृतमित्यर्थः ।

पूर्वोक्तार्थ एव श्रुत्यभिप्रायः । अन्यथा व्यासचरणैः श्रीकृष्णजन्मखण्डे गोलोकनिरूपणे भगवल्लीला न प्रतिपादिता स्यात्, तत्प्रतिपादकमूलभूतश्रुत्यन्तरादर्शनात् 'श्रुतेरिवार्थं स्मृतिरन्वगच्छ दि'ति पूर्वोक्तविष्णोरनुग्रहाद्वैष्णवस्य यूपस्याग्निष्टोमाग्निमाहवनीयेन संमितं स्थापयामीत्यर्थः । एतस्यैव धाम्नो भूतले गोकुलरूपेण प्रादुर्भावात् । अत एव प्रभुचरणैर्विद्वन्मण्डने तत्परत्वेन व्याख्यातायामपि न विरोधः ।

ननु 'नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमी'ति श्रुतौ एकस्मिन्विशेषणे नम इति कथनेन सर्वत्र सम्बन्धः स्यादेवेति पुनः प्रतिविशेषणे नम इति कथनेनैश्वर्यादिषड्धर्मिद्वयरूपाष्टकं ज्ञायते । न च सप्तसु विशेषणेषु नमःपदोपादानात्सप्तरूपमेवेति वाच्यम् । बृहत इति विशेषणे चतुर्थीकथनेन पृथग्रूपत्वं ज्ञायते । धर्मित्वेन रूपेण धर्मिण एकत्वेपि संयोगविप्रयोगद्योतनार्थं विशेषणद्वयं नमो विष्णवे बृहत इति । अथवा विप्रयोगात्मकधर्मिरूपस्य भक्ताधीनत्वाद्रसशास्त्रे नायिकाप्राधान्याच्च नमनप्रयोजनाभावः सूचितः । अतः परं सर्वत्र नमःपदकथनानुरोधेनाष्टस्वरूपात्मकषड्गुणधर्मिद्वयसहितं श्रीमदाचार्यस्वरूपं

---

प्रेत्याहुः माहात्म्येत्यादि । एकादशेन्द्रियाणामिति । सेवौपयिकानामित्यर्थः । विद्वन्मण्डन इति । विस्तरार्थावलोकनार्थिभिस्ततोऽवलोकनीयमिति बोधितम् ।

' निजाचार्यपदाम्भोजरेणवः कृपयन्तु मे ।
ये धृता मूर्ध्नि कुर्वन्ति श्रीमद्गोविन्दवल्लभम् ॥

प्रासङ्गिकमुपपाद्य प्रस्तुतमनुवदन्ति नन्विति । संबन्धः स्यादेवेति नमस्कार्यनमस्कारकभावरूपः । सप्तरूपमेवेति । बृहत इदं विष्णव इत्यस्य विशेषणमिति भावः । विशेषण इति । श्रीमदाचार्यवाचकाग्निशब्दस्य । तस्मिन् यद्यप्येकस्यैवैतानि विशेषणानि, तथापि प्रत्यङ्नमस्कारकथनेन पृथग्रूपत्वं बोध्यम् । पृथग्रूपत्वमिति । बृहत इत्यत्र नमःशब्दयोगमन्तरा चतुर्थ्यनुपपत्त्या तत्सिद्ध्यर्थं तदाक्षेपात्स्थत्वं सुवचमिति भावः । भक्ताधीनत्वादिति । ' अहं भक्तपराधीन ' इत्यादिश्रीभागवतवचनात् मुख्यभक्तत्वं श्रीव्रजसुन्दरीष्वेवेत्यभिप्रेत्याहुः नायिकाप्राधान्याच्चेति । अन्यथा रसपुष्टता न स्यात् । अष्टस्वरूपात्मकेत्यादि । अष्टस्वरूपात्मको हि पुरुषोत्तमः । अत एव श्रीभागवते पूर्णपुरुषोत्तमप्रादुर्भावप्रतिपादकान्यय सर्वेत्या-

प्रदृश्यते । तथाहि 'नमो ब्रह्मणे नमो अस्त्वग्नये नमः पृथिव्यै नम ओषधीभ्यः । नमो वाचे नमो वाचस्पतये नमो विष्णवे बृहते करोमि' । नम इति श्रीमदाचार्याणां पुरुषोत्तमरूपत्वाज्जीवैर्नमनमेव कर्तव्यमिति सिद्धान्तान्नमनमेवोक्तम् ।

ननु कुत्रोक्तमाचार्याणां ब्रह्मत्वमिताकयाङ्क्षायां छान्दोग्ये पठ्यते 'आत्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ती'ति। अतति व्याप्नोति सर्वमित्यात्मा । आत्मानं पुरुषोत्तं वैश्वानरं श्रीवल्लभरूपधारिणम्। 'वैश्वानरो वल्लभाख्य' इति वाक्यात् । ननु श्रीमदाचार्याणां श्रीवल्लभ इति नामप्रसिद्धिस्तां विहाय कथं श्रुतौ वैश्वानर इति नामकथनमिति चेन्न । परोक्षवादार्थमिदम् । तत्र 'परोक्षप्रिया इ वै देवा'

---

दीनि सार्धवसुपरिमितानि श्लोकानि । तथा सिद्धान्तरहस्यसार्धाष्टश्लोकान्यपि पूर्णपुरुषोत्तमबोधकानि संगतानि । अत एव यमुनाष्टकविवृतौ 'भगवताष्टविधमैश्वर्यं कालिन्द्यै दत्तमिति ज्ञापनायाष्टभिः श्लोकैः स्तुवन्ती'त्युक्तं श्रीप्रभुचरणैः । एवं च यथाष्टविधमैश्वर्यरूपत्वं श्रीमन्नन्दकुमाराणां तथा श्रीमदाचार्याणामिति भावः । सिद्धान्तादिति । शास्त्रार्थनिबन्धे श्रीमदाचार्यकृतसिद्धान्तादिति भावः ।

श्रीमदाचार्येषु पुरुषोत्तमत्वं प्रतिपादयन्तः पूर्वमाशङ्कामुद्‌घाटयन्तस्तां परिहरन्ति नन्वित्यादि । छान्दोग्ये पठ्यत इति । अग्नेरपि व्यापकत्वं सर्वस्वरूपत्वं पूर्वोदाहृतभारतादिवचनेषु श्रुतिष्वपि निरूपितम् । अधुना सर्वस्वरूपप्रतिपादिका श्रुतिरुदाह्रियते 'इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः ॥' अस्यार्थो निरुक्तकारैरुक्तः । इममेवाग्निं महान्तमात्मानमेकमात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुणमग्निं दिव्यं च गरुत्मन्तं दिव्यं दिविजो गरुत्मान् गरणवान् गुर्वात्मा महात्मेति वा । 'यस्तु सूक्तं भजते यस्मै हविर्निरूप्यते यमेव सोऽग्निर्निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजत' इति । एतेनैकस्यानेकरूपकथनं परब्रह्मणि न घटते ।

वैश्वानर इति । वैश्वानरपदनिरुक्तिर्निरुक्तकारैरुक्ता वैश्वानरस्येति श्रुत्यवतरणे । इयं श्रुतिः श्रीमदाचार्यवर्यैर्यदा विद्यानगराधिपतिकृष्णदेवाभिधराजसंसदि गिरिजाजानिप्रवर्तितमायावादविवादचातुरीधुरीणैः पण्डितैः पराजितेषु वैष्णवेषु साकारब्रह्मवादस्थापनपूर्वकं वैष्णवमतस्थापने सति सकलसंप्रदायिविप्रवर्यैराचार्यैर्निगदितं राजानं प्रति–एतेऽस्माकं स्वामिन एत आचार्या भवन्त्विति विज्ञापयामासुरिति वृत्तं वदति, तदेवं सर्वमुपपाद्यते । तथा हि । 'वैश्वानरः कस्माद्विश्वान्नरान्नयति विश्व एनं नरा नयन्तीति वा विश्वानर एव स्यात्प्रत्यृचः सर्वाणि भूतानि तस्य वैश्वानरस्तस्यैषा भवति' । 'वैश्वानरस्य सुमतौ स्याम राजा हि कं भुवनानामभिश्रीः । इतो जातो विश्वमिदं विचष्टे वैश्वानरो यतते सूर्येण' । तत्र नरशब्देन दैविनीवास्तायति नाममन्त्रब्रह्मसंबन्धादिना सकलदोषहरणपूर्वकं व्यापिवैकुण्ठादिषु प्रापयति । दैविनीता

यदाऽस्मिल्लोके समायान्ति तदा तदुद्धारार्थं श्रीमदाचार्याः प्रादुर्भवन्तीत्यभिप्रेत्योदितं विश्वे एनं नरा नयन्तीति निरुक्तार्थः । यद्वा विश्वे नरा दैवजीवाः श्रीदामोदरदासादयः सेवका अस्य श्रीवल्लभाचार्यस्य । 'नरे संज्ञाया'मिति विश्वशब्दस्य दीर्घः । विश्वानर एव वैश्वानरः । स्वार्थिकः प्रज्ञाद्यण् । यत्तु विश्वानरस्यापत्यमिति व्युत्पाद्य बिदादित्वादञित्युक्तं रामाश्रमैस्तत्तु लौकिकाग्निपरशब्दव्युत्पत्तिपरम् । श्रुत्यर्थस्तु वैश्वानरस्य श्रीवल्लभाचार्यस्य सुमतौ सुष्ठु मतिर्ज्ञानं यस्यां तस्यामाज्ञायां वयं स्याम आज्ञाकारिणो वयं भवेमेति कृष्णदेवाख्यराजानं प्रत्युक्तिर्वैष्णवानां सर्वेषां ब्राह्मणानाम् । यद्वा सुमतौ कल्याण्यां मतौ स्यामेति निरुक्तकाराः । या श्रीमदाचार्याणां बुद्धिस्तस्यां स्याम तदनुसारिणो वयं भवेमेति तदर्थः । हि यतः कं सुखं भवतीति अतोऽस्माकं सर्वेषामयं राजा आचार्यः यथा भवान् स्वराज्यस्य तथास्माकमयमित्यर्थः । नन्वेतादृशश्चेत्तर्हि किं कर्तव्यमित्यभिप्रेत्याहुः **भुवनानामभिश्रीरिति** । सर्वेषां भूतानामभिश्रयणीय इति निरुक्तकाराः । सर्वेषामाश्रयणीयत्वेन सेवनीयोऽयमिति भावः । अभिश्रीः श्रयितुं सेवितुं योग्य इत्यर्थः । नन्वन्येऽप्याचार्याः सन्तीति किमयं सेवनीय इति तत्राहुः **इतो जातो विश्वमिति** । इतोऽस्माच्छ्रीवल्लभाख्याद्विश्वं जगज्जातं प्रादुर्भूतः । जात इत्युपलक्षणं स्थितिलययोः, पूर्वोक्तभारतवचनेषु निरूपितं जन्मस्थितिलयादि, तेनास्य ब्रह्मत्वमतोऽयमेव शरणयोग्यः । नन्वस्तु ब्रह्मत्वमस्माकं किमायातमिति चेदस्मद्वैष्णवमार्गस्थापनमनेनैव कृतमित्यभिप्रेत्याहुः **इदं विचष्ट इति** । इदं साकारब्रह्मवादस्थापनपूर्वकभगवत्सेवनं विचष्टे, मायावादखण्डनपूर्वकमुक्तवान् । किञ्चास्य चलने श्रीपुरुषोत्तमा अपि सह चलन्तीति सदा पुरुषोत्तमा न त्यजन्तीत्यवश्यं सेवनीय इत्यभिप्रेत्याहुः **वैश्वानरो यतत इत्यादि** । वैश्वानरः श्रीवल्लभाख्यः । **सूर्येण** । सरतीति सूर्यः पुरुषोत्तमः । यद्वा सूर्यशब्देन सूर्यान्तर्वर्ती पुरुषोत्तमो लक्ष्यते । तेन सह यतते मायावादनिरासार्थं दैवोद्धारार्थं च यतते प्रयत्नवान् भवतीत्यर्थः । एतेन परमकृपालुत्वं ध्वनितम् ।

किञ्च प्रसङ्गादन्यापि श्रुतिरेतदर्थप्रतिपादिकोदाह्रियते । श्रीमदाचार्यान् प्रति सर्वे ब्राह्मणा राजा सामात्यश्च विज्ञापयामासु—गणानां त्वा गणपतिꣳ हवामहे कविं कवीनामुपमश्रवस्तमम् । ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥ अस्यार्थः । ब्रह्मणां ब्रह्मणस्पते, त्वा त्वां वयं हवामहे अतस्त्वं ऊतिभिः शृण्वन् सदनं सीदेत्यन्वयः । हे ब्रह्मणस्पते अक्षरस्वामिन्, उद्देश्यत्वा'त्संबोधने चे'ति सूत्रेण सम्बोधनविभक्तिः । सम्बोधनत्वं चाभिमुखीकृत्याज्ञातार्थविषयकज्ञानानुकूलव्यापारवत्त्वम् । ब्रह्मणां ब्राह्मणानामित्यर्थः । 'ब्रह्मा विप्रः प्रजापति'रित्यमरात् । त्वा त्वामित्यर्थः । 'त्वामौ द्वितीयाया' इति सूत्रेण त्वादेशः । त्वां श्रीवल्लभाख्यं वयं सर्वे हवामहे जुहुमः प्रीणीमहे । कनकाभिषेकेण श्रौतेन विधिना तर्पयाम इत्यर्थः । प्रीणनमप्यस्यार्थो भवतीति महाभाष्यात् । रूपमिद्धिम्त्नुदिता पूर्वम् । नः अस्माकं सर्वेषामूतिभिः । द्वितीयार्थे तृतीया । ऊतीः । अवतेः 'स्त्रियां क्तिनि'ति क्तिन्प्रत्यये

'ऊतियूतिजूतिसाती'ति निपातितोऽयं शब्दः । तत्प्रयोजनं त्वन्तोदात्तार्थम् । नच प्रत्ययस्वरेण सिद्धिः । क्तिनो नित्यत्वेन 'ञ्नित्यादिर्नित्यमि'त्यनुशासनादाद्युदात्तत्वात् । 'ज्वरत्वरे'ति सूत्रेणोपधाया ऊठि कृते रूपं बोध्यम् । अवतेः कान्तिरप्यर्थः । कान्तिः कामना गृह्यते । तथा च कर्मीभूताः कामना इत्यर्थः । अत्र ऊतिशब्दार्थं प्रति श्रुधातुनिरूपितं कर्मत्वं तच्च प्रकृतधात्वर्थव्यापारजन्यफलशालित्वम् । शृण्वन् सादरं श्रुतिविषयीकुर्वन् सदनम् । संहितायां सदनमेव सादनम् । सीदन्त्यस्मिन्नित्यधिकरणे ल्युट् प्रज्ञादित्वादण् । पदानां व्याख्यानरूपत्वात् सदनमिति दीर्घरहितः पाठः । सदनशब्दो गृहवाची । अस्माकं गृहं प्रति सीद आगच्छ । अयं भावः । मायावादिभिर्जितेषु वैष्णववर्येष्वस्मासु अस्मदीयानां मतं कथं स्थास्यतीति व्याकुलहृदयानां स्वमतस्थितिर्भवत्विति कामनाः शृण्वन् यथा वैष्णवमतस्थापनार्थमागतोऽसि तथा सर्वदैवागन्तव्यमिति । सीदेति षद्लृधातोर्गत्यर्थकात्प्रार्थनायां लोट् । श्रीमतामागमनेन सकलविमतान्धकारपटलविघटना समजनि । अतो भवन्तः श्रीमत्पुरुषोत्तमसदृक्सकलवेदादिविशिष्टा इत्यभिप्रेत्याहुः । उपमश्रवस्तम उपमीयते इत्युपमं, उपमितमुपमेयमित्यर्थः । मूलविभुजादित्वात्क' 'आतो लोप इटि चे'त्यालोपः । उपमानविषय इति यावत् । श्रूयतेऽस्मिन् धर्मादिकमिति श्रवो वेदः । उपमः श्रवो यस्य स उपमश्रवाः अतिशयेनोपमश्रवा इति उपमश्रवस्तमस्तमित्यर्थः । 'अनेकमन्यपदार्थे' इति बहुव्रीहिः । 'अतिशायने तमबिष्ठनावि'ति तमप् । अत्रोपमशब्दस्योपमावाचित्वात्तस्य चोपमानाकाङ्क्षायां पुरुषोत्तमनिष्ठवेदस्योपमानत्वनिर्णयेन पुरुषोत्तमसदृशः श्रवो वेदो यस्य स इत्यर्थः पर्यवसन्नः । एवं च वेदार्थवित्त्वं यथा भगवति 'वेदविदेव चाहमि'ति गीतावचनात्, तथा वेदयाथार्थ्यवित्त्वं श्रीमदाचार्येष्विति भावः । एतदेव 'न ह्यन्यो वागधीशादि'ति पद्येनोदितं श्रीमत्प्रभुचरणैः । 'उत त्वः पश्यन्नि'ति श्रुत्या श्रीमदाचार्यान्यस्य सरस्वतीहार्दभावज्ञानाभावत्वं बोधितमिति प्रागेव निरूपितम् । एव चैत एवाश्रयणीया इति भावः । किंभूतं त्वां श्रीवल्लभम् । गणानां दैविगणानां सर्वेषां गणपतिं । संबन्धे षष्ठी । स च स्वस्वामिभावरूपः । स्वामी सर्वेषामाचार्यः । एको गणशब्दो दैविगणपरः । द्वितीयस्तु समुदायवाची । तेन दैविजीवानां गणः समुदायस्तस्य स्वामी उद्धर्तेति यावत् । अतो दैवैः सेवनीय एवेति भावः । पुनः किंभूतं त्वां श्रीवल्लभम् । कवीनां कविं । कवयो ज्ञानिनस्तेषां मध्ये कविः ज्ञानीत्युक्ते विजातीयज्ञानशालीत्यर्थो गम्यते । यथा शूराणां मध्ये शूर इत्युक्ते विजातीयशूर इत्यर्थस्तद्वदिहापि 'संख्यावान् पण्डितः कवि'रिति कोशेन कविशब्दस्य ज्ञानिनि शक्तिबोधनात् कोशस्यापि शक्तिग्राहकत्वात् । तथा चाभियुक्ताः 'शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ।' इति । एतेनालौकिकज्ञानवत्त्वेन पुरुषोत्तमत्वं सूचितम् । यद्वा लोकोत्तरवर्णनशीलाः कवयस्तेषां मध्ये श्रेष्ठमित्यर्थः । पुनः किंभूतं त्वाम् ज्येष्ठराजं अतिशयेन प्रशस्यः स्तुत्य इत्यर्थे 'प्रशस्यस्य श्रः' इत्यनन्तरं 'ज्य चे'त्यनेन ज्यादेशः 'अतिशायने

इति श्रुतेः 'परोक्षवादो वेदोऽयं परोक्षं मम च प्रिय'मिति भगवद्वाक्याच्च । अत एव श्रीभागवते श्रीराधानामोच्चारणं स्पष्टतया न कृतं परोक्षेण कृतम् । उपास्ते पुष्टिमार्गीयैर्भक्तैः सेवा क्रियते । सर्वेषु लोकेषु वैकुण्ठादिषु सर्वेषु भगवल्लोकेषु श्रीमदाचार्याणां भगवदास्यरूपत्वात्तत्रोपासनं युक्तम् । सर्वेषु भूतेषु ब्राह्मणक्षत्रियवैश्यशूद्रेषु तत्तत्पत्नीषु च 'स्त्रीशूद्राद्युद्धृतिक्षम' इति वाक्यात् आत्मसु गोस्वामिषु 'स्ववंशे स्थापिताशेषस्वमाहात्म्य' इति वाक्यात् सर्वे पुष्टिमार्गीयाः वैश्वानरं श्रीवल्लभमुपासत इत्यर्थः । अन्नमत्ति भोजनं करोति । तत्र श्रीमदाचार्याणां पुरुषोत्तमत्वेन प्रादुर्भावे गीताप्रामाण्यम् । 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्' । हे भारत, यदा यदा यस्मिन् यस्मिन् काले धर्मस्य भगवद्भक्त्यादिरूपस्य ग्लानिः संकोचो भवति । अधर्मस्य ज्ञानभक्त्यादिनाशकस्य अभ्युत्थानमुत्पत्तिर्भवति । हीति निश्चयेन । तदा आत्मानं स्वस्वरूपमहं सृजामि अर्थाच्छ्रीमदाचार्यादिरूपेणेत्यर्थः ।

ननु श्रीमदाचार्याणां ब्रह्मत्वादात्मानं वैश्वानरमिति श्रुतौ वैश्वानरशब्दोऽग्न्यादिवाचक इतिचेन्न । वैश्वानरशब्दो ब्रह्मवाचक एव । तत्र सूत्रं प्रमाणम् 'वैश्वानरः साधारणशब्दविशेषात्' । तत्र को नाम आत्मा किं ब्रह्मेत्युपक्रम्य 'तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा' इत्याद्याम्नायते । तत्र वैश्वानरशब्दात् 'संवत्सरो वा अग्निर्वैश्वानर' इति 'संवत्सरो वै प्रजापति'रिति च श्रुतेर्हिरण्यगर्भोपासनपरमिदं वाक्यम् ।

---

तमभिष्ठनावि'तीष्ठनि श्रुतिस्मृतिस्तुतिविषय इत्यर्थः । एतेन भवान् सर्वथा स्तव्य इति ध्वनितम् । ज्येष्ठश्चासौ राजा चेति कर्मधारयः समासान्तष्टच्प्रत्ययः । 'राजृ दीप्तावि'ति धातोः कनिन् । यद्वा वृद्धप्रकृतिको ज्येष्ठशब्दः 'वृद्धस्य चे'ति सूत्राज्ज्यादेशः । सर्वेभ्योऽपि वृद्धः पूर्णपुरुषोत्तम इत्यर्थः । अथवा ज्येष्ठानामत्यन्तवृद्धानां सर्वेषां राजा स्वामी आचार्य इत्यर्थः । त्वामेव शरणं शरणं गताः स्म इति भावः । यद्यप्यस्यां श्रीमदाचार्यवाचकपदाभावस्तथापि श्रीमदाचार्यनिष्ठधर्मोपलम्भात्पूर्वश्रुत्येकवाक्यतया चाचार्यपरत्वेन व्याख्यातेति दिक् ।

प्रकृतमनुसरामः । परोक्षेण कृतमिति । यद्यपि 'अनयाऽऽराधितो नूनं भगवान् हरिरीश्वर' इति श्रीभागवते राधया इतो राधितः शकन्ध्वादित्वात्पररूपमिति श्रीराधानाम श्रूयते तथापि संहितायामप्रतीतौ शकन्ध्वादिषु पाठकल्पने मानाभावात्तथार्थाभासनाच्च परोक्षरूपमित्यर्थः । ब्राह्मणेत्यादि । कैरिति जिज्ञासायां तैरित्यर्थः । आत्मसु गोस्वामिषु इति । 'अङ्गादङ्गादि'ति श्रुत्या स्ववंशे स्वस्वरूपत्वमेवेत्यर्थः । श्रीमदाचार्यरूपेणेति । आत्मानं वैश्वानरमित्यादिषु सामानाधिकरण्यादात्मपदेन श्रीवल्लभाचार्याणां ग्रहणमिति भावः। इत्यादीति ।

'एतस्य वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मा सन्देहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यपचन

किञ्चोपक्रमे ब्रह्मात्मपदश्रवणात्तदेकवाक्यत्वेन ब्रह्मपरमिदमिति संशये । हिरण्यगर्भस्य समष्ट्यभिमानित्वेन लोकावयवत्वोपपत्तेस्तदुपासकस्यान्नभोजनात्मकफलस्यापि सम्भवाद्धिरण्यगर्भत्वेनाग्नित्रयात्मकत्वस्यापि युक्तत्वाद्धिरण्यगर्भोपासनपरमिदमिति प्राप्ते उच्यते । "वैश्वानरः साधारणशब्दविशेषात्" वैश्वानरपदवाच्यः परमात्मैव । कुतः । येऽस्मिन्वाक्ये हिरण्यगर्भसाधारण्यशब्दाः श्रुतास्तेभ्योपि प्रादेशमात्रस्यैव द्युमूर्धत्वादिरूपे विशेषाम्नानात् । विरुद्धसर्वधर्माश्रयत्वसर्वभवनसमर्थत्वं परमात्मन एव नान्यस्य सम्भवति । अतो वैश्वानरशब्दो ब्रह्मपरः ।

श्रीमदाचार्याणां पुरुषोत्तमत्वे श्रीभागवतस्य समाधिभाषाप्रमाणं भगवद्वाक्यम् 'आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरुः' । आचार्यं मामिति मामेवाचार्यं विजानीयात् नत्वण्वपि मन्यूनम् । अत एवोक्तम् 'अग्नित्वं वर्णितं ते कविभिरपि सदा वस्तुतः कृष्ण एवे'ति । 'नावमन्येत कर्हिचि'दिति श्रीमदाचार्या भगवद्रूपा न सन्तीति नावमन्येत अवज्ञां न कुर्यात् । कर्हिचित् कदाचिदपि । 'न मर्त्यबुद्ध्याऽसूयेते'ति जीववत्प्राकृतरूपधारणेपि न असूयेत गुणेषु दोषारोपणं न कर्तव्यं 'सन्मनुष्याकृति'रितिवाक्यात् । जीवानामुद्धारार्थं मनुष्यनाट्यस्वीकारात् । 'समानशीलव्यसनेषु सख्य'मिति तथा दैवजीवानां सख्यं सिद्धयति । ननु श्रीमदाचार्याणामवच्छेदकावच्छेदेन मनोरथपूरणे कथं सामर्थ्यं भवतीति तदर्थमाश्रयान्तरमपि कर्तव्यमित्याशङ्क्याहुः सर्वदेवमय इति । अत्र प्राचुर्यार्थकमयट्प्रत्ययस्तेन यथा भगवद्देहे तत्तदङ्गेषु आधिदैविकदेवानां स्थितिस्तद्वच्छ्रीमदाचार्याणां श्रीमदङ्गेषु स्थितिस्तेनावच्छेदकावच्छेदेन सकलमनोरथपूरणकर्तृत्वसामर्थ्यस्य विद्यमानत्वात्कदाचिदपि दुःसङ्गेन वा जडबुद्ध्या वान्याश्रयो न कर्तव्यः स्वधर्महान्यनन्यत्वभङ्गप्रसङ्गात् । यदि श्रीमदाचार्याणां यत्फलदानेच्छा नास्ति, तत्फलदाने केषांचिदपि देवादीनां सामर्थ्यं नास्ति ।

आधिदैविकस्य श्रीमदाचार्येषु विद्यमानत्वात् तदर्थनान्याश्रयः कर्तव्यः । ननु यः कश्चिद्वेदशास्त्रसम्पन्नश्चेत्तस्यैव गुरुकरणं युक्तं, किमिति श्रीमदाचार्याणां तद्वंश्यानां च गुरु-

---

आस्यमाहवनीय' इत्याद्याम्नायते । ब्रह्मपर इति । तेन श्रीमदाचार्याणां ब्रह्मत्वं निराबाधम् । अत्र सूत्रे विशेषस्तु भाष्यादिषु स्फुट एव ।

मामेवाचार्यमिति । श्रीवल्लभाचार्यमित्यर्थः । 'आचार्यो भगवानग्नि'रिति वाक्यात् । उत्सवनिर्णये श्रीमदाचार्योत्सवनिर्णयप्रसङ्गे । व्रजेशाचार्यरूपेणावतिष्ठत इति शंकराचार्यकृतभारतीयमद्यनामटीकायां व्यासोक्तेश्चेति । श्रीपुरुषोत्तमचरणैरुक्तं न कुर्यादिति गुरोरवज्ञायां महदनिष्टप्रसक्तिरिति बहुतन्त्रपुराणादिषु निरूपितं विस्तरभयान्नात्रानूद्यते । नान्याश्रयः कर्तव्य इति । 'यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः । प्राणोपहाराच्च यथेन्द्रियाणां

करणमिति चेन्न । गुरुत्वं तेषामेव सम्भवतीत्याहुः गुरुरिति । 'श्रीकृष्णज्ञानदो गुरु'रिति वाक्यात् तदुपदेष्टा गुरुः । तस्य लक्षणमाह 'कृष्णसेवापरं वीक्ष्य दम्भादिरहितं नरम् । श्रीभागवततत्त्वज्ञं भजेज्जिज्ञासुरादरात् ।' एतादृशगुरुलक्षणं श्रीमदाचार्येषु श्रीवल्लभाचार्येषु श्रीविठ्ठलनाथेषु वा । एषां कुले 'अस्मत्कुलं निष्कलङ्क'मिति वाक्यात् अन्यगुरोः

---

तथैव सर्वार्हणमच्युतेज्येति श्रीभागवतवाक्ये वृक्षमूलसेचकवत्पुरुषोत्तमभजनतः सर्वदेवतर्पणमुदितम् । युक्तं चैतत् । न हि पादपस्य स्कन्धादिसेकेन तर्पणं प्रत्युत शुष्कतैव । तत्त्वं तु मूलसेकेनैवैवं सर्वमयाश्रयत्वेन सर्वाराधनफलसिद्धयाऽन्याश्रयो न कार्य इति भावः । अन्याश्रयकरणे न किंचित्फलम् । तथा च भरद्वाजसंहितायामाचार्यप्रकरणे ' जानतस्त्वनुपेतस्य ब्रह्मचर्यममीप्सतः । वृथैवात्मसमुत्क्षेपो जायते कृष्णवर्त्मनि ' । अस्यार्थः । अन्यगुरोः समाश्रयेण श्रीमद्वल्लभाचार्यसमाश्रयणमन्तरेणात्मसमर्पणमनुतिष्ठतो न किञ्चित्फलमित्याह जानत इति । अन्याचार्यसमाश्रयेण ज्ञानवतः पुरुषस्य कृष्णवर्त्मनि श्रीमदाचार्ये श्रीवल्लभाचार्ये अनुपेतस्योपसत्तिमकृतवतो ब्रह्मचर्यं परं ब्रह्मानुभवपूर्वकं तत्कैङ्कर्यं अभीप्सतः प्राप्तुमिच्छतः आत्मसमुत्क्षेप आत्मसमर्पणं वृथैवेत्यर्थः । यतो यत्केनापि न दातुं शक्यं तद्दानसामर्थ्यवत्त्वमत्रैव ' अदेयदानदक्षश्च लौकिकैहिकदानक'दिति वचनादन्याश्रयो न कार्य इति भावः । दम्भादिरहितमिति । आदिपदेन क्रोधादयो लक्ष्यन्ते । पूर्वोक्तवैष्णवतन्त्रोदाहृताष्टादशदोषरहितत्वं ज्ञेयम् । तच्च श्रीवल्लभ एव पुरुषोत्तमत्वात् । श्रीभागवततत्त्वज्ञमिति । ' श्रीभागवतपीयूषसमुद्रमथनक्षम ' इति वाक्यात्, ' श्रीभागवतगूढार्थप्रकाशनपरायण ' इति वाक्याच्च, ' अर्थं तस्य विवेचितुं नहि विभुर्वैश्वानराद्वाक्पतेरन्यस्तत्र विधाय मानुषतनुमि'ति वाक्याच्च तज्ज्ञत्वमत्रैवेति भावः । यद्वा भगवत इदं भागवतं भगवत्सेवादिरूपमित्यर्थः । यद्वा भगवदात्मानुभावप्रकटनरूपं तत्त्वमित्यर्थः । ' तस्यैवात्मानुभावप्रकटनहृदयस्याज्ञया प्रादुरासी'दिति श्रीप्रभुचरणाः ।

श्रीविठ्ठलनाथेष्विति । पूर्णपुरुषोत्तमरूपत्वात्तेषामेव गुरुकरणं नान्येषामित्यर्थः । किञ्च यत्र फलमेव साधनं तत्रान्यसाधनं नापेक्षितमिति भावः । श्रीमत्प्रभुचरणप्रतिपादकश्रुतयो निरूपिता निरूपयिष्यन्ते च । एषां कुल इति । ' सप्तपूरुषविज्ञेये समर्पणसुनिर्मले । कुले जातो गुणैर्युक्तो विप्रः श्रेष्ठतमो गुरुरि'ति पञ्चरात्रोक्तेः । सप्तपूरुषा विज्ञेया यस्मिन् तस्मिन् सुनिर्मले सर्वकलङ्करहिते कुले जातः गुणैरागमोक्तैर्युक्तो विप्रः श्रेष्ठतमः सर्वतः श्रेष्ठः गुरुरिति तदर्थः । एतल्लक्षणलक्षिता एते एतत्कुलं वा । निष्कलङ्कमिति । अयं श्लोकस्त्रिमङ्गललितग्रन्थारम्भे श्रीप्रभुचरणैः । समुदितं तत्त्वं चागमोक्तगुरुलक्षणविशिष्टत्वे सति जीवोद्धारकर्तृत्वम् । किञ्च गुरुलक्षणमागमेष्युक्तं ' शान्तो दान्तः कुलीनश्च विनीतः शुद्धवेषवान् । शुद्धाचारः सुप्रतिष्ठः शुचिर्दक्षः सुबुद्धिमान् ॥ आश्रमी ध्याननिष्ठश्च मन्त्रतन्त्रविशारदः । निग्रहानुग्रहे शक्तो गुरुरित्यभिधीयते ॥' इति । एतादृशलक्षणं श्रीमदाचार्येष्वेव श्रीप्रभूणामेव च । तदंगे

सकाशात् पूर्णपुरुषोत्तमप्राप्तिर्न । 'मन्त्रोपदेशमात्रेण नरा मुक्ताश्च भारत । पूर्वैश्च कोटिपुरुषैः परैः सार्धं हरेरहो । कोटिजन्मार्जितात्पापान्मन्त्रग्रहणमात्रतः । मुक्ताः शुध्यन्ति यत्पूर्वकर्म निर्मूलयन्ति च' ।

सर्वेषां गुरुद्वारैव सद्गतिमाह 'पुत्रान्दारांश्च शिष्यांश्च सेवकान्बान्धवांस्तथा । यो दर्शयति सन्मार्गं सद्गतिस्तद्भवेद्ध्रुवम्' ॥ स्त्रीपुंसोरेकगुरोरुपदेशश्चेद्भ्रातृभगिनीतिसम्बन्धं

---

तु 'स्ववंशे स्थापिताशेषस्वमाहात्म्य' इति वचनात् निग्रहानुग्रहशक्तिश्च श्रीमदाचार्याणामेव तत्कुले संभवति । गुरुकरणमेतेषामेव मन्त्रोपदेशेनैव पुरुषोत्तमप्राप्तिः । किञ्च तद्वंश्याना सर्वेषामेव पुरुषोत्तमत्वात्तत्प्राप्तिस्तेभ्यः सुतरामेव नान्येभ्य इत्याहुः प्राप्तिर्नेति । श्रुतिरपि श्रीवल्लभवंशोद्भवाना प्रतिपादिका श्रीमदाचार्यवंशगुरुकरणमावश्यकमित्यभिप्रेत्य तेषा स्वरूपमाह । 'अस्थुरुचित्रा उषस पुरस्तान्मिता इव स्वरवोऽध्वरेषु । व्यूव्रजस्य तमसो द्वारोच्छन्तीरव्रञ्छुचय पावका' । अस्यार्थ । पावकाः पावकस्य श्रीवल्लभाचार्यस्य वंशोद्भवा पुरस्तात्प्रथम मिता इव श्रीगोपीनाथश्रीविठ्ठलनाथौ पुत्रौ श्रीमद्गिरिधरादय सप्त पौत्राश्चेति मिता उच्यन्ते । वस्तुतस्तु तेषु ब्रह्मत्वनिश्चयादपरिमिता इति द्योतनार्थमिवेत्यस्य ग्रहणम् । अस्थु स्थितवन्त । यद्वा पुरस्तान्मिता इवेत्यनेन तत्पुत्रपौत्रसमूहत्वेनान्येऽमिता इत्यर्थ । कथभूता । उ इत्याश्चर्ये । चित्रा चित्रमनेकधर्मविशिष्ट ब्रह्म येषा ते चित्रा । अर्शआदित्वादच् । अनेकधर्मविशिष्टब्रह्मबोधका इत्यर्थ । यद्वा चित्रा विविधरसविशिष्टा लीलारसाविष्टा वा । निर्मलत्वमाह । उषस उषःकाल इव निर्मला इत्यर्थ । तेन दम्भादिराहित्यं सूच्यते । तथा चास्मत्कुल निष्कलङ्कमिति वचनम् । सकलवेदोक्तयज्ञादिकर्तृत्वमाह । अध्वरेषु यज्ञेषु स्वरवः स्वरन्ति वेदोच्चारणरूपं शब्दं कुर्वन्तीति ते स्वरव । 'स्वृ शब्दोपतापयोरस्मात् शृस्वृस्निही'त्यु । भक्ताना क्रोधादिनिर्मूलकत्वमाह । व्रजस्य भक्तसमूहस्य तमसो द्वारं 'नरकस्तमउच्यते' इति वाक्यात् तमसो नरकस्य द्वारं कामक्रोधलोभरूपम् । तथा च गीतासु 'त्रिविधं नरकस्येद द्वारं नाशनमात्मन । काम क्रोधस्तथा लोभस्तस्मादेतत्त्रय त्यजेत्' इति । व्युच्छन्तीः नाशयन्ती अव्रन् वरणं कुर्वन्त स्वदासत्वेनाङ्गीकुर्वन्त शुचयः शुद्धा इत्यर्थ । 'शुद्धाचार शुचिर्दक्ष सुबुद्धिमा'निति वाक्यात् । एवं च श्रीमदाचार्यवंशस्य श्रुतिप्रतिपादितत्वादन्यस्य मुख्यया वृत्त्या तदभावेन पुरुषोत्तमरूपत्वेनान्यत प्राप्तिर्नेत्यर्थ । किञ्चान्यत समर्पणमपि न संभवतीति भारद्वाजसंहितावचनमुपपादितं पूर्वम् । अन्येऽपि मन्त्रा एतत्कुलप्रतिपादका वक्ष्यन्ते । गुरुशरणमहिमानमनुस्मारयन्ति मन्त्रोपदेशेत्यादि । मन्त्रोपदेशमात्रेण पापमोचकत्वसामर्थ्यमत्रैवेत्यभिप्रेत्योक्त श्रुतिस्मृतितन्त्रसूत्रादिभि पुरुषोत्तमत्वेन स्ववंशे स्थापिताशेषस्वमाहात्म्यत्वात् ।

केचिल्लौकिकस्त्रीपुंसोरेकगुरुकरणे भ्रातृभगिनीत्वापातकान्दिशीका एकगुरुकरण नेच्छन्तीति तन्निरासार्थमाहुः स्त्रीपुंसोरिति । अत्र प्रमाणं पाद्मोक्तमनुवदन्ति आचार इत्यादि ।

लोके प्रसिद्धं निषेधति स्मृतिः 'आचारो धर्ममार्गश्च गुरुर्मन्त्रश्च देवताः । दम्पत्यपत्यभूत्याद्यैरेकीकृत्य महत्फलम्' । किञ्च 'विष्णुतत्त्वं परिज्ञाय ह्येकं वानेकभेदवत् । दीक्षयेन्मेदिनीं सर्वां किं पुनश्चोपसन्नतान् ।

गुरोरुत्कर्षमाह 'हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन । तस्मात्सर्वप्रयत्नेन गुरुमेव प्रसादयेत् । गुरौ वसति यस्त्वन्यमाश्रयेत्पूजयेत्कुधीः । स दुर्गतिमवाप्नोति दत्तमस्य च निष्फलम् । प्रयत्नेन गुरौ पूर्वं पश्चादन्यत्र दापयेत् । अविद्यो वा सविद्यो वा गुरुरेव जनार्दनः' । स्वस्त्युच्चारणं विना गुरौ दत्तस्य महत्फलमाह 'गुरौ पितरि चाध्यक्षे ह्यध्यात्मप्रतिक्रेषु च । श्रद्धया दीयते तस्मै स्वस्त्यक्षरविवर्जितम् । विद्यते सागरस्यान्तो नान्तो दानस्य विद्यते' । पादाग्रे द्रव्यधारणे लक्ष्म्यवज्ञारूपदोषमाशङ्क्य परिहरति 'नृणां पदे स्थिता लक्ष्मीर्निलयं सम्प्रयच्छती'ति मार्कण्डेयात् ।

गुरुसेवनभगवत्सेवनयोः समत्वमाह श्रीभागवते 'यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ । भक्तिर्न स्यात्कृतं तस्य मन्ये कुञ्जरशौचवत्' । पाद्मे 'गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः । गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः । यो मन्त्रः स गुरुः साक्षाद्यो

---

देहजसम्बन्ध एव भ्रातृत्वादिसिद्धो लौकिकः । अयमेकगुरुरूपः सम्बन्धोऽलौकिको न लौकिकः । अलौकिकसम्बन्धस्य लौकिकपदार्थदोषजनकत्वं नास्त्येव । अतो नैकगुरुत्वे दम्पत्योर्भ्रातृभगिनीत्वापातः । 'अन्नदाता भयत्राता पत्नीतातस्तथैव च । विद्यादाता जन्मदाता पञ्चैते पितरो नृणामि'ति ब्रह्मवैवर्तीयब्रह्मखण्डे दशमाध्यायोदितवाक्यात् पितृवत्पूज्यत्वमात्रमभिप्रेतम् । अन्यथाऽन्नदात्रादीनां पितृत्वे दम्पत्योरेकपोष्यत्वे एककर्तृकभयत्राणे च यदि भ्रातृभगिनीभावापत्तिस्तर्हि विवाहवैयर्थ्यापातः । किञ्चास्मिन्वाक्ये पत्नीतातस्य पितृवदतिदेशात् भ्रातृभगिनीभावापत्तौ व्यभिचार आपद्येत । एवं च गुरौ च पितृवत्पूज्यत्वमभिप्रेतम् । नत्वेकगुरुत्वे भ्रातृभगिनीत्वम् । तस्माद्दम्पतीभ्यां गुर्वैक्यकरणं न दोषायेति दिक् । यो मन्त्र इति । 'मन्त्रोऽप्येकस्तस्य नामानि यानी'ति श्रीमत्पुरुषोत्तमवाक्याद्भगवन्नामरूपो मन्त्र इत्यर्थः । साक्षादित्यनेन विभूतिरूपत्वादिकं निरस्तं बोध्यम् । यद्यपि 'सर्वेषु वर्णेषु तथाश्रमेषु नारीषु नानाह्वयजन्मभेषु । दाता फलानामभिवाञ्छितानां द्रागेव गोपालकमन्त्र एष ॥' इति वाक्यात्, 'विशेषतो दशार्णोऽयं जपमात्रेण सिद्धिद' इति वाक्याच्च, 'गोपालेषु न बोद्धव्यः स्वप्रकाश इति स्मृत' इति तन्त्रवचनेन सिद्धसाध्यसुसिद्धारिऋणधनशोधनादिविचाराकरणप्रतिपादनाच्चास्यापि तत्त्वं तथापि 'यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित् । धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिहे'ति श्रीभागवतवचनेन कदाचिदपि भगवद्धर्मस्थितौ प्रमादाभावस्योपपादनेनात्र 'ध्यायन् स्वं कंसमथनं स्वेन मन्त्रादधः कृतम् । वैरिणं कंसरूपं च कर्षन्तं प्राणिवर्जितम् ॥ अयुतं प्रजपेन्मन्त्रं हुनेद्वा तत्समं बुधः । समिद्भिर्जन्मनक्षत्रतरूणां तस्य मन्त्रवित् । शत्रुर्नि-

गुरुः स हरिः स्मृतः । गुरुर्यस्य भवेत्तुष्टस्तस्य तुष्टो हरिः स्वयम्' । अवैष्णवगुरोरुपदेश-ग्रहणं सर्वथैव न कर्तव्यमित्याह 'महाकुलप्रसूतोपि सर्वयज्ञेषु दीक्षितः । सहस्रशाखा-ध्यायी च न गुरुः स्यादवैष्णवः । अवैष्णवोपदिष्टेन मन्त्रेण नरकं व्रजेत् । पुनश्च विधिना सम्यग्वैष्णवाद्ग्राहयेद्गुरोः' । इत्यादिपूर्वोक्तश्रुतिस्मृतिश्रीभागवताद्यनेकप्रमाणसिद्धत्वा-च्छ्रीमदाचार्याणां पुरुषोत्तमत्वं सिद्धम् । तेन नमनमेव कर्तव्यम् ।

---

धनमाप्नोति सुधाभक्षोऽपि नान्यथा । वासांसि बल्लवस्त्रीणां मनोभिः सह केशवम् । समादाय कदम्बं तु समारूढं तु चिन्तयेत् । जप्यात्सहस्रमानं यो रात्रौ स दशभिर्नरैः । शचीमप्यानये-न्मन्त्री शीघ्रमेव न संशयः । किं बहूक्तेन मन्त्राभ्यामेताभ्यां सदृशोऽपरः । नास्ति वश्ये तथा-कृष्टौ देवदानवयोषितामि'ति शिवार्चनचन्द्रिकायां श्रीसारसंग्रहवचोभिः संमोहनगौतमीतन्त्रप्र-मदीपिकादिषु च निरूपितैश्च मारणवशीकरणादि श्रूयते । श्रीपुरुषोत्तमभक्तेस्तु नैतत्फलं अनर्थरूपत्वात् । 'अनर्थोपशमं साक्षाद्भक्तियोगमधोक्षजे । तस्मान्निराशिषो भक्तिनिरपेक्षस्य मे भवेत्' इत्यादिश्रीभागवतवाक्यानुरोधात् न भगवद्रूपत्वं किन्तु विभूतिरूपत्वम् । तथा च श्रीमत्प्रभुचरणैस्तत्पुरुषोत्तमस्य विभूतिरूपं भिन्नमेवेति मन्तव्यमिति प्रतिपादितं महता प्रब-न्धेन भक्तिहंस इति दिक् ।

श्रीमदाचार्याणामिति । एतैर्वाक्यैर्गुर्वनुकूलादिनिरूपणैर्गुरुपदस्य शक्तिः 'श्रीकृष्णज्ञा-नदो गुरु'रिति वचनाच्छ्रीमदाचार्येष्वेव 'मन्त्रादुद्धिरणेनैव गुरुरित्युच्यते बुधैरि'ति ब्रह्मवैवर्ते मन्त्रोच्चारणेनैव शिष्यमुद्धरेदिति स गुरुरिति तदर्थः । 'मन्त्रोपदेशमात्रेणे'त्यादिकमप्यत्रानुसं-धेयम् । एतादृशी शक्तिस्तु श्रीमदाचार्येष्वेवेश्वरपरत्वात् । किञ्च मन्त्रशास्त्रे श्रीविद्यामन्त्रप्र-करणे श्रीगुरुपादुकामन्त्रे श्रीमदाचार्या एव प्रतिपाद्यन्ते । तथा च श्रीपरपावकसर्वाराध्य-सर्वमूर्धपुरनाथ सर्वगुरुस्वयंगुरु श्रीगुरुनाथेत्यादिकमुक्तं तस्मिन्मन्त्रे । तेन मुख्यगुरुत्वं श्रीमदाचार्येष्वेव । अलौकिकोऽग्निः श्रीपुरुषोत्तमाननाधिष्ठातोपपादितः । सर्वाराध्यत्वेन पुरुषो-त्तमवदाराध्योऽयम् । सर्वमूर्धत्वेन सर्वत श्रेष्ठत्वमुदितम् । यद्वा सर्वमूर्ध. सर्वतः श्रेष्ठस्य श्रीव्यापिवैकुण्ठस्य स्वामीत्यर्थ. । सर्वगुरुत्वेनान्यत्र गुरुत्वमारोपादिनेति व्यज्यते । यद्यप्ययं मन्त्रो मन्त्रशास्त्रे निरूपितस्तेन 'मन्त्रोपासनवैदिकतान्त्रिकदीक्षार्चनादिविधिभिर्यः । अस्पृष्टो रमते निजभक्तेषु स मेऽस्तु सर्वस्वमि'ति श्रीप्रभुचरणोक्तत्वान्मन्त्राद्यविषयत्वं, तथापि सर्वत्र गुरुप्रतिपादनेन श्रीमदाचार्य एव गुरुः फलतीति प्रतिपादनायोपन्यस्तोऽयमतः श्रीमदाचार्य-विभूतिरूपत्वमस्य । एवं च मुख्यया वृत्त्या गुरुशब्दस्य प्रवृत्तिस्त्वेव 'यो गुरुः स हरिः स्मृत' इति वचनेन पूर्वोदितवाक्यैश्च पुरुषोत्तमत्वमिति भावः । अत एवान्यगुरुकरणानन्तरं भक्त्युत्पत्तौ श्रीमदाचार्यकुललाभे तेषां समाश्रयणमवश्यं कार्यमेव । अन्यगुरुकृपया पुरुषोत्तम-प्राप्तिर्न. श्रीमदाचार्याणां पुरुषोत्तमत्वे 'आत्मा वै पुत्रनामासी'ति श्रुत्या वक्ष्यमाणाभिश्च

तत्सन्तानप्रबन्धस्य पुरुषोत्तमत्वात्, 'स्वानुरूपसुतप्रसूरि'ति वाक्याच्च,आचार्यस्यापिनमाहात्म्यत्वेन सर्वोद्धारकर्तृत्वाच्च। न च शिष्टाचारः। पूर्वतः श्रेष्ठलाभे सति द्वितीयगुरुकरणं दृश्यते महत्सु। यथा पराशरादिद्वारोपनयनादिसकलवेदग्रहणपर्यन्तसंस्कारवतः श्रीनारदाश्रयः श्रूयते। 'जिज्ञासितमधीतं च ब्रह्म यत्तत्सनातनमि'त्यनेन जिज्ञासितं विचारितं अधीतं प्राप्तं चेति श्रीनारदवचनस्यामिथ्यात्वाद्ब्रह्मप्राप्तिस्त्वाचार्यं विना न घटते 'आचार्यवान् पुरुषो वेदे'ति श्रुतेः। ततश्च कृतगुरुसमाश्रयस्यापि पुनर्नारदाश्रयणमवगम्यते। तथा परीक्षितोऽपि तथाविधस्य श्रीशुकाश्रयः। 'वैय्यासके जहौ शिष्यो गङ्गायां स्वकलेवरमि'त्यादेश्च। 'स वै भागवतो राजा पाण्डवेयो महारथः। बालक्रीडनकैः क्रीडन् कृष्णक्रीडां य आददे। सारथ्यपार्षदे'त्यादि। 'भक्तिं करोति नृपतिश्चरणारविन्दे' 'स वै महाभागवतः परीक्षिद्येनापवर्गाख्य'मित्यादि। तथा 'धर्मपालो नरपतिः स तु सम्राड् बृहच्छ्रवाः। साक्षान्महाभागवतो राजर्षिर्हयमेधयाट्'। अपापेषु स्वभृत्येषु 'तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि। नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि ही'त्यादिविरोधात्। न ह्यामरणकालं तेनाभक्तत्वेनैव स्थितम्। 'स वै भागवतो नामे'त्यादिवचनविरोधात्। तथा प्रह्लादस्यापि श्रीनारदशिष्यस्य 'आन्वीक्षिकीमलर्काय प्रह्लादादिभ्य ऊचिवानि'त्युक्तेः। श्रीदत्तात्रेय इति। तथा रुद्रोपदिष्टप्रचेतसां पुनर्नारदाश्रयः श्रूयते। तथा नारदस्यापि ब्रह्मशिष्यस्य पुनः श्रीनारायणोपदेशः। तथा हंसोपदिष्टसनकादीनां श्रीरुद्रोपादिभिरुपदेशः। तथा विदुरस्यापि पुनर्मैत्रेयाश्रयणं उद्धवस्य सांख्यायनबृहस्पतिशिष्यस्यापि पुनः श्रीकृष्णोपदेश इति। तथाश्रितगुर्वन्तराणामपि पृथुरहूगणादीनां पुनः सनकादिभरतप्रभृतिभिरुपदेशः श्रूयते। अतः पूर्वगुर्वपेक्षयाऽन्यगुरोरुत्कृष्टस्य लाभे सति समाश्रयः कार्य एव। एवं स्थिते सति दीक्षितोऽपि श्रीवल्लभकुलस्य पुरुषोत्तमरूपत्वात्सर्वतः श्रेष्ठत्वाच्च तच्छरणमवश्यं गच्छेत्। 'सान्निध्यमात्रदत्तश्रीकृष्णप्रेमा विमुक्तिद' इति वाक्यात्। अत एव श्रीमदाचार्यान् दृष्ट्वा स दीक्षितोऽपि क्षत्रियः कृष्णदासाख्यः श्रीमदाचार्यशरणं जग्मिवान् नाममन्त्रादिग्रहणं कृतवान्। तत्कृतासाधारणसेवया प्रसन्नैः श्रीमदाचार्यैर्वारत्रयमभिमतं दत्तम्। स एकदा स्वगुरुगृहे गत्वा तं नमस्कृत्योपविष्टवान्। तदा तं गुरुः पृष्टवान् मामवमत्यान्याश्रयः कुतस्त्वया कथम्? तत्रोत्तरं जगाद 'मद्गुरुस्तु भगवाने'ति। भवत्कृपया पूर्णपुरुषोत्तमलाभः सम्पन्न इति भवत्प्रसादस्य पुरुषोत्तमप्रापकत्वात्। तदा गुरुणोक्तं तेषां पूर्णपुरुषोत्तमत्वे किंमानमित्युक्तः स कृष्णदासो ज्वलदनलमञ्जलिभ्या गृहीत्वेदमुक्तवान्। यदि श्रीवल्लभाचार्याः पूर्णपुरुषोत्तमास्तदा मामग्निर्न ज्वालयिष्यति नोचेज्ज्वालयिष्यतीत्युक्त्वा मुहूर्तमात्रं तथैव स्थितवान्। तदा गुरुस्तदुक्तेर्यं सत्यत्वं ज्ञात्वा तद्गृहीतमग्निं भीतः सन् त्यानस्थितिकारितवानित्याख्यायिका संगच्छते। अतः श्रीवल्लभकुलं सर्वथैव समाश्रयणीयमिति। 'गन्धलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत्। न गोरस्माद्गुरोर्ज्ञानं मुख्यितं स्यात्पुष्पकल्पम्।

वीर्यं निरूपयति नमोऽस्त्वग्नय इति। अग्निरूपधारिणे श्रीवल्लभाय नमः। 'अग्नित्वं वर्णितं कविभि'रिति वाक्यात्। नन्वग्निरूपत्वेनातितेजस्त्वान्नमनं न सम्भवतीत्याशङ्कानिरासायाह अस्त्विति। नमनमस्तु। श्रीमदाचार्याणामग्निरूपत्वं भक्तदोषदहनार्थं न तु भक्तानां तापार्थमिति यावत्।

ननु श्रीमदाचार्याणां पुरुषोत्तमत्वादग्नित्वं कथमुपपद्यत इत्याशङ्कानिरासायाह 'अग्निर्वै मुख'मिति श्रुतेः अग्नित्वं पुरुषोत्तमत्वं च। किमिति अग्निरूपधारणं दैवीजीवानामुपदेशमात्रेण सकलदोषदाहकत्वादग्नित्वं महद्वीर्यमपि। किञ्च वीर्यं देवेषु। तत्रापि

---

वादिन संजगदुः। युष्माकमस्माकं भाषणे माध्यस्थ्यमपेक्षितं, अतो वयं कलशे भगवतीं सरस्वतीमावाह्य मध्यवर्तिनीं कुर्मः। सा यस्य मतं सत्यं वदिष्यति तस्यैव मतं सम्यक्। तदा श्रीमद्वल्लभा सरस्वतीवल्लभा ऊचुः समीचीनमिति। तदाऽज्ञातमहिमभिः स्वसिद्धान्तसिद्धिविदग्धद्भिर्मायावादविशादमदकलुषकषायितबुद्धिभिः पृथगीशमानिभिः सरस्वत्यावाह्य विज्ञापिता। सा च देवी मायावादकक्षहुताशं सर्वश्रुतिस्मृतिसूत्रादिप्रतिपादितसाकारब्रह्मवादस्थापकं सकलविश्वसृष्टिस्थितिमलयासाधारणकारणमसाधारणनिजस्वामिनं साक्षात्पूर्णपुरुषोत्तमं समवलोक्य लज्जावती किमपि नोवाच। तदा निरुत्तरा बभूवुस्ते। तदा सर्वान्तर्यामिणो विदितवेदशास्त्रतत्त्वाः परममहिममहर्षिविदिततत्त्वाः सरस्वतीविज्ञाततत्त्वाः श्रीमदाचार्यवर्या ऊचुः पाखण्डिन एते इति। तदा राजा सर्वे वैष्णवाचार्याः समासदश्च प्रसन्ना बभूवुः। श्रीमदाचार्यान् पूजयामासुः। तदा निवृत्तायां सभायां भूतनाथमतमतावलम्बिनो भगवन्मायामोहिता निसर्गासुरसर्गसमुद्भूता देव्युपरि मर्तुमवस्थिता ऊचुः। अस्माकं मानापनोदः कारितो महत्या भगवत्या भवत्याऽतो वयं मर्तुमवस्थिताः। तदा सा महामाया भगवती विदिततत्त्वा कारुण्यसुधासागरोवाच। भगवन्तम्भूर्खनरा स्थ। यतो मोहकमतमदमत्ताः। एते हि परमेश्वरा निजचरणनखचन्द्रचन्द्रिकानिवारितनिखिलविश्वतमसो मायावादमततूलदहनाः साकारब्रह्मवादस्थापनार्थमवनितलेऽवतीर्णा नो सामान्यपण्डिता मम स्वामिनः। मत्सदृश्यो निजस्वामिवर्याज्ञानि श्वासकारिण्योऽनन्ता दासभूताः सन्ति। सर्वसामर्थ्यवत्तामेतेषामग्रे वक्तुमसमर्थाहम्। एते हीश्वरा मायाप्रेरका न तु प्रेर्या इति सेव्या एव एते इत्युक्ते मायया तथा। ततो निरुत्तरा बभूवुस्ते। तदनन्तरमेतद्वृत्तं राज्ञा श्रुतमीश्वरा एव श्रीमदाचार्या अस्मदुद्धारार्थमेवागता इति निश्चित्य सपरिकरः सेवको बभूवेति मायाप्रेरकत्वं प्रसिद्धम्

अग्निरूपधारिण इति। श्रीमत्कृष्णाननाधिष्ठानलौकिकाग्निरूपधारिण इत्यर्थः। भक्तदोषदहनार्थमिति। अज्ञानादिदोषनाशनार्थमित्यर्थः। 'अज्ञानाद्यन्धकारप्रशमनपटुतारख्यापनाय त्रिलोक्यामि'ति वाक्यात्। श्रुतेरिति। श्रुतौ भगवन्मुखरूपत्वमुक्तं तेन भगवदवयवानां भगवद्रूपत्वान्मुखभूताग्नेरपि पुरुषोत्तमत्वमिति भावः। तथाच सूत्रम् 'अरूपवदेव हि तत्प्रधा

स्त्रीषु तत्रापि कामतः । सान्निध्ये पुरुषाणां च मूर्च्छा तेन ततो महत्'। श्रीमदाचार्यचरणैरेव स्वस्वरूपं भगवदास्यत्वेन प्रतिपादितम् 'अर्थं तस्य विवेचितु'मिति सुबोधिन्यारम्भे, तेन भगवदास्यरूपत्वात् वेणुवादनं तेनैव सम्भवतीति देवादीनां मोहकरणेन महद्वीर्यम् । किञ्च 'वीर्यं देवेषु प्रतिष्ठित'मितिश्रुतेः देवेषु शङ्करादिषु । 'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारये'ति भगवदाज्ञया प्रवृत्तेषु शून्यवादिविशिष्टमायिकमतप्रकाशकेषु शङ्करादिदेवपदवाच्येषु 'शङ्करः शङ्करः साक्षा'दिति वाक्यात् तत्र देवेषु प्रतिष्ठितम्, श्रीमदाचार्याणां साकारब्रह्मवादस्थापकत्वेनाग्निरूपत्वेन च मायावादादितूलवद्दाहकत्वाद्वीर्यं प्रतिष्ठितम् ।

---

नत्वात्' । अस्यार्थः। रूप्यतेऽनेनेति करचरणाद्युच्यते । तथा च लोके करादिभिन्नस्तदभिमानी भिन्नस्तथा ब्रह्मणः श्रुतिषु करादिभिन्नतदभिमानित्वं निरूप्यते । किन्तु करादेरपि ब्रह्मत्वाद्भेदाभावाद्रूपमेव निरूप्यते न तु रूपवदित्यर्थः ।

कुतः । तत्प्रधानत्वात् सर्वेषां वेदान्तानां ब्रह्मैव प्राधान्येन प्रतिपाद्यं यतः । अयं भावः । करादीनामब्रह्मत्वे तन्निरूपकाणां वेदान्तानामब्रह्मपरतया ब्रह्मपरत्वनियमव्याहतिः । अतः करादिनिरूपकाः साक्षाद्ब्रह्मप्रतिपादका एवेति सर्वत्र प्रसिद्धोपदेशात् । 'आमनन्ति हि चैनमस्मिन्नि'त्याद्यधिकरणरूपोपपत्तिर्हिशब्देनोच्यते । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वारे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवेति' 'सत्यं विज्ञानमानन्दं ब्रह्म' 'आनन्दमात्रकरपादमुखोदरादिः' 'आनन्दमयोऽभ्यासादि'त्यादिश्रुतिस्मृतिन्यायैकवाक्यतया ब्रह्मत्वमवयवानामवधारणीयमित्यादि श्रीप्रभुचरणैर्विद्वन्मण्डने प्रपञ्चितम् ।

वीर्याधिकरणान्याहुः वीर्यमित्यादि । विवेचितुमिति यङ्लुङन्ताद्विच् । धातोस्तुमुनि 'श्तिपाशपानुबन्धेन निर्दिष्टं यद्गणेन च । यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकी'ति परिभाषया 'एकाचउपदेशेऽनुदात्तादि'तीडागमनिषेधाभावे रूपम् । न च 'गुणो यङ्लुको'रित्यनुशासनेनाभ्यासस्य गुणापत्तिरिति वाच्यम् । 'संज्ञापूर्वको विधिरनित्य' इति परिभाषया तदभावात् । अत्र ज्ञापकं तु 'ओरोदि'तिवक्तव्ये 'ओर्गुण' इति सूत्रे गुणोक्तिः । पूर्वा तु इडागमनिषेधसूत्रे एकाज्ग्रहणेनैकदेशानुमत्या ज्ञाप्यते । अन्यथोपदेशे एकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति । मायिकमतप्रकाशकेष्विति । पाद्मोत्तरखण्डे गुणत्रयविवरणाध्याये श्रीशिवेन 'शृणु देवि प्रवक्ष्यामि तामसानि यथाक्रममि'त्युपक्रम्य तामसशास्त्रगणनायां 'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि कलौ ब्राह्मणरूपिणा । अपार्थं श्रुतिवाक्यानां दर्शयँल्लोकगर्हितम् । कर्मस्वरूपत्याज्यत्वमत्रैव प्रतिपाद्यते । सर्वकर्मपरिभ्रष्टं विकर्मत्वं तदुच्यते । परेशजीवयोरैक्यं मयात्र प्रतिपाद्यते ॥ ब्रह्मणस्तु परं रूपं निर्गुणं वक्ष्यते मया । सर्वस्य जगतोऽप्यत्र मोहनार्थं कलौ युगे ॥ वेदार्थवन्महाशास्त्रं मायावादमवैदिकम् । मयैव कथितं देवि जगतां

नाशकारणा'दित्यादिप्रकारकप्रकाशकेष्वित्यर्थः । दाहकत्वादिति 'मायावादाख्यतूलाग्निर्ब्रह्म-वादनिरूपक' इत्युक्तं श्रीमत्प्रभुचरणैः । वीर्यं प्रतिष्ठितमिति । एतादृशमतनिरसनेन वीर्यं प्रतिष्ठितमित्यर्थः । तथा च श्रीभागवते तृतीयस्कन्धे 'स्वशान्तरूपेष्वितरैः स्वरूपैरभ्यर्द्यमानेष्व-नुकम्पितात्मा । परावरेशो महदंशयुक्तो ह्यजोऽपि जातो भगवान् यथाग्निः ॥' अत्र श्रीकृष्णाव-तारप्रादुर्भावोऽग्निप्रादुर्भावदृष्टान्ततयोपपादितः । एवं च दृष्टान्तदार्ष्टान्तिकयोरैक्यमपेक्षितमन्यथा दृष्टान्तहानिः । एवं च यथाग्निः प्रादुर्भविष्यति तथा भगवान् जातः । 'हुताशनावतारश्च शेष-रूपः सुदर्शनः' । 'हुताशनावतारस्तु वल्लभो लक्ष्मणात्मजः ॥ रामानुजः शेषरूपो निम्बार्कोऽथ सुदर्शन' इति संमोहनतन्त्रात् । अग्निपदेन श्रीवल्लभाचार्यनामा गृह्यते । स यथा प्रादुर्भविष्यति तथा भगवान् श्रीकृष्णो जातः । यद्यत्र काष्ठात्प्रादुर्भावपरत्वेन व्याख्यायते तदा स्वशान्तेत्या-दिविशेषणाननुगुणतया दृष्टान्तभङ्गः, भगवान् यथाग्निरिति सामानाधिकरण्यभङ्गश्च । भगवान् यथाग्निरिति सामानाधिकरण्येन परैश्वर्यवत्त्वं पूर्णपुरुषोत्तमवच्छ्रीमदाचार्येषु निरूपितम् । अत पूर्णपुरुषोत्तमत्वं सूचितमाचार्याणाम् । समुदितार्थस्तु—स्वीयाः शान्तरूपा ये भक्तास्तेषु इतरैरशा-न्तरूपैरसुरैरभ्यर्द्यमानेषु अनुकम्पितात्मा अनुकम्पित आत्मा यस्य स । परावरेशः महदंशयुक्त महान्तोऽशाः वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्यास्तैर्युक्तः । अजोऽपि भक्तरक्षणार्थं जात. प्रादु-र्भूतः । श्रीमदाचार्यपक्षे तु स्वीयाः शान्तरूपाः शान्त्यादिगुणयुक्ता भक्ता दैविजीवास्तेषु इतरैः स्वरूपैर्मायावादविवादाभिनिवेशतयाऽशान्तरूपैरभ्यर्द्यमानेषु पीडितेषु सत्सु अनुकम्पित अनुकम्पाविशिष्टः आत्मान्त करणं यस्य सः । अनुकम्पालक्षणं च 'रक्षिताश्रितभक्तानामनुराग-सुखेच्छया । भूयोऽभीष्टप्रदानाय यच्च तानवु धावति । अनुकम्पागुणो ह्येष प्रपन्नप्रियगोचर' इति । तथाह श्रीमद्यदुकुलजलधिरत्नं 'तेषामेवानुकम्पार्थमहमज्ञानजं तम' । नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते'ति । परावरेशः परा दैविजीवाः अवरा मर्यादाप्रवाहस्थास्तयोरीशः प्रेरक दैवादीन् भगवद्भजनादिषु प्रवर्तयति असुरान्मोहयति । 'प्राकृतानुकृतिव्याजमोहितासुरमानुष' इत्यादिवाक्यात् 'तमेव साधु कर्म कारयति यमूर्ध्वमुन्निनीषति । तमेवासाधु कर्म कारयति यमधो निनीषती'ति श्रुतेः । न च वैषम्यनैर्घृण्यापत्तिरितिवाच्यम् । 'वैषम्यनैर्घृण्ये न सापे-क्षत्वादि'ति सूत्रेण तत्परिहारात् । विस्तरस्तु भाष्यविद्वन्मण्डनादिषु निरूपितोऽस्मत्परिवृढैः । महदंशयुक्तः । महद्ब्रह्मतोः पर्यायत्वेन महच्छब्देनाक्षरब्रह्मोच्यते तदंशं यस्य पूर्णपुरुषोत्तमस्य 'तदाहं वल्लभकुले' इति ब्रह्माण्डपुराणवाक्यात् श्रीविट्ठलः पूर्णपुरुषोत्तमस्तेन युक्तः । यद्वा महान्तो दैविजीवाः नित्यलीलास्थास्ते च ते अंशाः सेवकास्तेषां महत्त्वं भगवत्सेवकत्वेन सर्-वभगवत्सामर्थ्यवत्त्वेन तादृशा नित्यलीलास्थान्तरङ्गभक्तास्तैः सह युक्तः । श्रीमदाचार्या निजा-न्तरङ्गभूतश्रीदामोदरदासादिभिः सह प्रादुर्भूता इति भावः । आप्तकामत्वाद्भगवतोऽवतारप्रयो-जनाभावेऽपि स्वभक्तदुःखनिवारणार्थमवतार इत्याह अनोऽपीति । एतेन वात्सल्यगुणः सूचित ।

नन्तु 'त्वं च रुद्रे'तिवाक्यानि कल्पितानि स्युरितिचेन्न। वराहपुराणे पद्मपुराणे च कण्ठरवेणोक्तत्वात्तत्पुस्तकेषु दृश्यमानत्वाच्च। तानि वाक्यानि 'त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय। अतथ्यानि वितथ्यानि दर्शयस्व महाभुज। प्रकाशं कुरु चात्मानमप्रकाशं च मां कुरु। मां च गोपाय येन स्यात्सृष्टिरेषोत्तरोत्तरा' इति वाराहपुराण उक्तम्। पद्मपुराणे च 'त्वं च रुद्र महाबाहो मोहनार्थं सुरद्विषाम्। पाषण्डाचरणं धर्मं कुरुष्व सुरसत्तम। तामसानि पुराणानि कथयस्व च तान्प्रति। मोहनानि च शास्त्राणि कुरुष्व च महामते। मच्चभक्ताश्च ये विप्रा भविष्यन्ति महर्षयः। त्वच्छक्त्या तान्समाविश्य कथयस्व च तामसान्। काणादं गौतमं शाक्तमुपमन्युं च जैमिनिम्। दुर्वाससं च कपिलं मृकण्डं च बृहस्पतिम्। भार्गवं जमदग्निं च दशैतांस्तामसानृषीन्। तत्र शक्तिः समाविश्य कुरुते जगतोऽहितम्। त्वच्छक्त्याभिनिविष्टास्ते तमसोद्रिक्तया भृशम्। तामसास्ते भविष्यन्ति क्षणादेव न संशयः। कथयिष्यन्ति ते विप्रास्तामसानि जगत्त्रये। त्वमेव लोके तांल्लोकान्मोहयस्व जगत्त्रये। तथा पाशुपतं शास्त्रं त्वमेव कुरुसत्तम। कङ्कालशैवपाखण्डमहाशैवादिभेदतः। अवलक्ष्य मतं सम्यग्वेदबाह्या द्विजाधमाः। भस्माक्षधारिणः सर्वे भविष्यन्ति न संशयः। त्वां परत्वेन वक्ष्यन्ति सर्वशास्त्रेषु तामसाः। तेषां मतमधिष्ठाय सर्वे दैत्या महाबलाः। भविष्यन्ति मद्विमुखाः क्षणादेव न संशयः। अहमप्यवतारेषु त्वां च रुद्र महाबल। तमोवतां विमोहाय पूजयामि युगे युगे। मात्स्यं कौर्मं तथा लैङ्गं शैवं स्कान्दं तथैव च। आग्नेयं च षडेतानि तामसानि निबोध मे। वैष्णवं नारदीयं च तथा भागवतं शुभम्। गारुडं च तथा पाद्मं वाराहं शुभदर्शनम्। सात्त्विकानि पुराणानि विशेषेण शुभानि वै। ब्रह्माण्डं ब्रह्मवैवर्तं मार्कण्डेयं तथैव च। भविष्यं वामनं ब्राह्मं राजसानि निबोध मे। सात्त्विका मोक्षदाः प्रोक्ता राजसाः स्वर्गदाः शुभाः। तथैव तामसा देवि निरयप्राप्तिहेतवः। तथैव स्मृतयः प्रोक्ता ऋषिभिस्त्रिगुणात्मिकाः' इति पद्मपुराणे एवं शिवं प्रत्याज्ञा जाता तदवतारान्गृहीत्वा मोहशास्त्राणि प्रकाशितानि॥

अग्नय इति विशेषणेन वीर्यं निरूप्य यशो निरूपयति नमः पृथिव्या इति। नन्तु श्रीमद्गोकुलादिस्थानेषु यत्र श्रीमदाचार्याणामुपवेशनस्थानं तत्र श्रीमदाचार्यरूपेणैव भक्ति-

---

[1] विचक्रमे पृथिवीमेष एतामि'ति श्रुतिव्याख्याने वात्सल्यगुणलक्षणं निरूपितम्। यद्यपि यथा भगवाञ्ज्ञानस्तथाऽग्निः प्रादुर्भविष्यतीत्यन्वयोऽपि सम्यक्, तथापि प्रकरणविरोधाद्व्याख्यातमेव न्याय्यः। एवं चासुरमतनिरसनार्थमेव प्रादुर्भाव इति महद्वीर्यम्। दृश्यमानत्वाच्चेति। चकारादभियुक्तैः प्राचीनैर्लिखितत्वात्।

उपवेशनस्थानमिति। यथा श्रीमत्कृष्णचन्द्रविहारादिस्थानेषु श्रीकृष्णरूपत्वेन सेवा संभवति तत्र श्रीमत्कृष्णचन्द्रस्य विद्यमानत्वात्, एवं श्रीमदाचार्योपवेशनस्थाने श्रीमदाचार्य-

मार्गे समानयनं किमिति क्रियते इत्यत आह नमः पृथिव्या इति । पृथिवीरूपारिणे श्रीवल्लभाय नमः ।

ननु श्रीमदाचार्याणां पुरुषोत्तमरूपत्वात्कथं पृथिवीरूपत्वमित्याशङ्क्याह 'यस्य पृथिवी शरीरमि'त्यादि श्रुतिः । यथा श्रीमदाचार्याणामानन्दमात्रकरपादमुखोदरादिधर्मिरूपेण प्रादुर्भावसमये दैविजीवानां सेवादियोग्यता उद्धारश्च तथाऽधुनापि श्रीमदाचार्याणामुपवेशनस्थाने दैविजीवानां सेवादिनोद्धारणान्महद्यशः । अथवा ननु श्रीमदाचार्याणामुपवेशनस्थानस्य स्थानविशेषे विद्यमानत्वात्कथमवच्छेदकावच्छेदेन दैविजीवानां तत्र गमनं सम्भवति दूरस्थत्वात्सामर्थ्यविशेषाभावाच्च । तथा च वंशरूपेणाविर्भावः पृथिवीरूपः देहस्य पार्थिवरूपेण प्रतीयमानत्वात्पृथिवीरूपः । वस्तुतस्तु आनन्दात्मकमेव स्वरूपं 'प्राकृतानुकृतिव्याजमोहितासुरमानुष' इत्यासुराणामेव मानुषत्वप्रतीतिर्न

---

सेवा संभवतीति भावः । 'पृथिवी वैश्वानरः संवत्सरो वैश्वानर' इति यास्कोक्तेः पृथिवीरूपत्वं श्रीमदाचार्याणामस्तीति उपवेशनस्थानस्य सेवादिकमार्यैः क्रियत इति भावः । वंशरूपेणाविर्भाव इति । तथा च श्रुतिः 'पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते श्रितास इद्वहन्तस्तत्समाशत' इति । इयं श्रुतिः शङ्खचक्रधारणवादे पुरुषोत्तमचरणैः रासलीलापरत्वेन अस्मिन्नेव ग्रन्थे वियोगशृङ्गारप्रतिपादनेन श्रीमदाराध्यतमचरणैर्व्याख्याता । अस्माभिस्तु श्रीमदाचार्यपरत्वेन व्याख्यायते । तथाहि—हे ब्रह्मणस्पते ब्राह्मणानां स्वामिन्, [ 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापति'रित्यमरात् 'षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु' इति सूत्रेण षष्ठीसम्बन्धिविसर्गस्य सत्वम् । अस्मादेव ज्ञापकात्षष्ठ्या अलुक् । ] हे दीक्षितवर्य , ते विततं विस्तारः सन्तानप्रबन्धो वंशस्तस्य विस्तारः 'आत्मा वै पुत्रनामासी'ति श्रुतेः पवित्रं भक्तानामुपदेशमात्रेण सकलदेहजीवगतदोषनिवर्तकम् । 'स्ववंशे स्थापिताशेषस्वमाहात्म्य' इति वाक्यात् ते वंशरूपो विस्तारः सर्वोद्धारे समर्थ इति भावः । कुतः , तत्र हेतुः प्रभुः समर्थो भवान् स्ववंशोद्भवोपदेशमात्रेण भक्तानां गात्राणि शरीराणि विश्वतः पर्येषि अन्तर्बहिर्व्याप्नोषि । यस्मादेवं तस्मात्ते वह्न्ययोगोलकन्यायेन व्याप्ता भगवन्निष्ठा भवन्तीति सदा विरहजनिततापादिस्फूर्तिः । भगवद्विरहतापादिस्फूर्तौ भगवत्प्रादुर्भावो भवति नान्यथा । विरहजनिततापास्फूर्तौ भगवत्प्राप्तिर्नेत्याह अतप्ततनूरिति । भगवद्वियोगजनिततापरहितः तत् 'ॐतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति गीतोक्तेः पूर्णपुरुषोत्तमस्य स्वरूपं न अश्नुते नानुभवति । यतो भगवतो विरहतापमन्तरा आमाः अपक्वाः पूर्णकाष्ठारहिताः श्रीमदाचार्यभगवत्कृपया तापाविर्भावे श्रितासः पक्वाः वहन्तः विरहानुभवधारणं कुर्वन्तः । इदित्यवधारणे । निश्चयेन तत्समाशत इति तत्पुरुषोत्तममनुभवन्तीत्यर्थः । वस्तुत इति । यथा श्रीमदाचार्याणां मानुषाकृतित्वेन प्रतीतावपि आनन्दात्मकत्वं, तथा श्रीमदाचार्यकुलोद्भवानामप्यानन्दात्मकमेव स्वरूपं, तेन श्रीमदाचार्यवंशोद्भवानां पूर्णपुरुषोत्तमत्वमङ्गीकार्यम् । आसुराणामेवेति । 'अवजा-

तु दैवानाम् । तेन 'स्ववंशे स्थापिताशेषस्वमाहात्म्य' इति वाक्यादाधुनिकानां दैवीजीवानामुद्धारकत्वान्महद्यशः ।

किञ्च 'यशो यदि विमूढानां मत्यक्षासक्तिवारणात् । स्वधर्मे योजयेत्तेषु तदा भवति *नान्यथा' । यश इति । विमूढानां स्त्रीशूद्राणां मत्यक्षासक्तिवारणात्* लौकिकसांसारिकासक्तेः ब्रह्मसम्बन्धेन वारणात् दूरीकरणादित्यर्थः । तेषु दैवीजीवेषु स्वधर्मे योजयेत् सेवादिरूपं धर्मं योजयेत्तदा यशो भवत्यन्यथा नेत्यर्थः । पृथिवीविशेषणेन यशो निरूपितम् ।

अतःपरं श्रियं निरूपयति नम ओषधीभ्य इति । श्रीमद्गोकुले श्रीमदाचार्योपवेशनस्थानोपरि शमीवृक्षस्वरूपौषधिस्वरूपधारिणे श्रीवल्लभाय नमः । यथा विष्णोः शापवशादश्वत्थरूपधारणं तथा न, किंतु जीवानामुपकाराय कृष्णाधरामृतादिस्वादसिद्धि-

---

नन्ति मां मूढा मानुषीं तनुमाश्रितमि'ति गीतोक्तेः श्रीमदाचार्याणां पुरुषोत्तमत्वाद्वंशोद्भवानामपि 'अङ्गादङ्गात्संभवसी'ति श्रुत्या तद्रूपत्वेनासुराणामेव मानुषत्वप्रतीतिरिति भावः । दैवानां तु 'स्वानुरूपसुतप्रसूरि'ति नामरत्नोक्तत्वात्पुरुषोत्तमत्वेन प्रतीतिरिति भावः ।

उद्धारकत्वादिति । उपदेशमात्रेण भक्त्यादिनाविर्भावादिनोद्धारकत्वम् । 'भुवि भक्तिप्रचारैककृते स्वान्वयकृत्पित्रे'ति वाक्यात् । चरित्रचिन्तामणावपि 'ये चान्ये मानवो भान्ति तदीयाः सर्व एव हि । कृष्णसेवासुधावृष्टिमुचोऽपि सुरुचो भुवी'ति श्रीमदाचार्यकुलोद्भवानां पृथिवीपरिक्रमणद्वारोद्धारकत्वम् । तथा च श्रुतिः 'विरूपास इदृषयस्त इद्गम्भीरवेपसः । ते अङ्गिरसः सूनवस्ते अग्नेः परिजज्ञिरे' । अस्यार्थः—विरूपासः बहुरूपा इति निरुक्तकाराः अनेके इत्यर्थः । यद्वा विशेषेण विविधं बहुप्रकारं वा स्वमार्गतत्त्वं प्रकाशयन्तीति विरूपाः । इदिति निपातः साकल्ये । सर्व इत्यर्थः । ऋषयः सर्वज्ञाः वेदतत्त्वार्थविदः । तच्छब्दस्य बुद्धिपरामर्शकत्वात्ते साक्षाद्भगवत्प्रकाशकाः । श्रीमत्पुरुषोत्तमानन्ददानं भगवत्तत्त्वनिरूपणं चाल्पानां न संभवति किन्तु ते बहुप्रज्ञा इत्याह गम्भीरवेपस इति । 'गम्भीरकर्माणः गम्भीरप्रज्ञा' इति निरुक्तकाराः । भगवद्विषयकर्मकारकाः 'कर्माण्येकं तस्य देवस्य सेवे'ति वाक्यात्तनुवित्तजामानसीसेवारूपकर्मकारकाः । यद्वा नित्यं नैमित्तिकं कर्म भगवद्विषयरूपत्वेनैव करणमिति कर्मणां गम्भीरत्वम् । यद्वा लौकिकालौकिकं यत्कर्म तत्सर्वं भगवदनुरोधेनैवेति तेषां गम्भीरप्रज्ञत्वं च सुबोधिन्यादिग्रन्थश्रीमदाचार्याविर्भावितग्रन्थार्थप्रकाशकत्वम् । गम्भीरप्रज्ञत्वेनाल्पबुद्धिनिरासः । तेन महद्बुद्धितया पुरुषोत्तमत्वं सूचितम् । ननु एतादृशानामपि कथं लाभो दैवानां तु स्वरूपविस्मरणतया गृहासक्तया चाचार्यकुलाद्रगमनाद्यशक्तानां कथं तेषामुद्धार इत्याह अङ्गिरसः । गत्यर्थादङ्गिरा इत्युणादिसूत्रेणाभिप्रत्ययो व्युत्पत्तिश्च । पृथ्वीपरिक्रमणशीलाः दैवानामुद्धारार्थं पृथ्वीपरिक्रमणं तेषामिति भावः । यद्वा अङ्गिरस इति श्रीमदाचार्यगतागतमिषद्रूप्य

दानाय वृक्षरूपेणाविर्भावः । 'अहो अमी देववरे' त्यादिना भगवता वृक्षाः स्तुताः वृक्षान्तरं विहाय शमीरूपधारणेन शम्या अग्निरूपत्वात् तेन दर्शनमात्रेण सकलप्रतिबन्धादिदहनपूर्वकं पूर्वोक्तफलदातृत्वं सिद्धम् । तेन परमा श्रीर्निरूपिता ।

किंच ननु श्रीमदाचार्यपादुकानां चरणरूपत्वाद्भक्तिमार्गे भोगसामग्र्यादिसेवाया दृश्यमानत्वात्कथं भोजनं पादुकायाः सम्भवति पुष्टिभक्तिमार्गे साक्षाद्भोजनस्य प्रतिपाद्यत्वात् 'किमपि कथमपि काप्युपाहर्तुमिच्छत्यद्धा तद्गोपिकेशः स्ववदनकमले चारुहासं करोती'तिवाक्याचेत्याशङ्कानिरासायाह नम ओषधीभ्य इति । ओषधिरूपधारिणे

---

विशेषणं, तेन 'प्रतिक्षणनिकुञ्जस्थलीलारससुपूरित' इति वाक्यात्कुञ्जात्कुञ्जान्तरगमनशालिनः श्रीमदाचार्यस्याग्नेस्ते सूनवः तव वंशोद्भवाः । सूनुशब्दोऽपत्यपर्याय इति भावः । अग्नेः श्रीवल्लभाचार्योद्भवनः परिजज्ञिरे उत्पन्ना बभूवुः प्रकटाः बभूवुः । अनेन तेषामपि नित्यत्वं सूचितम् । एतेन श्रीमदाचार्यवत्तत्कुलोद्भवानां सर्वोद्धारकत्वान्महद्यश इति भावः ।

शम्या अग्निरूपत्वादिति पुरूरवस आख्यानेऽग्निस्थालीसकाशाच्छमीगर्भमश्वत्थजातमिति पुराणप्रसिद्धत्वादग्निरूपत्वं शमीवृक्षस्य । अत एव 'शमीगर्भादग्निं मन्थती'ति श्रुतिः संगच्छते । श्रीमदाचार्याग्निरूपशमीवृक्षादिदर्शनेन सकलालौकिकफलसिद्धिः अखिलाज्ञानध्वान्तनाशोऽपि । यद्यपि 'ओषध्यः फलपाकान्ता' इत्यमरात्फलपाकान्तरूपाणामेवोषधीत्वं तथापि भवरोगनाशकत्वादाचार्यरूपशमीवृक्षस्य तेनौषधीरूपत्वमिति भावः । भोजनस्य प्रतिपाद्यत्वादिति । श्रुतावपि भक्ताः श्रीमदाचार्यान्प्रार्थयन्ति । तथाहि 'स्वदस्व हव्या समिषो दिदीह्यस्मद्र्यक् संमिमीहि श्रवांसि । विश्वाँ अग्ने पृत्सु तान् जेषि शत्रूनहा विश्वा सुमना दीदिहि नः' । अस्यार्थः—हे अग्ने श्रीवल्लभाचार्य, 'हुताशनावतारस्तु वल्लभो लक्ष्मणात्मज' इति संमोहनतन्त्रात् । हव्या शुचीनि भक्तजनोपहृतानि उपनीतानि समर्पितानि स्वदस्व आस्वादय भक्तजनोपरि कृपां कृत्वाऽङ्गीकुरु । भवत्सेवादिकमिच्छन्ति ते इषो भक्तास्तत्सम्बन्धीनि । जातावेकवचनम् । संदीदिहि सम्यक् दीपय वर्धयेत्यर्थः । कथंभूत, हे अस्मद्र्यक्, अस्माभिः सह अञ्चति गच्छतीत्यस्मद्र्यक् अस्मत्पक्षीय इत्यर्थः । अस्माकमर्थे सर्वसाधनं करोषीति भावः । भक्तमनोरथपूरकेति यावत् । श्रवांसि मायावादादिमतकषायितबुद्धीनां मायावादिनां यशांसि समीहि परमापय स्वीययशोभिरतिक्रमस्वेत्यर्थः । पृत्सु मायावाद्यादिभिः सह वादरूपेषु संग्रामेषु । बहुवचनं तु मायावादिभिः सह बहुषु स्थलेषु विवादस्य जायमानत्वात् । विश्वान् सर्वान् शत्रून् तान् प्रसिद्धान् भगवदाज्ञातोमापरिवृढप्रवर्तितमार्गस्थान् जेषि जयसि । नोऽस्माकं अहा अहून् संकल्पान् विश्वा सर्वान् दीदिहि प्रकाशय । कथंभूतस्त्वम् । सुमनाः सदा प्रसन्नः । एवं च देवेभ्यः प्रार्थितो भवान् श्रीमदाचार्यो भोजनादिकं करोतीति भावः । श्रीमदाचार्याः संवैरर्पितं पदार्थादिकं भुञ्जते इत्येतिह्यादप्यवगन्तव्यम् । वाक्याचेति । यद्यप्यनेन वाक्येन प्रति-

श्रीवल्लभाय नमः । श्रीपादुकाया दारुत्वप्रतीयमानत्वादोषधीत्वम् । वस्तुतस्त्वानन्दरूपैव संसारादुद्धारकत्वादोषधीत्वमपि । यथा श्रीमद्भागवतश्रवणस्यौषधीत्वं 'भवौषधाच्छ्रोत्रमनोभिरामादि' तिवाक्यात् । तेन यत्र पादुकाया विद्यमानत्वं तत्रानन्दमात्रकरपादमुखोदरादि श्रीवल्लभमोषधिरूपं श्रीपादुकायां विद्यमानम् । तस्माद्भोगसामग्र्यादीनां भोजनतिलकादिसर्वसेवायाः साक्षात्स्वीकारः सम्भवति । किञ्च 'वैष्णवा वै वनस्पतयो वैष्णवैस्तदुपाधत्त' इति श्रुतेः श्रीमदाचार्यधर्मिरूपस्य श्रीपादुकायाः मार्गस्थातपशर्करादिजन्यश्रमनिवारकत्वात्सेवकत्वम् । 'श्रियो हि परमा काष्ठा सेवकास्तादृशा यदि' । तेन श्रीमदाचार्यवदुद्धारकत्वाच्छ्रीरूपत्वं श्रीपादुकायाः सेवकत्वेनोद्धारकत्वात् तेन श्रीमदाचार्याणां श्रियः परमकाष्ठापन्नत्वमागतम् । श्रीमदाचार्याणां विष्णुरूपत्वस्याग्रे वक्ष्यमाणत्वात्तत्सम्बन्धे श्रीपादुकाया वैष्णवत्वम् । वैष्णवैरेव तदुपाधत्ते । श्रीपादुकायाः सेवा वैष्णवैरेव धारणं स्वीकारः क्रियते ।

अथवा ननु श्रीमदाचार्यपादुकाया दुर्लभत्वाद्वैष्णवत्वावच्छिन्नानां कथं सेवा सम्भवतीत्याशङ्कानिरासायाह 'वैष्णवा वै वनस्पतयो वैष्णवैरेव तदुपाधत्त' इति श्रुतिः । तुलसीमालाया अपि श्रीमदाचार्याणामोषधिरूपं यथान्तर्यामिणो देहत्वावच्छिन्ना जीवसमीपे स्थितिस्तथा पुष्टिमार्गीयवैष्णवदेहत्वावच्छिन्ने श्रीमदाचार्यौषधिरूपमालायाः स्थितिः । तेन सर्वेषां वैष्णवानां श्रीमदाचार्यसेवा सम्भवति । भवनिवारकत्वादोषधीत्वम् । वैष्णवत्वाच्छ्रीसम्पादकत्वमपि ।

---

पादनात् शङ्केतिवाक्येन तु साक्षाद्भोजनादिप्रतिपादनात् पादुकायास्तत्त्वाभावात्कथं पादुकायास्तदिति शङ्कार्थ । ओषधीत्वमिति । 'ओषध्य फलपाकान्ता' इत्यमरो यद्यपि तथाप्योषधीवदुपकारकत्वाच्छ्रीपादुकाया ओषधीत्वम् । आनन्दरूपैवेति । यथा श्रीमत्पुरुषोत्तमस्य सर्वपदार्थजातस्यावयवाना चानन्दरूपत्वं श्रुतिषु, तथा श्रीमदाचार्याणामानन्दरूपत्वेन पादुकानामानन्दरूपत्वमिति भाव । यथा ब्रह्मणोऽवयवाना ब्रह्मत्वमेव श्रीमदाचार्यपादुकानामपि श्रीमदाचार्यत्वमित्यभिप्रेत्याह तत्रेत्यादि । धारणमिति । 'पादुका च गुरोर्नित्य वस्त्रं वा श्रीगुरोर्यजेदि'ति नारदपञ्चरात्रवचनात्सेवकै पादुकासेवाऽवश्यमेव विधेया । अन्यदपि तत्रैव 'विना श्रीपादुकामन्त्रं न तिष्ठेत्तु कदाचने'ति वाक्याद्वैष्णवै स्वीकार सेवा क्रियते । विधीयत इत्यर्थ ।

'वैष्णवा वै वनस्पतय' इति श्रुतिं तुलसीमालापरत्वेन व्याकुर्वन्ति तुलसीमालाया इत्यादि । श्रीमदाचार्यै सर्वोद्धारार्थं मालारूपत्वमप्यङ्गीकृत तेन सुलभगुणवत्त्वं सूचितम् । तल्लक्षण तु 'स्वलीनान् मूर्च्छितान् जीवान् शून्यान् स्वाभीष्टसाधनै । दृष्ट्वा सौलभ्यता प्राप्तस्तेनासौ गुणवारिधिरि'ति । अन्तर्यामिण इति । 'ईश्वर सर्वभूताना हृद्देशेऽर्जुन तिष्ठती'ति स्मृते ।

किञ्च 'आचार्यवान् पुरुषो वेदे'ति श्रुतेः आचार्यवान् मालाया आचार्यरूपालावद्वान् पुरुषः पुष्टिमार्गीयजीवः वेद भगवत्स्वरूपज्ञानं तस्य भवति । तेन मालारूपश्रीमदाचार्यविशिष्टस्यैव जीवस्य पुरुषोत्तमस्वरूपज्ञानात् सेवाधिकारः । आचार्यरूपमालारहितस्य तदभावात्स्पष्ट एवानधिकारः । नन्वन्तर्यामिदृष्टान्तेन तुलसीकाष्ठमालाया धारणं प्राप्तं तत्र प्रमाणजिज्ञासायां भगवद्वाक्यानि प्रमाणानि सन्ति । तथाहि विष्णुधर्मे श्रीभगवानाह 'तुलसीकाष्ठमालां च कण्ठस्थां वहते तु यः । अप्यशौचोऽप्यनाचारो मामेवैति न संशयः' । स्कान्दे च 'धात्रीफलकृता माला तुलसीकाष्ठसम्भवा । दृश्यते यस्य देहे तु स वै भागवतोत्तमः । सन्निवेद्यैव हरये तुलसीकाष्ठसम्भवाम् । मालां पश्चात्समाधत्ते स वै भागवतोत्तमः । तुलसीकाष्ठसम्भूतां मालां यो वहते नरः । तारितं च कुलं तेन यावद्रामकथा क्षितौ' । गारुडे मार्कण्डेयवचनम् 'निवेद्य केशवे मालां तुलसीकाष्ठसम्भवाम् । वहन्ति ये नरा भक्त्या तेषां वै नास्ति पातकम् । सदा प्रीतमनास्तस्मिन् कृष्णो देवकीनन्दनः । तुलसीकाष्ठसम्भूतां मालां यो वहते नरः । प्रायश्चित्तं न तस्यास्ति नाशौचं तस्य विग्रहे । तुलसीकाष्ठसम्भूतं शिरोबाहुविभूषणम् । धारयेत्कण्ठदेशे तु तस्य वै नास्ति पातकम् । तुलसीकाष्ठमालां तु प्रेतराजस्य दूतकाः । दृष्ट्वा नश्यन्ति दूरेण वातोद्धूतं यथा रजः । तुलसीकाष्ठसम्भूते माले कृष्णजनप्रिये । बिभर्मि त्वामहं कण्ठे कुरु मा कृष्णवल्लभम्' इति ।

गारुडे पाद्मे च—'धारयन्ति न ये मालां हैतुकाः पापबुद्धयः । नरकान्न निवर्तन्ते

---

आचार्यरूपत्वादिति । यथा श्रीमदाचार्याणां 'वदति वल्लभ श्रीहरेरि'ति वाक्यात् 'प्रिया गोपीभर्तुः स्फुरतु सततं वल्लभ इति प्रथावत्यस्माकं हृदि सुभगमूर्तिः सकरुणे'ति वाक्याच्च वल्लभत्वमतस्तन्नामवत्त्वम् । एवं श्रीकृष्णप्रियात्वं तुलस्या अपि । तथा हि 'कच्चित्तुलसि कल्याणि गोविन्दचरणप्रिये' इति श्रीभागवतवाक्ये श्रीगोविन्दप्रियात्वं तुलस्याः 'तुलसीकाष्ठसंभूते माले कृष्णजनप्रिये । बिभर्मि त्वामहं कण्ठे कुरु मा कृष्णवल्लभमि'ति गारुडवचसि कृष्णजनप्रियात्वमुदितम् । कृष्णवल्लभं मा कुर्वित्युक्त्या यथा श्रीकृष्णवल्लभा त्वमसि तथा मा कुर्वित्यर्थः । किञ्च ब्रह्मवैवर्ते प्रकृतिखण्डे 'वृन्दा वृन्दावनी विश्वपूजिता विश्वपावनी । पुष्पसारा नन्दिनी च तुलसी कृष्णजीवनी'ति नामाष्टके कृष्णजीवनीत्युक्त्याऽतिप्रियात्वं श्रीकृष्णस्य । एवं च मालाया श्रीमद्वल्लभाचार्यरूपत्वमिति भावः । यद्वा 'आचिनोत्यर्थानाचारं ग्राहयतीति वाचार्य' इति निरुक्तकारैरुक्तत्वान्मालामत्त्व एव भगवदाचारग्रहणेऽधिकारः । भगवत्सेवार्थादिचयनेऽधिकार इति भावः । पुष्टिमार्गीयजीव इति । 'को वै न सेवेत विना नरेतर' 'श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः । न यत्कर्णपथोपेतो जातु नाम गदाग्रजः' इत्यादिश्रीभागवतवचोभिः पुरुषत्वं भगवद्धर्म्यैवेति भावः । अनधिकार इति । वक्ष्यमाणवचोभिर्मालारहितस्य भगवत्सेवानधिकार इत्यर्थः ।

दग्धाः कोपाग्निना हरेः । तुलसीकाष्ठमालोक्य कण्ठे वा मस्तके करे । निन्दां कुर्वन्ति ये मूढा म्लेच्छजास्ते न संशयः । अत्रातिशयमालोक्य तुलसीं द्वेषयन्ति ये । बहुनोक्तेन किं पार्थ सर्वे ते ह्यन्यवीर्यजाः' । स्कान्देपि 'यज्ञोपवीतवद्धार्या कण्ठे तुलसिमालिका । नाशौचे धारणे तस्या यतः सा ब्रह्मरूपिणी'ति ।

अत्र केचिद्वक्ष्यमाणवाक्यानुरोधात्सदा न धारयन्ति तेषां वाक्यानां तात्पर्यानवबोधात्, निषेधवाक्यानां विधायकवाक्यानां च परस्परं विरोधात्, निषेधवाक्येषु काष्ठपदाभावात् केवलतुलसीपदस्य विद्यमानत्वात्, निषेधस्य तुलसीपत्रधारणपरत्वं पत्रात्मकमालाधारणपरत्वं बोध्यम् । न तु तुलसीकाष्ठमालाधारणपरत्वम् । विधायकवाक्यानां विद्यमानत्वात् ।

---

विरोधादिति । भोजनादिकाले हारीतवचनादिभिर्निषेधस्य प्रतीयमानत्वं नारदीयपुराणपञ्चरात्रस्कान्दपाद्मादिषु भोजनादिकालेषु विधायकत्वमतो विरोध इत्यर्थः ।

विरोधं परिहरन्ति निषेधवाक्येष्विति । 'भोजने मैथुने चैवे'त्यादिष्वित्यर्थः । काष्ठपदाभावादिति । यत्तु 'सूतके मृतके चैव विसर्गे मलमूत्रयोः । स्नानभोजनशय्यासु तुलसीदारुसंभवाम् । मालां कण्ठगतां कुर्वन् भगवद्विमुखो भवेदि'ति लोकाचार्यकृतग्रन्थस्यनिषेधवाक्ये काष्ठपदपत्त्वात्सदा न धारणीयेति वदन्ति, तत्तु श्लोकार्थानवबोधान्निषेधवाक्यत्वेन योजयन्ति । 'क्षणार्धं तद्विहीनोऽपि विष्णुद्रोही न संशय' इति पाद्मवचसा क्षणमात्रत्यागेन विष्णुद्रोहित्वापत्त्या 'यज्ञोपवीतवद्धार्ये'त्यतिदेशेन यथा यज्ञोपवीतत्यागेन ब्रह्मकर्मविमुखत्वं तथा तस्याः क्षणमात्रत्यागेन भगवद्विमुखत्वमित्यर्थः । एवञ्चात्र स्नानादिकालेषु सर्वेषु तुलसीकाष्ठमालाधारणस्य महाफलत्वात्त्यागे दोषश्रवणाच्च मालां कण्ठगतामित्यत्र कण्ठाद्गतामन्यत्र प्राप्तां कण्ठाद्भ्रष्टां निःसृतां मालां कुर्वन् भगवद्विमुखो भवेदित्यर्थः । मालाहीनस्यैव भगवद्विमुखत्वमिति राद्धान्तः संपद्यते । यथाश्रुतार्थः स्यात्तर्हि क्षणमात्रत्यागेन विष्णुद्रोहित्वापातात् सुतरां विमुखत्वापत्तौ वृश्चिकभिया पलायितस्याशीविषमुखे निपातः प्रसज्ज्येत । यच्च वाक्यान्तरमुदाहरन्ति 'भोजने शयने याने मलमूत्रविसर्जने । तुलसीमालिकां बिभ्रत्पतत्येव न संशय' इति, तत्त्वत्र काष्ठपदाभावात् पत्रमालापरत्वेन निषेधः पर्यवस्यतीत्यनेनापि न तत्सिद्धिः । तथैव व्यवस्थापयन्ति पत्रात्मकमालाधारणपरत्वं वा बोध्यमिति । ननु प्राप्तौ सत्यां निषेधः । तुलसी पत्रात्मिकमालाधारणविधेरश्रवणादिति चेन्न । निषेधवाक्येषु काष्ठपदाभावात् विधायकेषु काष्ठपदश्रवणादेवं कल्प्यते । यदि च ग्रहिलतया वचन एवाग्रहस्तर्हि स्कान्दपुराणाधिकरणमार्गशीर्षमाहात्म्यस्थं गृहाण । 'तुलसीदलजां मालां ममोत्तीर्णां वहेत्तु यः । पत्रेपत्रेऽश्वमेधस्य दशानां लभते फलमि'ति । एवं च पत्रात्मिकाया एव भोजनादौ निषेध इति निर्विवादो राद्धान्तः । विद्यमानत्वादिति । भोजनादिकालेष्विति शेषः ।

तथाहि । ननु 'भोजने मैथुने चैव मलमूत्रविसर्जने । तुलसी धार्यते येन विष्णुद्रोही न संशयः । तुलसी धार्यते कण्ठे मलमूत्रविसर्जने । नरके पच्यते मूढो यमदण्डेन पीडितः । स्नानकाले यदा कण्ठे तुलसी धार्यते क्वचित् । तद्वारि पतितं पादे स पापिष्ठो नराधमः । तुलसी च यथा लक्ष्मीर्लक्ष्मीश्च तुलसी तथे' त्यादिवचनैर्हारीतेन मुनिना भोजनादिपञ्चस्थानेषु तुलसीधारणस्य निषिद्धत्वात् सदा न धार्येति चेन्न । तद्धारणस्य यज्ञोपवीतवदुक्तत्वात् । न हि यज्ञोपवीतं मलमूत्रादिविसर्जनेपि केनचित्त्यज्यते । तथा तुलस्याः सर्वकाले विशेषतो धारणमुक्तं नारदपञ्चरात्रे 'आशौचे वाप्यनाचारे कालेऽकाले च सर्वदा । तुलसीमालिकां धत्ते स याति परमं पद' मिति । स्कान्दे च—'तुलसीकाष्ठमालां यो धृत्वा स्नानं समाचरेत् । पुष्करे च प्रयागे च स्नातं तेन मुनीश्वर । तुलसीकाष्ठमालां यो धृत्वा भुङ्क्ते द्विजोत्तमः । सिक्थे सिक्थे स लभते वाजिमेधफलं मुने' । पाद्मे पार्वतीं प्रति शिवश्चाह 'स्नानकाले तु यस्याङ्गे दृश्यते तुलसी शुभा । गङ्गादिसर्वतीर्थेषु स्नातं तेन न संशयः । तुलसीमालिकां धृत्वा यो भुङ्क्ते गिरिनन्दिनि । सिक्थे सिक्थे स लभते वाजपेयफलं शुभम् । बहुना किमिहोक्तेन शृणु त्वं वरवर्णिनि । विड्उत्सर्गादिकाले च न त्याज्या कण्ठमालिका । अन्तकालेऽपि यस्याङ्गं तुलसीमालिका स्पृशेत् । तस्य देहोद्भवं पापं तत्क्षणादेव नश्यति । कण्ठे शिरसि बाहुभ्यां कर्णयोः करयोस्तथा । विभूयात्तुलसीं यस्तु स ज्ञेयो विष्णुना समः । यत्कण्ठे तुलसी नास्ति ते नरा मूढमानसाः । अन्नं विष्ठा जलं मूत्रं पीयूषं रुधिरं भवेत् । ततः सर्वेषु कालेषु धार्या तुलसिमालिका । क्षणार्धं तद्विना योपि विष्णुद्रोही न संशयः ( भवेन्नरः ) ।

'हरिनामाक्षरयुतं भाले गोपीमृदाङ्कितम् । तुलसीमालिकोरस्कं न स्पृशेयुर्यमोद्भटाः । ऊर्ध्वपुण्ड्रस्य मध्ये तु विशाले सुमनोहरे । सान्तराले समासीनो हरिस्तत्र श्रिया सहे' ति वचनेन श्रीधारणमपि न सम्भवति किन्तु श्रीगोपीजनवल्लभायेति मुद-

---

एतदेव हृदि कृत्य भोजनादिस्थानेषु तुलसीकाष्ठधारणवचनान्युदाहरन्तः पूर्वक्तां व्यवस्थां स्थापयन्ति तथा हीत्यादिना । विड्उत्सर्गादीति । आदिना सूतकमरणाशौचानामपि संग्रहः । 'यज्ञोपवीतवद्धार्यें'त्यतिदेशात् 'अशौचे वाप्यनाचारे कालेकाले च सर्वदे'त्यादिवाक्याच्च ।

हरिनामाक्षरयुतमित्यादि । यस्य भाले गोपीमृदा गोपीचन्दनेन हरिनामाक्षरयुतमङ्कितमूर्ध्वपुण्ड्रमिति शेषः । तुलसीमालिकोरस्कमिति । तुलसीमालिका उरसि यस्य तम् । कप्रत्ययः । अत एव स्वसंप्रदाये उरःपर्यन्तं धार्यते । नच 'ये कण्ठलग्नतुलसीनलिनाक्षमाले'ति स्कान्दवचनविरोधः शङ्क्यः । नलिनाक्षमालासाहचर्येण तत्र सकामविषयत्वं द्योतितम् । तादृशधारणस्य प्रसङ्गादूर्ध्वपुण्ड्रे स्वसंप्रदाये हरिद्राचूर्णधारणं न कर्तव्यमित्याहुः ऊर्ध्वपुण्ड्रस्येत्यादिना । ऊर्ध्वपुण्ड्रप्रतिपादनश्रुतिर्मयोपन्यस्यते श्रौतत्वप्रतिपादनार्थम् । तथाहि 'श्रोणामुदकं

गामवाजति मामसेकः पिंशति सूनया भृतम् । आनिम्रुचुः शकृदेको अपामरत् किंस्वित्पुत्रेभ्यः पितरा उपावतुरि'ति । चतुर्दशर्चस्य ऋभुदैवत्यस्य दशमीयमृक् । तत्रायमर्थः । हे ऋभवः, भवतां मध्ये एकः पुष्टिमार्गाधिकारं प्राप्तः श्रेष्ठः श्रोणां रक्तां भगवच्चरणकुङ्कुमादिरूपाङ्ग-चन्दनं 'पूर्णाः पुलिन्द्य उरुगायपदाब्जरागश्रीकुङ्कुमेन दयितास्तनमण्डितेन । तद्दर्शनस्मररुजां स्तृणरूषितेन लिम्पन्त्य आननकुचेषु जहुस्तदाधिमि'ति श्रीभागवतवाक्यात् । यद्वा श्रोणां श्लक्ष्णाम् । श्लक्ष्णता च 'असमर्पितवस्तूनां तस्माद्वर्जनमाचरेदि'तिदिति वाक्यात् ' त्वयोपभुक्त-स्रगन्धवासोऽलङ्कारचर्चिता' इति श्रीभागवतवाक्याच्च भगवदुपभुक्तां गां चन्दनादिरूपां मुख्य-कर्मभूतां प्रति । 'ऊर्ध्वपुण्ड्रं तु विप्राणामि'त्यादि स्मृत्या 'विप्राणां नैव धार्यं स्यात्तिर्यक्पु-ण्ड्रादिकं तथा । नारायणाज्जगन्नाथादन्येषामर्चनं न तु' इत्यादिवाक्यैश्चोर्ध्वपुण्ड्रधारणार्थमुदकं जलं गौणं कर्म अवाजति अवगमयति । अन्तर्भावितण्यर्थोऽयम् । श्रोणां गामुदकेन मिश्रयतीत्यर्थः । एकः सूनया हिंसया तत्कर्त्री आभृतं आहृतं मांसं गोरोचनाख्यम् । अत्रापि 'त्वयोपभुक्ते'त्या-दिवाक्यैर्भगवदुपभुक्तं पिंशति पर्ययति उदकेन सहेति शेषः । 'व्यवहिताश्चे'ति छन्दसि व्यव-हितेनाप्युपसर्गेण क्रियायाः सम्बन्धः । अत्र वासुदेवोपनिषद्ब्राह्मतन्त्रपुराणानुसारादूर्ध्वपुण्ड्रार्थं श्लक्ष्णां मृदं जलेन मिश्रयेदिति व्याख्येयम् । अत्र गोरोचनग्रहणं चन्दनाद्यष्टगन्धो-पलक्षणार्थम् । यथा श्रीभगवतः प्रीतिस्तथा गन्धादिकं भगवतेऽर्पयित्वोर्ध्वपुण्ड्रार्थमङ्गीकार्यम् । 'यद्यदाचरति श्रेष्ठ' इति स्मृत्या महतां मार्ग एवाश्रयितव्य इत्याह किंस्वित्पुत्रेभ्यः पितरा उपावतुरिति । पुत्रहितार्थे यत्किञ्चिद्व्रतं पितरौ मातापितरौ पितृपितामहौ वा उपेत्य स्वीकृत्य अवतुः व्रतं सम्यक्पालयामासतुस्तदेव तस्य श्रेयस्साधनमित्यर्थः । यद्वा श्लक्ष्णां चिक्कणां गां गोपीचन्दनादिमृत्तिकां चक्रादिधारणार्थमुदकं अवाजति मिश्रयति 'गोपीचन्दनतो नित्यं लाञ्छितं यस्य विग्रहम् । शङ्खचक्रगदापद्मैर्गेहे तस्य सदा हरिः । कृष्णायुधाङ्कितं यस्य गोपीचन्दनमृत्स्नया । प्रयागादिषु तीर्थेषु स गत्वा किं करिष्यती'ति पाद्मवचनाभ्यामन्यैश्च वाक्यैः शङ्खादिधारणमवदयमिति भावः । एकः मांसं गोरोचनाख्यं भगवदुपभुक्तमूर्ध्वपुण्ड्रार्थं पिंशतीत्यन्यत्पूर्ववत् । न संभवतीति । श्रीधारणं श्रियो हि चिह्नं श्रिया सह हरिः समा-सीन' इत्युक्त्या श्रियस्तत्र सुतरां विद्यमानत्वेन निष्प्रयोजनत्वान्न विधेयमिति भावः । ननु ' ऊर्ध्वपुण्ड्रस्य मध्ये तु लक्ष्मीस्थानं प्रकल्पयेत् । हारिद्रेण तु चूर्णेन कुङ्कुमेन सुगन्धिना । पुण्ड्राणामन्तराले तु हारिद्रं धारयेच्छ्रियमि'ति नारदीयवचनात् । अन्येभ्योऽपि स्मृतिपु-राणवचनेभ्यः श्रीधारणस्य विधानाच्छ्रीधारणमावश्यकमिति चेत्सत्यम् । ' तापः पुण्ड्रं तथा नाम मन्त्रो यागश्च पञ्चमः । अमी च पञ्च संस्काराः परमैकान्तहेतव' इति पाद्मवचने ताप-नैकट्ये पुण्ड्रविधानात्तत्रैव श्रीधारणस्योदितत्वात् पुराणादिषु तप्तचक्रादिधारणविधिनिकट एव श्रीधारणस्योदितत्वाच्च तप्तचक्रादिधारिणामेव श्रीधारणकर्तव्यताबोधका'न्यूर्ध्वपुण्ड्रस्य मध्येत्वि'-

यैव धारणं सम्भवति । निषेधस्य केवलतुलसीपत्रधारणपरत्वम् । यतस्तत्र वचने काष्ठव-चनाभावात् । तेन सर्वदा मालाधारणं प्राप्तमित्यर्थः ।

ननु पूर्वोक्तान्तर्यामिदृष्टान्तेन जीवानामुद्धारार्थं श्रीमदाचार्यचरणैरेतावत्कृतं यदर्थं मालारूपेणापि पुष्टिमार्गीयजीवानां प्रतिशरीरेषु जीवस्थितिः कृता, तत्र जीवैः प्रत्युप-कृतिः कर्तव्योचितेत्याशङ्कानिरासायैकादशस्कन्धे श्रीभगवन्तं प्रति उद्धव आह 'नैवोप-यन्त्यपचितिं कवयस्तवेश ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः । योऽन्तर्बहिस्तनुभृतामशुभं विधुन्वन्नाचार्यचैत्त्यवपुषा स्वगतिं व्यनक्ति'। नैवेति । अपचितिं प्रत्युपकारम् । आनृण्य-मिति यावत् । कवयो माहात्म्यज्ञानपूर्वकसुदृढसर्वाधिकस्नेहविशिष्टा अपि नैवोपयन्ति नैव प्राप्नुवन्ति । यतः स्वकृतमुपकारं स्मरन्तः ऋद्धमुदः उपचितपरमानन्दाः । उपकारमे-वाह । यो भवान् बहिराचार्यवपुषा श्रीमदाचार्यस्वरूपेण, अन्तश्चैत्त्यवपुषा अन्तर्यामिरूपेण, तद्वत् अन्तः ओषधीरूपलीलाप्रवेशेन अशुभं प्राकृतविषयवासनां विधुन्वन् निरस्यन् स्वगतिं निजरूपां सायुज्यादिरूपां प्रकटयति । वस्तुतस्तु पुष्टिमार्गीया जीवाः लीला-

---

त्यादीनि वचनानीति नास्माकं बाधः । न चोर्ध्वपुण्ड्रस्य तथात्वापत्तिरिति वाच्यम् । एतत्प्रक-रणे चतुरङ्गुलविस्तीर्णशूर्पाकारोर्ध्वपुण्ड्रविधानात् । मन्मते तु श्रीमदाचार्यचरणैर्निबन्धे 'दण्डाकारं ललाटे स्यादि'त्युक्तं 'दण्डाकारं सुशोभाढ्यं मध्ये छिद्रं प्रकल्पयेदि'त्यादिपुराणवचनाद्दण्डा-कारस्यैव विधानात् स्वमते तप्तचक्रादिधारणं न कार्यम् । गोपीचन्दनादिमृदा कार्यमित्यादिसर्वनि-र्णयनिबन्धे श्रीमदाचार्यचरणैः शङ्खचक्रधारणवादे श्रीपुरुषोत्तमचरणैर्बहुशो निरूपितं ततोऽवधे-यम् । सर्वदा मालाधारणमिति । तुलसीमालाधारणमित्यर्थः । विस्तरस्तु मालाधारणवादेऽ-वलोकनीयः । ननु संप्रदाये सर्वैः श्रीवृन्दावनादिस्थानोद्भवकाष्ठादिमालाधारणं क्रियते । तत्र काष्ठ-मालाधारणस्य निषेधश्रवणादिति चेन्न । 'वैष्णवा वै वनस्पतयो वैष्णवैरेव तदुपधत्त' इति श्रुत्या वैष्णवस्थानोद्भवा वनस्पतयो वैष्णवैस्तस्मात्कारणादुपधत्ते इत्यर्थिकया श्रीवृन्दावनादिस्थानोद्भ-वकाष्ठमालाधारणविधानात् । वस्तुतस्तु श्रीमत्पुरुषोत्तमधाम्नः श्रीवृन्दावनादेः सच्चिदानन्दरूपत्वेन तत्स्थितपदार्थानामप्यानन्दमयत्वेन तदुद्भवानां वनस्पतीनां काष्ठत्वाभावात् काष्ठत्वेन प्रतीतिस्तु भ्रमात्मिका । मलादिदोषदूषितनयनस्य समीचीनस्य पदार्थस्य भ्रमात्मकत्वेन पीतत्वेन प्रतीति-वदत्राप्याद्यविधकेन्द्रियत्वेन । अत एव गिरिकाननयमुनापुलिनानामपि विपर्यासप्रतीतिः । श्रीगो-कुलादिस्थानस्य तत्स्थितपदार्थजातानामपि नित्यत्वं सच्चिदानन्दरूपत्वं निर्गुणत्वं श्रुतिस्मृति-पुराणादिवचनकदम्बैर्विद्वन्मण्डने प्रतिपादितं श्रीमत्प्रभुचरणैरिति नेह तन्यत इति दिक् ।

नैनेतीति । असमर्थतया प्रत्युपकारं कर्तुमसमर्थाः । कवय इति । 'संख्यावान् पण्डितः कविरि'त्यमरात् पण्डिताः । तत्त्वं च शब्दब्रह्मपरब्रह्मविरत्वम् परब्रह्मज्ञानं च भगवन्माहात्म्यज्ञानपूर्वकं सच्चिदात्मकत्वेन ज्ञानं तेन सर्वतोऽधिकस्नेहवन्त इत्यर्थः । श्रीमदाचार्या-

स्यास्तेषां शापादिना भगवदिच्छया वा भूतले आगमनं तदेव रोगपदवाच्यम् । तन्निवृत्तिरूपौषधं पुष्टिमार्गः तेन लीलायां प्रवेशरूपः स्वस्वरूपमाश्रित्य । तस्माच्छ्रीमदाचार्याणामौषधरूपपुष्टिमार्गस्वरूपत्वं तेन जीवानां निःसाधनोद्धारकर्तृत्वात्परमा श्रीः । नम ओषधीभ्य इति विशेषणेन श्रीर्निरूपिता ।

---

दिरूपेणेति । 'आचार्यो भगवानग्निरि'तिवाक्यात् श्रीमद्वल्लभाचार्यस्वरूपेणेति भावः । पुष्टिमार्गस्वरूपत्वमिति । पुष्टिमार्गवर्धनार्थमेव श्रीमदाचार्याणां प्राकट्यम् । तथा च श्रुतिः 'त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात्' । अयमर्थः—त्रीन्वेदान् अम्बते शब्दायते अर्थाद्विद्वारा प्रकाशयति । 'अबि शब्दे' कर्मण्यण् स्वार्थे कन् । एतेन वेदपारगत्वं सूचितं । 'वेदपारग'इति सर्वोत्तमे । यद्वा त्रिषु कालेषु त्रिषु लोकेषु वा अम्बः शब्दो वेदलक्षणो यस्य । अनेन श्रीमदाचार्यभाषणं वेदरूपमेवेति बोध्यम् । एतेन श्रीमदाचार्यप्रकाशितमध्ययनं वेदवदवश्यं कार्यम् 'निःश्वसितमस्य वेदा' इति श्रुतेः । श्रीमदाचार्याणां भगवदास्यत्वात् । यद्वा त्रीणि अम्बकानि नयनानि यस्येति व्युत्पत्तावपि वह्नेस्तन्त्रादिषु त्रिनेत्रत्वं स्फुटम् । तथाहि 'करैर्वरस्वस्तिकशक्त्यभीतीर्दधानमम्भोजगतं त्रिनेत्रम् । सिन्दूरवर्णं तपनीयभूषं वन्हिं जटाभूषितमौलिमीडे' इति लौकिकालौकिकाग्न्यंशतयाऽलौकिकाग्नावपि त्रिनेत्रत्वं तानि वेदत्रयरूपाणीत्यर्थः । यद्यपि निरुक्तकारैः 'त्र्यम्बको रुद्रस्तं त्रियम्बकं यजामह' इत्युक्तं तथापि 'रुजं द्रावयते यस्माद्रुद्रस्तेन जनार्दन' इति ब्रह्माण्डपुराणवचनाद्रुद्रशब्दप्रवृत्तिर्विष्णावेव, श्रीमदाचार्याणां विष्णुरूपत्वं श्रुत्यादिभिः स्फुटमेव 'आचार्यं मां विजानीयादि'ति वचनेन 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्य' इति श्रुतिस्मृतिपुराणवचनैः श्रीमदाचार्यपरत्वेन व्याख्यानं न दुर्घटम् । किञ्च 'त्वमग्ने वृषभः पुष्टिवर्धन' इति मन्त्रे पुष्टिवर्धनत्वोक्त्याऽस्मिन्नपि तद्वर्धनत्वोक्त्या परस्परमेकवाक्यतया श्रीमदाचार्यपरत्वेन व्याख्यानं युक्तिमत् । एतेनास्मिन्मन्त्रे श्रीमदाचार्यवाचकपदाभावात्तत्परत्वेन व्याख्यानं न संभवतीत्यपास्तम् । तस्मात् त्र्यम्बकं श्रीवल्लभाचार्यं यजामहे सेवामहे । किंभूतम् । सुगन्धिं सुष्ठु गन्धोऽस्येति 'गन्धस्येदुत्पूतिसुसुरभिभ्य' इत्यनुशासनादिदादेशः समासान्तः । एतेन श्रीमदाचार्ये सौरभ्यगुणं निरूपितम् । तल्लक्षणं तु 'श्रीवल्लभस्य सौरभ्यं स्तौमि व्यक्तं द्विजन्मनः । यस्य प्राशस्त्यवासेन वासिता भुवनत्रयी ॥ छागगन्धी नरो मेषगन्धी कश्चिन्नरोऽपरः । गजमाहिषगन्धी च मीनेरतोद्भगन्धकः ॥ छुछुन्दर्याः समो गन्धो नरो नारी च तादृशी । दौर्गन्ध्यदूषिता मर्त्यास्तेषां तु गणना न हि ॥ अयोग्या देवपूजादौ भूतशुद्धिं विना ततः । ततो मुक्ता महाशुद्धाः स्वतः सौगन्ध्यभूषिताः ॥ सेव्याहीः सर्वथा विष्णोः सर्वदाः सर्वदा हरेः ।' तदुक्तं मोक्षधर्मे 'अनिन्द्रिया अनाहारा अनिष्पन्दाः सुगन्धिनः । ये च मुक्ता भवन्तीह नरा भरतसत्तम ॥ तेषां लक्षणमेतद्धि श्वेतद्वीपनिवासिनामि'ति । अत्र भक्तानामपि सौरभ्यगुणत्वम्, श्रीमत्पूर्णपुरुषोत्तमस्य श्रीमदाचार्यस्य किमु वक्त-

व्यम् । लौकिकप्रतीतिस्त्वासुराणां 'प्राकृतानुकृतिव्याजमोहितासुरमानुष' इति प्रभुभिरुक्तम्। 'अयोग्या देवपूजादाव'स्मिन् पद्ये भूतशुद्धिं विनेत्यस्यागमोदितभूतशुद्धिं विना अयोग्या इत्यर्थः। सिद्धान्ते तु 'मन्त्रोपासनवैदिकतान्त्रिकदीक्षार्चनादिविधिभिर्यः । अस्पृष्टो रमते निगमभेदेषु स मेऽस्तु सर्वस्वमि'ति भक्तिहंसे प्रभुचरणैरुक्तत्वादत्र ब्रह्मसंबन्धादिना देहजीवनिष्ठसर्वदोषनिवृत्तिरूपभूतशुद्धिं विना पूजादौ भगवत्सेवायामयोग्या इत्यर्थः । अनेन गुणेनेतरगुरुकरणनिवृत्तिः। सर्वतः श्रैष्ठ्येन सर्वथैवाश्रयणीयत्वं श्रीमदाचार्याणामिति फलितम् । ननु किमर्थं श्रीमदाचार्याणां प्राकट्यमिति शङ्कानिरासायाह पुष्टिवर्धनमिति । अत एव चरित्रचिन्तामणौ श्रीमदाचार्यावतरणप्रसङ्गे सैर्वदेवैः प्रार्थितो भगवान् । तथा हि 'सेव्यसेवकभावो हि न पुष्टिं याति भूतले। मर्यादा वा प्रवाहो वा वर्तते पुष्टिरेव न ॥ सहजः सेवको जीवः सेव्यः श्रीपुरुषोत्तमः । इति भावो यथा सिद्ध्येत्पुष्ट्या तत्साधय प्रभो' इत्युक्तम् । एवं च सेव्यसेवकभावपुष्ट्यर्थमेव श्रीमदाचार्याणां प्राकट्यमिति । 'पुष्टिर्नाम भगवदनुग्रह' इति पुष्टिप्रवाहमर्यादाविवृतौ कल्याणरायचरणैरुक्तत्वात् 'देवानां गुणलिङ्गानामानुश्रविककर्मणाम् । सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु ये'ति तृतीयस्कन्धवाक्यात् 'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे'ति नारदपञ्चरात्रवचनाच्च 'सा परानुरक्तिरीश्वरे' इति शाण्डिल्यसूत्राच्च । 'क्षणं युगशतमिव यासां येन विनाऽभवदि'ति श्रीभागवतवाक्याच्च सर्वतः परद्धिस्नेहत्वे सति भगवन्तमन्तरा क्षणाऽसहिष्णुत्वं पुष्टिमार्गः तस्य वर्धनमित्यर्थः । हे श्रीवल्लभाचार्य, मृत्योर्मुक्षीय मृत्योः सकाशान्मा मां मुञ्च । तथा तत्त्वदीपे 'सात्त्विका भगवद्भक्ता ये मुक्तावधिकारिणः । भवान्तसंभवा दैवात्तेषामर्थे निरूप्यते' इत्युक्तम् । तेन श्रीमदाचार्यैः स्वशरणापन्नानामधिकारिणां जन्ममरणात्यन्ताभावो निरूपितो यथा ऋषिभिः प्रार्थितम् । ननु मृत्योः स्वरूपं कीदृशमित्याह । मृतात् प्राणत्यागरूपात् । यद्वा मां हे ऋतात् ऋतं सत्यमततीति ऋतात् हे सत्यप्रतिज्ञ, किमिव । 'बन्धनादुर्वारुकमिव फलं बन्धनादारोधनादि'ति नैरुक्ता इत्यर्थः । 'पुष्टिपथप्रथनैकवीरनिगमाशयभासके'त्युक्तमभियुक्तैः ।

त्वमग्ने वृषभ इति श्रुतिस्तु 'त्वमग्ने वृषभ. पुष्टिवर्धन उद्यतस्रुचे भवसि श्रवाय्यः । य आहुतिं परिवेदा वषट्कृतिमेकायुरग्रे विश आ विवासति । ' अर्थस्तु–हे अग्ने, श्रीवल्लभाचार्य, त्वं वृषभः भक्तानां मनोरथपूरकः । विशेषार्थस्तु चत्वारिशृङ्गेति श्रुतौ निरूपितः । यद्वा वृषभः धर्मरूपः । धर्मश्च भगवत्सेवनरूपः । 'धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम् । स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे । अहैतुक्यप्रतिहता ययात्मा संप्रसीदती'ति भगवद्वाक्याभ्याम्। तथा च सुबोधिन्यां श्रीमदाचार्यचरणैः 'गौणपितुराज्ञोल्लङ्घनेऽपि मुख्यपितुर्भगवतः सेवनं मुख्यो धर्म' इत्युक्तम् । ननु भगवत्सेवनमन्येऽपि कुर्वन्ति किमत्र वैशिष्ट्यमित्याशङ्कायामाह । पुष्टिर्नाम भगवदनुग्रहः पुष्टिर्नान्येष्विनो वैशि-

अतःपरं ज्ञानं निरूपयति नमो वाच इति । सुबोधिन्यादिवाग्रूपधारिणे श्रीवल्लभाय नमः । ननु जीवानामुद्धारस्तु श्रीमदाचार्याणां पूर्वोक्तरूपधारणेनैव सिद्ध इति किं वाग्रूपधारणेनेतिचेन्न । 'ज्ञानी चेद्भजते कृष्णं तस्मान्नास्त्यधिकः पर' इति वाक्यात् 'ज्ञानादेव तु कैवल्य' मितिश्रुतेश्च श्रीमदाचार्याणां धर्मिरूपेण प्रादुर्भावसमये स्वमुखारविन्देन दैविजीवानां पुष्टिमार्गीयसिद्धान्तज्ञानसम्पत्तिः संसिद्धा । आधुनिकानां तदीयानां संप्रति पुष्टिमार्गीयाज्ञानादकृतार्थतैव स्याचदर्थं भाष्यादिरूपज्ञानात्मकश्रीमदाचार्यप्रादुर्भावः । तेनाधुनिकानां पुष्टिमार्गीयाणां जीवानां पुष्टिमार्गीयज्ञानसम्पत्तिः संसिद्धा ।

किञ्च 'ज्ञानोत्कर्षस्तदैव स्यात् स्वभावविजयो यदि'। ग्रन्थश्रवणेन जीवेन्द्रियाणां

---

ष्टयमिति भावः । 'कर्मणैव हि संसिद्धिमाश्रिता जनकादय' इति, 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः' । 'सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजा' इति भगवद्वाक्यात् । 'कर्ममार्गप्रवर्तक' इति वाक्याच्च । कर्ममार्गप्रवर्तनार्थं प्रादुर्भावमाह उद्यतस्रुच इत्यादि । उद्यताः स्रुचो यस्मिन् तस्मै यज्ञाय यज्ञं कर्तुं भवसि प्रादुर्भवसि यज्ञकर्तेति वाक्यात् । कथंभूतः । श्रवाय्य' श्रवणीयगुणकर्मलीलः । ननु यज्ञकर्तृत्वमन्येष्वपि किमत्र वैशिष्टयमित्यभिप्रेत्याह । यः भवान् आहुतिं परिवेद जानाति इन्द्राद्युद्देशेन त्यक्ताहुतिरिन्द्रादीनां भगवदङ्गभूततया भगवत्त्वेन भगवदर्पणे पर्यवस्यतीति परिपूर्वकविदेरर्थः।कथंभूताम्। वषट्कृतिम् यज्ञे देवाह्वानमन्त्रो वषट् तस्य कृतिरुच्चारणं यस्यां ताम् । पुनः किंभूत. । विशः एकायुः विशन्ति ते विशः दैविजीवानामेकायुजीवनमित्यर्थः । विश इति जातावेकवचनं तन्त्राश्रयणेन विश इति प्रथमाया बहुवचनमपि । तथायमर्थः—अग्रे प्रथमं विशः दैविजीवाः आविवासति परिचरन्ति त्वामिति शेषः । तथाच दैविजीवोद्धारार्थमेवावतारोऽन्यदुपसर्जनीभूतमित्यर्थ । वाग्रूपधारिण इति । यथा श्रीमद्भगवतो रूपं शब्दब्रह्मवेदात्मकं तथा श्रीमदाचार्याणामपि शब्दात्मकं रूपं सुबोधिन्यादिकमित्यर्थः । श्रीमदाचार्याणां मुखादाविर्भूतानां ग्रन्थानां वेदस्वरूपत्वादित्युक्तमेवात्र नैकट्ये भगवदास्यस्वरूपत्वादाचार्यवर्याणाम् । ज्ञानादेव त्विति । ' ऋते ज्ञानान्न मुक्तिरि'ति श्रुत्यन्तरात् ' तमेव विदित्वातिमृत्युमेती'ति ऋगन्तराच्च भगवद्विषयकज्ञानमवश्यमपेक्षितम् । माहात्म्यज्ञानादेवापराधनिवृत्तिः । माहात्म्यज्ञानपूर्वस्त्वित्यत्र ' सुदृढः सर्वतोऽधिकः स्नेहो भक्तिरि'ति लक्षणम् । माहात्म्यज्ञानं त्वपराधनिवृत्त्यर्थं न तु भक्तिलक्षणे निविष्टम् । अत एव ' सा परानुरक्तिरीश्वरे ' इति सूत्रेऽनुरक्तेः परमभक्तित्वमुक्तम् ।

ननु ज्ञानसंपत्तिः कथं सेत्स्यतीत्याशङ्कानिरासायाहुः किञ्चेत्यादि । ग्रन्थश्रवणेनेति । यथा यमुनाष्टकपाठफलस्तुतौ 'स्वभावविजयो भवेद्वदति वल्लभः श्रीहरेरि'त्युक्तं श्रीमदाचार्यवर्यैः । श्रवणादिना भगवद्विषयकनिष्ठया भगवति व्यसने कृतार्थता संपद्यते यथा श्रीभागवतश्रवणेन

र्येदी'ति । तथा च 'दृष्ट्वाऽऽतपे व्रजपशूनि'ति श्लोके मेघस्य स्वसर्वस्वजलवर्षणेन स्वच्छायाविधानेन च सेवाकरणाद्वैराग्यं सिद्धम् । एवं सेवकादिषु वैराग्यसिद्धौ श्रीमदाचार्येषु किं वक्तव्यमिति भावः ॥

नन्विमाः कारिकाः 'ईश्वरः पूज्यते लोके मूढैरपि यदा तदे'त्यादयः श्रीमदाचार्यचरणैर्वेणुगीते हरिण्यादिषु प्रतिपादिताः कथमत्र प्रतिपादनं क्रियत इति चेन्न । 'नैकमुदाहरणं योगारम्भं प्रयोजयती'ति भाष्यादुदाहरणभिन्नेऽपि न काप्यनुपपत्तिः । अतएव 'अनन्तगुणभूषित' इतिश्लोकव्याख्याटिप्पण्यामिमाः कारिकाः श्रीहरिरायैरपि श्रीयमुनापरत्वेन व्याख्याताः । किञ्च ननु श्रीमदाचार्याणां वाचस्पतिरूपेण यदा स्थितिस्तदा श्रीमुखादुक्तसुबोधिन्यादिग्रन्थावबोधस्तु सर्वेषां दैवानां भवत्येव, तथाप्याधुनिकानां जीवानां तदभावादनुद्धार एव स्यादित्याशङ्कानिरासायाहुः नमो वाचस्पतय इति । वाचस्पतिशब्देनाधुना विद्यमानाः श्रीमदाचार्यकुलोत्पन्नाः येषां भाष्यनिबन्धसुबोधिन्यादिसकलग्रन्थानामुपदेशकरणे सामर्थ्यं ते ग्राह्याः । तेषां श्रीमदाचार्याणां वाचस्पतिस्वरूपत्वात् तेषां मुखात्सिद्धान्तज्ञानं जीवानां पुष्टिमार्गीयाणां भवत्येव । तेन माहात्म्यज्ञानपूर्वकसुदृढस्नेहसम्पादनेन सर्वेषां दैविजीवानामुद्धारो भवत्येवेति न संशयः ।

---

सम्बन्धेनेति । साक्षाद्भक्तित्वेनोच्छिष्टं यदन्नं तच्छुद्धान्नपदेनोच्यते । भुक्तिशिष्टान्नान्मुखारविन्दमध्यस्थ चर्वित ताम्बूलमिव मुख्यमुच्छिष्ट भवति न ततोऽन्यत्कश्चरूपं शोधकं वास्तीति तत्सम्बन्धेन तथात्वायेत्यर्थ. । अन्यत्वं साधारणभगवत्सम्बन्धो वात्र शुद्धिपदार्थ इति न वक्तुं शक्यम् । भगवदन्त स्थिताना पूर्णपुरुषार्थत्वेन तथाविधेन कृतार्थत्वोक्तेरनुचितत्वात् । यत्तु 'एते बालका' इत्यारभ्य 'मिथ्या मिथ्याभिशासिन' इत्यन्तं वाक्य तन्मर्यादापर ज्ञेयम् । 'वशे कुर्वन्ति मा भक्त्ये'ति वाक्याद्यथैव तत्तोपस्तथैव भगवत कर्तव्यं भवतीति मर्यादामतिक्रम्य भक्तेच्छानियम्यत्वाङ्गीकारात्पुष्टिमार्गीयभक्तिमार्गे भक्षणादिकं सर्वमुपपद्यत इत्युक्तम् । पूतनामोक्षाध्याये टिप्पण्या चेत्यारभ्योपपादितमित्यन्तं श्रीमनसीमन्तिनीविहितश्रीमत्कृष्णचन्द्ररक्षाप्रकरणे महता प्रबन्धेनोपपादितम् । श्लोक इति । सम्पूर्णस्तु 'दृष्ट्वाऽऽतपे व्रजपशून् सह रामगोपैः सचारयन्तमनु वेणुमुदीरयन्तम् । प्रेमप्रवृद्ध उदित कुसुमावलीभि सख्युर्व्यधात्स्ववपुषाऽम्बुद आतपत्रमि'ति । अत्र प्रेमप्रवृद्ध उदित इति विशेषणेनाधिकस्नेहवत्तया भगवत्सेवाकरणादगैरिकत्वमम्बुदस्य न काप्यनुपपत्तिरिति श्रीमदाचार्योदितवचसा वेदरूपत्वेन यथा वेदव्ययद्धिन्यान उरुगायेति पूर्वोदितदिशा भक्तमनोरथानुरूपार्थबोधकत्वं तथात्र बोध्यमित्यभिप्राय. ।

अधुनिकानामिति । पूर्वं श्रुत्यादिभिर्महाभक्तत्वेनोपपादिता पुरुषोत्तमरूपत्वेन वाचस्पतिरूपा तेषा श्रीमदाचार्याणामिति सामानाधिकरण्यमाचार्यकुलोत्पन्नानामाचार्यत्वेन । ननु सर्वेषामेव कुतो न प्रवृत्तिरित्याशङ्कायामधिकारिणो दुर्लभा इत्यभिप्रेत्य तत्त्वदीपवाक्यमाहु

'सात्विका भगवद्भक्ता ये मुक्तावधिकारिणः । भवान्तसम्भवा दैवास्तेषामर्थे निरूप्यत' इति वाक्यात् ॥

नमो वाचस्पतय इति विशेषणेन वैराग्यं निरूप्यातः परं संयोगात्मकधर्मिस्वरूपं निरूपयति नमो विष्णव इति । विष्णुरूपधारिणे श्रीवल्लभाय नमः करोमीति सम्बन्धः । ननु नमो विष्णव इति विशेषणस्य कथं धर्मिरूपत्वं सम्भवतीत्याशङ्कानिरासाय फलात्मककृष्णपदं विहाय विष्णुपदप्रयोगः । तेन व्यापकत्वेन पूर्वोक्तैश्वर्यादिषड्धर्मेषु विद्यमानेपि धर्मी स्वस्वरूपे षड्धर्मयुक्त इत्यर्थः । ननु विष्णोर्गुणावतारेणापि कथनात्कथं धर्मिवाचकत्वमिति चेन्न । पुरुषोत्तमवाचकमेवात्र विष्णुपदम् । यथा 'देवक्यां देवरूपिण्यां विष्णुः सर्वगुहाशयः । आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कलः' । एतद्व्याख्यायां सुबोधिन्यां देवरूपिण्यामिति पाठान्तरे व्याख्याने देवो विष्णुर्व्यापकः पुरुषोत्तमो यो वेदान्ते ब्रह्मशब्देनोच्यते तस्य सर्वत्रैव विद्यमानत्वादिति व्याख्यानात् । अतएवान्तःकरणप्रबोधे 'सत्यसङ्कल्पतो विष्णुर्नान्यथा तु करिष्यती' त्यत्र विष्णुपदव्याख्याने श्रीगोकुलनाथैरपि 'बाह्याभ्यन्तरभेदेन स व्याप्तः पुरुषोत्तम' इति व्याख्यातम् ।

किञ्च पाण्डुपरायिते धर्मिरूपश्रीवल्लभप्रतिपादिका श्रुतिः । तथाहि 'इन्दिराया नलिनीमन्दिराया वल्लभो वासुदेवो देवगीतो दिविजानन्ददायी । देवदेवोऽप्यतनो वैभवेन सा लक्ष्मीरधिता नो बभूव सन्ततं भूरिभोग'मिति । अस्यार्थः । इन्दिरायाः 'इदि परमैश्वर्ये' इति परमैश्वर्यं प्राप्ताया मुख्यस्वामिन्या नलिनीमन्दिराया वल्लभः । अतएव वल्लभ इति नाम । अवतारदशायां स्वामिनीभावेन सेवाकरणात् उभय मध्यत्वेन वल्लभत्वम् । स एव वासुदेवः । अथवा 'वस्तुतः कृष्ण एवे'तिवाक्यात् फलरूपत्वेन सर्वेषां भक्तानां वल्लभः । अतएव तादृशवेष्टित इति नाम सर्वोत्तमे वरीवर्ति ।

---

सात्त्विका इत्यादि । अस्यार्थस्तु श्रीमदाचार्यैर्निबन्ध एवोपपादित । विष्णुरूपधारिण इति । 'त्रिर्देव पृथिवीमेष एता'मिति श्रुतौ श्रीमदाचार्याणां विष्णुरूपत्वमुदितम् । तदर्थस्तूपपादित एव । 'वस्तुत कृष्ण एवे'ति वाक्याच्च । व्यापकत्वेनेति । एतेन ब्रह्मशब्दपर्याये उदित 'सर्वत्र पूर्णगुणकोऽपि बहूपमोऽभूदि'ति श्लोकव्याख्यायामैश्वर्यादिगुणा सर्वेषु पूर्णा इति श्रीमदाचार्यचरणैर्व्याख्यातमतो ब्रह्मण ऐश्वर्यादिधर्मा इति भाव । 'अन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थ' इति श्रीभागवतवाक्याद्भगवद्भिन्ने तदभावात् 'सर्वप्रसिद्धोपदेशा'दित्यस्मिन् सूत्रे 'वासुदेवात्पर को नु ब्रह्मशब्दोदितो भवेत् । स हि सर्वगुणै पूर्णस्तदन्ये तूपचारत' इति माध्वभाष्ये । पुरुषोत्तमवाचकमेवेत्यादि । 'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् । प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तम' इति ब्रह्माण्डे । संयोगात्मकधर्मिस्वरूपोपपादने श्रुत्यन्तरमाहु किञ्चेत्यादिना । उभयमध्यत्वेनेति । अनवतारसमये इन्दिराया वल्लभत्वम् अवतारदशायामिन्दिराया वल्लभत्वेऽपि 'तत्सारभूतरामस्त्रीभावपूरितविग्रह' इति वचनात्स्वामिनीभावतया श्रीकृष्ण-

ननु वासुदेवशब्दस्य पुरुषोत्तमवाचकत्वे किं प्रमाणम् । तस्य च वासुदेवशब्दस्य व्यूहपरत्वेनापि सत्वादितिचेन्न । 'द्रोणो वसूनां प्रवर' इतिवचनात् वसुषु दीव्यतीति वसुदेवो नन्दस्तस्यापत्यं वासुदेवो नन्दनन्दनः । किञ्च 'वासुदेवार्जुनाभ्या'मिति सूत्रे वासुदेवग्रहणाज्ज्ञापकात्पुरुषोत्तमवाचकत्वम् । ननु कथं ज्ञापकत्वमुच्यते वसुदेवस्यापत्यमित्यर्थे 'ऋष्यन्धके' त्यणि वासुदेवशब्दो निष्पन्नः । तथा च 'गोत्रक्षत्रियाख्येभ्य' इत्युत्तरसूत्रेण वुञेवास्तु किमनेन वुना । नह्यत्र वृद्धौ विशेषः प्रागेव वृद्धत्वात् । नच 'वृद्धिनिमित्तस्ये'ति पुंवद्भावनिषेधे दोषः स्यादिति वाच्यम् । वुन्यपि'न कोपधाया'इति निषेत्स्येप्यमाणत्वात् । न वा स्वरे विशेषः । 'ञ्नित्यादिर्नित्य'मिति तुल्यस्वरत्वात् । नापि 'अभ्यर्हितं पूर्व'मिति ज्ञापनमेव फलमितिवाच्यम् । ज्ञापकार्थत्वे हि पूर्वनिपातप्रकरणेऽभ्यर्हितमित्येव कुर्यादितिचेदत्र भाष्यम् । संज्ञैषा भगवतः । तथाच 'ऋष्यन्धके' त्यणूप्रत्ययस्याप्राप्तिः । 'गोत्रक्षत्रियाख्येभ्य'इति वुञ्प्रत्ययोपि न । वासुदेव इति भगवतः पुरुषोत्तमस्य संज्ञा । अयं भावः । 'सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततोऽसौ वासुदेवेति विद्वद्भिः परिगीयत' इति स्मृतेः परमात्मेह वासुदेवः । भूतेषु वसतीति वासुः । भूतानि वासयतीति वा वासुः सचासौ देवश्चेति । सर्वत्रासौ वसति सर्वमत्र वसतीति वा व्युत्पत्त्या वासुः वाहुलकत्वादण् । वासुश्चासौ देवश्चेति विग्रहः । तथाच नायं गोत्राख्या नापि क्षत्रियाख्येति युक्त एव वुन्विधिः । अभ्यर्हितं पूर्वमिति तु प्रसङ्गाज्ज्ञापितं तदप्यनित्यम् 'श्वयुवमघोनामतद्धित' इत्यादिलिङ्गादित्यवधेयम् । पुनः कथंभूतो वल्लभः । देवगीतः देवैर्गीतो देवगीतः देवैर्ब्रह्मादिभिः पुरुषोत्तमगानेन तदास्यत्वादाचार्याणामपि गानम् ॥ ननु प्रयोजनमनुद्दिश्य कथं गाने प्रवृत्तिरित्यत आहुः दिविज्ञानन्ददायी ।

---

वल्लभत्वमिति भाव । वासुदेवशब्दस्य व्यूहपरत्वमत्र निरसन्तस्तत्राशङ्कामुद्घाटयन्ति नन्वित्यादि । व्यूहपरत्वेनेति । चतुर्व्यूहे वासुदेवस्य श्रूयमाणत्वात् समाधिमाविष्कुर्वन्ति द्रोणो वसूनामित्यादि । व्याकरणेनापि वासुदेवशब्दस्य पुरुषोत्तमपरत्वं साधयन्ति किञ्चेत्यादि । पुंवद्भावनिषेध इति । वासुदेविका भार्या यस्य स वासुदेविकाभार्य इत्यत्र वुञि तद्धितस्य वृद्धिनिमित्तत्वादिति भावः । इप्यमाणत्वादिति । एतेनोभयपक्षे वासुदेविकाभार्य इत्येव रूपम् । विग्रह इति तेन वासुदेवशब्दस्य योगरूढत्वम् । तत्त्वं च योगार्थतावच्छेदकसमानाधिकरणरूढ्यर्थतावच्छेदकावच्छिन्ननिरूपितबोधकत्वम् । अस्ति चेदं पङ्कजपदे पङ्कजनिकर्तृत्वसमानाधिकरणपद्मत्वावच्छिन्नबोधकत्वात् । वासुदेवादिसंज्ञाशब्देऽपि सर्वाधिकरणकवासरूपसर्ववासाधिकरणरूपयोगार्थतावच्छेदकसमानाधिकरणरूढ्यर्थतावच्छेदकावच्छिन्नबोधकत्वाल्लक्षणसमन्वयः । अवधेयमिति । वासुदेवशब्दस्य संज्ञात्वमित्यर्थः ।

गानमिति । कृतमिति शेषः । 'उरुगायाय वृष्णे' 'उरुगायाय दाशत्' देवगीतः 'एतमेव तु वीणायां गायन्ति गायन्ति त्वे'ति श्रुतिलिङ्गमूलानि श्रीमत्कृष्णचन्द्रगुणगानकर्तव्यताप्रतिपा-

दिविजानामानन्दं सुखं ददातीत्यर्थः। अथवा कथंभूतो वल्लभः । देवगीतः देवैः देवसदृशगु-णैः पुष्टिमार्गस्थितैर्गीतः तत्तद्गुणवैशिष्ट्येन । तैः कथं गीतः । यतो दिविजानन्ददायी दिविजानां क्रीडास्थितानां पुष्टिमार्गस्थानां दैविजीवानामानन्दं साक्षात्पुरुषोत्तमसम्ब-न्धिलीलासुखं यथाधिकारेण सेवाफलोक्तं ददाति तच्छीलः आनन्ददायी । ननु तादृश-फलदाने कथं सामर्थ्यम् । यतो देवदेवः देवानामपि देवः पूज्य इत्यर्थः । पुरुषोत्तमत्वात् ।

---

दक्तानि पुराणवाक्यानि गायतेः पङ्कजशब्दस्य तामरस इव गीतरूढत्वात् । अत एव लिङ्गपुराणे उत्तरार्धे ऋषय ऊचुः 'कृष्णस्तुष्यति केनेह सर्वदेवेश्वरेश्वरः । वक्तुमर्हसि तत्सूत सर्वशास्त्रा-र्थविद्भवान् ॥ सूत उवाच । पुरा पृष्टो महातेजा मार्कण्डेयो महामुनिः । अम्बरीषेण विप्रेन्द्रा-स्तद्वदामि यथामति' इति अम्बरीषमार्कण्डेयसंवादमुपक्रम्य 'पुरा त्रेतायुगे कश्चित्कौशिको नाम वै द्विजः । वासुदेवपरो नित्यं सामगानरतः सदा ॥ भोजनासनशय्यासु सदा तद्गतमानसः । उदारं चरितं विष्णोर्गायमानः पुनः पुनः ॥ विष्णुस्थलं समासाद्य हरेः क्षेत्रमनुत्तमम् । अगायत हरिं तत्र लयतालसमन्वितम् ' इत्यादिना श्रीमत्कृष्णगुणगायकस्य कौशिकस्य तदन-न्तरं च पद्मासस्य नित्यं तद्गानं शृण्वतस्तच्छिष्याणां च राजन्यवैश्यविप्राणां गानविद्याधिकानां श्रीवासुदेवपरायणानां गालवनामकस्य वैश्यस्य च विष्णुपरायणस्य सभार्यस्य तद्गानं शृण्वतः । अन्येषां च ब्राह्मणानां शृण्वतां स्वगुणगानार्थं कलिङ्गराजेन कृतेऽपि निग्रहे श्रीमद्गोविन्दगुण-व्यतिरिक्तगाननिवृत्तानामेतेषां सर्वेषां कालगतिं गतानां 'वेष्टित' स्वगणे राजन् ब्रह्मा प्राह च तान् सुरान् । कौशिकादीन् द्विजानद्य वासुदेवपरायणान् ॥ गानयोगेन ये नित्यं पूजयन्ति जनार्दनम् । तानानयत भद्रं वो यदि देवत्वमिच्छथे"त्यादिना भगवदनुग्रहश्च श्रूयते 'ततोऽव-लोक्य भगवान् हरिर्नारायणः प्रभुः । कौशिकेत्याह संप्रीत्या तांश्च सर्वान्यथाक्रमम् ॥ जयघोषो महानासीन्महाश्चर्ये समागते । ब्रह्माणमाह विश्वात्मा शृणु ब्रह्मन्यथोचितम् ॥ कौशिकस्य तु ये विप्राः साध्यसाधनतत्पराः । हिताय संप्रवृत्ता ये कुशस्थलनिवासिनः ॥ मत्कीर्तिश्रवणे युक्ता गानतत्त्वार्थकोविदाः । अनन्यदेवतासक्ताः साध्या देवा भवन्ति ते ॥ मत्समीपे तथाऽन्यत्र प्रवेशं देहि सर्वदा । एवमुक्त्वा पुनर्देवः कौशिकं प्राह माधव ॥ स्वशिष्यैस्त्वं महाप्राज्ञ संयुक्तो मम वै सदा । गाणाधिपत्यमापन्नो यथाहं त्वं समास्व वै ॥ गालवं गालवीं चैव प्राह दामोदरो हरिः । मम लोके यथाकामं भार्यया सह गालव ॥ दिव्यरूपधरः श्रीमान्कृष्णन् गायन् महा-र्षिभिः । आस्व लोके यथाकामं यावल्लोका भवन्ति वै ॥ पद्मासमाह भगवान् धनदो भव मानद । धनानामीश्वरो भूत्वा यथाकालं हि मां पुनः ॥ आगम्य दृष्ट्वा नत्वा च कुरुष्व च यथासुख'-मित्यादि । अम्बरीषं प्रति 'तस्मात्त्वया महाराज विष्णुक्षेत्रे विशेषतः । अर्चाद्यं गाननृत्यादि वाद्योत्सवसमन्वितम् ॥ कर्तव्यं विष्णुभक्तैर्हि पुरुषैरनिशं नृप । श्रोतव्यं च त्वया नित्यं स्तोत-व्योऽसौ हरिस्त्वये'ति। 'विष्णुक्षेत्रे ततो विद्वान्कारयेद्भक्तिसंयुतः । गाननृत्यादिकं चैव विष्ण्वा-

ख्यानकथां तथा ॥ जातिं स्मृतिं च मेधां च तथैव परमोन्नतिम् । प्राप्नोति विष्णुसालोक्यं सत्यमेतन्नराधिपे'ति ।

ततोऽप्यग्रिमाध्याये कौशिकादीनां गानयोगेन भगवदनुग्रहमवलोक्यानु ततो नारदस्तपस्तप्त्वा आकाशवाचा नियुक्तो गानबन्धुमुलूकेन्द्रं प्रति गतः 'उलूकेन्द्र महाप्राज्ञ शृणु सर्वं यथातथ' मित्युपक्रम्य 'यद्दत्तं यद्धुतं चैव यद्वाचा श्रुतमेव च । यदधीतं मया सर्वं कलां नार्हन्ति षोडशीम् ॥ विष्णोर्माहात्म्ययुक्तस्य गानयोगस्य वै तदे'त्यादिना गानयोगविषये तं प्रार्थितवान् । गानबन्धुरपि भुवनेशं नाम राजानं प्रकृत्य 'तस्य राज्ञः पुराभ्याशे हरिमित्र इति स्मृतः । ब्राह्मणो विष्णुभक्तश्च सर्वद्वन्द्वविवर्जितः ॥ नदीपुलिनमासाद्य प्रतिमां स हरेः शुभाम् । अभ्यर्च्य च यथाशास्त्रं घृतदध्युत्तरं बहु ॥ मिष्टान्नपायसं दत्त्वा हरेरावेद्यपूर्वकम् । प्रणिपत्य यथान्यायं तत्र विन्यस्तमानसः ॥ अगायत हरिं साक्षात्तालवर्णसमन्वित'मित्यादिना श्रीहरिगुणगायकं हरिमित्रं प्रशस्य तत्प्रतिबन्धकर्तुश्च राज्ञो यमयातनां निरूपितवान् । नचैतद्ब्राह्मणविषयमिति वाच्यम् । 'गायन्ति त्वा गायत्रिण' इति श्रुतौ 'ब्राह्मणो वासुदेवाख्यं गायमानोऽनिशं नृप । हरेः सालोक्यमाप्नोति रुद्रगीतसमो भवेत् । अन्यथा नरकं गच्छेद्गायमानोऽन्यदेव ही' त्यत्र च ब्राह्मणकर्तव्यताप्रतिपादनात् । किञ्च 'विष्णोर्गीतं च नृत्यं च वादनं च विशेषतः । ब्रह्मन् ब्राह्मणजातीनां कर्तव्यं नित्यकर्मव' दिति नारदीयवाक्यात् 'गीतनृत्यादि कुर्वीत द्विजदेवाग्नितुष्टये । न जीवनाय युञ्जीत विप्रः पापभिया क्वचि'दिति स्मृतेः । 'ब्राह्मणो वासुदेवार्थे गायमानोऽनिशं परम् । नववर्षसहस्राणि कुबेरभवनं वसे' दिति वाराहाच्च सिद्धं ब्राह्मणेनापि विष्णोर्गुणगानं कर्तव्यमिति । निवारणोपहासयोर्दोषश्रवणात् । तथाच नृसिंहपरिचर्यायां पाद्मे ' निवारयति यो गीतं नृत्यं जागरणं हरेः । षष्टियुगसहस्राणि पच्यते रौरवादिषु ॥ नृत्यमानस्य विप्रस्य उपहासं करोति यः । जागरे याति निरयं यावदिन्द्राश्चतुर्दशे'ति 'श्रोतव्यं च त' दिति तच्छ्रोतॄणां पद्मासप्रभृतीनामुत्तमगतिश्रवणात् भगवति चित्तानुरागहेतुत्वाच्च भगवद्गुणगानस्य कर्तव्यता श्रोतव्यता च विज्ञायते । 'तस्मात्केनाप्युपायेन मनः कृष्णे निवेशये' दिति 'शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णश' इति श्रीभागवतवचनाच्च । अतश्चैतन्निरस्तम् ।

यद्वदितं 'भाषागीतं न श्रोतव्यं नच कर्तव्य' मिति तत्तु भगवद्व्यतिरिक्तस्य तथात्वेऽपि श्रीमद्गोकुलेशनामकीर्तनसम्बन्धिनो भाषागीतस्य पुनः पुनः क्रियमाणस्य, भगवति चित्तानुरागहेतुत्वेनानुभवसिद्धत्वात् । नच 'न म्लेच्छितवै नापभाषितवै म्लेच्छो ह वा एष यदपशब्द' इति निषिद्धत्वाद्भाषया गुणानुवादो न (प्य) कर्तव्य इति वाच्यम् । तस्य विहितत्वेन निषेधाप्रवृत्तेः । न च भगवद्गुणगानकर्तव्यताविधेरुक्तनिषेधानुरोधेन संकोचो युक्तः । साधुशब्देनैव भगवद्गुणकीर्तनं कर्तव्यमिति वाच्यम् । निषेधस्य रागप्राप्तविषयत्वेनानुपपत्तेः । न चैवं साक्षाच्छ्रूयते साधुशब्देनैव भगवद्गुणनामकीर्तनं कर्तव्यमिति । किञ्च भगवति द्वेषादिकर्तॄणामपि चैद्यादीनां सद्गतिः

ननु सन्मनुष्यत्वेन प्रतीयमानत्वात् कथं पुरुषोत्तमत्वमितिचेन्न । अयतनः आय भगवदर्थं यतमं व्यापारो यस्य सः अयतनः । 'अकारो वासुदेवः स्या'दिति कोशाद्भगवदाज्ञया जीवोद्धारार्थं स्वस्य पुष्टिमार्गसाधने प्रवृत्तिराचार्यरूपेण स्वस्य प्राकट्यं च । अत एव सर्वोत्तमे मत्स्वामिनो नाम विराजते । स्वदासार्थकृताशेषसाधनः स वल्लभो नः अस्माकं वैभवे सेवासम्पत्त्यर्थं । वैभवे इति निमित्तसप्तमी । सा लक्ष्मीरमिता नो बभूव । सा स्वपरिग्रहरूपा अमिता निरवधिकानन्दरूपा नः अस्माकं देवाना सुखार्थं यथार्थ-

---

सायुज्यादिरूपा मुक्तिश्च श्रूयते । सा च न द्वेषादे फलम् । तस्य निषिद्धत्वात् । किन्तु द्वेषादिजन्यानुपङ्क्तिकगोविन्दानुस्मरणफलम् । ततश्च द्वेषादिनापि श्रीकृष्णस्मरणे सद्गतिश्चेत् भाषयापि भक्त्या गुणानुवादस्मरणे च सद्गतिर्भवतीति किमु वक्तव्यम् । वचन एवाग्रहश्चेत् 'तस्मात्केनाप्युपायेन मन कृष्णे निवेशये'दिति, 'स्तवैरुच्चावचै स्तोत्रै पौराणै प्राकृतैरपि' । 'यस्मिन् प्रतिश्लोकमबद्धवत्यपि' । श्रीमद्व्रजसीमन्तिनीप्रसङ्गे 'यासा हरिकथोद्गीत पुनाति भुवनत्रय' मिति भाषायामपि गुणानुवाद कर्तव्य इति ज्ञायते । किञ्च भाषया लौकिकविषयवार्तासु तदभिनिवेशपूर्विकासु न दोष । श्रीमद्भगवद्गुणानुवादे परमेश्वरस्मारके प्रापके भाषाकृते दोष इति वक्ता मायाजनितो मोह एव । 'ज्ञानिनामपि चेतासि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छती'ति मार्कण्डेयपुराणात् यदेव किञ्चिद्भगवद्विषयक तदनुरागभूत च तत्सर्वमवश्य कार्यम् । 'तस्मात्केनाप्युपायेन मन कृष्णे निवेशये'दिति प्रतिप्रसवात् 'ग्राम्यगीत न शृणुया'दिति तु न परमेश्वरविषयकनिबन्धक श्रवण ग्राम्यपदोपादानात् ईश्वरस्याप्राकृतविषयत्वादित्यार्याणामस्माकमाचार्याणा निर्दुष्ट एव पन्था इति दिक् ।

गायन्ति त्वेति श्रुतिस्तु 'गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किण । ब्रह्माणस्त्वा शतक्रत उद्वशमिव येमिरे ॥' अर्थस्तु हे श्रीकृष्ण, गायत्र्या सामगातार त्वा त्वा गायन्ति । अर्क अर्कमण्डलान्तस्थ त्वा अर्किण भवत्सेवकास्त्वामर्चन्ति । हे शतक्रतो, अस्माकमिन्द्र, त्वा त्वा ब्रह्माण ब्राह्मणा दैविजीवा उद्वशमिव मुरलीकाण्डमिव तदेव वादयितु उद्येमिरे उद्यम कारितवन्त इत्यर्थ । एवञ्च श्रीकृष्णगीतमिव श्रीमदाचार्याणा गुणगान कर्तव्य पुष्टिमार्गस्थैरिति भगवदनुग्रहविशिष्टै कृष्णदासश्रीसूरदासादिभिर्भाषया । आनन्ददायीति 'अलौकिकैहिकदानक्ष'दिति वचनात्, देवाना देव इति 'आनन्द परमानन्द' इति वचनात् श्रीमदाचार्याणा पूर्णानन्दत्वेन पुरुषोत्तमत्व, 'प्राकृता सकला देवाऽगणितानन्दक बृहत् । पूर्णानन्दो हरिस्तस्मात्कृष्ण एव गतिर्मम'ति श्रीमदाचार्यचरणैर्विना पूर्णानन्दत्वाभावात् पुरुषोत्तमसेवकत्वमिति भाव । आय इति अशब्दस्य चतुर्थ्येकवचने रूपमिदम् । भगवदर्थमिति भगवदाज्ञार्थमित्यर्थ । 'तस्यैवात्मानुभावप्रकटनहृदयस्याज्ञया प्रादुरासीदि'तिवाक्यात् । स्वदासेत्यादि । त तु कर्तुमसमर्थास्तेषा स्वयमेव साधन कुर्वन्तीत्यर्थ ।

वेदोक्तकर्मकरणे सहायभूता प्रकटा बभूव रमणार्थं च । उभयोः साम्ये सत्येव रमणं भवति 'रसो वै स' इति श्रुत्या रसात्मा । स्वस्य रसात्मकत्वेन द्विदलात्मकत्वाद्रसस्य । साम्यं विना रसो न भवति । समत्वं च पुष्टिप्रवाहमर्यादायामुक्तं स्वस्य पुरुषोत्तमत्वात् । तथाहि 'स्वरूपेणावतारेण लिङ्गेन च गुणेन च । तारतम्यं न स्वरूपे देहे वा तत्क्रियासु चे' त्युक्तलक्षणात् ।

किञ्च सन्ततं निरन्तरं भूरिभोगं यथास्यात्तथा त्वं वल्लभरूपेण प्रकटो बभूव । भोगो भगवतोऽस्माकं च । भगवतो भोगः प्रकटितो वल्लभाष्टके ' यस्मादस्मिँस्थितो यत्किमपि कथमपि क्वाप्युपाहर्तुमिच्छत्यद्धा तद्गोपिकेशः स्ववदनकमले चारुहासे करोती'ति । अस्माकं च भोगो नानाप्रकारव्यञ्जनादिसहितो भगवद्भोगानन्तरमुच्छिष्टतया । तदुक्तमुद्धवेन 'त्वयोपभुक्तस्रगन्धवासोलङ्कारचर्चिताः । उच्छिष्टभोजिनो दासास्तव

---

प्रकटा बभूवेति । महालक्ष्मीरूपेणेत्यर्थः । एतत्प्रतिपादनपरां श्रुतिमग्रे दर्शयिष्ये । रमणार्थं चेति । 'एकाकी न रमते स द्वितीयमैच्छदि'ति श्रुतेः । एवेति न्यूनाधिकभावेन रमणं भवतीति सूचितम् । स्वरूपेणेत्यादि । लीलासृष्टेर्भगवद्रूपत्वात्स्वरूपसाम्यम् । यथा भगवतोऽवतारः प्रादुर्भावो न जीववज्जन्म तथा लीलासृष्टिपातिनामपीत्यवतारसाम्यम् । अलौकिकत्वज्ञापकस्य भगवता समं नृत्यादिसामर्थ्यस्य विद्यमानत्वाच्चिह्नसाम्यम् । गुणाः सौन्दर्यादयस्तत्साम्यं स्पष्टमेव । तेन तेषां क्रियासु स्वरूपे देहे वा न तारतम्यमित्यर्थः । यस्मादस्मिन्नित्यादि । अस्मिन्मार्गे स्थितिश्च कायवाङ्मनसां तदेकपरत्वम् । 'तदहं भक्त्युपहृतमश्नामि प्रयतात्मन' इति स्मृतावपि उच्छिष्टतयेति भुक्तशिष्टान्नमुखारविन्दमध्यस्थताम्बूलं मुख्यमुच्छिष्टं भवतीत्युक्तं श्रीमत्प्रभुचरणैष्टिप्पण्याम्, तादृशोच्छिष्टतयेत्यर्थ । श्रीविष्णुतत्त्वेऽन्तिमे पटले 'शेषभुक्तिं प्रशंसन्ति मुनयस्तत्त्वदर्शिनः । युवानः खलु वाञ्छन्ति ताम्बूलं तरुणीमुखा'दित्यस्मिन् दृष्टान्ते नैतादृशमेवोच्छिष्टं प्रतीयत इति । गीतासु ' यज्ञशिष्टाशिनः सर्वे मुच्यन्ते सर्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणा'दिति । 'यज्ञो वै विष्णु'रिति श्रुतेः यज्ञशिष्टाशिनो विष्णूच्छिष्टभोजिन इत्यर्थः ।

तत्रैव श्रीभागवतवचनमुदाहरन्ति त्वयोपभुक्तेत्यादि । नन्वत्र विधिश्रवणाभावाद्भगवन्निवेदितद्रव्यजातस्य स्वस्वनिवेदितस्य स्वसत्तापरित्यागपरसत्तासम्पादनरूपदानरूपत्वाद्देवद्रव्यापहारकत्वात्कथं भगवन्निवेदितं भोक्तव्यमिति चेन्न । अष्टमस्कन्धे षोडशाध्याये 'निवेदितं तद्भक्ताय दद्याद्भुञ्जीत वा स्वय' मिति कश्यपेनादितिं प्रति भगवद्व्रतपूजाविधिकथने उक्तम् । नच तत्र विकल्पोक्तत्वाद्भोक्तव्यमेवेति नियम एवेति वाच्यम् । अनियमेपि पक्षे निवेदितभोजनविधानात्त्वदुक्तमतसिद्धिः । किञ्च षष्ठेपि ऊनविंशाध्याये पूजाविधिकथनान्ते 'उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः । अद्यादात्मविशुद्ध्यर्थं सर्वकामसमृद्धये' इति विकल्पाभावेन 'दद्याद्भुञ्जीत

वा स्वय' मित्यत्रापि यदा एकादश्यादिनियमस्तदा एकादशीव्रतस्य नित्यत्वात्परित्यागासम्भवाद्रोगादिग्रस्तत्वाद्वा तन्निवेदितं भक्तेभ्यो दद्यात्स्वयं चोपोष्य तिष्ठेत्।

ननु रोगादिग्रस्तोऽन्नमहितं भवतीति न भुङ्क्ते, एकादशीव्रती तु रागतः प्राप्तमन्नभोजननिषेधवचनादेकादशीव्रतकरणफलश्रवणाच्च न भुङ्क्ते । वैष्णवस्तु 'सिक्थे सिक्थेऽश्वमेधस्य फलं प्राप्नोति मानव' इति ज्ञातप्रसादमाहात्म्यः कथमेकादशीदिने भगवन्निवेदितमन्नं परित्यजेदितिचेन्न। एकादशीव्रतकरणे भगवत्प्रसादत्यागे प्रत्यवायाभावात्। यद्यपि प्रसादस्यान्नत्वाभावात् 'यानि कानि च पापानि ब्रह्महत्यासमानि च। अन्नमाश्रित्य तिष्ठन्ति सम्प्राप्ते हरिवासरे' इति वचनात् प्रसादभक्षणेपि न दोषः तथापि 'सिक्थे सिक्थेऽश्वमेधस्य फलं प्राप्नोति मानवः' इति प्रसादमाहात्म्यश्लोके सिक्थत्वोपपादनादन्नत्वमपि। नच सिक्थपदोपादानात् 'भक्तमन्धोऽन्नमोदनोऽस्त्री' त्यमराच्चौदनवृत्तिरेवान्नपदमिति वाच्यम्। भुक्तिमात्रस्य निषेधात्। 'न करोति हि यो मूढ एकादश्यामुपोषणम्। स नरो नरकं याति रौरवं तमसावृत' मिति सनत्कुमारवचनात्। 'एकादशीमुपवसेन्न कदाचिदतिक्रमे'दिति काण्ववचनेन सर्वाहारनिवर्तकमुपोषणं विहितम्। एकादश्यां न भुञ्जीत कदाचिदपि मानव' इति सर्वविधभोजनं निषेधत्यत्र विष्णुस्मृतिः। 'परमापदमापन्ने हर्षे वा समुपस्थिते। सूतके मृतके वापि न त्याज्यं द्वादशीव्रत'मिति श्रवणात्कथञ्चिदपि न त्याज्यम्। स्कन्दपुराणेपि 'मातृहा पितृहा चैव भ्रातृहा गुरुहा तथा। एकादश्यां तु यो भुङ्क्ते पक्षयोरुभयोरपि'। तथा 'वरं स्वमातृगमनं वरं गोमांसभक्षणम्। वरं हत्या सुरापानं नैकादश्यां तु भोजन' मित्याद्यकरणप्रत्यवायविधायकवाक्यैरेकादश्या नित्यत्वप्रतिपादनान्न तद्व्रतपरित्यागः। यत्तु 'सिक्थे सिक्थेऽश्वमेधस्ये'ति वचनेन प्रमादभक्षणे फलश्रवणाद्वैष्णवेतरेणैकादशीव्रतं कार्यमिति, तन्मन्दम्। वैष्णवावैष्णवभेदेनारुणोदयसूर्योदयवेधनिषेधस्वास्यमस्त्वाद्वैष्णवैरवश्यं कार्यमेकादशीव्रतम् 'दशमीशेषसंयुक्तो यदि स्यादरुणोदयः। वैष्णवैर्नतु कर्तव्यं तद्दिनैकादशीव्रत'मिति। तथा 'परमापदमापन्नो हर्षे वा समुपस्थिते। नैकादशी त्यजेद्विद्वान्यस्य दीक्षास्ति वैष्णवी'इति। नचोभाभ्यां भगवन्निवेदितान्नपरित्यागपूर्वं भगवद्व्रतमुपोषणीयम्। ननु 'अनर्चयित्वा गोविन्द' मित्यनेनानर्चने प्रत्यवायश्रवणात् निवेदितभक्षणस्य तदङ्गत्वात्साङ्गस्य वैदिककर्मणः फलावश्यंभावनियमान्निवेदनस्यावश्यंभावित्वात्तद्भक्षणे कृतावज्ञस्य न मोक्षादिरिति चेन्न। 'यजतिषु ये यजामहे नानुयाजे'ष्वित्यत्र पर्युदासविधिनानुयाजव्यतिरिक्तयागेष्विवात्राप्येकादशीव्यतिरिक्तान्यदिनेषु भगवन्निवेदितान्नभक्षणविधिः प्रतिसिक्थाश्वमेधफलदस्तदतिरिक्तफलदश्च भवति।

असमर्थस्य का गतिरितिचेच्छृणु। 'नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम्। यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरं त्वि'त्यनेनापि प्रकारेणैकादशीव्रतापरित्याग उक्तः। वैष्णवस्य तु विशेषः यद्द्रव्यार्थमुपकल्पितं तन्निवेदितमेवाद्यात्। 'अनि-

वेद्य न भुञ्जीत यदाहाराय कल्पित' मिति वचनात्। न च भगवन्निवेदितस्य परस्वत्वात् स्वम त्ताभावाच्च कथमन्येभ्योपि दद्यात् स्वय वा भुञ्जीतेति वाच्यम्। भक्ताय दद्यादित्यत्र प्रतिप त्तिरेव न दानम्। तथाच भक्तत्वाविशेषात्स्वयमपि ग्राह्यम्। यथा यागाद्युद्देशे त्यक्तपुरोडाश स्यापि 'उत्तरार्धात्स्विष्टकृतमवद्यति यजमानपञ्चमा पुरोडाश भक्षयन्ती'ति प्रतिपत्तिस्तथात्रापि वचनादेव तद्भक्तेभ्यस्तत्प्रतिपत्ति स्वयमपि भुञ्जीत अन्यथा भक्तेभ्योपि न प्रतिपादयेत्। दाने तु नैवम्, तस्य स्वस्वत्वध्वसेन परस्वत्वापादनरूपत्वात्, एव पादोदकेऽपि। किञ्च गीतासु 'इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविता । तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव स' इत्यत्र क्त्वाप्रत्ययस्य समानकर्तृकत्वेन क्त्वासमभिव्याहृतनञ सामानाधिकरण्येनान्वयाद्बाधक विना देवेभ्योपि दत्तमपि भोक्तव्यम्। श्रीविष्णुतत्त्वेऽन्तिमे पटले 'शेषभुक्तिं प्रशसन्ति मुनयस्तत्त्वदर्शिन । युवान खलु वाञ्छन्ति ताम्बूल तरणीमुखादि'ति तैर्दत्तानित्यत्र स्वय निवेदितस्य स्वभोग्यत्वनिषेधस्तु न श्रूयते प्रत्युतानिवेदितभोजने निन्दा। ब्रह्माण्डपुराणेपि 'पत्र पुष्प फल तोयमन्नपानाद्यमौषधम्। अनिवेद्य न भुञ्जीत यदाहाराय कल्पितम्। अनिवेद्य प्रभुञ्जान प्रायश्चित्ती भवेन्नर' इति। यत्स्वाहारार्थ सम्पादित तत्स्वयमनिवेद्य भुक्त चेद्दोषमाप्नोति। कृतनिवेदितभोजनस्तु फलमाप्नोति 'सिक्थे सिक्थेऽश्वमेधस्य फल प्राप्नोति मानव' इति वचनात्। 'अम्बरीष नव वस्त्र फलमन्नरसादिकम्। कृत्वा कृष्णोपभोग्य हि सदा सेव्य हि वैष्णवै' रिति ब्रह्माण्डवचनात् सर्व समर्प्यैव ग्राह्यम्। 'असमर्पितवस्तूना तस्माद्वर्जनमाचरे' दिति श्रीमदा चार्यचरणैरुक्तम्। किञ्च वैष्णवस्य भगवद्दासत्वात् तस्य च भगवत्सेवैव धर्मस्तमकृत्वा यो भुङ्क्ते तस्य श्वानविष्ठासमभोजनप्रतिपादनात्। तदुक्तम् 'अनर्चयित्वा गोविन्द यैर्भुक्त धर्म वर्जितै । श्वानविष्ठासम चान्न नीर च सुरया सम' मिति कौर्मे विधानात् सर्वथा हरिसेवन मकृत्वा न भोक्तव्यम्। यो हि सति सामर्थ्ये भृत्यादिद्वारा निर्वाह्य स्वयमकृत्वा कारयित्वा वैष्णवानसम्पूज्य प्रसादादिभिरसन्तोष्य केवल जिह्वालोलुप सन् भुङ्क्ते चेत्तदा दोषेण महापातकीभूत्वा पतत्येव। ननु 'त्वयोपभुक्तस्रग्गन्धे' त्यनेनेन्द्रियलाल्येनापि भगवन्मायाजय उक्तस्तत्कथमिति चेन्न। महदधिकारिणो महापुरुषस्य वचने दासपददानात्। तच्च दास्य विना न घटते। जिह्वालोलुपस्य दासत्वाभावात्।

यत्तु सेवनमकृत्वा भोजने दोषश्रवणात्सेवन विधायासमर्पितभोजने न दोष इति। तदु- च्छम्। 'असमर्पित तथा विष्णो श्वमाससदृश भवेत्। अन्न विष्ठासम ज्ञेय नीर च सुरया सम'मिति निषिद्धमसमर्पितभोजनम्। 'निवेदित तु भक्ताय दद्याद् भुञ्जीत वा स्वय'मित्यष्टमस्क न्धवाक्यात् दानभोजनविधानात्। 'उद्वास्य देव स्वे धाम्नि तन्निवेदितमग्रत । अद्यादात्मविशु द्ध्यर्थ मि'ति षष्ठस्कन्धवचनेन स्वात्मविशुद्धिसम्पादकभोजनविधानात्। 'ततस्तु भगवद्भक्तान् दीक्षितान् पञ्चरात्रिण । समभ्यर्च्य विधानेन गन्धपुष्पादिभि क्रमात्। तेभ्यो दद्याच्च नैवेद्य

मायां जयेमही'ति परस्मिन्भूरिभोगः सेवाफलोक्तः यथाधिकारमित्यर्थः । गूढाभिमन्धिना पक्षान्तरमुच्यते । अथवा 'इन्दिराया नलिनीमन्दिराया वल्लभो वासुदेवो देवगीतो द्विविजानन्ददायी देवदेवो यतनो वैभवेन । सा लक्ष्मीरमिता नो बभूव सन्ततं भूरिभोग'-मितिश्रुतेरयमभिप्रायः । देवगीतः देवदेवः नलिनीमन्दिराया इन्दिरायाः सम्बन्धी वासुदेवः वैभवेन यतनः सन्ततं भूरिभोगं नः द्विविजानन्ददायी वल्लभः सा लक्ष्मीरमिता यया स्यात्तया बभूवेति सम्बन्धः। नलिनीनामेव मन्दिरं यस्याः सा नलिनीमन्दिरा तस्या नलिनीमन्दिरायाः । नलिनीति स्त्रीलिङ्गप्रयोगेण पुरुषान्तरसंचाराभावः सूचितः । इन्दिराया लक्ष्म्याः । किञ्च नलिन्यः पद्मिनीजातीयाः स्त्रियो मन्दिरे यस्याः सा नलि-

---

मधुपर्कपुरःसर'मित्यादिकमुक्त्वा प्रायश्चित्तप्रकरणे ह्युक्तम् 'दत्तं भागवतैः श्रेष्ठैर्विष्णवे प्रभविष्णवे । तत्पवित्रं पवित्राणां पावनानां च पावनम् । दातव्यं च द्विजातीनां भक्तानां पावनाय च' । तथा 'ब्राह्मणैः क्षत्रियैर्वैश्यैर्वैष्णवैर्भक्तिसंयुतैः । भोज्यं निवेदित'मित्यादि नारदीयसमासस-माराधनाध्यायवचनाच्च सभक्तिवैष्णवसर्ववर्णकर्तृकनिवेदितभोजनस्य तद्भक्तदानस्य चोक्तत्वात् । तथा तत्रैव 'स्वयं वापि तदश्नीयात्सर्वपापविशुद्धये । तस्य संस्पर्शनात्पानाद्भक्षणाद्धारणात्सदा । शुचिर्भवति विप्रेन्द्र सर्वकर्मसु सम्मत' इति वचनात् 'विष्णोर्निवेदितं शुद्धं पावनानां च पावनम् । प्रायणं दुर्लभं भोज्यं न त्याज्यं स्यात्कदाचन । भुञ्जानानां समेधन्ते त्यजतां परिहीयत' इति पाद्मे भगवत्परिचर्यापादद्वादशाध्यायोक्तविधिकरणनिषेधाकरणप्रापितसुखदुःखप्र-तिपादकत्वज्ञापदवश्यं भगवत्सेवोत्तरं निवेदितान्नमेव भोक्तव्यं । तथा विधिश्रवणात्, 'अनिवेद्य न भुञ्जीत यदाहाराय कल्पित'मिति ब्रह्माण्डवचनात्, 'अनिवेद्य प्रभुञ्जानः प्रायश्चित्ती भवेत् द्विज' इति वचनाच्च देवतान्तरनिवेदितानि परित्यज्य भगवन्निवेदितमेव सर्वदा भोक्तव्यमिति सर्वं रमणीयम् ।

अस्मन्मते तु 'दत्तापहारवचनं तथाच सकलं हरेः । न ग्राह्यमिति वाक्यं हि भिन्नमार्ग-परं मत'मित्युक्तं श्रीमदाचार्यचरणैः । अत्र 'क्रीडाभाण्डमिदं विश्वं', 'क्रीडार्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियः पर ईश कुर्यु'रिति श्रीभागवतवचोभ्यां सर्वस्मिन्पदार्थमात्रे देहादौ वा भगवन्तताया विद्यमानत्वात् स्वमतताया अभावात् । अत एव परस्वत्वोत्पादनमपि न सम्भवति । स्वमतात्यागपूर्वकं परस्वत्वोत्पादनस्य दानलक्षणत्वात् भगवत एव पदार्थस्य भगवते समर्पणमिति नात्र दानमिति दत्तापहारदोषो नास्त्येवेति । एतदेव नवरत्नप्रकाशे श्रीमत्प्रभुचरणैरप्यादि 'दाने हि स्वत्वविनियोगो न तु निवेदन' इति । एवं च दत्तापहारवचनं भिन्न-मार्गपरमित्यर्थः । इदं च सिद्धान्तरहस्यटीकायां निरूपितं बालकृष्णभट्टैरित्यलम् ।

सूचित इति । अत एव श्रीमत्प्रभुचरणैः स्त्रीभावपूर्वकं श्रीमत्स्वामिन्यनुचरीत्वं प्रार्थितं स्वामिनीस्तोत्रे । अत एव च 'तत्सारभूतरासस्त्रीभावपूरितविग्रह' इति श्रीमदाचार्याणां नाम । एतादृशो भावः कार्य इत्यपि सूचितम् । पद्मिनीजातीया इति । पद्मिन्या लक्षणं तु 'सम्पूर्ण-

**नीमन्दिरा तस्या नलिनीमन्दिराया इन्दिरायाः परमैश्वर्यं प्राप्ताया राधायाः । नामैकदेशे नामग्रहणमिति न्यायादत्र नामैकदेशो नामग्रहणं सत्या भामेत्यादिवत् । 'विनापि प्रत्ययं पूर्वोत्तरपदलोप' इत्यनुशासनात् । तेनेन्दिराशब्देन परमैश्वर्ययुक्ता राधा ग्राह्या । इन्दिरायाः सम्बन्धी वासुदेवः । यथा किरातार्जुनीये 'तवाभिधानाद्व्यथते नताननः' इत्यस्य व्याख्यायां तशब्देन तक्षकपरत्वं वशब्देन वासुकिपरत्वं च व्याख्यातम्, तथेन्दिरेत्यत्र राशब्दोपि राधावाचको ज्ञेयः ।**

---

न्दुमुखी कुरङ्गनयना पीनस्तनी दक्षिणा मृद्वङ्गी विकचारविन्दसुरभिः श्यामाथ गौरद्युतिः । अल्पाहाररता विलासचतुरा हंसस्वना गायिनी लज्जालुर्गुरुदेवपूजनरता स्यान्नायिका पद्मिनी'ति पञ्चसायके । **परमैश्वर्यं प्राप्ताया इति ।** यद्यपि परमैश्वर्यं सिद्धमेव तस्यास्तथापि मानादिदशायां लीलास्यपुरुषोत्तमकृष्णपादपतनेन महदैश्वर्यं प्राप्तमित्यभिप्रायः । **राधाया इति ।** 'देवी कृष्णमयी प्रोक्ता राधिका परदेवता । सर्वलक्ष्मीमयी सर्वकान्तिः सम्मोहिनी परे'ति बृहद्गौतमीये । 'राधया माधवो देवो माधवस्य च राधिका । विभ्राजेते जनेष्वि'ति ऋक्परिशिष्टे । 'रुक्मिणी द्वारवत्यां तु राधा वृन्दावने वने' इति मात्स्ये । 'स एकाकी न रमते स द्वितीयमैच्छ'दिति श्रुतौ एकाकिनः पूर्णपुरुषोत्तमस्य रमणासम्भवात्तया रिरंसया स्ववामांगाच्छ्रीराधां प्रादुर्भावितवान् । तथा च ब्रह्मवैवर्ते प्रकृतिखण्डे षट्चत्वारिंशदध्याये 'पुरा वृन्दावने रम्ये गोलोके रासमण्डले । शतशृङ्गैकदेशे च मल्लिकामालतीवने । रत्नसिंहासने रम्ये तस्थौ तत्र जगत्पतिः । स्वेच्छया चैव भगवान् बभूव रमणोत्सुकः । एतस्मिन्नन्तरे दुर्गे द्विधारूपो बभूव सः । दक्षिणाङ्गश्च श्रीकृष्णो वामाङ्गश्चैव राधिका । बभूव रमणी रम्या रासे सा रमणोत्सुका । अमूल्यरत्नाभरणा रत्नसिंहासनस्थिते'त्यादिना स्वरूपं निरूप्याग्रे 'दृष्ट्वा कान्तां जगत्कान्तो बभूव रमणोत्सुकः । दृष्ट्वा सा रसिकं कान्तं सा दधार हरेः पुरः । तेन राधा समाख्याता पुराविद्भिर्महेश्वरि । राधा भजति श्रीकृष्णं स च तां च परस्परम् । उभयोः सर्वसाम्यं च सदा सन्तो वदन्ति चे' ति । 'देवश्चैकः क्रीडनार्थं द्विधाभू'दिति श्रीराधातापिन्यां च । मृत्युंजयतन्त्रे 'ध्यायेत्तत्र महादेवीं स्वयमेव तथाविधः । रक्तपद्मनिभां बालां बालार्ककिरणोज्ज्वलाम् । पीतवस्त्रपरीधानां वंशयुक्कराम्बुजाम् । कौस्तुभोद्दीप्तहृदयां वनमालाविभूषिताम् । श्रीमत्कृष्णाङ्कपर्यङ्कनिलयां परमेश्वरीम् । सर्वलक्ष्मीमयीं देवीं परमानन्दनन्दिताम् । रासोत्सवप्रियां राधां कृष्णानन्दस्वरूपिणीम् । सर्वेचिदघनाकारां पूर्णानन्दमहोदधि'मिति । अत्र स्वयमेव तथाविधः सखीभाववान् । एतेनान्यभावनो ध्यानादिष्वनधिकार इति ध्वन्यते । श्रीमत्स्वामिनीप्रतिपादकानि वाक्यानि तन्त्रपुराणस्थानि विस्तरभयान्नालिख्यन्ते । अत्र राशब्देन राधाग्रहणम् । इन्दिराशब्दस्य परमैश्वर्यं प्राप्ताया इत्यर्थः । 'इदि परमैश्वर्ये' इति धातोः 'सर्वधातुभ्य इन्नि'त्युणादिसूत्रेणेन्प्रत्ययः । न्यायादिति । राधेतिनाम्न एकदेशो राशब्द इन्दिराशब्देस्ति तत्र राधेतिनामग्रहणमिति भावः । **विनापीति ।** समुदायशक्तिमद्व्याकरणानामपि शक्तिग्रहादवयवानोपि तद्बोध इति भावः । **राशब्दोऽपीति ।** राति

नच वासुदेवपदं व्यूहपरमिति वाच्यम् । 'वासुदेवकलानन्त' इत्यस्य व्याख्याने सुबोधिन्यां 'सात्त्विकेषु तु कल्पेषु यः शेते सलिले हरिः । वासुदेवः स विज्ञेयो यस्यांशोऽनन्त उच्यते' । किञ्च 'निशीथे तम उद्भूत' इत्यस्य व्याख्यायां सुबोधिन्यां देवक्यां प्रद्युम्नो नन्दगृहे वासुदेव इति वाक्यपर्यालोचनेन वासुदेवपदं पुरुषोत्तमपरम् । पुरुषोत्तमपदं विहाय वासुदेवपदकथनस्यायमाशयः । यथा क्षीराब्धिशायी वासुदेवश्चतुर्मुखोत्पादकः सृष्टिकर्ता, तथात्र वासुदेवपदेन पुरुषोत्तमस्तस्यैव रूपान्तरं वल्लभः पुष्टिमार्गोत्पादकः पुष्टिसृष्टिकर्ता नन्दगृहे वासुदेव इति कथनेनान्तर्व्यूहो बहिः पुरुषोत्तमः । अन्तर्वासुदेवव्यूहकथनेन सर्वेषां देवानां मोक्षदानार्थमित्यर्थः । इन्दिराया इति भक्तिसाहित्येन च रसात्मकपुष्टिसृष्ट्युत्पादकानन्दमात्रकरपादमुखोदरादिर्नन्दनन्दनः श्रीकृष्णोऽत्र वासुदेवपदेनोच्यते । एतादृशो यो वासुदेवः वै इति निश्चयेन भवे संसारे । अथवा भवति साधनमस्मिन्निति भव इति व्युत्पत्त्या भवे भूलोके स वल्लभो बभूव श्रीवल्लभस्वरूपेण प्रादुर्बभूव । कथंभूतो वासुदेवः । देवगीतः देवैर्गीतः । 'ब्रह्मा तदुपधार्याथ सह देवैस्तया सह । जगाम सत्रि-

---

ददाति भगवत्सुखं भक्तेभ्य इति रा । 'क्विप् चे'ति क्विप् । दधाति भक्तेषु श्रीकृष्णरसमिति धा सा चासाविति कर्मधारयः । 'रा राज्यदानवचनो धा च निर्वाणवाचकः । यतो मुक्तिं च मुक्तिं च सा राधा परिकीर्तिते'ति ब्रह्मवैवर्तप्रकृतिखण्डपट्चत्वारिंशदध्यायवाक्यात् भगवत्सेवोपयोग्यलौकिकदेहादिराज्यदात्री दधाति निर्वाणं निर्गुणमुक्तिम् 'निर्गुणा मुक्तिरस्माद्धी'ति वाक्यात् । एवंचेन्दिरापदे राशब्देनेन्दिराशब्देन च कर्मधारयः । एवं च राशब्देन राधा प्राह्येति भावः ।

नन्दगृहे वासुदेव इति । 'नन्दपत्न्यां यशोदायां मिथुनं समजायत । गोविन्दाख्यः पुमान् कन्या त्वम्बिका मथुरां गता । वसुदेवसमानीतो वासुदेवोऽखिलात्मनि । लीनो नन्दसुते रामन् तडित्सौदामिनी यथे'तिवाक्यात् । यथेति दृष्टान्तदार्ष्टान्तिकयोः समत्वमपेक्षितं, अतः श्रीवल्लभाचार्याणामपि भगवल्लीलारूपक्षीराब्धिशायित्वम् । पुष्टिमार्गोत्पादक इति । अत्र पुष्टिमार्गस्य चतुर्मुखसाम्यम् । नन्दनन्दन इति । 'नन्दस्त्वात्मज उत्पन्ने जाताह्लादो महामना' इति वचने श्रीशुकदेवचरणैरपि आत्मजपदमुपात्तमितिभावः । अन्यथा 'नन्दस्तमात्मजं मत्वे'ति वदेत् । गीत इति । स्तुत इत्यर्थः । श्रुतिरपि स्तोतारः श्रीमदाचार्यान् प्रार्थयन्तीति बोधयति । तथाहि 'नवानो अग्न आभर स्तोतृभ्यः सुक्षितीरिषः । ते स्याम य आनृचुस्त्वा दूतासो दमेदम इषं स्तोतृभ्य आभरे'ति । अर्थस्तु–हे अग्ने श्रीवल्लभाचार्य, अस्मभ्यं स्तोतृभ्यः नवा अभिनवा भगवल्लीलागुणकथाः 'यन्नूतनयमीशस्य शृण्वन्नपि कथां मुहुः', 'स्वादु स्वादु पदे पदे' इति श्रीभागवतात् नूतनाः कथाः आभर आहर प्रकाशयेत्यर्थः । 'ह्रग्रहोर्भश्छन्दसी'ति हस्य भः । किंभूताः । इषः इच्छाविषयीभूताः । यद्वा इच्छाविशिष्टस्य सुक्षितीः कल्याणभूमीः कल्याण-

नयनस्तीरं क्षीरपयोनिधेः । तत्र गत्वा जगन्नाथं देवदेवं वृषाकपिम् । पुरुषं पुरुषसूक्तेन उपतस्थे समाहितः' । अत एव देवदेवः देवानां शिवब्रह्मादीनामपि देवः । कथंभूतो वल्लभः । नो यतनः नः अस्माकं संबन्धी दैविजीवानामुद्धारार्थं यतनः प्रयत्नयुक्तः । 'यती प्रयत्ने' नन्द्यादेराकृतिगणत्वाल्ल्युरनादेशः । पुनः कथंभूतो वल्लभः । सन्ततं भूरिभोग दिविमानन्ददायी सन्ततं निरन्तरं भूरिभोगोऽस्येति भूरिभोगः । मत्वर्थीयोऽच् । तं भूरिभोगं जीवं सन्ततं निरन्तरं भूरिभोगं सुखदुःखयुक्तं जीवमित्यर्थः । 'यथा सुदीप्तात्पावका' दिति मुण्डकश्रुतेः । 'पराभिध्यानात्तिरोहितं ततो ह्यस्य विपर्ययौ' विति व्याससूत्रादपि यदारभ्य भगवतः सकाशाद्भिन्ना जाता जीवास्तदारभ्य निरन्तरं भूरिभोगो बहुजन्ममरणादिप्रवाहरूपसुखदुःखादिरूपो यस्य तादृशमानन्दरहितं जीवं 'आनन्दांशतिरो-

---

निदानभूता. । याभि श्रुताभि सर्वोपद्रिपयरूपनिवृत्तिपूर्वक भगवत्स्नेहादि जायते । यथान्तरङ्गभक्तास्तथा वयमपि भगवत्सेवका भवेम इति भावेनाहु । ये देवास्त्वा पुरा आनृचु स्तुतवन्त त एव वय स्याम । अन्तरङ्गभक्ता वयमपि भवेम भगवत्कृपयेति भाव । दमे दमे गृहे त्वा दूतास त्वदाज्ञाकारिण इव स्तोतृभ्य आभरेति पुनर्वचनमादरार्थमित्यर्थ । 'अग्नि पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुते'तिश्रुते सदा स्तुत । चरित्रचिन्तामणौ श्रीमदाचार्यप्रादुर्भावार्थ श्रीमत्पूर्णपुरुषोत्तमं स्तुवन्त इत्युक्त तदेव श्रीभागवतपद्येनाहु. ब्रह्मेत्यादि । अत्र पुरुषसूक्तपददानेन भगवत श्रीमदाचार्यस्य वा स्तुतिर्वेदेन कर्तव्येति सूचितम् । सूक्तेनैव स्तोत्रकरणमुचितमित्यत्रैव सुबोधिन्यामुक्त श्रीमदाचार्यै ।

सर्वेषा देवाना कार्यसाधकत्वादाज्ञाकारकत्वाच्च सर्वेषा देव इत्याहु अत एवेति । देव इति । यद्वा । दैवै श्रीमद्व्रजभक्तै सह दीव्यति क्रीडतीति देव । प्रयत्नयुक्त इति । 'दैवोद्धारप्रयत्नात्मे'ति श्रीमदाचार्याणा नामेति भाव । व्याससूत्रादिति । अस्य जीवस्यैश्वर्यादि तिरोहित तत्र हेतु पराभिध्यानात् परस्य भगवतोऽभिध्यान स्वस्य जीवस्य च सर्वतो भोगेच्छा तस्माद्धेतोरैश्वर्यादिसद्भावे वैचित्र्याभावाद्भोगो न भविष्यतीति जीवे तिरोभाव कृतवान् । स्वधर्माणा तत एव तिरोभावाद्बन्धो भगवद्धर्मविपरीतधर्मत्व चेत्यर्थ । ऐश्वर्यतिरोभावाद्दीनत्व पराधीनत्व च । वीर्यतिरोभावात्सर्वदु खसहनम् । यशस्तिरोभावात्सर्वहीनत्वम् । श्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वम् । ज्ञानतिरोभावाद्देहाद्यहबुद्धि । सर्वविपरीतज्ञानमपस्मारसहितस्यैव । वैराग्यतिरोभावाद्विषयासक्ति । आनन्दाशस्तु पूर्वमेव तिरोहितो येन जीवभाव इति विद्वन्मण्डने श्रीप्रभुचरणैरुक्तम् । एवचानन्दाशतिरोभावपूर्वकत्वे सति ऐश्वर्यादिषट्कतिरोहितत्व जीवत्वमिति लक्षण फलितम् । एतदर्थसाधक तत्त्वदीपस्थवाक्यमुपन्यस्यन्ति आनन्दाशतिरोभावादिति । एतत्तिरोधानात्त जीवत्व भासते तेनानन्दांशेनाविर्भूतेन युक्त सद्ब्रह्मवदवभासत इत्यर्थ । अंशद्वयस्य विद्यमानत्वात् । सदशस्फूर्तौ प्रतिबिम्बत्व त्रितयस्फूर्तौ ब्रह्मत्वमिति निर्णय इति श्रीमदाचार्यचरणैरु-

भावात्तद्रूपेन च भासत' इति वाक्यात् आनन्दरहितं भगवद्वियोगजतापक्लेशरहितं जीवं भजनानन्ददानार्थमिदं विशेषणं दिविजानन्ददायीति । न च दिव्शब्द इन्द्रस्थितस्वर्गलोकवाचक इति वाच्यम् । तस्य क्षयिष्णुफलत्वादानन्दत्वाभावान्मात्सर्याद्यनेकदोषग्रस्तत्वाच्च । अत्रानन्ददानकथनेन स्वर्गशब्देन व्यापिवैकुण्ठो ग्राह्यः । 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वःपदास्पद' मितिश्रुतेः । तेन दिविजं नित्यलीलास्थमानन्दम् । 'अलौकिकसामर्थ्यं सायुज्यं सेवोपयोगिदेहो वैकुण्ठादिषु चे' त्यादिरूपमानन्दं तद्ददातीत्यानन्ददायी । एतद्विशेषणविशिष्टः श्रीवल्लभः सा लक्ष्मीरमिता यथा स्यात्तथा प्रादुर्बभूव । सा इति वासुदेवस्वरूपे या क्षीराब्धौ लक्ष्मीः स्थिता सा वल्लभरूपे महालक्ष्मीतिनाम्ना प्रादुर्भूता तया सह रमितो यथा स्यात्तथा । अस्मिन्पक्षेऽपि पूर्वस्वरूपबोधनार्थं महापदम् । 'तस्मादेकाकी न रमते स द्वितीयमैच्छ' दितिश्रुत्या रमणार्थमेव रूपद्वयेन प्रादुर्भूतस्तेनानवतारदशायामपि स्वकुलोत्पादनद्वारा दैवीजीवानामुद्धारार्थमित्यर्थः ।

---

कोऽर्थः । तापक्लेशरहितमिति । यदवधि क्षणं युगशतमिवेत्यादिवद्भगवद्विरहजनिततापाद्यस्फूर्तिस्तदवधि भगवद्भासिनेति तत्त्वम् ।

प्रादुर्भूतेति । अस्याः प्रतिपादकं मन्त्रद्वयमुदाह्रियते । तथाहि 'हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवहे'त्येकः । अस्यार्थः । यदा श्रीमदाचार्याः पाण्डुरङ्गपुरे श्रीविठ्ठलदर्शनार्थं गतास्तदा तान् प्रति श्रीविठ्ठलप्रभुभिराज्ञप्तं गार्हस्थ्यं स्वीकुरुत । भवतां गृहेऽहं भवितेति श्रीपाण्डुरङ्गविठ्ठलप्रतिपादके पाद्मपुराणस्थगीतामाहात्म्ये षष्ठाध्यायमाहात्म्यप्रतिपादने तीर्थयात्राप्रसङ्गे 'ततो निवृत्य आयातोऽपश्यद्भीमरथीतटे । द्विभुजं विठ्ठलं विष्णुं भुक्तिमुक्तिप्रदायक' मितिवाक्यं श्रीमदाचार्यान् प्रत्याज्ञारूपं वृत्तं वदतीयं श्रुतिः । हे जातवेदः हे अग्ने, श्रीवल्लभाचार्य, हिरण्यवर्णां हिरण्यस्य सुवर्णस्य वर्ण इव वर्णो यस्याः सा हिरण्यवर्णा ताम् । पुनः किंभूताम् । हरिणीं मनोहारिणीमित्यर्थः । यद्वा हरिं नयति प्रापयति केलिगृहमिति हरिणी ताम् । गौरादित्वान् ङीप् । हरिणीमित्यस्य हरितवर्णपरत्वेन व्याख्यानं न सम्भवति । हिरण्यवर्णां हरिणीमिति विशेषणविरोधात् । अलङ्कारादिकमाहुः सुवर्णरजतस्रजां सुवर्णरजतस्य पुष्पाणि तेषां स्रक् माला यस्याः सा ताम् । स्रक्पदोपादानेन पुष्पाणीत्यवगम्यते 'आपं चे' त्याप् । सुवर्णपदोपादानं सुवर्णबाहुल्यात् । यद्वा सुवर्णरजतमिव पुष्पाणि तेषां स्रक् यस्याः सा ताम् । चन्द्रां चन्द्रवत्प्रकाशां हिरण्मयीम् । यकारलोपश्छान्दसः । हिरण्यभूषणबाहुल्याद्धिरण्मयीत्वम् । यथा 'पुष्पगन्धरोगन्धवहनालिपत्रकप्रानिप्रनिच्यानसपर्णाकुल' मित्यत्र सरोजबाहुल्यात्सरोजपदादानम् । यद्वा हिरण्मयीं आनन्दरूपाम् । 'अन्तस्तद्धर्मोपदेशा'दिति सूत्रे हिरण्यशब्द आनन्दवाची । लोकेऽपि तस्य आनन्दप्रा-

एवं संयोगात्मकधर्मिस्वरूपं निरूप्यातः परं विप्रयोगात्मकं धर्मिस्वरूपं निरूपयति वृहते करोमीति । व्यापकरूपधारिणे श्रीवल्लभाय नमः करोमि । ननु धर्मिस्वरूपस्य द्वैविध्यप्रतिपादने किं प्रमाणमितिचेन्न । प्रमाणस्य सद्भावात् । तथाहि 'रसो वै सः । रसंह्येवायं लब्ध्वाऽऽनन्दीभवति' इति श्रुत्या रसरूपेण पुरुषोत्तमप्रादुर्भावात् श्रीमदाचार्याणां रसात्मकपुरुषोत्तमास्यस्वरूपत्वाच्च रसस्य संयोगविप्रयोगात्मकत्वाद्धर्मिणो द्वैविध्यमित्यर्थः । तत्र विप्रयोगात्मकधर्मिस्वरूपं यथा पुरुषोत्तमस्य भक्तानां हृदये 'तन्मनस्का-

---

धकत्वादित्युक्तं श्रीमदाचार्यचरणैर्भाष्ये । तेन परब्रह्मरूपत्वमिति फलितम् । पुनः किंभूताम् । लक्ष्मीं लक्षणवतीम् । सामुद्रशास्त्रोक्तलक्षणवतीमित्यर्थः । 'लक्ष्मीर्लाभाल्लक्षणाद्वे'ति निरुक्तात् लक्ष्मीपदे वर्णयोर्लोपः । तेन महालक्ष्मीनाम्नीं मे मह्यं मदाज्ञापरिपालनार्थम् आवह अङ्गीकुरु पत्नीत्वेन वृणु । अहं तत्र पुत्ररूपेण प्रादुर्भवेयम् । अतो मम जन्म न लौकिकीषु योग्योऽलौकिकत्वात् । यद्वा मे मयाऽऽज्ञप्तोसीति शेषः । स्पष्टं कुतो नोक्तम् । रहस्यत्वात् । 'परोक्षप्रिया इव हि देवा' इति श्रुतेः ।

तथाच चरित्रचिन्तामणौ 'श्रीपाण्डुरपुरे द्रष्टुं विट्ठलं विष्णुमादरात् । तेनाज्ञप्तं परिणयं त्वत्पत्न्यां भवितास्म्यहम् । काश्यामसुकगोत्रस्य कन्या विप्रस्य वर्तते । मयेरितः सोपि तुभ्यं पृष्टगोत्रः प्रदास्यति । महालक्ष्मीतिनाम्नीं स्वां कन्यां सपदि वाडवः । इतीरिताश्च तस्याज्ञाद्वयभङ्गानुतापिताः । शीघ्रमेवागतास्तत्र तथैव तदकुर्वते'त्येकः । यथा श्रीमदाचार्यशरणेन श्रीमत्पुरुषोत्तमप्राप्तिस्तथा श्रीमहालक्ष्मीशरणेनेत्यन्यमन्त्रेण तच्छरणं गन्तव्यमिति प्रतिपाद्यते—'चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् । तां पद्मिनीमीं शरणमहं प्रपद्ये अलक्ष्मीर्मे नश्यतां त्वां वृणोमि' । अस्यार्थः । अत्राहंशब्दप्रक्षेपः प्रामादिक इति विद्यारण्यैर्भाष्ये उक्तम् । चन्द्रां चन्द्रवत्प्रकाशमानां प्रभासां प्रकृष्टा भाः कान्तिर्यस्याः सा ताम् । आपं चेत्याप् । यशसा कीर्त्या ज्वलन्तीं । यस्या उदरे साक्षात्पुष्टिपुरुषोत्तमाः श्रीविट्ठलप्रभवः प्रादुर्बभूवुः । यस्याः सन्ततिपरम्परा अद्यापि जगदुद्धारार्थं विराजत इति कीर्त्या ज्वलन्तीं प्रकाशमानाम् । लोके भूलोके पूर्वंवद्वर्णलोके । तेन भूलोके प्रादुर्भूतामिति शेषः । 'एकाकी न रमते स द्वितीयमैच्छ'दितिश्रुत्या रमणार्थमेकस्य द्विदलात्मकत्वेन प्रादुर्भाव इत्याह देवजुष्टामिति । देवः श्रीवल्लभः देव वैश्वानरैवेतिवाक्यात् 'विप्रं विप्रासोऽवसे देव'मिति श्रुतेश्च । जुष्टां सेविताम् । देवपदोपादानेन रसात्मकत्वं द्योतितम् । यद्वा देवः जुष्टो ययेति । उदारां भक्तेच्छादानसमर्थाम् । तेन स्वभक्तानां न किंचिद्दुर्लभमिति भावः । तां प्रसिद्धाम् । श्रीपूर्णपुरुषोत्तमलोके या महालक्ष्मीः तत्परामर्शार्थं तच्छन्दोपादानम् । पद्मिनीं कामशास्त्रोक्तपद्मिनीलक्षणलक्षिताम् । ईमिति निपातोऽनर्थकः निश्चयार्थो वा । एतादृशीं महालक्ष्मीं शरणं प्रपद्ये प्रपन्नोऽस्मि । अतः अलक्ष्मीर्जन्ममरणादिरूपा भगवद्विमुखत्वरूपा वा नश्यतां नाशं प्राप्नोतु । एतादृशीं त्वां स्वामिनीत्वेन वृणोमीत्यर्थः । तन्मनस्का इत्यादि । अत्र तदात्मिकेतिपदे स आत्मा यासाम् । सर्वदा कृष्णभावनैव

स्तदालापास्तद्विचेष्टास्तदात्मिकाः । तद्गुणानेव गायन्त्यो नात्मागाराणि सस्मरुः' । ननु विप्रयोगात्मकधर्मिस्वरूपममूर्तत्वमिव प्रतिभातीति चेन्न । आनन्दात्मककेवलविप्रयोगजन्यबहिःप्राकट्यस्यैव कार्यक्षमत्वात् । अमूर्तस्याप्रकटस्य च कार्यक्षमत्वाभावात् । तथाहि 'यावद्बहिः स्थितो वह्निः प्रकटो वा विशेन्न हि । तावदन्तः स्थितोऽप्येष न दारुदहनक्षमः । एवं सर्वगतो विष्णुः प्रकटश्चेन्न तद्विशेत् । तावन्न लीयते सर्वमिति कृष्णसमुद्यमः' । तत्र विप्रयोगात्मकस्य बहिः प्राकट्यं बोध्यमित्यर्थः ।

'अटति यद्भवानह्नि काननं त्रुटिर्युगायते त्वामपश्यताम् । कुटिलकुन्तलं श्रीमुखं च ते जड उदीक्षतां पक्ष्मकृद्दृशाम्' । तत्र व्रजसीमन्तिनीनां क्षणमात्रमपि वियोगासहिष्णुत्वात् श्रीभगवतो मथुरागमने एतासां जीवनं कथं स्यादेतासां जीवनान्यथानुपपत्त्या विप्रयोगे प्रादुर्भावः कल्प्यते । तदेव विप्रयोगात्मकधर्मिस्वरूपं तापपूर्वकभक्त्युद्रेकदशायां भक्तान्तःकरणात् पृथक्प्रादुर्भूय भक्तानां यथायोग्यं लीलानुभवं कारयति । किञ्च, उत्तरार्धे 'पीतशेषं गदाभृत' इत्यत्र पीतशेषत्वं कथं सम्भवति । भगवतः प्रादुर्भावानन्तरं श्रीवासुदेवेन झटिति व्रजे नयनात् न स्तनपानं सम्भवति । तत्र श्रीभागवते पीतशेषत्वकथने पीतशेषत्वान्यथानुपपत्त्या देवक्याः स्तनपानं कल्प्यते । तत्र तापयुक्तस्नेहोद्रेकदशायां देवक्यामन्तःकरणाद्बहिः प्रादुर्भूय स्तनपानं करोति । एतदेव विप्रयोगात्मकं धर्मिस्वरूपमित्यर्थः ।

किञ्च । तत्र विप्रयोगात्मकधर्मिस्वरूपप्रतिपादिका श्रुतिरस्ति । तथाहि 'पवित्रं ते विततं ब्रह्मणस्पते प्रभुर्गात्राणि पर्येषि विश्वतः । अतप्ततनूर्न तदामो अश्नुते श्रितास इद्वहन्तस्तत्समासत' । अस्या अयमर्थः । हे ब्रह्मणस्पते अक्षरस्वामिन् पुरुषोत्तम, 'प्रभुत्वेन हरेः स्फूर्तौ लोकत्वेन तदुद्भव' इति निबन्धे ते तव विततं विस्तारः । अग्रेऽतप्ततनूरिति निषेधकथनानुरोधेन ज्ञायते श्रीभगवतो मथुरागमनानन्तरं विप्रयोगेषु तादृशानुगृहीतासु गोपीषु तावद्रूपेण प्रादुर्भावो विस्तारः पवित्रं पवितो विरहवत्त्वात्त्रायत इति कामादिशल्य-

---

नित्ते आत्मत्वेन भगवानेव स्फुरतीति न देहादिस्मरणमित्युक्तं श्रीमदाचार्यचरणैः । अत एवास्य फलरूपत्वम् । एतदुपपादनं तु पूर्वमेव कृतम् । विस्तरस्तु टिप्पण्यादिषु प्रपञ्चितोऽस्मत्परिवृढैः ।

यावदित्यादि दशमस्कन्धसुबोधिनीप्रथमाध्यायवाक्यम् ।

अन्यथानुपपत्त्येति । पीनो देवदत्तो दिवा न भुङ्क्ते । अत्र पीनत्वान्यथानुपपत्त्या रात्रिभोजनकल्पनवत् ।

पवित्रमिति । श्रीमदाचार्यपरत्वेन श्रुत्यर्थस्तु पूर्वमेवोपपादितः । अक्षरस्वामिन्निति । अक्षरब्रह्मण इत्यर्थः । ब्रह्मणोऽक्षरत्वं जीवस्य क्षरत्वं तदुत्कृष्टत्वं पुरुषोत्तमत्वमिति प्रागेवोपपादितम् । तावद्रूपेणेति । यथा 'कृत्वा तावन्तमात्मानं यावतीर्गोपयोषित' इति । ह्रीविभ्रमात्सर्येणेति ।

निवर्तकं वा। तत्र हेतुः प्रभुः समर्थो भवान् गात्राणि भक्तानां शरीराणि विश्वतः पर्येषि अन्तर्बहिर्व्याप्नोषि । यस्मादेवं तस्मात्ता अपि वह्नयोगोलकन्यायेन व्याप्ताः भगवन्निष्ठा भवन्तीति तथा । एवं तत्स्तुत्वा तस्य दुर्लभत्वमाह अतप्ततनूः विरहतापरहितः । तनूरिति स्त्रीलिङ्गेनाधिदैविकस्त्रीविग्रहमाप्तस्यैव तदधिकार इति ज्ञाप्यते। तत् विप्रयोगात्मकधर्मिस्वरूपं नाश्नुते न विशेषेण प्राप्नोति नोपभुङ्क्ते इति यावत्। ननु रासलीलास्थस्यान्तर्धाने विप्रयोगात्मकधर्मिप्रादुर्भावः कुतो नेत्यत आह । आमः अपक्वः । रासानन्तरं पक्वता 'शारीरी पञ्चमी वाच्या ततो रूपं प्रतिष्ठित' मिति हेतोः । श्रितासः अन्तःपुरुषोत्तमविशिष्टाः पक्वाः शाखाभेदेन । श्रुतास इति पाठे श्रीभागवतं श्रुतवन्तः । अथवा दुर्लभत्वबोधनाय श्रुतास इति कथनम् । वहन्तः सम्प्रापयन्तः विप्रयोगे तद्विप्रयोगात्मकधर्मिस्वरूपं समासत सम्यगुपविष्टाः । शाखाभेदेन समाशतेतिपाठे सम्यग्भुक्तवन्त इत्यर्थः ।

ननु केनचित् पवित्रं ते विततमित्यारभ्य अतप्ततनूर्न तदामो अश्नुत इति श्रुतिस्तप्तमुद्राधारणपरत्वेन व्याख्यायते। तन्न। अत्र विध्यभावात् । 'ऐन्द्र्या गार्हपत्यमुपतिष्ठत' इतिवत् विनियोजकश्रुत्यन्तराभावाच्च । तस्मात् 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुतिपाठाय भगवत्परत्वेन व्याख्याने तु न काप्यनुपपत्तिः । यथा श्रीपुरुषोत्तमस्य विप्रयोगात्मकं धर्मिस्वरूपं तथा श्रीमदाचार्याणामपि विप्रयोगात्मकं धर्मिस्वरूपं श्रीमदाचार्याणां सेवकेषु श्रीदामोदरदासप्रभृतिषु संयोगात्मकधर्म्यनवतारदशायां तापयुक्तभक्त्युद्रेकसमये तेषामन्तःकरणाद्बहिः प्रादुर्भूय दर्शनं ददाति तदेव विप्रयोगात्मकं धर्मिस्वरूपम् । किञ्चाधुनिकानां तदीयानामस्मदादीनां तापयुक्तत्वं चेत्तर्हि दर्शनं ददातीत्यनुभवैकवेद्यमित्यर्थः ।

किञ्च । श्रीमदाचार्याणां निगमप्रतिपाद्यपुरुषोत्तमत्वात्तदात्मजस्यापि पुरुषोत्तमत्वम् ।

---

अतएव पद्मपुराणस्थपातालखण्डाधिकरणकश्रीवृन्दावनमाहात्म्ये श्रीमच्छुकनारदादिबहूनां परमर्षीणां भगवदुपासनया स्त्रीविग्रहप्राप्त्या भगवद्भजनानुभव इति कथानकं श्रुतिमूलतया संगच्छते। एतादृशभावोऽवश्यं कार्यः । तथाच मृत्युञ्जयतन्त्रे श्रीमदधिकाध्याने 'ध्यायेत्तत्र महादेवीं स्वयमेव तथाविधः । श्रीमत्स्वामिन्यनुचरीभाववान् शारीरी'ति । अस्यार्थस्तु टिप्पण्यां निरूपितः श्रीप्रभुचरणैर्नेह तन्यते । तन्नेति । अत्र विचारादिकं न क्रियते । शङ्खचक्रधारणवादे पुरुषोत्तमचरणैःश्रीमदाचार्यचरणैर्निबन्धे चोक्तत्वाद्विस्तरभयाच्च । अनुभवैकवेद्यमिति । एतादृशानुभवस्तु श्रीमदाचार्यकृपयैव, नान्यथेति तत्त्वम् ।

एवं श्रीमदाचार्याणां निगमोदितपूर्णपुरुषोत्तमत्वमुपपाद्य तदात्मजानां श्रीविठ्ठलेशप्रभूणामपि श्रुतिप्रतिपादितपुरुषोत्तमत्वमाहुः किञ्चेत्यादि । पुरुषोत्तमत्वमिति । ब्रह्माण्डपुराणे प्रश्नखण्डे भगवद्ब्रह्मसंवादे युगावतारप्रसङ्गे श्रीविठ्ठलावतारस्योदितत्वात् तदेव मयोपन्यस्यते ।

'तथाहि ब्रह्मोवाच । त्वया परमकल्याण देवदेव जगत्पते । युगत्रयावताराणां कारणानि मम प्रभो । कथितानि सविस्तारं चरितानि च सर्वशः । कलौ कल्यवताराणि कथ्यतां विगलाशय । श्रोतुमिच्छामि त्वत्तोऽहं कारणानि च सर्वशः । चरितानि च सर्वत्र भूतभावन पूर्वज । श्रीभगवानुवाच । साधु पृष्टं महाप्राज्ञ श्रूयतां कथयामि ते । चत्वारो ह्यवतारा मे भविष्यन्ति कलावपि । कृष्णो बुद्धो विट्ठलेशः कल्किर्म्लेच्छनिकृन्तनः । पूर्णः कृष्णो बुद्धश्चांशः परमानन्दविट्ठलः । मम चांशधरः कल्की शृणु पुत्र विशेषतः ।' इति चतुरोऽवतारान्प्रतिज्ञायोद्देशक्रमेणावतारकथां जगाद श्रीभगवान् । तत्र प्रथमं 'भुवो भारावतारार्थं तत्रादौ पूर्णरूपधृक् । वसुदेवगृहे नूनं देवकीजठरोदित' इत्युक्त्वा प्रभासीयकथापर्यन्तं वर्णयित्वा 'अन्तर्धानं ततोऽहं वै सर्वलोकस्य पश्यतः । गमिष्ये लोकपालेशः स्वस्वरूपधरः स्वयं' मितिपर्यन्तं श्रीकृष्णावतारं निरूप्य श्रीविट्ठलावतारमाह 'शृणु वत्स प्रवक्ष्यामि गुह्याद्गुह्यतरं मम । घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते । पापपुञ्जरते पुण्ये म्लेच्छधर्मरते जने । तदाहं वल्लभकुले द्विजाचाररतेऽमले । अवतीर्य परं रूपं दर्शयिष्ये मनोहरम् । पृथिव्यां भारते क्षेत्रे माथुरे मम वल्लभे । गोकुलं मत्पदं नित्यं यत्रास्ते वै मुदावहम् । कालिंदी सरितां श्रेष्ठा यत्र गोवर्धनो गिरिः । आदिमध्यावसाने वै वासो मे तत्र निश्चितम् । वर्तते विश्रुतं पूर्वं त्वया चास्ति परंतप । अपिचान्तर्हितं रूपं सर्वलोचनगोचरम् । करिष्ये विमलं सौम्य व्रजभक्तसुखावहम् । विट्ठलेशेति विख्यातिं गमिष्ये जगतीतले । आदावहं चैकरूपो बहुरूपधरस्ततः । देशान्तरे प्रवेक्ष्यामि मद्भक्तानुग्रहाय वै । मम भक्तिविनाशाय विनाशाय च मायिनाम् । मद्भक्तसुखदानाय दुःखाय च दुरात्मनाम् । भक्तानां गुरुरूपेण यास्येऽहं सेव्यतां परम् । दारैर्गृहैः सुतैः प्राणैः प्राणादप्यधिकैर्धनैः । मत्सेवनं करिष्यन्ति सर्वभावनिवेदिनः । तेषामेवानुकम्पार्थं करिष्ये रूपमुत्तमम् । उद्धरिष्याम्यहं तत्र बहुरूपधरः प्रभुः । ते वै भागवताः सर्वे भक्तिसिद्धाः कलौ युगे । भविष्यन्ति महाभागा मानिनो वै दुरासदाः । मत्कृपासिन्धुतोयेन सेविताः खलु वर्धिताः । पुष्पितास्ते महाभागा मम भक्तिफलान्विताः । दृढप्रेममदोन्मत्ता निर्भयाः सर्वतः सदा । मयि चानन्यभावास्ते भविष्यन्ति तदानघ । त्यक्तसर्वकुलाचाराः कर्ममार्गविनिःसृताः । वेदवादविनिर्मुक्ता भक्तास्तेऽतीव मे प्रियाः । ममैव दर्शनारामा मत्कथाश्रवणे रताः । मद्ध्याननिरता नित्यं ममैव गुणवादिनः । हंसधर्मसमारूढास्ते वै भागवतोत्तमाः । प्रवेक्ष्यन्ति परं धाम कालमायातिगं च यत् । ममैव तनवस्ते तु भविष्यन्ति न संशयः । वक्तारो मम धर्माणां तथैव च प्रवर्तकाः । ये केचित्तु विशेषज्ञा मम साधर्म्यमागताः । मत्कृपालवलेशेन तत्क्षणान्मुच्यते जगत् । मम भक्तेश्च धर्माणां वक्ता कश्चन मद्दते । भक्तितत्त्वोपदेष्टा वै अहमेव तदा युगे । सर्वधर्मोज्झिते शुद्धे पाखण्डनिरते खले । विलुप्ते वेदमार्गे वै पापिष्ठे दुष्टभूमिपे । लोके लुप्तविवेके हि अविवेकपरायणे । तस्मिन्निपतितान्साधून्मम भक्तिपरायणान् । ब्राह्मणान्क्षत्रियान्वैश्यान् सच्छूद्रान् सत्स्त्रियोऽन्त्यजान् । उद्धरिष्याम्यहं ब्रह्मन् ब्रह्मरूपेण भास्वता । कृष्णनाम विशुद्धं यन्मयोक्तं परमं मनम् । कर्णे

च दक्षिणे नून श्रुत्वा चैव प्रजायते । नमस्यन्ति जना सर्वे यावद्वै मानवर्जिता । अर्चिष्यन्ति च मा नित्य तावदेव न सशय । निवसिष्याम्यह नून तत्कुले चाग्निभूपिते । अन्तर्धान गमिष्यामि ततो वै चतुराननेऽति निरूपितम् । तदनन्तर कलियुगान्त निरूप्य कल्क्यवतारो निरूपित । तत 'चतुरो मेऽवताराश्च कलौ साधो निरूपिता । भूयो वदामि ते ब्रह्मन् किमन्यच्छ्रोतुमिच्छसी ति सर्वाध्यायसग्रह । अत्र परमानन्दविट्ठल इत्युक्त्याऽगणितानन्दाक्षरवृहद्व्यावृत्ति । अत एव पुरुषोत्तमत्वम् । एतेनाशावतारादिनिवृत्ति ।

श्रीकृष्णश्रीविट्ठल्यो पूर्णपरमानन्दत्वमन्ययोरशक्यत्वमुदितम् । 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तम । अतोस्मि लोके वेदे च प्रथित पुरुषोत्तम' इति गीतोक्तेरितिभाव । तथाच श्रुति श्रीविट्ठलप्रतिपादिका 'सुदेवोसि वरुण यस्य ते सप्त सिन्धव । अनुक्षरन्ति काकुद सूर्म्य सुषिरामिव'ति । अर्थस्तु श्रीविट्ठलशब्दस्य वरुणशब्दस्य चैकार्थत्वाद्वरुणशब्देनात्र श्रीविट्ठलो गृह्यते । यथा श्रीविट्ठलपदनिरुक्ति 'विद ज्ञाने'भावे क्विप् । विदा ज्ञानेन ठान् शून्यान् सर्वसाधनहीनान् जीवान् लात्यनुगृह्णाति स्वदासत्वेन वृणुत इति विट्ठल । भगवत्सम्बन्धिज्ञानेन च नाममन्त्रब्रह्मसम्बन्धादिसकलसिद्धान्तोपदेशेन सकलसाधनहीनान् जीवान् स्वदासत्वेनाङ्गीकरोति य स विट्ठल इति समुदितोऽर्थ । एव वरुणशब्दस्यार्थ सवरणाद्वरुण इति शङ्कराचार्यकृतविष्णुसहस्रनामभाष्ये । एवञ्च व्रियते वृणोतीति वा वरुण 'कृवृदास्य उनन्' इत्युणादिसूत्रेण उनन् प्रत्यय । वृणोतीतिक्रियाया कारकाङ्क्षत्वात्कर्मीभूता सर्वसाधनशून्या जीवा गृह्यन्ते । एवञ्च स्वदासत्वेन वृणोति अङ्गीकरोति जीवानिति वरुण । 'यमेवैष वृणुते तेन लभ्य' इति श्रुते । वरणस्वरूप च भक्तिहसे । 'वरणोक्त्या कन्या स्वाभिमतमेव स्वपतित्वेन वृणुते वरो वा तादृशीं कन्या स्वस्त्रीत्वेन, तथा भगवान् स्वदासत्वेनात्मीयत्वेनाङ्गीकरोतीत्युच्यत' इत्युक्त श्रीप्रभुचरणै । एवञ्च हे वरुण हे श्रीविट्ठल । न च 'रूढिर्योगमपहरती'ति रथकाराधिकरणन्यायेन रूढेर्बलीयस्त्वात् 'प्रचेता वरुण पाशी'त्यमरात् प्रतीचीदेशे वरुणशब्दस्य रूढि, अत्र कथ व्युत्पत्त्या श्रीविट्ठलपर्यायतेतिवाच्यम् । 'वरुणो वारुणो वृक्ष' इति विष्णुसहस्रनाम्नि वरुणशब्दस्य विष्णौ रूढताया शिष्टसम्प्रदायस्यात्राविशिष्टत्वात् । न च रूढेस्तुल्यत्वेऽप्यैवात्र ग्रहे मानाभाव इति वाच्यम् । 'सर्वे वेदा यत्पदमामनन्ती'ति, 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वि'ति श्रुतिस्मृतिभ्या भगवत्येव सर्वेषा नाम्ना मुख्या शक्ति । एवकारेणान्यत्र तु तयारोपात्सा । अत एव 'वेदे रामायणे चैव पुराणे भारते तथा । आदौ मध्ये तथा चान्त हरि सर्वत्र गीयत'इति हरिवंशोक्तर्भगवत्येव सर्वेषा वेदाना वेदान्ताना पुराणानां च समन्वय ।

न च भगवत्परत्वेन व्याख्यायता कथ श्रीविट्ठलपरत्वेन व्याख्यायत इति वाच्यम् । ब्रह्माण्डपुराणवाक्येभ्य श्रीविट्ठलस्य पूर्णपुरुषोत्तमत्वस्य निश्चयात् । पुराणानुरोधेन श्रुतिव्याख्यानस्योचितत्वात् । 'इतिहासपुराणाभ्या वेद समुपबृहयेत् । बिभेत्यल्पश्रुताद्वेदो मामय प्रहरिष्यती'ति यावत् श्रीविट्ठलपरत्वेन व्याख्यान न बाधोऽस्माकम् । एवञ्च वरुण हे श्रीविट्ठल,

त्वं सुदेवोसि वासुदेवोसि साक्षात्पूर्णपुरुषोत्तमोसि । अत्राद्याक्षरलोपः । 'वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्ये'ति बृहद्देवतोक्तत्वात् । यथा 'सुदेवो अद्य प्रपतेदनावृ'दिति श्रुतिव्याख्याने नीलकण्ठेन सुदेव इत्यस्य वासुदेव इत्यर्थ उक्तः । एतेन श्रीविठ्ठलनाथानामेवाश्रयः कर्तव्योऽन्याचार्यापेक्षयेति सूचितम् । यद्वा निरुक्तकारैः सुदेवस्त्वं कल्याणदेवः कमनीयदेवो भवसीत्युक्तम्, तत्र 'मङ्गलानां च मङ्गल'मिति भारते 'मङ्गलं भगवान्विष्णु'रिति स्मृतौ च सर्वमङ्गलमयत्वम् । एवं च सकलमङ्गलमयोसि । मङ्गलमङ्गलाश्रयणेन सर्वममाङ्गल्यं निरस्यत इति ध्वनितम् । कमनीयदेव इत्यनेनातिसुन्दरत्वं ध्वनितम् । तच्च 'अथाङ्गसन्निविष्टानामङ्गानां रुचिरत्विषाम् । शोभोत्कर्षैकसन्दर्भः सौन्दर्यं सुरसंमतम् । अन्योन्यापेक्षया तेषामुत्कर्षोत्कर्षदर्शनं । आश्चर्यं भवदङ्गानां सौन्दर्यं सुदृशां मतम् । अङ्गेन येन येनैव दृष्टमात्रेण पश्यताम् । सुखमुत्पद्यते सद्यः सौन्दर्यं तत्र तत्र च । अन्यस्य दर्शनेऽन्यस्य दिदृक्षा न तु जायते । अङ्गानां तादृशां पुंसां सौन्दर्यं संहतिः परम् । अन्यूनाधिकसत्वं च सङ्कल्पत्वानवद्यता । सौन्दर्यं परमं तत्तत्पश्यतो स सुरद्रुम' इति लक्षणमिति । तथाच 'दर्शनीयतमो वाग्मी'ति नामरत्न उदितम् । महाभाष्यकारैस्तु सुदेवोसि सत्यदेवोसीति व्याख्यातं, तस्य तु 'यदा हि धर्मस्ये'ति स्मृत्युदितवचनपालकोसि । 'सत्यात्मकं त्वां शरणं प्रपन्ना' इति श्रीभागवतवचनात्सत्यवचनोसीत्यर्थः । सत्यलक्षणं तूदितमेव ।

ननु अवतारानन्तरं कथं देवानामुद्धारो वंशेन तन्मन्त्रादित्यभिप्रेत्याह । 'यस्य ते सप्त सिन्धवः सप्त पुत्राः । 'स जयति गिरिवरदेवो गोविन्दो बालकृष्णश्च । श्रीवल्लभरघुनाथौ श्रीयदुनाथो घनश्याम' इति चरित्रचिन्तामण्युक्तनामानः भविष्यन्ति सन्ति वा । सिन्धुत्वेनोपादानं तु सकलगुणरत्नाकरत्वेन गम्भीरप्रज्ञत्वेन 'स्वानुरूपसुतप्रसू'रितिवा स्यात् पुरुषोत्तमवत्सर्वोद्धारकर्तृत्वम् । 'आदावहं चैकरूपो बहुरूपधरस्तत' इति, 'उद्धरिष्याम्यहं तत्र बहुरूपधरः प्रभु'रिति ब्रह्माण्डपुराणवचनाभ्यां सर्वो वंशः श्रीविठ्ठलनाथरूप एवेति । श्लोकार्थस्तु आदौ प्रथमं अहमेकरूपः श्रीविठ्ठलः तदनन्तरं बहुरूपधरः स्ववंशरूपेण बहुरूपधरः । तत्र श्रीवल्लभकुले बहुरूपधरः वंशरूपेणोद्धरिष्यामीत्यर्थः । एवं च सकलवंशः श्रीविठ्ठलरूप एव । तेन देवानामुद्धारे सत्यदेवत्वं न व्यभिचरतीति भावः । ननु ते कया रीत्योद्धरिष्यन्तीत्याह अनुक्षरन्ति काकुदं, 'काकुः स्त्रियां विकारो यः शोकभीत्यादिभिर्ध्वने' इत्यमराच्छोकभयजनितध्वनिविकारः काकुः, तान् ददातीति काकुदः संसारः तं स्वसेवकानां नाममन्त्रायुपदेशमात्रेण अनुक्षरन्ति दहन्ति । उपसर्गवशाद्दहनरूपोर्थः । मन्त्रोपदेशेनैव सकलसंसारदाहकत्वे घट्टयोगोलकन्यायेन जीवान् भगवद्विरहमनुभावयन्तीत्यभिप्रेत्य दृष्टान्तमाहुः सूर्म्यं सुषिरामिव । अत्र महाभाष्यकारैर्व्याख्यातम् । तद्यथा । शोभनामूर्मिं सुषिरामभिरन्तः प्रविश्य दहतीति । अत्र'मिपूर्व' इत्यनेन सूर्मिमिति प्राप्ते 'व' छन्दसी' त्यनुवृत्त्या यणादेशः । अयं भावः । यथा बहुच्छिद्रां प्रतिकृतिमग्निरन्तः प्रविश्य मलादार्पं दहति, तदनन्तरं स्वस्वरूपमेव तां कुरुते, तद्वदत्रापि जीवस्य संसारादि नाशयित्वा भगवद्भावा

'अङ्गादङ्गात्सम्भवसि हृदयादधि जायसे । आत्मा वै पुत्रनामासि स जीव शरदः शत मिति श्रुतेः श्रीविठ्ठलनाथाना पुरुषोत्तमत्वात्पुरुषोत्तमस्वरूपं पुरुषोत्तमस्यैव गम्यम् । 'न हि ते भगवन् व्यक्ति विदुर्देवा न दानवाः। स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तमे'ति । तस्मात् प्रभुचरणैरुक्तम् 'कश्चित्पाण्डित्यं चेत्र निगममतिः सापि यदि न क्रिया सा सापि स्याद्यदि न हरिमार्गे परिचय. । यदि स्यात्सोपि श्रीव्रजपतिरतिर्नेति निखिलै- र्गुणैरन्यः को वा विलसति विना वल्लभवरम्' । बुद्धावतारे पाण्डित्यमस्ति, परं वेदमार्ग गतिर्न, 'श्रुतिजात निन्दसी' तिवाक्यात् । ऋषभावतारे तद्द्वयमस्ति, परं वैदिकी क्रिया न । मूत्रपुरीषादिकं भवेत्, तथापि प्रक्षालनं न करोति । कपिलावतारे तत्त्रितयमस्ति, परं हरिमार्गे परिचयो न, साख्याचार्यत्वान्मातुर्देवहूतेः साख्योपदेशः कृतः । न च तत्र भक्त्युपदेशोऽस्तीति वाच्यम् । तदङ्गत्वेन तस्या गौणत्वात् । व्यासावतारे तच्चतुष्टयमस्ति, परं श्रीकृष्णचन्द्रे स्नेहो न । ज्ञानावतारत्वात् । 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवे- दिहे'ति वचनात् । श्रीमद्वल्लभाचार्यावतारे तत्पञ्चकमस्ति । अत एव मत्प्रभूणा नाम

रूपमेव कुर्वन्तीति । यद्वा । निरुक्तकारै सूर्मि कल्याणोर्मि स्रोत इति व्याख्यात, तत्रायमर्थ । ककुदोस्यास्तीति काकुदो वृष तत्सदृशो जीव काकुदशब्देनोच्यते । सादृश्य च ज्ञानादिशून्य त्वाज्जाड्यादिधर्मेण तादृश भगवद्भजनहीन पशुतुल्य जीव अनुक्षरन्ति, भगवन्नाममन्त्रादिक मु- पदिशन्ति । दृष्टान्त । यथा सूर्म्य कल्याणोर्मि स्रोत सुषिरा बहुच्छिद्रा यथा प्रविशतीति । अत्र बहुच्छिद्रधारिण्या उपमानता । तन्निरूपिता जीवस्योपमेयता । कल्याणोर्म्युपमानतानि रूपितोपमेयता नाममन्त्रादिषु चेति स्वस्वरूपेण स्ववशेन च जगदुद्धारकर्तृत्व, अत सत्यदे- वोसि वासुदेवोसीत्यर्थ । किञ्च अन्या अपि श्रुतय श्रीविठ्ठलप्रतिपादिका पूर्वमेवोदिता । किञ्च सर्वो वेद श्रीकृष्णप्रतिपादकोऽत श्रीविठ्ठलप्रतिपादक एवेति विस्तरो न निरूप्यत इति दिक् । 'श्रीविठ्ठले कृष्णचन्द्रे विभिन्नमतयो हि ये । तेषा सङ्गो न मे भूयाद्द्विपतोऽपि सुदु- सह । एतदेव हृदिकृत्य श्रुतिमाहु अङ्गादङ्गादिति । गम्यमिति । 'वक्ता कश्चन नहवे' इति ब्रह्माण्डवाक्यात् । तत्र गीता प्रमाणयति नहि ते इत्यादि । एवञ्च श्रीमदाचार्याणामपि पूर्वोदाहृतश्रुतिस्मृतिपुराणवचनै पुरुषोत्तमत्वेऽवधारिते श्रीविठ्ठलेशस्यापि तत्त्वे श्रीमदाचार्यस्व रूपज्ञान तेषामेवेत्यभिप्रेत्याहु तस्मादित्यादि । वैदिकी क्रिया नेति । 'आचारहीन न पुनन्ति वेदा' इति स्मृते । अत्र हेतुमाहु साख्याचार्यत्वादिति । गौणत्वादिति । 'कृष्णसेवापर वीक्ष्ये'त्यादि भगवत्प्राधान्येन भगवन्मार्गवर्तित्वमपेक्षितमिति भाव । व्यासावतारेति । 'को ह्यन्य पुण्डरीकाक्षान्महाभारतकृद्भवे' दितिवाक्याद्भगवदवतारत्वम् । पञ्चकमस्तीति । 'अखण्डखण्डितप्रसृतचण्डपाखण्डवादिवितण्डनप्रचण्डिमा धरणिमण्डलाखण्डल' इति वाक्य पाण्डित्यप्रति पादक, वेदपारग इति निगमगतिनिरूपक, कर्ममार्गप्रवर्तक इति वैदिकक्रियावैशिष्ट्यबोधक,

'व्रजप्रियः प्रियव्रजस्थिति'रिति । अतोऽवतारान्तराश्रयं त्यक्त्वा निजाचार्याश्रय एव कर्तव्य इति तात्पर्यार्थः सिद्धः ।

यद्यप्ययोग्य एवाहं तत्स्वरूपनिरूपणे ।
तदीयत्वेन कृपया सर्वं सम्पादितं मयि ॥ १ ॥
यथामति विलासेन प्रेमोल्लासेन वर्णितम् ।
श्रीमदाचार्यचरणाः प्रसीदन्तु स्वतः सदा ॥ २ ॥
इति श्रीवल्लभाचार्यचरणाब्जप्रसादतः ।
निगमोदिततद्रूपं वर्णितं हि यथामति ॥ ३ ॥
यद्यप्यज्ञानदोषेण ह्यमया वर्णितं भवेत् ।
क्षमन्तां श्रीमदाचार्याः स्वीयेषु करुणाकराः ॥ ४ ॥

इति श्रीमत्प्रभुचरणात्मजमहाराजश्रीयदुनाथकुलोद्भव-
गोस्वामिश्रीगोपालसुतश्रीगिरिधरविरचितं
श्रुतिरहस्यं समाप्तम् ॥

---

भक्तिमार्गाब्जमार्तण्ड इति यागादौ भक्तिमार्गैकसाधनत्वापदेशक इति च हरिमार्गज्ञातृत्वज्ञापकं, 'स्फुरत्कृष्णप्रेमामृतरसभरेणातिभरिता विहारान् कुर्वाणा व्रजपतिविहाराब्धिषु सदे'ति वाक्यं स्नेहबोधकमिति भावः । निजाचार्याश्रय एवेति । पूर्वोदाहृतश्रुतिकदम्बैः श्रीमदाचार्याश्रयितुरेव भगवन् श्रीमल्लीलापुरुषोत्तमानुभवः । अन्याश्रयेण न तथेत्येवकारार्थः । तथा च भारद्वाजसंहितायां 'नानतस्त्वनुपेतस्य ब्रह्मचर्यमभीप्सतः । पृथैवात्मसमुत्क्षेपो जायते कृष्णवर्त्मनी'ति । एतदर्थस्तु निरूपित एव । तात्पर्यार्थ इति । सम्पूर्णग्रन्थस्य पूर्वोदितश्रुतिस्मृतिवाक्यानामिति शेषः ।

एवं निरूप्य 'भक्तानां दैन्यमेवैकं हरितोषणसाधन'मिति वाक्येन दैन्यस्यावश्यकत्वेन स्वस्मिन् तद्द्योतयितुं ग्रन्थान्ते च मङ्गलमाचरणीयमिति शिष्टसम्प्रदायाच्छ्रीमदाचार्यान्प्रार्थयन्ते यद्यपीत्यादि । ईश्वरस्याखिलस्वामिनो निरूपणमल्पप्रज्ञेन कर्तव्यमित्ययोग्यमिति भावः । तर्हि कथं निरूपितमित्याहुः तदीयत्वेनेति । श्रीमदाचार्यैः स्वीयत्वेन स्वस्वरूपं कृपया बोधितं ध्रुव-न्यायेन । अतो मया तथैव निरूपितमित्याहुः यथामतीति । श्रीमदाचार्या अस्माकं हृदि प्रविष्टास्तदा यथामतिविलासेन परमानन्दस्य निरूपणे परमानन्द एव भवतीति प्रेमोल्लासेन वर्णितं मया । 'कवत्वेन हि भावेन' त्यादिवाक्यैः प्रेम्णैव प्रसीदन्ति श्रीमदाचार्यचरणा इति भावः । प्रसीदन्त्विति । श्रीमदाचार्यचरणप्रसादेनैवास्माकं निखिलप्रत्यूहव्यूहनिरसनपूर्वकं सर्व-सिद्धिरिति भावः । स्वत इत्यनेनास्मासु साधनरहितेषु कृपया प्रसीदन्त्विति भावः । पुनः श्रीमदाचार्यचरणप्रसादं प्रार्थयन्तः समाप्ति प्रतिजानते इतीत्यादि । चरणाब्जप्रसादेनैव वेदोदित-तद्रूपज्ञानमिति भावः । यद्यपीत्यादि । स्वस्मिन्नज्ञानादिनिरूपणेनातिदैन्यद्योतनेन प्रभोरतिकृप-

णोत्पत्तिर्भवतीति भावः। यद्यपि श्रीमदाचार्यकुलोद्भवानां पूर्णपुरुषोत्तमत्वेन श्रीमदाराध्यचरणानामपि साक्षात्पुष्टिपुरुषोत्तमरूपत्वादज्ञानादि न सम्भवति, तथापि शिष्यपरम्परायै निरूपितमिति भावः ॥ ४ ॥

श्रीमदाचार्यपादाब्जकृपया यन्निरूपितम् ।
साधवः कृपया पूर्णाः सम्यक्पश्यन्तु मत्कृतिम् ॥ १ ॥
श्रीमदाचार्यरूपार्थबोधिकाः श्रुतयोपि याः ।
निरूपितास्तथा स्थालीसिक्थन्यायोऽवधार्यताम् ॥ २ ॥
मम तु प्रतीभात्येवं सर्वे वेदा महाप्रभोः ।
श्रीवल्लभार्यरूपं हि बोधयन्त्येव निश्चितम् ॥ ३ ॥
श्रीमदाचार्यवर्याणां स्वरूपं श्रुतिदुर्गमम् ।
क्वाल्पीयसी तत्र बुद्धिर्मम रूपनिरूपणे ॥ ४ ॥
तथापि श्रीमदाराध्यचरणैर्यन्निरूपितम् ।
तद्बलं सम्यगाश्रित्य यथामति निरूपितम् ॥ ५ ॥
श्रीमदाराध्यपादानां ग्रन्थाशयनिरूपणे ।
त एव शरणं सन्ति नान्यथा मतिरीदृशी ॥ ६ ॥
वन्देऽहं श्रीमदाराध्यचरणेन्दुनखप्रभाः ।
याभिर्लोकत्रये पूर्णं तिमिरं मम नाशितम् ॥ ७ ॥
यथा श्रीश्रीमदाचार्यचरणैः प्रेरितोस्म्यहम् ।
तथैव लिखितं सर्वं स्वबुद्ध्या नैव किञ्चन ॥ ८ ॥
गृह्यतां श्रीमदाचार्यभृत्योक्तत्वादहो बुधाः ।
श्रीमदाराध्यचरणे वाक्यपुष्पं समर्पितम् ॥ ९ ॥
यदत्र सदसद्वापि व्याख्यातं स्वल्पबुद्धिना ।
क्षमन्तां श्रीमदाचार्यचरणाः सर्वदा मयि ॥ १० ॥

इति श्रीमन्निजचरणनखचन्द्रप्रभाच्छटानिरस्तसमस्तजीवान्धकारश्रीवल्लभाचार्यावतारकुलकमलविकासकनिजशरणसन्तापहरणश्रीमद्गोस्वामिश्रीमद्गिरिधरचरणकोकनदमधुपायमानमानसतैलङ्गजातीयगोकुलग्रामस्थनेतोपनामकरामकृष्णभट्टप्रकाशितश्रुतिरहस्यप्रकाशः सम्पूर्णतामगाजीत् ॥

नित्यलीलास्थश्रीमद्गोस्वामिश्रीदेवकीनन्दनाचार्यस्मरणार्थम् ।

श्रीकृष्णाय नमः ।

# रासपञ्चाध्यायीप्रकाशः ।

दशमतामसफलप्रकरणश्रीसुबोधिनीटिप्पण्योः प्रकाशः ।

श्रीमत्पीताम्बरप्रणीतः ।



स च

'भगवद्धर्मपरायण हरखलाल हरिदास भगत' इत्यस्य द्रव्यसाहाय्येन
'भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला, बी. ए.,
एल्एल्. बी., वकील हाय कोर्ट, सुरतिस्थ धैर्यलाल
व्रजदास सांकलीया, बी. ए., एल्एल्. बी.,
वकील हाय कोर्ट' इत्येताभ्यां संशोध्य
मुम्बापुर्यां 'निर्णयसागर' मुद्रणालये
मुद्रयित्वा प्रकटीकृतः ।

श्रीवल्लभाब्दाः ४४४. संवत् १९७८.

मूल्यमेकमुद्रिका ।

## श्रीकृष्णाय नमः ।

શ્રીમદ્ભાગવતના દશમસ્કધના તામસ ફલપ્રકરણના શ્રીસુબોધિનીજી તથા શ્રીટિપ્પણીજીનો
પ્રકાશ મુદ્રિત કરી, પ્રસિદ્ધ કરી, ભગવદીયોની સેવામા નિવેદન કરતાં અમને બહુજ આનન્દ
થાય છે આ ગ્રન્થના પ્રયોજક દશદિગન્તવિજયી શ્રીમત્પુરુષોત્તમજી જ છે અને આપશ્રીએ
આ ગ્રન્થના કર્તા તરીકે પ્રસિદ્ધિ નિજ પિતૃચરણ શ્રીપીતાબરજીની ઇચ્છી છે એમ મગલા-
ચરણના શ્લોકથી સુસ્પષ્ટ છે તદનુસાર આ ગ્રન્થ અમે પણ શ્રીપીતાબરજીના નામથી જ
પ્રસિદ્ધ કરવાનુ ઉચિત ધાર્યું છે હાલના સમયમા જેમ અર્પણપત્રિકાઓથી માન્યોને ગ્રન્થો
નિવેદન થાય છે, તેમ શ્રીપુરુષોત્તમજીએ સ્વપિતૃચરણનુ કર્તા તરીકે નામ યોજીને જ આ ગ્રન્થ
નિજ પિતૃચરણ શ્રીપીતાબરજીને નિવેદન કર્યો છે શ્રીપુરુષોત્તમજીએ આ પ્રકારે માત્ર
નિજ પિતૃચરણના નામથી ગ્રન્થ યોજ્યા છે, એટલુ જ નહિ, પરન્તુ નિજ સર્વ માન્યોના નામથી
ગ્રન્થો યોજીને તે તે ગ્રન્થો તેઓને નિવેદન કર્યા છે નિજ ગુરુચરણ શ્રીમદ્ગોસ્વામિશ્રીકૃષ્ણ-
ચન્દ્રજીને ભાવપ્રકાશિકા બ્રહ્મસૂત્રવૃત્તિ તન્નામથી યોજીને નિવેદન કરી છે પૂર્વમીમાસાભાવાર્થ
પાદભાષ્યટીકા નિજ પિતામહ શ્રીયદુપતિજીના નામથી યોજીને તેઓશ્રીને નિવેદન કરી છે
નિજ પિતૃવ્યચરણ શ્રીવ્રજરાજજીકૃત ગીતામૃતતરગિણીટીકાનો આરભક ઉપોદ્ઘાત તે જ પ્રકારે
યોજ્યો છે, અને શાસ્ત્રાર્થ નિબન્ધનો આવરણભગ, પુષ્ટિપ્રવાહમર્યાદાટીકા, તથા દશમશ્રીસુબો-
ધિનીજીનો પ્રકાશ નિજ પિતૃચરણ શ્રીપીતાબરજીના નામથી યોજ્યા છે શ્રીપુરુષોત્તમજીએ આ
ગ્રન્થો પોતાના માન્યોના નામથી યોજ્યા છે છતા તે તે કૃતિ પોતાની જ છે તે ગુપ્ત રાખ્યુ નથી,
તેથી એઓશ્રીનો પણ આશય માત્ર નિવેદન પૂરતો જ છે એમ લાગે છે વસ્તુત આ ગ્રન્થોના
કર્તા તો શ્રીપુરુષોત્તમજી પોતે જ છે એમા તો સ્વલ્પ પણ સદેહ નથી અત્ર મુદ્રિત થતો
રાસપચાધ્યાયી પ્રકાશ શ્રીપુરુષોત્તમજીના નિજ શ્રીહસ્તાક્ષરનો લખેલો પ્રભુકૃપાથી અમને બે-
એક વર્ષ ઉપર પ્રાપ્ત થયો, તે ઉપરથી સહજ જણાઈ આવે છે કે આપશ્રી જ એના મૂલ
લેખક છે શ્રીપીતાબરજીકૃત એમ પ્રસિદ્ધિ આપશ્રીને ઇષ્ટ છે આ મૂલ ગ્રન્થ ઉપરથી મુદ્રણ
કરતા અમને ઘણો જ આનન્દ થયો અમારુ સૌભાગ્ય અમને સ્ફુરે છે કે પ્રાચીન ગ્રન્થોના
મુદ્રણમા અમને ઘણી વાર મૂલ ગ્રન્થો ગ્રન્થકારના શ્રીહસ્તાક્ષરમા જ લખેલા મળે છે
શ્રીટિપ્પણીજી, તથા ષોડશ ગ્રન્થોની ટીકાઓમા આમ ઘણીવાર થયુ હતુ આમા જેટલો પરિશ્રમ
માનુષ સ્વભાવને સુલભ હતો તેટલો અમે કર્યો છે, છતા આમા દોષ નહિ જ હોય એમ
અમારાથી કહી શકાય નહિ, કારણ કે તેમ કહેવામા અમારુ જીવત્વ જ દૂર થઇ જાય છે, અને
ભક્તિમાર્ગમા તો તે મહા અનર્થરૂપ થઇ પડે, પરન્તુ એટલુ કથન આવશ્યક છે કે આ ગ્રન્થના
મુદ્રણમા પ્રમાદ ન થાય એમ ખાસ પ્રયત્ન કર્યો છે બીજી ખેદની વાત એ કે આ મૂલ પ્રતિ
પણ રાસપચાધ્યાયીપર્યન્તની છે શખચૂડવધ અને યુગલગીત એ બે અધ્યાયનો પ્રકાશ અમને
દૃષ્ટિગોચર ક્યાહિ પણ થયો નથી એટલે ફલ પ્રકરણના પ્રકાશમા આ બે અધ્યાય ન્યૂન છે શ્રી-
હસ્તાક્ષરની પ્રતિનુ અન્તિમ પત્ર અર્ધ લખેલુ છે, અને તેમા ઇતિશ્રીપણ નથી, એટલે કદાચિત્
શ્રીપુરુષોત્તમજીને તેટલો ભાગ પૂર્ણ કરવાનુ અવશિષ્ટ પણ રહ્યુ હોય એમ સભવિત છે ગુજ-
રાતી પત્રના ભૂતપૂર્વ અધિપતિ ઇચ્છારામના પુત્ર રા નટવરલાલ દેસાઇએ અમને તે પ્રેસના
સગ્રહમાથી આ ગ્રન્થની એક પ્રતિ આપી છે આ પ્રતિના મૂલ માલિક કાશીસ્થ શ્રીગિરિધરજી

મહારાજના આશ્રિત શાસ્ત્રી રામકૃષ્ણભટ્ટજી છે તે પ્રતિમા પણ મૂલ પ્રતિમા વિદ્યમાન જ ભાગ છે છેલ્લા બે અધ્યાયનો પ્રકાશ નથી ફલ પ્રકરણના અર્થગાભીર્ય અવગાહન કરવાને શ્રીટિપ્પણીજી, અને શ્રીસુબોધિની તથા શ્રીટિપ્પણીજીના સમગ્ર અર્થની ભાવના કરવાને પ્રકાશ અત્યન્ત ઉપયોગી છે એમા અમને લેશ પણ સશય નથી

આ ગ્રન્થમા ક્વચિત્ મુદ્રિત કરેલા ટિપ્પણ રામકૃષ્ણભટ્ટજીની પ્રતિમાથી ઉદ્ધૃત કરેલા છે, પરન્તુ તે પ્રતિના પાઠો ઘણે સ્થળે મૂલ પ્રતિની સાથે સરખાવતા અશુદ્ધ માલૂમ પડ્યા હતા અર્થાત્ એ ટિપ્પણ ક્વચિત્ અશુદ્ધ પાઠના આધારે યોજાયલા હોવાથી સર્વથા વિશ્વસનીય ગણી નજ શકાય માટે વાચકોએ ઉક્ત ટિપ્પણના આધારે મૂલપ્રકાશ યોજવામા વિવેક વાપરવો ખાસ કરીને ૨૯ અધ્યાયના ભજનવિષયક પ્રશ્નોત્તર શ્લોકોના પ્રકાશમા રામકૃષ્ણભટ્ટજીની પ્રતિમા ઘણી ત્રુટિ તથા અશુદ્ધિઓ હતી અને તેથી ટિપ્પણ પણ અવિશ્વસનીય થયુ

આ ગ્રન્થનો મુદ્રણ ખર્ચ અમને ભગવદ્ધર્મપરાયણ રા રા હરખચન્દ હરિદાસ ભગત તરફથી મળ્યો છે તેઓની ઇચ્છાથી પચમ પીઠાધીશ્વર નિત્યલીલાસ્થ શ્રીમદ્ગોસ્વામિશ્રીદેવકીનન્દનજીના સ્મરણાર્થે આ ગ્રન્થનુ પ્રાકટ્ય છે આ ગ્રન્થના વેચાણમાથી જે દ્રવ્ય પ્રાપ્ત થશે તેનો અન્ય આવા ગ્રન્થોના મુદ્રણમા અને શ્રીમદ્દેવકીનન્દનસ્મારક માલામા વિનિયોગ થશે

શ્રીસુબોધિનીજી અને શ્રીટિપ્પણીજીના વરેણ્ય આશયો સ્ફુરાવવામા આ ગ્રન્થ કોઈ પણ આચાર્યચરણૈકનિષ્ઠ મહાનુભાવી ભગવદીયને સહાયક થશે એ વિચારથી જ અમારા પરિશ્રમની કૃતકૃત્યતા માનીએ છીએ, અને તે આશયો અમને પણ સ્ફુરો એમ દીન પ્રાર્થના સાથે આ ગ્રન્થ શ્રીમત્પ્રભુચરણકમલમા સમર્પીએ છીએ

આશ્વિન શુક્લ, રાસોત્સવ<br>સવત્ ૧૯૭૭, મુબઈ

મૂલચન્દ્ર તેલીવાલા.<br>ધીરજલાલ સાંકલીયા.

श्रीकृष्णाय नमः।

श्रीगोपीजनवल्लभाय नमः।

# रासपञ्चाध्यायीप्रकाशः।

## श्रीमद्भागवतदशमतामसफलप्रकरणश्रीसुबोधिनीटिप्पण्योः प्रकाशः।

## श्रीमत्पीताम्बरप्रकटितः।

व्रजजनचरणसरोरुहपरागरागेण पीत[1]वसनस्य।

श्रीगोपीपतिपदयोर्दास्यविलासा भवन्त्वनिशं[2]॥ १॥

षड्विंशाध्यायं विवरिषवः पूर्वाध्यायप्रकरणयोः सङ्गतिं वदिष्यन्तः प्रथमं प्रकरणयोः साधनफलभावरूपां वदन्तीत्याशयेन टिप्पण्यामाहुः **ननु सर्वसमर्थेत्यादि**। अत्रा-भासव्याख्यानयोरयमाशयः। तथा हि। अस्य फलप्रकरणत्वादत्र सर्वेषां फलं वक्तव्यम्। तत्रापि रसात्मकस्य फलस्य प्रमेय[3]प्रकरणेपि दर्शितत्वादस्य फलप्रकरणत्वायात्र ततः कश्चिद्विशेषोपि वक्तव्यः। स च क्रम[4]स्वारस्याद्ब्रह्मानन्दादाधिक्यज्ञापनरूप एव सेत्स्यति। अन्यथा पूर्व[5]प्रकरणसमाप्तौ शुको वैकुण्ठनयनं तत उद्धरणं च न वदेत्। फलप्रकरणोत्तरं त[6]त्र नयनमात्रमेव च वदेत्। अत उक्त एव विशेषो निश्चेयः। सोपि फल[7]योर्व्यधिकरणत्वे मुख्यावान्तरभावाभावादसिध्यन् सामानाधिकरण्यमाक्षिप्यैतासु पूर्व[8] ब्रह्मानन्दं गोपेषु पश्चाद्भजनानन्दं च व्यवस्थापयतीत्याशयेनैव 'तद्द्वारा पुरुषाणां च भविष्यती'ति वक्ष्यन्ति। तेन तत्सामान्यादेतासु ब्रह्मानन्दोपि निराबाध एव। न चैतासां त[9]दाकांक्षाभावात् स कथं वक्तुं शक्य इति वाच्यम्। भक्तिस्वभावादेव तत्सिद्धेः। 'हृतात्मनो हृतप्राणांश्च भक्ति-रनिच्छतो गतिमण्वीं प्रयुङ्क्त'इति वाक्यात्। 'स्वर्गकामो यजेते'त्यादौ यजमानमात्रस्य तत्का-मनायामपि 'सगृहः सपशुः सुवर्गं लोकमेती'ति श्रुत्या परिकरस्यापि तत्फलश्रावणेनात्रापि तथा वक्तुं शक्यत्वाच्च। किञ्च। भगवत्कार्यस्वरूपविचारेपि तेषु भजनानन्दस्येवैतासु ब्रह्मानन्दस्यापि सुवचत्वम्। भगवताप्याकांक्षितमेव दीयते इति नियमाभावात्। विप्रयोग-ज्ञानोपदेशादि[10]नां तथा निश्चयात्। एवञ्च 'एकं भगवतः कार्य'मिति न्यायाद्गोपानां सूक्ष्मग-त्याकांक्षोदयरूपं भगवत्कार्यमेतासु ब्रह्मानन्दानुभवं साधयतीत्यपि ज्ञेयम्। वस्तुतस्त्वेतेन

---

१ ग्रन्थकर्तृपीताम्बरस्य। २ अहर्निशम्। ३ वेणुगीते। ४ ब्रह्मानन्दानन्तर भजनानन्दकथनम्। ५ साधन-। ६ वैकुण्ठे। ७ गोपीगोपनिष्ठफलयो.। ८ फलस्य। ९ ब्रह्मानन्दस्य। १० उद्धवद्वारा ज्ञानोपदेशस्तु भक्तानां नाकांक्षितम्।

ग्रन्थेन परप्राप्तिबोधकगुणैक्तप्रकारकः प्रत्यापत्तिप्रकारो बोध्यत इति वैयधिकरण्येप्यदोषः । वक्ष्यन्ति च पञ्चमाध्याये 'यथार्भक' इत्यत्राभासे 'ब्रह्मभावाभावा'दिति । नच भ्रमरगीतादि-कथाविरोधः । इदानीन्तनफलस्य निरोधशेषत्वात् । प्रत्यापत्तौ तु निरोधस्य फलशेषत्वमिति सर्वं समञ्जसमिति दिक् । **लौकिकस्त्रीष्वित्यत्र टिप्पण्यां पूर्वं स्यादिति** । इह मूलोके पूर्वं स्यादित्यर्थः । **स्वपदस्येत्यादि** । स्वासामानन्दानुभव इत्येवं समास इत्याशयः । ब्रह्मभावोक्तेरेतल्लीलाधिक्यमात्रज्ञापनार्थत्वेन योग्यतायां तात्पर्याभावान्नैतदर्थसङ्गतिरित्य-रुच्या पक्षान्तरमाहुः **यद्वा बलदेवेत्यादि** । अत्र योग्यतोक्तावपि योग्यताबीजस्याकथ-नात्तद्बोधनाय पक्षान्तरमाहुः **यद्वा हेमन्तेत्यादि** । तेनानुग्रहैकलभ्यत्वं योग्यताया दृढीकृतम् । **सुबोधिन्यां ततो हीति** । स्त्रीष्वेव संसिद्धत्वात् स्त्रीणामेव योग्यत्वाचे-त्यर्थः । **टिप्पण्यां** योग्यतादृढीकारेण सिद्धमग्रिमाभासमुखेनाहुः **एवं सतीत्यादि** । **अनुग्रहद्वारेति** । अयमर्थः 'स्मयमानमुखाम्बुज' इत्यस्य टिप्पण्यामग्रे सेत्स्यतीति बोध्यम् । तथा चास्य फलस्य तामसप्रकरणीयत्वात्तत्प्रकरणपठिताधिकारिमात्रस्येदं वक्तव्य-मित्यतो द्वारमाचार्यैरुक्तम् । तथा चकारेण हीनाधिकारिणो गवादयश्च 'केवलेन हि भावे-ने'त्यत्रोक्ताः संगृहीताः । तेन साधनप्रकरणोक्ता योग्यता एतद्विषयिणीत्याशयः । सापि योग्यता स्वरूपयोग्यतासापेक्षतयैव फलसाधिकेत्याशयेन वदन्तीत्याहुः **यत्रापीत्यादि** । ननु ब्रह्मानन्दस्य नित्यत्वं 'न स पुनरावर्तते' 'अनावृत्तिः शब्दा'दिति श्रुतिन्यायसिद्धम् । तदपेक्षयात्राधिक्येऽस्य नित्यत्वमवश्यं वक्तव्यम् । तच्च लीलानां तदनुभवितॄणां च नानात्वाद्भिन्नभिन्नकालिकत्वाच्च बाधितमित्याशंक्य लीलानां स्वरूपतः प्रवाहतश्च नित्यत्व-मधिकारिनिरूपणमुखेन वदन्तीत्याशयेनाहुः **यत इत्यादि** । तथा च रमणरूपेण लीलानां स्वरूपनित्यता, बाह्याभ्यन्तररूपेण च प्रवाहनित्यतेत्यर्थः । अयमर्थः । रसात्मा भगवान् बाह्य-रमणे धर्मसहितः, आन्तरे तु नाट्य इव केवल इति तस्य तथात्वसंपादिकास्ता नित्याः परिच्छिन्नाश्चेति तदाविर्भावस्य कालचक्रवद्गमागमरूपतया प्रवाहरूपतायामपि स्वरूप-नित्यत्वं निराबाधत्वान्न बाधितमित्यर्थः । नन्वान्तरस्यापेक्षावैशिष्ट्यादपूर्णत्वाद्भगवद्रूपत्वा-भावे कथं परमफलत्वमित्याकांक्षायां तस्य तथात्वं विवृण्वन्ति **आन्तरं त्विति** । **सखी-वृन्देत्यादि** । तथाचापेक्षापूर्त्या उक्तविशेषैस्तथेत्यर्थः । अत्र गमकं वदन्तीत्याशयेनाहुः **नामरूपेत्यादि** । तथा च दोषाभाव एव परत्वगमक इत्यर्थः । कारिकास्थसेत्यस्य पदस्य तात्पर्यमाहुः **पूर्वस्या इत्यादि** । सापीत्यपिशब्देनैतत्साम्यात्पञ्चाध्यायीस्थलीलाग्रह-णम् । तेन यथात्र शङ्खचूडवधाद्दोषनिवृत्तिः, तथा पञ्चाध्याय्यां 'नाहं तु सख्य' इत्या-दिवाक्यैर्भक्तान्तःकरणस्थदोषनिवृत्तिरिति द्विविधापि निर्दुष्टा । एतावान् परं विशेषो यत्पू-र्वेसां भगवत्प्रयत्नेन दोषराहित्यम्, उत्तरस्यां तु स्वत इति । अत एव च परत्वम् । महा-नन्दाधिक्यं तूभयोरनुग्रहविशेषनियतत्वादिति फलप्रकरणतात्पर्यम् । एतदेव 'लीला या

युज्यते सम्य'गिति सम्यक्पदेन पूर्वं ज्ञापितं बोध्यम् । एवं प्रकरणार्थमुक्त्वा तदवान्तरयोः पूर्वस्मिन्नध्यायान् विभजन्त इत्याशयेनाहुः यतो रूपमित्यादि । सुबोधिनीकारिकास्थरूपप्रपञ्चपदस्य रूपविस्तारोर्थो बोध्यः । ननु भगवति सजातीयविजातीयस्वगतद्वैताभावादात्मनेत्यादिसार्धकारिका कथं संगच्छत इत्यत आहुः यथेत्यादि । 'चक्षुषश्चक्षुः, श्रोत्रस्य श्रोत्रं, मनसो मन' इति 'प्राणन्नेव प्राणो भवती'त्यादिश्रुत्या यथा तत्तत्कार्यकर्तृत्वेनेन्द्रियादिरूपत्वं वैदिकैर्मन्यते, तथा 'यस्यात्मा शरीरं, य आत्मानमन्तरो यमयती'तिश्रुतिवाक्यादात्मादिभोक्तृत्वेनात्मत्वादिस्वरूपमपि मन्तव्यम् । तथा च तत्तत्कार्यकरणात्तत्तद्रूपः स्वयमेवेति न कथमपि द्वैतापत्तिरित्यर्थः । एवमनुपपत्तिं परिहृत्यात्मरूपं निश्चिन्वन्ति यथेत्यादि । ननु भावस्य मनोविकारात्मकत्वात् कथं ब्रह्मरूपत्वमित्याकांक्षायामाहुः प्रभुरित्यादि । तथा च रसस्य स्थायिभावात्मकत्वेन 'स मानसीन आत्मा जनाना'मिति श्रुत्या तत्र प्रकटस्य भावरूपतया विकारात्मकत्वाभावाद्ब्रह्मरूपत्वं निर्बाधमिति वेणुगीत एव व्युत्पादितमित्यर्थः । नन्वस्त्वात्मादिरूपत्वम्, तथापि लीला तु प्रकटरूपेणैव क्रियत इति तेन कथं लीलेत्याकांक्षायामाहुः आत्माधीनमित्यादि । इदं च 'आत्मारामोप्यरीरम'दित्यत्र स्फुटीभविष्यति । एवं चात्मादीनां कर्तृत्वमेव, न करणत्वमित्याशयेनाहुः अन्येत्यादि । एतन्निरूपणप्रयोजनमाहुः मन इत्यादि । तथा चान्तरफलसिद्ध्यर्थमेवं कृतवानित्यर्थः । अत्र लीलाक्रमे बीजं तु प्रथम 'आत्मना लीले'ति आत्मा चाधारभूतं लिङ्गमुपजीवतीति । द्वितीये मनसा, ततः प्राणयन्त्वनत्वेन मनसः प्राणाधीनतया तदुपजीव्यत्वाद्वाचश्च प्राणविकारतया तदन्तर्गतत्वेन तृतीये वाक्प्राणैः, तत इन्द्रियाणां प्राणव्रतत्वेन प्राणोपजीवकत्वात्तुरीये तैः । ततः शरीरस्य तत्सर्वोपजीवकत्वात्तेनेति श्रौतवासनारूपं बोध्यम् । एतेन सङ्गतिरप्युक्तप्रायैवेति न पृथक्तदुक्तिः । अस्मिन् पक्षे भक्तस्वरूपन्यग्भावेन रसात्मकस्य भगवतो लीलेति भवति, न तु रसवतः । भगवांस्तु रसवानपीति तत्त्वेनापि सा वाच्यैव, अन्यथा मूलस्य वाक्यासङ्गतेरित्यभिसंधाय आत्मादीनां करणत्वस्याप्यविरुद्धत्वात्तद्घटितं पक्षान्तरमाहुः यद्वेत्यादि । प्रतिभाष्यमाणमिति । भाषमाणपदेनैव चारितार्थ्येपि प्रतिशब्दोपादानात् स्वप्रवेशप्रतिकूलतया भाषमाणमित्यर्थः । सुबोधिन्यां वाक्प्राणैरित्यैकपद्यादग्रिमाध्यायलीलासु वाक्प्राणैस्त्वेनैव लीलाया विवरिष्यमाणत्वाच्चात्र भेदेन तल्लीलाकथनं युज्यत इत्याशयेनाहुः बलं हीत्यादि । तृतीयाध्यायलीलाविमर्षे । इति तथेति । इति हेतोः स्वरूपाभिव्यक्तिः शारीरी लीलेत्यर्थः । ऐश्वर्येत्यादि । अणिमादिभेदेन तस्याष्टविधत्वात्तत्तुल्यसंख्यैरित्यर्थः ।[1] एवमध्यायपञ्चके आलम्बनरूपीय-

---

१ इदं शोधपत्रं एवमित्यारभ्य हरिप्रियेत्यादीत्यन्तं मूलश्रीहस्ताक्षरपुस्तके नास्तीत्यतो रामकृष्णभट्टपुस्तकतो निवेशितम् ।

पञ्चलीलाविवरणेन तल्लीलायामपि क्रमः समर्थितः । तत्र सकृदपि पञ्चलीलाकरणेन रूपप्रतिष्ठाभिरध्यायान्तरलीलावैयर्थ्यं क्वचित्क्रमभङ्गो यदुक्तस्तत्राप्यालम्बनीयतारूपेण बीजाभावश्चेत्याशङ्कां हृदि कृत्वा पक्षान्तरमाहुः **अथवेत्यादि । शास्त्राणामिति** । इदं श्लोकरूपं वात्स्यायनसूत्रम् । तथा च रसशास्त्रमर्यादायास्तथात्वान्न क्रमस्य विवक्षितत्वमित्यर्थः । अत्रेदं बोध्यम् । भगवतो रसरूपत्वस्य तदालम्बनस्य च स्वाभाविकत्वाद्भक्तानां सर्वात्मभावस्य तद्रसात्मकतया तथात्वात् क्रमस्याविवक्षितत्वेपि 'अन्यो ह्यन्यस्मिन्प्रतिष्ठित' इति तत्प्रकरणीयश्रुतेर्भेदस्य सत्त्वात्सकृल्लीलाकृतौ तदनिवृत्त्या लयासम्भवात्तदर्थमसकृत्तत्करणं विवक्षितम् । सधर्मत्वस्य स्वाभाविकत्वाच्चेति नेतराध्यायलीलावैयर्थ्यम् । तथा सति प्रथमपञ्चविधया आत्मनि, ततस्तादृश्या मनसीत्येवं पञ्चसु पञ्चविधधर्मसहितस्यालम्बनस्य प्रतिष्ठायां भक्तस्वरूपस्य सम्यक्तया लय इति न सुबोधिनीविरोधगन्धः । शास्त्रीयहेतोरुक्तत्वाच्च न पूर्वत्र क्रमत्यागदोषश्चेति । तदेतद्धृदि कृत्वा रूपं प्रतिष्ठितमिति विवृण्वन्ति **हरिप्रियेत्यादि** । एवं प्रथमप्रकरणीयाध्यायविभागमुक्त्वा निर्वाहकत्वं कार्यकारणभावो वावान्तरयोः संगतिरिति बोधयित्वा पञ्चविंशषड्विंशयोरपि साधनफलरूपैव सङ्गतिः परं विशेषरूपेणेति बोधयितुमध्यायार्थं वदन्तीत्याशयेनाहुः **आद्य इत्यादि । उक्तरूपात्मनेति** । स्वामिनीभावरूपात्मना । **आत्मन्येवेति** जीवात्मलिङ्गरूपे मनसि भावरूपेण प्राकट्याल्लिङ्गान्तःस्थस्य जीवस्यैव नैकट्यात्तत्रेत्यर्थः । आनन्दपूरणे गमकमाहुः **अत एवेत्यादि । अत एवेति** । एतस्य भावस्यात्मरूपत्वादेवेत्यर्थः । एतस्य निरपेक्षा इत्यादिना सम्बन्धः । एतस्य प्रयोजनमाहुः **यत इत्यादि** । तस्यापि प्रयोजनमाहुः **द्वितीयेत्यादि** । एवं प्रकारकमन्यत् सर्वं भगवतो गजजलपानन्यायेन स्वस्वरूपानुभवार्थमित्यात्मारामत्वस्यैव निर्वाहकमित्यतिगूढाशयं प्रकटयितुं वदन्तीत्याशयेनाहुः **यमेवेत्यादि** । सर्वात्मभावस्य निष्कृष्टं स्वरूपं वदन्तीत्याशयेनाहुः **सोपीत्यादि । सोपीति** । सर्वात्मभावोपीत्यर्थः । एतेन भगवदनुग्रहविशेषैकलभ्यः 'स एवाधस्ता'दित्यादिश्रुत्युक्तभावासाधारणकारणभूतो यः स्थायी भावः सः सर्वात्मभाव इति तत्स्वरूपादिलक्षणं बोध्यम् । यथा जीवानां चिदात्मकत्वम्, तथा स्थायित्वं लौकिकेपीति तद्वारणाय लभ्य इत्यन्तम् । शेषं कार्यलक्षणं फलोपधानाय श्रौतत्वाय चेति लिङ्गभूयस्त्वाधिकरणादवगन्तव्यम् । भगवद्विषयरत्याख्यस्थायित्वमपि न तल्लक्षणमिति ज्ञापनायाहुः **अन्तरित्यादि** । एतस्य भावस्य लौकिकालौकिकविलक्षणत्वज्ञापनाय वदन्तीत्याशयेनाहुः **मानेत्यादि । सेति** । सर्वात्मभावसम्बन्धिनी । एवमेकेन प्रकारेण वैलक्षण्यव्याख्यानाद्दुर्लभत्वमस्य फलस्य प्रदर्शितम् । एवमपि कुर्वन्नानुगृहीतांस्त्यजतीति बोधनाय प्रकारान्तरेणोत्तरार्धं व्याकुर्वन्ति **अथवान्तःकरणेत्यादि** । अन्तःप्रपश्यमाने सर्वभावप्रपत्तिजननार्थं तत्र स्थितः सन् बाह्यतस्तिरोधत्ते, नत्यन्तस्त इति द्वितीया

मर्यादेति भावः । तृतीयामाहुः **यद्वा मानस्येत्यादि** । एतां व्यवस्थापयितुं प्रकारान्तरेण व्याकुर्वन्ति **यद्वा कायिकेत्यादि** । सर्वमेतत् श्रीमदाचार्यैः 'स्तासां त'दिति श्लोके विवेचनीयमतो न क्वापि कोपि विरोधलेशः ।

**भगवानपीत्यत्र** । **इति तथेति** । अनेन हेतुना दूषणोद्धार इत्यर्थः । नन्वयमेव मूलेर्थो विवक्षित इत्यत्र किं गमकमत आहुः **नायकेत्यादि** । तथा च मूले रन्तुं मनःकृतिकथनेन नायकभावो बोध्यते । ततश्च व्युपसर्गेण तद्भावपूर्वकेक्षणमेवायातीति स एव विशेषः । स च भगवदीयत्वान्न निरर्थक इति स्वकार्यं सम्पादयितुं रतिविषयेष्वपि स्वोपयुक्तां सामग्रीं दर्शनगोचरां कारयतीत्येतावत्पर्यन्त एवावसीयते । तेन विपदमेव गमकमित्यर्थः । नन्वेवमपि वीक्षणस्येदानीन्तनत्वेन नित्यत्वं तु न सिध्यतीति न दूषणोद्धार इत्यत आहुः **वस्तुत इत्यादि** । तथा च लीलानां नित्यपरिच्छिन्नत्वेन क्षणानां वा तयात्वेन चक्रवद्भ्रमागमान्न काचिदनुपपत्तिरिति भावः । इदं चात्र दिङ्मात्रमुक्तम्, विशेषस्य निबन्धविद्वन्मण्डनादौ सत्कार्यवादस्थापने प्रपञ्चनादिति । **सुबोधिन्यां सामग्रीं विधायेति** । सामग्रीविधाने रोदस्योरपि विद्वन्मण्डनोक्तदिशा दहराकाशभगवन्मनःस्थाधिदैविकभूरूपत्वमवगन्तव्यम् । 'यामैरयन् चन्द्रमसी'तिवत् । **तत्रेति** । सामग्रीसम्पादने । **तत्रेति** । तासु संकल्पोद्बोधने । अत्र मनसः करणत्वेन नादस्य व्यापारत्वाद्वेणोः सहकारितया सहायत्वं बोध्यम् । ननु मायाकार्यं स्थितस्यावरणम्, अन्यत्र स्थितस्यान्यत्र प्रत्यायनरूपो विक्षेपश्चेति द्वितीयस्कन्धे 'ऋतेर्थं य'दित्यत्र सिद्धम् । इयं चान्तरङ्गेति तद्विलक्षणमत्र किं करिष्यतीत्याकांक्षायां तत्कार्यं यदाचार्यैरुक्तं तद्विवृण्वन्ति **वेदेत्यादि** । तथा च यथा बहिरङ्गा मनोवृत्तीरन्यत्र नयति, तथेयमन्तरङ्गै तत्करोति, तदपि करोति । तच्च 'मन्यमाना'नित्यनेन वक्ष्यते । एवं चात्र यथास्थितनयनमेव ततो वैलक्षण्यमिति भावः । 'मन्मायामोहितधियः पुरुषाः पुरुषर्षभ । श्रेयो वदन्त्यनैकान्त्याद्यथाधर्मं यथारुची'त्यत्र प्रमाणस्यान्यप्रयोजनं तत्कार्यं दृष्टम्, नत्वानन्दस्येत्याशयेन कश्चिदाशङ्कते, तदाहुः **अत्रेत्यादि** । समादधते **स इत्यादि** । **तस्येति** । भगवतः । **अत एवेति** । विरुद्धधर्माश्रयत्वादेव । तथा च धर्मरूपताया गतिरूपताया विरुद्धधर्माश्रयत्वस्य च प्रामाणिकत्वेन आनन्दस्यामूर्तत्वाभावेन च धर्मधर्मिविचारेन्यत्रगतिः सुघटा, सामर्थ्यस्यापि धर्मरूपत्वान्न तदाश्रयणेपि दोष इत्यर्थः । नन्वत्र पुष्टिलीला भगवत उच्यते, अतो मर्यादया समाधिर्न युक्त इत्यरुच्या तद्रीत्या समादधते **वस्तुत इत्यादि** । तथा चामूर्तत्वेपि गत्युपपत्तिरित्यर्थः । अत्र स्वरूपमर्यादातिक्रमे मानमाहुः **अत एव रसमित्यादि** । **अनुपज्यत इति** । संयोगपृथक्त्वेनानुपज्यते । मार्गयोर्विततत्वं व्याकुर्वन्तो व्युत्पादयन्ति **यतोन्यत्रेत्यादिना** । **फलरूपेणेति** । भजनस्य विशेषणम् । **प्रतिपादितमिति** । मार्गत्वमिति शेषः । मार्गद्वयवितानप्रयोजनमाहुः **एवं सतीत्यादि** । नन्वन्वेषणादिलक्षणमार्गस्य सौभाग्यमदादिदोषप्रयुक्तत्वमे-

१०-२९-१

तद्दृशु तदारोपयतीति शङ्कायां समादधते **स्वामिनीना**मित्यादि। तथा च प्रतिम-दमानानि वदतो मूलादेव समाधिर्बोध्य इति भावः। **प्राकट्यं स्या**दिति। यथा-साधारणेपि काले सूर्यचन्द्रमःसम्बन्धे सर्वत्रालोकाह्लादादि, तथा साधारणीषु रात्रिषु लीलासम्बन्धे तथा स्यादित्यर्थः।

**तदोडुराज** इत्यस्य **टिप्पण्याम्**। भगवन्मनस आधिदैविकत्वात्तत्र देवतानपे-क्षणादाभासे देवता नास्तीत्यादिकथनं कथमुपपद्यत इत्याशङ्क्य तत्तात्-पर्यमाहुः **अत्रेदं प्रतिभातीत्यादिना**। नन्वेवंप्रणाड्या रसोद्बो-धकथने रसस्य जन्यत्वापत्त्या भगवद्रूपता हीयेतेत्याशङ्कायां प्रणाडीतात्पर्यमाहुः **वस्तुत** इत्यादि। तथा च श्रुत्या **रसस्य** भगवद्रूपत्वे निश्चिते, यथा यज्ञात्मकस्यासद्वेद्यव्यं-ग्यत्वम्, एवं रसात्मक एतत्प्रणाड्या लोके व्यज्यत इति न तद्धानिरिति भावः। **सुबोधिन्याम्**। नन्वेकदा दृष्टासु वह्वीषु रात्रिष्वेकचन्द्रस्थितिः कथं युज्यत इत्यत आहुः **यद्यपीत्यादि**।

१०-२६-२

**रमाननाभमित्यस्य टिप्पण्याम्**। एतन्मन्वन्तरे चन्द्रस्यात्रिपुत्रत्वेन लक्ष्मीभ्रा-तृत्वाभावात्पूर्वमन्वन्तरीयस्य तथात्वेपि तस्य पुराणान्तरे खण्डरूपेण शिवमौलिमण्डनत्वोक्तेरत्र चाखण्डमण्डलतया रमाननाभत्वकथनात्पूर्वं नूतनतया व्यवस्थापनाच्च लक्ष्मीभ्रातृत्वं नोपपद्यत इत्यतस्तदाशयमाहुः **भगवानित्यादि**। तथा चानेन भावेनात्र भ्रातृत्वकथनं न लोकसिद्धाभिप्रायेणेत्यतो नानुपपत्तिरिति, नवा लक्षणा, तथा तद्विवाहलीलापीति नात्र लौकिकलेशोपीति हृदयम्।

१०-२६-३

**निशम्येत्यत्र। सुबोधिन्याम्। अङ्गं तु नाशयतीति**। स्वरूपविस्मारक-तया कामाङ्गभूतं धैर्यादिकं नाशयतीत्यर्थः। ननु देशान्तरीयो व्यवहारो न देशान्तरीयोत्तमव्यवहारे सति सम्भवतीति कथमेतासां तथात्वमित्यत आहुः **पूर्वमित्यादि**। सति चातुर्ये अनागरीत्वमव्यवहारप्रयोजकमिति पक्षान्तरमाहुः **ताटङ्केत्यादि**। 'कुण्डलं कर्णभूषण'मिति कोशेन तस्य पदस्य सामान्ये शक्तत्वादित्यर्थः।

१०-२६-४

दुहन्त्य इत्यत्र। **सुबोधिन्याम्। सम्यगुत्सुका** इति। विवेकविलम्बास-हिष्णुश्चित्तोल्लास औत्सुक्यं तस्य सम्यक्त्वमत्युत्कटत्वं बोध्यम्।

१०-२६-५

**अश्नन्त्य** इत्यत्र। **क्रम** इति। उत्पत्तिस्थितिप्रलयक्रमः। प्रमार्जनस्य मालि-न्यप्रलायकत्वात् प्रलयकर्तृत्वम्।

१०-२६-६

एतासां तामसीत्वादौ हेतुमाहुः **शरीरेत्यादि**। शरीरसेवादिरेव चात्र लोकधर्मो बोध्यः। यद्यप्यत्र य एवोक्तास्तथापि तत्तदादीनां धर्माणां प्रायपाठात् तादृशत्वं बोध्यम्।

१०-२६-७

१०-२६-८ काश्चित्कृष्णान्तिकमित्यत्र । शब्दपरा इति । निवारकवाक्यपरा इत्यर्थः ।

तमेव परमात्मानमित्यत्र । ननु भगवति प्रविष्टत्वेपि स्वाप्ययवदज्ञानादिवासनायुक्तानामेव प्रवेशात्कथं न मुक्तिप्रतिबन्ध इत्यत आहुः तदा अज्ञानेत्यादि । १०-२६-११ ज्ञानस्य चिरस्थायित्वपक्षेपि प्राग्जन्मीनार्थास्मरणेन, 'प्राक्कल्पविषयमेतां स्मृतिं ते सुरसत्तम । न ह्येष व्यवधात्काल एष सर्वनिराकृति'रिति प्रथमस्कन्धे कालस्य स्मृतिनाशकत्वबोधनेन च कालस्य तथात्वात्तदा तासां प्रतिबन्धके काले यदज्ञानं भगवत्स्वरूपविषयकं, यच्च जाररूपतया अन्यथाज्ञानं, तत्रिक्षणावस्थायि विनश्यदवस्थमिति न तयोः स्वरूपतस्तथात्वमित्यर्थः । ननु तथापि वासनान्तरसत्त्वे कथं न तत्स्थितिरित्यत आहुः वियोजकेत्यादि । सांसारिक्या विरुद्धवासनायाः कर्मणश्च क्षीणत्वेन तत्स्थापकाभावाच्च न तथात्वमित्यर्थः ।

उक्तं पुरस्तादित्यत्र । भगवानित्यादिना द्वितीयस्यार्थ उच्यते । तेन मुक्तिदानार्थमवतीर्णस्यैव साधनता, न तूदासीनस्येति बोध्यते । अत १०-२६-१३ इत्यादिना तृतीयस्योच्यते । तेन तादृशस्यापि सम्बन्धस्यैव साधनत्वम्, नत्वसम्बद्धस्य । सम्बन्धश्चाविच्छिद्यमान एव व्यापारः, न तु विच्छिद्यमान इति निर्णीयते । ज्ञानभक्त्योरस्त्वित्यादिना तुरीयस्योच्यते । तेन राजोक्तो विरोधः कालभेदेन श्रुतेः सावकाशतया परिह्रियते । तत्रोपपत्तिश्चेश्वरेच्छारूपा बोध्यते । तथा फलबलादयं निर्णयो न व्यभिचारशङ्कयापनेतुं शक्य इति च बोध्यत इति ज्ञेयम् ।

नृणां निःश्रेयसार्थायेत्यत्र । अन्यथापीति । 'यदा यदा ही'ति वाक्यादंशावतारेणापीत्यर्थः । अन्यार्थमागमनं कुतो न सङ्गच्छत इत्यतस्तदुपपादयन्ति । १०-२६-१४ अन्येषामित्यादि । एतत्प्राकट्यस्य 'योगास्त्रयो मये'त्यादिभगवदुक्तसाधनवतां फलदानार्थत्वं वक्तव्यम् । तन्न युक्तम् । तत्र स्वोक्तत्वनिर्वन्धेन प्राकट्यात्, प्रकृते तदभावात् । भूभारहरणादेरंशद्वारापि संभवादतोधुना यत्प्राकट्यं तत्केवलं साधनरहितानां निःश्रेयसायैव । तदेव 'नायमात्मे'ति श्रुत्या साधनान्त(र)निषेधपूर्वकं वरणैकलभ्यत्वस्यात्मनिवरकत्वे श्रावयन्त्योक्तम् । एवं सति इदानीं यत्प्रकटस्तत्प्राकट्यं न ज्ञानकृत्योः साध्यमित्यर्थः । अथ भक्त्यैवेति श्रुत्या साम्प्रतं भक्तिसाध्यता शङ्क्येत, तदपि नेत्याहुः देहादीत्यादिना । एवं च सेवकानुपयोगे तत्कृतसेवादिना प्रसादोपि दूरापेत इति साधनप्रकारेण साध्यत्वाभावादन्यस्य न भगवदुपयोग इति न तदर्थमपीदं प्राकट्यमित्यर्थः । तेन सिद्धमाहुः अतः स्वेत्यादि । अतो निःसाधनानां फलायैवेति निश्चय इत्यर्थः ।

---

१ प्रपन्न(?) भूपत्नयोजवत् । २ जारबुद्धयापि सङ्गताः । ३ स्मृतिनाशकत्वात् । ४ न मुक्तिप्रतिबन्धकत्वम् ।

नन्वेवं सति कुतो न सर्वे तदैव मुच्यन्त इत्याकाङ्क्षायां तत्र पूर्वोक्तादतिरिक्तं व्यापारद्वयं सम्बन्धनैरन्तर्यरूपमपेक्षितमिति वदतीत्याशयेन कामं

१०-२९-१५ क्रोधमित्याभासमाहुः एवं सतीत्यादि । सौहृदपदेनाविहितभक्तिरुच्यत इत्याशयेनाहुः सख्यमित्यादि । नन्वस्त्वेवम्, तथाप्यवतारदशायां मर्यादामार्गीयाणामपि सत्त्वात्तेषां कथं सिद्धिरित्यपेक्षायां निर्णयं वक्तुं टिप्पण्यामाहुः नन्वित्यादि । पूर्वोक्ता मर्यादामार्गीयाः । 'यस्य पर्णमयी'त्यादि ।

अत्र केचित् । नेदं संयोगपृथक्त्वन्यायोदाहरणं सम्भवति, फलश्रुतेरर्थवादवाक्यनिष्ठत्वेनार्थवादस्य च प्राशस्त्यपरतया विधेयस्तावकत्वेन फलविध्यन्तराभावात् विहितस्य च फलान्तराभावात् स्तुतेरसत्समारोपणरूपत्वाच्च । किन्तु 'खादिरे बध्नाति, खादिरं वीर्यकामस्य यूपं कुर्यात्, दध्ना जुहोति, दध्नेन्द्रियकामस्य जुहुया'दित्याद्युदाहर्तव्यमिति वदन्ति । तत्र तेषां वेदविरोध एव सम्पद्यते । तथा हि । परमाप्तः परमाप्तवाक्यं वा वेदः । स चेदतथाभूतं वस्तु तथात्वेन स्तुत्यर्थं वदेत्, तदा मिथ्यावादित्वेन सर्वोऽप्यनाप्त एव स्यात् । न ह्येकत्र ज्ञातमिथ्याभाषित्वस्यान्यत्र विश्वासो भवतीति विधिवाक्योक्तफलेऽपि तथा कल्पनायाः कर्तुं शक्यत्वात् । अतो विधिवाक्यप्रामाण्यरक्षणायैवार्थवादादिकमपि फलं विध्यभिप्रेततया स्वीकर्तव्यम् । यथा, 'अक्ताः शर्करा उपदधाति' 'तेजो वै घृत'मित्यत्र घृतस्य विध्यनभिप्रेतत्वे अर्थवादो न तत्स्तुतिं कुर्यादिति स्वीक्रियते, तथान्यत्रापि फलस्यानभिप्रेतत्वेऽपि न सो ब्रूयादित्यपि स्वीकार्यम्, एकवाक्यत्वानुपपत्तेरुभयत्रापि तुल्यत्वात् । न च प्राशस्त्यपरतयैवैकवाक्यत्वमभिप्रेतम्, न तु फलसमर्पकत्वेनापीति वाच्यम् । वाक्योक्तफलसमर्पकत्वातिरिक्तस्य प्राशस्त्यस्यात्रादर्शनेनान्यस्य कल्पयितुमशक्यत्वात् । यथाकथञ्चित्कल्पने तु रात्रिसत्राधिकरणन्यायेन क्लृप्तेन कल्प्यमानबाधस्य वक्तुं शक्यत्वात् । न चात्र कामशब्दाभावान्न विधेरपीदं फलमभिप्रेतमिति वाच्यम् । रात्रिसत्राधिकरणे प्रतिष्ठाया अपि तथात्वापातात् । 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ती'त्यत्रापि कामशब्दाभावात् । न च तत्रागत्या तथा स्वीक्रियते, अत्र तु होमनिष्पादकत्वेनापि फलवत्त्वसम्भवान्नार्थवादिकफलग्रहणे किञ्चिद्बीजमिति वाच्यम् । यया कयापि तया होमनिष्पत्तेः सम्भवेन पर्णमयीत्वस्य तथापि फलं न किञ्चित्पश्यामः । अतो विधिवाक्याभिप्रेतमेव फलमर्थवादो वक्तीति स्तुतिलक्षणं चोत्कर्षाधायकगुणवर्णनमिति सर्वसामञ्जस्यायाभ्युपेयम्, अतो नानुपपन्नं किञ्चित् ।

प्रकृतमनुसरामः । एवं यद्यप्येकेन प्राकट्येन द्विविधयोरपि फलं न्यायसिद्धम्, तथापि नेदमत्र श्रीमदाचार्याभिप्रेतम्, पूर्वसिद्धेति फक्किकया तत्र स्वतन्त्राविर्भावनियमोपन्यासात् । न्यायोदाहरणं तु स्वतन्त्रेच्छत्वेन कदाचित्तथात्वस्यापि संभवज्ञापनाय । अत

एव मूलेपि तथानभिप्रेतम् । तदेतद्धृदि कृत्वाहुः अत्रेदमित्यादि । **सुबोधिन्याम् । स्वतन्त्रे वैपरीत्यशङ्कायाम् । सा चातिदूर** इत्यादिना अन्यासामनिवृत्तौ हेतुकथनस्याप्यसङ्गतत्वं बोध्यम् । तदानीं प्रतिबद्धदेहत्यागज्ञाने हेतोरशक्यनिरूपणत्वात्, 'काश्चित् कृष्णान्तिकं ययु'रित्यत्र काश्चित्पदाद्वचनेन निवृत्तेरपि सूचनाच्च । 'एवं तद्भावनायुक्ता' इत्यत्र तच्छब्दस्य पूर्वपरामर्शित्वमपि तथा । यतोत्र तच्छब्दस्य विषयतया पूर्वपरामर्शितायाः प्रकृतानुपयोगित्वेन वक्तुमशक्यतया सम्बन्धित्वेन साङ्गीकृता । तत्र च सम्बन्धापेक्षया गौरवेण पूर्वानुभूतार्थविषयताया एव प्रत्यासन्नतया लाघवेनौचित्यात् । अतो भावे भेदात्र पूर्वोक्तास्वेतन्निष्ठाशेषधर्मसिद्धिरित्यप्यरुचिबीजं बोध्यम् ।

**ता दृष्ट्वेत्यत्र टिप्पण्याम् ।** अन्तर्गृहेत्यादि । ननु 'निशम्य गीत'मित्यत्र मुख्यमाकारणं वरदत्तरात्रिकाणामेवेति तदनिवारणस्यैव सुबोधिन्यां प्राञ्जलप्रतीतेरन्तर्गृहगतानां कः प्रसङ्ग इति चेत्? उच्यते। मूले 'ता'इत्यस्य

१०-२६-१७

गीताकर्णयितृसाधारण्येपि 'दुहन्त्य' इत्यादिना अन्यपूर्वाणामेव प्रस्तुतत्वात्तास्वेव कासाञ्चित्प्रतिबन्धकथनोत्तरं मुक्त्या शङ्कामात्रनिवारणेपि प्रतिबन्धहेतुप्रश्नाभावेन तदुत्तराभावादेतदनाकारितत्वशङ्कासत्त्वे तादृशनादश्रवणवैयर्थ्यापहारेण लीलायां दोषप्रसक्तेः 'ता' इत्यस्य वृत्तिसङ्कोचेन तत्परिहार एवेति बुध्यस्व । तर्हि प्रतिबन्धलीलायाः किं प्रयोजनमत आहुः **दोषेत्यादि ।** एतासां च स्वरूपं तृतीये सुबोधिन्यां निरूपितं 'ब्रह्मणा कामेन शप्ता वाक् गोपिका' इति । तथा च शुक्रेण भयात् शप्तानां कंसादीनां यथा भयादेव प्राप्तिः, तथात्र कामादिति तं दोषं निवारयितुं तथेत्यतो न कोपि शङ्कालेशः । **तदनङ्गीकारेणेति । इदं तद्भावो ज्ञाप्यत** इत्यनेन सम्बध्यते ।

**स्वागतमित्यादिसङ्ख्यातात्पर्यं टिप्पण्याम् ।** एतासां कुतो न निवारकाणीत्याशङ्कायां गुणप्रसक्त्यभावो न निवारणयोग्यत्वादित्याशयेनाहुः **एतासामित्यादि ।** क्वेति । यदि तादृश्यः स्युः, गच्छेयुः, अतो न, तथा सति

१०-२६-१८।१९

स्थापनार्थो निषेधः, तदा पिष्टपेषः, यदि गमनार्थः, तदा रसरूपत्वहानिर्वाक्यवैयर्थ्यं चेति न क्वाप्युपयोग इति प्रश्नबीजम् । **उपचारेणेति ।** सारूप्यनिबन्धनया गौण्या । तथा च यथा भगवान् 'अप्राणो ह्यमनाः' इति श्रुत्या प्राणादिरहितोपि 'आनीदवातं स्वधया तदेकम्' 'प्राणन्नेव प्राणो भवति, वदन्वा'गित्यादिश्रुत्या तत्कारी श्राव्यते, तथा 'रसो वै स'इति रसतया श्रावितो मानसीनो भावान् स्वात्मकानेवैवं तत्र तत्र विभजन् स्वं रूपं स्वदासेष्वाविष्करोतीति भावः । एवं यद्यपि श्रौतप्रक्रियया सर्वसिद्धिः, तथापि श्रीभागवतस्य पुराणत्वेनात्र तत्प्रक्रियैव ज्यायसीत्याशयेनाहुः **वस्तुत** इत्यादि । जन्मप्रकरणे 'तमद्भुत'मित्यत्र 'आत्मा कार्यं च भूतानी'ति कारिकायां ये गुणा भगवदात्मका उक्ताः, त एत एतत्कार्यका इत्याशयः । एवं विवरणेनान्तपदवैयर्थ्यं परिहृतम् । तामससात्त्विकीत्यादिविभागश्चोपपादितः । एवञ्च

भेदस्मृतिप्रतिपन्ना मायिकाः सदंशा वा, अभेदश्रुतिप्रतिपन्नाः सदंशाश्चिदंशा वा, एते त्वानन्दांशा इति बोध्यम् ।

**सुबोधिन्याम्** । **मातर** इत्यत्र । **सर्वा नागता इति** नागन्तव्यमित्यनेन 'काश्चित्कृष्णान्तिक'मित्यत्र यथा शब्दपराणामदृढो भावः, तथा युष्माक-
१०-२६-२०　मपीत्यापादितं बोध्यम् ।

**दृष्टं वन**मित्यत्र । **परितो विलोकयन्ती**रित्यनेन भावादार्ढ्यनिर्णायकमापादितं बोध्यम् । अग्रिमेत्यादिना शिष्टभेदस्य राजससात्त्विकत्वं बोधितम् ।
१०-२६-२१　**वनं तामस**मित्यादिना राजसराजसेष्ववान्तरभेदः सूचितः, तेन तुरीयपादे यमुनासम्बन्धाद्गुणातीतत्वमपि बोध्यम् । यद्यपि 'वनं तु सात्त्विको वास' इत्येकादशे भगवता सात्त्विकत्वमुक्तम्, तथापि तन्मर्यादायां विषयसम्बन्धाभावेन वैराग्यपोषकत्वात्, पुष्टौ तु रतिस्थानतया मोहकत्वाद्वनं तामसमित्युक्तम् । अत एव यत्र न रतिस्थानत्वम्, तत्र न प्रविष्टं भक्तैरिति स्फुटमग्रिमाध्याये । **पर्वादियुद्धाविति** । ननु मर्यादामार्गेपि 'नामावास्यायां च पौर्णमास्यां च स्त्रियमुपेयात्, यदुपेयान्निरिन्द्रियः स्या'दिति श्रुतेः 'पर्वाण्याद्याश्चतस्रश्च वर्जये'दित्यादिस्मृतेश्च पुरुषमधिकृत्यैव प्रवृत्तिदर्शनात्पुंस एव दोष इति ताः प्रत्येवं कथनमसम्भवीति चेत् । न । शास्त्रस्य पुरुषाधिकारकत्वेपि ज्योतिष्टोमादिफलं यथोभयोः कर्मणि सहभावात् 'सहोभौ चरतां धर्म'मित्यादिस्मृतेश्च तथा प्रायश्चित्तादिस्मृत्यनुरोधान्निषिद्धफलस्यापि समानत्वादिति बुध्यस्व । **वर्णनायामिति** । एतन्निरूपणस्य वर्णनाङ्गत्वात्तथेतिभावः । **रसोद्बोधक** इति भावप्रधानः । **श्रमदादाविति** वा, श्रमादिनिवारकत्वादिति ।

**तद्यात** मेत्यत्र । 'भवन्तश्च पुरुषा' इत्यनेन एतासां श्रुतिरूपाभ्योपि भेदो बोधित
१०-२६-२२　इति प्रतिभाति ।

**अथचे**त्यत्र । ननु सिद्धान्तस्य दूषणानर्हत्वात्कथं पूर्वपक्षार्थमनुवाद इत्यत आहुः **निरुक्त** इत्यादि । स्नेहात्सर्वत्यागपूर्वकागमनरूपः भावः भगवत्त्वेन
१०-२६-२३　कामपूरकतां गाहमानो गुणात्मकः जारत्वसङ्कीर्णतया तां गाहमानो दोषात्मक इति फलं भगवदात्मकं न प्रयच्छति, तत्र हेतुर्लौकिको भवति । अतस्तदुभयरूपतां तत्रापाद्य पूर्वपक्षीक्रियत इत्यतोनुवाद इत्यर्थः । **तर्ही**ति । यद्येवं भावेनागमनं युक्तम्, तर्हि 'ये यथा मा'मिति प्रतिज्ञा पालनीयेत्यर्थः । नन्वेवं सति प्रतिज्ञायाः कथं सिद्धिरित्यत आहुः **स्नेह एवे**त्यादि । ये मां निरुपधिस्नेहेन भजन्ते, तेष्वहं तथैव स्निह्यामीत्येतावतैव प्रतिज्ञासिद्धिः, कृतिस्त्वशक्या, नमनादीनां जीवधर्मत्वादित्यर्थः । **साधारणमिति** । सर्वत्रैवम्, न तु भवतीष्वेवेत्यर्थः । स्थितिपक्ष उपपन्नत्वं व्युत्पादयन्ति **न हीत्यादि** । फलितमर्थमुपदेशार्थमाहुः **निःकपटेत्यादि** । **उभयत्रेति** । पक्षद्वयेपीत्यर्थः ।

१०-२६-२५ **दुःशील** इत्यत्र । अधनोपीत्यादिना मूलस्थोऽपिशब्दो व्याख्यातो ज्ञेयः ।

**श्रवणादित्यत्र** । **भक्तिर्हीत्यादि** । तथा चैवं दशविधायामपि न सम्बन्धापेक्षेत्यर्थः । **सुतरामिति** । तत्रैव फलत्वस्य परिसमाप्तेस्तथेत्यर्थः । तदेव स्पष्टयन्ति **स्नेह इत्यादिना** । **तदर्थस्यानुभव** इति । मानसः परोक्षानुभवः निदिध्यासनं वा । एतयोर्दर्शनशब्दानभिधेयत्वात्पक्षान्तरमाहुः '**कृपयेत्यादि**' । स्थितिपक्षं स्पष्टयन्ति **तथेत्यादिना** । तथा च स प्रकारान्तरापन्नः, अयं तु तद्विलक्षण इत्यर्थः । तर्हि तौल्ये कतरस्य ज्यायस्त्वमित्यत आहुः **गृहेत्यादि**' । तथा च तेषां विहितं भवति, नतु स्वतन्त्रमित्ययमेव ज्यायानित्यर्थः ।

१०-२६-२७

१०-२६-२९ **इतीत्यस्याभासे** । **तत्रापीति** । शरीरपरित्यागेपीत्यर्थः ।

**प्रेष्ठमित्यत्र** । **टिप्पण्याम्** । **न स्यादेवेति** । वक्ष्यमाणं कार्यं न स्यादेवेत्यर्थः । **सुबोधिन्याम्** । **कर्तुं शक्य इति** । नीतौ वाग्वादस्यातिप्रिये एव निषिद्धत्वेनोदासीने दोषाभावाच्चेति पूर्वपक्षीकरणे हेतुरुक्तः । नन्वत्र रूपान्तरस्यादर्शनात् रूपान्तरेण वदतीत्यनिश्चयेन कथं पूर्वपक्षीकरणमित्याकांक्षायामाहुः **नहीत्यादि** । तथा च 'प्रियं किं करवाणि व' इत्यनेनोपक्रमे स्वस्य साधनत्वकथनाच्छेषैः प्रतिबन्धकरणाच्च रूपान्तरावगमः, पूर्वोक्तहासाच्च फलरूपस्यैवं तूष्णीकत्वावगम इति कार्यबलेन रूपान्तरावगतौ युक्तं पूर्वपक्षीकरणमित्यर्थः । **स इति** । फलात्मा । **तदाहेति** । तस्मात्फलात्मकत्वं शुक आहेत्यर्थः । **सर्व इति** । मुक्तिपर्यन्ताः । नन्वेवं सत्ययं कुतो न त्यज्यते तत्राहुः **काममय इत्यादि** । 'काममय एवायं पुरुष' इति श्रुत्यर्थोयम् । श्रुतिस्तु शारीरब्राह्मणस्था बृहदारण्यके । तेन स्वरूपधर्ममपि त्यक्त्वा भगवान् गृहीत इत्युक्तम् । **यदीति** । भगवता स्वानङ्गीकारे । **तस्मादिति** । सर्वकामानां भगवदर्थं त्यागात् । संरम्भप्रयोजनमाहुः **सर्वोपीत्यादि** । तथा च वाम्यतात्पर्यं निर्णीय ततो यस्येत्स्यति तद्विभासाम इत्येतदर्थं संरम्भ इत्यर्थः ।

१०-२६-३०

**मैवमित्यत्र** । **नन्वशक्य इत्यादि** । भगवानेको, भक्ताश्चानेका इत्यशक्ये स्थापने तदर्थाः स्तुतिः कथं कर्तव्येत्यर्थः । **दयायामित्यादि** । तथा च यः पूर्वं विषजलाशयादिभ्योऽत्रनेन स्वसामर्थ्यं प्रकटितवांस्तस्य 'भगवत एवं कथनं नासामर्थ्यसूचकम्, अपि तु दयाभावस्येत्यर्थः । **अनुचितपदमिति निरूपितमित्यनेनान्वेति** । **जारत्वेनेति** । जारत्वमनुसन्धायेत्यर्थः । एतेन 'प्रियं कि'मित्यत्र सूचितं कामस्य प्रियमपि निराकृतम् । अभजनाग्रहस्य दुष्टत्वमुद्घाटयन्ति ये **यथेत्यादि** । तथा च प्रतिज्ञाभञ्जकत्वाद्दुष्ट इत्यर्थः । ननु प्रतिज्ञायां यथातथेतिपदाभ्यां प्रकारसाम्यमुक्तमिति 'यथा भवत्य आगताः, तथा मयाप्यागन्तव्य'मिति तत्पूरणार्थमेव साम्प्रतमभजन-

१०-२६-३१

१ सख्यादिषु वन्दनादिषु एतादृशसम्बन्धापेक्षाऽथवा श्रवणादिसाकिसङ्क्षेपः ।

मिति चेत्तत्राहुः **यदीत्यादि** । नन्वस्त्वेवम्, तथापि भजनप्रार्थना किमर्थेत्यत आहुः **एतच्चेत्यादि** । विवक्षितं भजनं विवेचयितुमुपपादयन्ति **देवो हीत्यादि** । भजनमत्र फलदानाद्बोध्यम् । देवताविग्रहवादस्य व्यासाभिप्रेतत्वेन कर्मण्यपि देवताया एव द्वारत्वात् । शास्त्रं त्वागममन्त्रलिङ्गादिरूपम् । अस्त्वेवमन्येषाम्, तावता भगवतः कथं तथात्वमित्यत आहुः **तत्रापीत्यादि** । 'यो देवानां नामधा एक एव', 'एकं सद्विप्रा बहुधा वदन्ती'-त्यादिश्रुतेस्तत्रापि तेषु देवेष्वपि स एवेति तस्यैव तथात्वमित्यर्थः । तदेवाहुः **पूर्वेत्यादि** । भजनं भगवत्कर्तृकम् । ज्ञानभक्त्योरपि फलदानात्सुतरामिति । नन्विदं सोपधौ, तच्च 'प्रियं किं करवाणी'त्यनेनोरीकृतमेवेति प्रकृते को विशेष इत्यपेक्षायां निरुपधिप्रपत्तिव्यवस्थामाहुः **आदावित्यादि** । 'अकामः सर्वकामो वे'त्यादिस्मृतिभिर्भजनविधानात्तस्य परमपुरुषत्वेन निष्कामसेव्यत्वमुक्तम् । तथा 'सोश्नुते सर्वान्कामान्सह ब्रह्मणे'त्यादिश्रुतौ रन्तृत्वबोधनाद् देवत्वमुक्तम् । तावता निरुपधिप्रपत्तावपि भजनं सेवाकारणरूपं सिद्धमेवेत्यर्थः । तथा च प्रतिज्ञावाक्ये यथा प्रकारवाचके पदे स्तः, तथा प्रपत्तिभजनवाचके अपि स्तः, तेन यत्प्रकारिका प्रपत्तिः, तत्प्रकारकं भजनमित्यर्थो भवति । तथा सति निरुपधिप्रपत्तौ सेवाकारणरूपं सोपधौ तत्फलदानरूपं भजनं करोमीति फलति, तस्मात्प्रार्थ्यत इति भावः । तेन लोकन्यायोपि न विरुध्यत इत्याहुः **नहीत्यादि** । नहीति पदद्वयं पुरुषान्तरेत्यादावपि सम्बध्यते । नहीत्यादिना यत्सिद्धं तदाहुः **अनङ्गीकार इत्यादि** । इदं लोकन्यायाविरोधादिचिन्तनं प्रकृतानुपयोगीत्याशङ्कायां **टिप्पण्यां** तात्पर्यमाहुः **अनेनेत्यादि** । **सुबोधिन्याम्** । **एतेनेति** । 'देवो यथादिपुरुषो भजत' इति दृष्टान्तदानेनेत्यर्थः । विवक्षितविज्ञापनस्यैतावतैव सिद्धेर्मुमुक्षुपदमनतिप्रयोजनमित्याशङ्क्य तत्तात्पर्यं विवृण्वन्ति **किञ्चेत्यादि** । अत्र स्फुरतीत्यन्तं 'यमेवैष वृणुत' इति श्रुत्यर्थः, शेषस्तु लिखितायाः । ननु भजधातुः सेवावचन इत्यात्मीयत्वेन परिग्रहादेः कथं भजनत्वम् । 'एष ह्येवे'ति श्रुतेश्च 'को ह्येवान्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्या'दिति जीवनरूपं कार्यं प्रक्रम्य पाठात्कथं मुमुक्षुविषयत्वमित्याशङ्क्य न्यायेन तां निवारयितुमाहुः **स्वाप्ययेत्यादि** । अयं न्यायश्चतुर्थस्य चतुर्थपादेस्ति । तत्र हि 'न तदश्नोति कश्चन, न तदश्नोति कश्चने'ति 'सोश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति विकरणव्यत्ययेन भोजनवचनाशधातुघटिततया भोगनिषेधकतद्बोधकयोर्माध्यन्दिनतैत्तिरीयश्रुत्योरितरेतरविरोधे तत्सामञ्जस्याय मुक्तौ निर्गुणसगुणविभाग आदरणीय इति प्राप्ते स्वाप्ययसूत्रं पठित्वा 'तद्यथापि हिरण्यनिधिं निहितमक्षेत्रा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्यः, एतं ब्रह्मलोकं न विन्दन्ती'ति छान्दोग्यश्रुत्या सुषुप्तौ ब्रह्मज्ञानाभावेनाप्राप्तिश्रावणात् 'ब्रह्मविदाप्नोति पर'मितिश्रुत्या मुक्तौ ज्ञानेन परप्राप्तिश्रावणादाविष्कृतं भोगनिषेधकतद्बोधकश्रुत्युक्तं स्वाप्ययसम्पत्त्योरन्यतरापेक्षम्, 'सम-

पीतो भवती'ति श्रुतेः स्वाप्ययः सुषुप्तिः, सम्पत्तिः ब्रह्मसम्पत्तिः पुष्टिमार्गीयो मोक्षः, तयोरन्यतरापेक्षम् । तथा च निषेधिका स्वाप्ययविषया, बोधिका तु मुक्तिविषया । युक्तं चैतत् । 'लोकवत्तु लीलाकैवल्य'मितिसूत्रेण पूर्वं लीलाया मुक्तित्वेन व्यवस्थापनादिति हिशब्दार्थ इति व्याख्यातम् । तच्च प्रकृतानुपयोगीत्यस्य न्यायस्योपन्यासो न युक्त इत्याशङ्क्य टिप्पण्यां तस्यार्थमाहुः स्वाप्ययेत्यादि । अत्रेदं प्रतिभाति । तृतीयस्य द्वितीये 'तदभावो नाडीषु तच्छ्रुतेरात्मनि चे'त्यत्र सुषुप्तेर्द्वैविध्यमङ्गीकृतम् । तत्र नाडीषु सुषुप्तावानन्दाभावः । आत्मनि सुषुप्तौ तु स्वपितिनाम । 'सता सोम्य तदा सम्पन्नो भवती'तिछन्दोगश्रुतौ सुषुप्तिसाक्षिसान्निध्यस्य कथनात् । अथ 'यत्र सुप्तो न कञ्चन कामं कामयते, न कञ्चन स्वप्नं पश्यति, तद्वास्यैतदाप्तकाममात्मकाममकामं रूपम्, तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं वेद, नान्तरम्, एवमेवायं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं वेद, नान्तर'मिति ज्योतिर्ब्राह्मणे संपरिष्वङ्गकथनाच्च, तत्रापि सामग्रीसान्निध्ये सिद्धे भोगस्य निराबाधत्वान्निषेधिकायाः श्रुतेः सुषुप्तिविषयत्वमसङ्गतमिति शङ्का स्यादिति तां वारयितुं तत्र प्राज्ञरूपस्यैव सान्निध्यं परिष्वङ्गश्च, न तु परब्रह्मणः । तथा 'नाहं खल्वयं भगव एवं सम्प्रत्यात्मानं जानात्ययमहमस्मीति, नो एवेमानि भूतानि विनाशमेवापीतो भवति, नाहमत्र भोग्यं पश्यामी'ति छन्दोगश्रुतौ भोग्यकथनाद्भोगसुखादिसाक्षात्कारात्मनः अभावान्निर्विषयज्ञानस्य सत्त्वेपि तस्य भोगरूपत्वाभावात्तत्र न भोगोपीति निषेधिकाया श्रुतेः सुषुप्तिविषयत्वं युक्तमेव । एवं च सति प्रकृते 'देवो यथा भजत' इत्युक्तौ सुषुप्तिसमभजनप्राप्तिः, 'आदिपुरुषो यथे'त्युक्तौ 'तदनुप्रविश्य सच्च त्यच्चाभव'दिति श्रुतिबोधितरीत्या प्रविष्टस्यैव जीवान्तर्यामिभावेन तद्रीतिकभजनप्राप्तिः, 'देवो यथादिपुरुष' इति पदद्वयोक्त्या पर्यङ्कविद्योक्तरीत्या मुक्त्यनन्तरं भजनप्राप्तिः, नत्विदानीमिति तत्त्रयमपि व्यावर्तयितुमत्र मुमुक्षुपदम्, तेन तैत्तिरीयोक्तरीतिकं भजनं विवक्षितम्, एतदेव विशेषतो वक्तुमशक्ता इत्यनेन बोधितम् । एवं भजनं तदर्थप्राकट्येन भवति, नेतरथेति तद्बोधनाय न्यायोपन्यासोऽत्यन्तं युक्ततर इति ।

ननु मतान्तरेत्र भिन्न एवार्थः । तथा हि । 'तत्केन कं विजानीया'दित्यादौ विशेषविज्ञानवारणश्रवणं सुषुप्तिसम्पत्तिसापेक्षम्, सम्पत्तिः ब्रह्मसम्पत्तिः, परममुक्तिः, न तु सगुणविद्याविपाकभूतसगुणमुक्तिपरमिति मायावादिनः । 'एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'ति विशेषविज्ञानवारणश्रवणं सुषुप्तिमरणसापेक्षम्, सम्पत्तिर्मरणम् । 'तस्यैतस्य प्रयतो वाङ्मनसि संपद्यत' इति श्रुतेः । न तु परममुक्तिपरम्, यत 'एतेभ्यो भूतेभ्यः समुत्थाये'ति शरीरे प्रियविषयनिबन्धनं विज्ञानं 'न प्रेत्ये'ति प्रतिषिध्यते, न तु मुक्तस्य । तदवस्थाया अत्रानुक्तेः । तथा 'सर्वं पश्यः पश्यति, सर्वमाप्नोति सर्वश' इति श्रुतेश्चेति भट्टभास्कररामानुजाचार्यमते । 'तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवती'ति तीर्ण-

शोकत्वश्रुतिः सुषुप्तिमुक्तिपरेति मध्यभाष्ये। तत्कथमत्र विवक्षितार्थनिश्चय इत्याकांक्षाया-मेकहेलया तेषामविरोधं वक्तुं मायावादिमतमुपक्षिपन्ति केचित्त्विति। अविरोधं व्युत्पा-दयन्ति एवमित्यादि। सुषुप्तिब्रह्मसम्पत्त्योर्ब्रह्माविर्भावस्य सर्वमतसाधारण्यान्मरणेपि मोहद-शायां 'मुग्धेऽर्धसम्पत्तिः परिशेषादि'ति सूत्रेणार्धाविर्भावाङ्गीकाराच्च सर्वमतेपि ब्रह्माविर्भावस्यैव ज्ञानाभावेपि हेतुत्वमिति पूर्वोक्तव्याख्यानं सर्वाविरुद्धम्। अतः सुखेन निश्चय इत्यर्थः।

**प्रकृतमनुसरामि**। एवञ्च 'को ह्येवान्या'दितिश्रुतिर्मुमुक्षुविषयेति प्रकरणादे-वावसीयत इति तज्जीवनपरैवेति न कोपि शङ्कालेश इति दिक्। एतत्सर्वं हृदि कृत्वाहुः **यथेत्यादि**। एतेनेति। मुमुक्षुपददानेनेत्यर्थः। विज्ञापनविरुद्धमग्रिममिति शङ्कानिरासा-याहुः अग्र इत्यादि।

**यत्पत्यपत्येत्यत्र**। धर्मवित्पदतात्पर्यमाहुः **बहिरित्यादि**, **त्वयोक्तमित्यन्तम्**। नारदादिभिर्भगवद्धर्मस्य याज्ञवल्क्यादिभिरात्मधर्मस्यापि स्वस्वशास्त्रे कथ-

१०-२६-३२

नात् ज्ञायते, यदा तैर्देहविशिष्टस्य कर्तृत्वमनुसन्धीयते, तदैव शारीरध-र्मस्य स्वधर्मत्वमुच्यते, नत्वन्यदा। अन्यथा 'अयं हि परमो धर्मो यद्योगेनात्मदर्शन'मि-त्यादौ तस्य परमं न वदेयुः। तथा च शारीरधर्मबोधनं तत्र यथा जघन्याधिकारविषयम्, तथात्रापीत्यर्थः। अथाध्ययनविधिवदिदं प्रथमाधिकारमनुसृत्योक्तम्, नतु बाहिर्मुख्येनेति चेद्विभाव्यते, तत्राहुः **तस्यापीत्यादि**। अदूषणं व्याकुर्वन्ति **स्त्रीभिरित्यादि**। विषयनिर्धारमुपपादयन्ति **नहीत्यादि**। **सेति**। स्त्रीधर्मत्वेनोपदिश्यमाना। ननु नाहं गुरुः, किन्तु भवतीभिः क्रियमाणमनुवदामीत्यत आहुः **न चेत्यादि**। तथा च पूर्वकालीना तत्कृतिर्लोकानुसृता, न शास्त्रानुसृता, विध्यज्ञानात्, अत इदं प्रमाणवाक्यं नानुवादकमित्यर्थः। ननु इदानीं ज्ञात इति गन्तव्यमित्यत्राहुः **नापीत्यादि**। यदि सकृच्छ्रवणमात्रेण धर्मः स्फुरेत्, गुरुसेवाविधायकं शास्त्रं व्यर्थं स्यात्, अतोवश्यकर्तव्यत्वेन स्फूर्त्यर्थं तथेत्यर्थः। एवं स्वस्य प्रथमाधिकारमङ्गीकृत्य धर्मावस्थाविचारेण विषयनिर्धार उक्तः। अतःपरं वाक्यतात्पर्यविचारेण तमाहुः **किञ्चेत्यादि**, **अतो वाक्येति**। अनुभवप्रामाण्येन तथा निश्चयात्। तथा च यथा वेदे परोक्षवादेन कर्ममोक्षाय कर्मविधानम्, एवमत्रापि तद्विधानम्। तद् यथा त्वत्सेवायां पर्यवस्यति, तथेदमपीति विवितात्पर्यविचारेण विषयनिर्धार उक्तः। अतःपरं विध्यर्थानुष्ठानाधिकारविचारेणापि विषयं निर्धारयन्ति **किञ्च, धर्मेत्यादि**। धर्म्यत्र देही। **अनाप्त इति**। विधिरिति शेषः। संमतिं चात्राहुः **अत एवेति**। धर्म्यविरोधेन कर्तव्यत्वादेवेत्यर्थः। ननु सर्वस्यारादाद्यनिष्टेपि प्रवर्तनस्य दर्शनान्नायं नियम इत्यत आहुः **द्रव्येत्यादि**। तत्र मरणस्यैवेष्टत्वेन फलवत्त्वेन देहप्रतिपत्त्यन्तराभावेन च तथात्वेपि यत्र तस्य नेष्टत्वं, देहस्य प्रतिपत्त्यन्तरं फलान्तरं वा, तत्र तथात्वं न शक्यवचनम्, न्याय-

वैयर्थ्यप्रसङ्गात्, इतोऽन्यत्र तु नियम एवेत्यर्थः ॥यद्येवं तर्हि देहोनुरोद्धव्यः, किमिति मदर्थं क्रियत इत्यत्राहुः तदित्यादि । सर्वरूपत्वे गमकमाहुः यत इत्यादि । अतिशायने इष्ठन् । स क इत्यपेक्षायामात्मपदोक्तं देहादित्रयं वन्धुश्च । तथा च शास्त्रे देहानुरोधो न स्वदेहत्वोपाधिकः, अपि तु प्रियत्वोपाधिको, भवांश्च सर्वैः प्रकारैः प्रिय इति भवानेवानुरोद्धव्यो, न तु देह इत्यनुष्ठानाधिकारविचारेणापि भवानेव सेव्य इत्यर्थः । नन्वस्त्वेवं सेव्यत्वम्, तथापि देहस्य सेव्यमात्रसाधारणत्वात्तस्य मदेकविनियोगाय किमित्याग्रह इत्यत आहुः किञ्चेत्यादि । 'भवाय नाशाये'तिवाक्यं तु पञ्चमस्कन्धप्रथमेऽध्याये प्रियव्रतं प्रति ब्रह्मणोक्तम् । 'भवाय नाशाय च कर्म कर्तुं शोकाय मोहाय सदाऽभयाय, सुखाय दुःखाय च देहयोगमव्यक्तदिष्टं जनताङ्ग धत्त' इति । अत इति । अस्मिन्वाक्ये अव्यक्तदिष्टपदेन भगवद्दत्तत्वं वोध्यम् । चेतन इत्यादि । तथा च प्रियव्रतदेहस्य राज्याद्यर्थत्वाज्ञाने यथा ब्रह्मणा स वोधितः, एवमज्ञानेनान्यस्मै दाने ततो निवार्य स्वसेवार्थं प्रेरणीयाः, नतु विपरीत इति वोधितम् । नन्वस्त्वेवम्, तथापि मयेदानीं तथा प्रेर्यत इति तथा प्रियव्रतवत्कर्तव्यमित्यत आहुः अत इत्यादि, वस्त्वित्यन्तम् । तथा च स हि देहे निरभिमान इति तथा कृतवान् । तदुक्तं तत्रैव 'अनवबुध्यमान इव महामना बुभुजे' इति । हृदि तत्त्वं बुद्ध्वा बहिरनवबुध्यमान इव देहाभिमानी वेत्यर्थात् । अस्माकं तु देहः प्रियः, भवांस्तु प्रियतम इति तथेत्यर्थः । ईदृशेऽधिकारे एतदेव कर्तव्यमित्यत्र प्रमाणमाहुः अत्रेत्यादि । प्रेष्ठत्वं विवेक्तुं पदान्तरं व्याकुर्वन्ति किञ्चेत्यादि । येनेति । हेतुनेत्यर्थः ।

कुर्वन्तीत्यत्र । इदमिति । निपिध्यमानं धन्धुसाध्वसम् । तत्रापीति । साध्यसाकर्तृत्वपि । अत्रापि भगवदुक्तधर्माधिकारिनिर्धारद्वारा विषयनिर्धार एव फलिष्यतीति योध्यम् । ननु भगवदनुवृत्तेरात्महितत्वसाधनाय भगवत्सेवा आत्महिता, अविगीतमहदाचारविषयत्वात्, शीलादिवदिति वक्तव्यम् । अत्र

१०-२६-३३

रतेस्तथात्वसाधने नार्थान्तरमित्यत आहुः स्नेहेनेत्यादि । अर्थस्तु टिप्पण्यां प्रभुचरणैरेव विवृतः । तथा च रतेस्तथात्वसाधनेनैव सेवायास्तथात्वसिद्धिरित्येवं साधनं न दोषायेत्यर्थः । नन्वत्रात्महितार्थिनस्त्वयि रतिं कुर्वन्तीति कथनेन 'न वा अरे देवानां कामाय देवाः प्रिया भवन्ति, आत्मनस्तु कामाय देवाः प्रिया भवन्ती'तिश्रुत्युक्तन्यायेनौपाधिकप्रीतिप्राप्तौ सर्वात्मभाववत्त्वमङ्गप्रसङ्ग इत्यतष्टिप्पण्यामाहुः अत्रोपधीत्यादि । ननु मास्तु पुत्रादौ प्रीतिः, तथापि धर्मत्वेन नित्यकर्मवदिदमपि कर्तव्यमित्यतः सुबोधिन्यामाहुः यदीत्यादि । भगवति रतिकरणेन कथमात्मकुशलत्वमित्यपेक्षायां तदुपपादयन्ति तेषामित्यादि, अन्यगामीति । इन्द्रियमिति शेषः । अत्र प्रमाणमाहुः यत इत्यादि । इदं वाक्यमेकादशस्थम् । 'यतो यतो निवर्तेत विमुच्येत ततस्ततः । एष धर्मो

नृणां क्षेमः शोकमोहभयापह' इति । अत्र हि 'यतो यतो निवर्तेते'ति कथनान्नि-वर्तनसामर्थ्याभावेऽन्यगामिकर्तव्यतायाः प्राप्तिः, निवृत्तौ विमुक्तिकथनान्निरुद्धाना-मात्मगामिताप्राप्तिर्बोध्या । निवृत्तेरुत्तमत्वेपि न तन्मात्रकृतावेव कौशलपर्यवसानम्, अपि तु साधनविशेषेण तथा कृताविलाशयेनाहुः **तत्रापीत्यादि** । इदं च द्वितीय-स्कन्धे 'यदङ्घ्र्यनुध्याने'त्यादौ स्फुटं भवति । **पूर्ववदिति** । पूर्वश्लोक इवेत्यर्थः । एवमिदं वादमुद्रया औपाधिकप्रीतिपक्षमङ्गीकृत्य हीनाधिकारविचारेपि तेषां कौशलनिरूपणेन विषयो निर्धारितः । अकुशलैरेव बन्धुसाध्वसं न कार्यम् । मात्राद्यनुवृत्तिश्च कार्येति । अतःपरं सिद्धान्तरीत्या कौशलं तदर्थं निश्चिन्वते **किञ्च, भवानित्यादि** । तथा च 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते, स उत्तमः पुरुष' इत्यादिश्रुतिभिः 'स एव सर्वं परमार्थभूत'इत्यादिस्मृतिभिश्च तथात्वात्त्वद्रतिकर्तृत्व एव ज्ञानकौशलम्, नान्यथेति । एत-दज्ञातॄणामेव तदकरणादिकमित्यर्थः । अतःपरं सेव्यविचारेणापि कौशलं समर्थयन्ति **किञ्च, प्रियस्येत्यादि** । तथा च 'नाल्पे सुखमस्ति, भूमैव सुख'मित्यादिश्रुतिभिस्त-थेत्यर्थः । ननु भूमप्राप्तेः पूर्वमनिषिद्धे सुखसाधनेऽपि प्रवृत्तिदर्शनात्कुतोयं नित्यप्रियसे-वानिर्बन्ध इत्यत आहुः **अन्यथेत्यादि** । तथा च यद्ययं निर्बन्धो न शास्त्राभिप्रेतः स्यात्, तर्हि तथा स्यात्, यदि तथा स्यात्, तदा तदभ्यनुज्ञापि स्यादित्यर्थः । तदेतट्टिप्पण्या-मुद्भाव्य साधयन्ति **नन्वित्यादिना, एतत्समानयोगक्षेमत्वादिति** । नित्ये परि-च्छिन्ने समागमस्यैव जन्मत्वात्स यथा जन्मान्तरे तथा प्रत्यहमपि, सुषुप्तौ भगवति लीन-स्यैव जीवस्य प्रत्यहं पुनरागमनस्य 'सर्व एवात्मानो व्युच्चरन्ती'त्यादिश्रुतिसिद्धत्वान्नित्य-प्रलयसिद्धया देहस्याप्यवस्थाभेदेन भेदाल्लिङ्गशरीरस्य चामुक्त्येकत्वेनाप्रयोजकत्वात्तथेति भावः । यद्येवं तर्हि स्मृतिः कथं लौकिकपतिभजनं विधत्त इत्यत आहुः **प्रभोरित्यादि** । तथा च पत्यौ विष्णुबुद्ध्या सेवनस्य विधानदर्शनाद्गौणपक्षमाश्रित्य व्रीह्यभावे नीवारवच्च-दंशसत्तया तत्र तथा विधानमित्यर्थः । अत्र गमकमन्यदाहुः **अत एवेत्यादि** । यतो गुणाधिक्य एव पतित्वमत एवेत्यर्थः । तथा च जारे विधिबोधितगुणाभावेन दोषा-धिक्येन च न गौणमपि तदिति न तत्सेवायां गौणधर्मत्वमपीति भावः । एवमत्र धर्म-विचारकाणां ज्ञातॄणां आनन्दविचारकाणां च चरित्रस्य निर्णायकत्वकथनेन भग-वदुक्तवाक्यतात्पर्यं निर्धारितम् । अतःपरं तद्वाक्यार्थे पुरस्स्फूर्तिकेऽर्थे दोषं दर्शयन्ति **किञ्च, पतीत्यादि** । अन्यथेति । धर्महेतुत्वे । 'धर्मस्य ह्यापवर्ग्यस्य नार्थोर्थायोपकल्पत' इत्यत्र तथा निर्णयादित्यर्थः ।

१०-२९-३४ **चित्तं सुखेनेत्यत्र** । मनस इव करयोरपहरणं न संभवतीति तत्प्रकारमाहुः **कामेनेति** । भगवदभिलाषेणेत्यर्थः । **अनेनेति** । क्रियाशक्त्यभावकथ-नेनेत्यर्थः । ननु ते स्वत एव यास्यन्तीत्यत आहुः **आशेत्यादि** ।

-सिश्चाङ्गेत्यत्र । ननु यथा पित्तादिना हृदये तापो वह्निश्चन्दनादिपूरेण शाम्यते, तथायमपि वांद्यैः शमनीय इत्यत आहुः अलौकिक इत्यादि । कथमस्यालौकिकत्वमित्याकांक्षायां तथात्वं व्युत्पादयन्ति कन्दर्पेत्यादि ।

१०-२६-२५.

नन्वेवं सति मोक्षोऽस्य देय इत्यत आहुः सृष्टीत्यादि । एतत्सृष्टिकारणत्वादस्य मोक्षे इयं सृष्टिरेवान्यथा स्यादित्याशयेन फलितमाहुः कामेत्यादि । ननु देहाभावे मत्पदपर्यन्तमपि कथं गन्तव्यमित्यत आहुः देहेत्यादि । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति श्रुत्युक्तस्य देहबीजस्य अन्तर्गृहगतानामिव ध्यानेन दग्धत्वाद्देहान्तरानुत्पत्तौ अन्तर्यामी खगत्वादुड्डीय त्वत्पादयोरेवायास्यति । अक्षरस्य तद्धामत्वात्तदा तच्छायारूपा वयमपि तेन सहभूतास्तत्रैवैवं समायास्याम इति भावः । ननु दाहानन्तरं परीक्षितीव भवतीषु जीवनं सम्पादयिष्यामीति चेत्तत्राहुः हरेणेत्यादि, विशिष्टो विरह इत्यन्तेन । तत्तात्पर्यमाहुष्टिप्पण्यां वियोगेत्यादिना, अस्तीति । ननु भस्मीभूय नष्ट इत्यर्थः । अस्मिन्नग्नौ पूर्वोक्ताग्निविपरीतधर्मवत्ताज्ञानप्रकारमाहुः उक्तरूपेत्यादि । तथा च यदि तव जीवनसम्पादनेच्छा स्यात्, तदा नानेन दाहं सम्पादयेः । अतो 'भ्रमति भवानबलाकबलाये'ति गीतगोविन्दोक्त एव न्यायोत्र तवाभिप्रेत इति भावः । एतं न्यायं प्रतिरुन्धाना आहुः लोकेत्यादि । तथा चावस्थाभेदेन स्वरूपस्यैव तथात्वादप्रतीकार एव तथा न्यायो, न तु प्रतीकार इत्यर्थः । आर्द्रेन्धनत्वस्येति । अत्र विशेषणाभावप्रयुक्तो विशिष्टाभावो बोध्यः ।

यर्ह्यम्बुजाक्षेत्यत्र । टिप्पण्यां 'भगवा'नित्यादिना 'विचारात्मकतया ज्ञानमयं तप आधिदैविकाध्यात्मिकदोषा'वित्यादिना च 'यद्वांछया श्रीर्ललनाचरत्तपो विहाय कामान् सुचिरं धृतव्रते'त्यत्र ललनापदोक्तः स्त्रीस्वभाव आधिदैविकः, त्यक्तत्वेनोक्ताः मनोभिलापरूपाः कामा आध्यात्मिकस्तौ विवृतौ । एतौ च सुबोधिन्यां चाञ्चल्यपदेनैव संगृहीतौ ज्ञेयौ । श्रीश्चात्र सात्त्विकी शक्तिः, न तु ब्रह्मानन्दरूपा शक्तिरिति तत्रैव विवृतम् । तेनापीति । हेतुनेत्यर्थः । नन्वरण्यजनानां प्रियत्वे को हेतुरित्यपेक्षायामाहुः अरण्यं हीत्यादि । भगवत्प्रापकं भगवदीयं चेत्यतस्तथेत्यर्थः ।

१०-२६-२६.

श्रीर्यत्पदेत्यत्र । ननु पत्यैक्येन तुलस्याः सापत्न्यस्य सार्वदिकत्वात् 'सापत्न्यमङ्गीकृत्ये'त्यादि कथमुच्यत इत्यत आहुः चरणेत्यादि । यद्यप्यैकपत्यं सार्वदिकम्, तथापि 'श्रीविष्णुपद्या मनुजस्तुलस्या' इत्यादौ विष्णुपदसम्बन्धित्वेनैव तुलस्याः प्रसिद्धत्वात्तद्रजोपि संबन्धनैकट्यात्तुलस्या भवति, लक्ष्मीश्च भक्तिरूपस्य चरणभक्तेति प्रथमस्कन्धे 'या वै लसच्छ्रीतुलसीविमिश्रपादाब्जरेण्वभ्यधिकाम्बुनेत्री'त्यत्र श्रियो नित्यभगवत्पूजायां चरणयोस्तुलसीसमर्पणविवरणेन प्रतिपादितम्, तथा च पूर्व

१०-२६-२७.

१ करस्पर्शादिभिः ।
२ रा० पं०

सपत्नीत्वेपि विषयभेदान्न सापत्न्योद्गमः, चरणरजःकामनायां तु तदुद्गम इति तथोच्यत इत्यर्थः। **तत्रेति** । पदाम्बुजे । **महिष्य इति** । एतेन अष्टावक्रप्रसादशापयोर्गोचरा व्यावर्तिताः ।

१०-२९-३९.

**वीक्ष्येत्यत्र** । **भगवत्प्रमाणावलम्बिनीति** । भगवतः प्रमाणं श्रोत्रं तदवलम्बिनीत्यर्थः । एवं च भगवत्प्रमाणं वेदोपि भवतीति वेदाविरुद्धसांख्य(योग)योस्तदवलम्बित्वं फलति, तयोश्च मुखनिरीक्षकत्वेन भक्त्यभिलाष एव तन्निष्ठानाम्, न तु तत्प्राप्तिरपीति सूच्यते । मूले श्रियेतीयङ् छान्दसः। तथा च श्रियाः एकं मुख्यं रमणं यत्रेति विवक्षितं तदाहुः **श्रीरपीत्यनेन** । **धर्मस्यापीति** । 'धर्मः स्तन' इति वाक्यात्तस्यापि तत्स्थानमिति लोके श्रीसाधनभूतः सोपि तत्रैव रमत इत्यर्थः। **विधिप्रयुक्तेत्यादि**। वीक्षणस्येति शेषः । तथा च विध्यप्रयुक्तवीक्षणस्य दास्यहेतुत्वेन तदसाधकविध्यनङ्गीकारोऽस्माकं युक्त इति भावः । **पड्भिर्गुणैरिति** । **अलकावृतेत्यादि**-विशेषणोक्तैः क्रमेणैश्वर्ययशोवैराग्यज्ञानवीर्यश्रीभिरित्यर्थः ।

१०-२९-४०.

**का स्त्रीत्यत्र** । **अयमिति** । सन्मार्गरक्षणरूपः । ननु यह्व एतादृश्यो या नाभिसरणं कुर्वन्ति, भवत्योपि तादृश्य एवेति कथमेवमुच्यते इत्यत आहुः **एवमित्यादि** । सतीनामपीत्यर्थः । ननु धर्मस्थापकस्य कथं नाशकत्वम्, तत्राहुः **अद्भुतेति** । यथा 'चस्कम्भ यः स्वमहसाऽस्खलता त्रिपृष्ठ'मित्यत्र पातुकाया एव क्रियायाः स्थापकत्वम्, यथा च 'वादैर्विमोहयति यज्ञकृतोऽतदर्हानि'त्यत्र वेदबाह्यबोधकस्य वेदस्थापकत्वम्, तथात्र विपरीतमित्यर्थः । नन्वेवं सत्येतत्कृतेरधर्मरूपत्वमिव स्यादित्यतः पक्षान्तरमाहुः **वस्तुत इत्यादि** । **तैरिति** । स्वरूपधर्मैः । तथा च प्रतियोगिभेदेन व्यवस्थयात्रापि धर्मस्थापकत्वमेवेति न दोषलेश इति भावः । नन्वविद्यापर्वभिरेव मोहसम्भवे किमिति कलादीनां मोहकत्वमुच्यत इत्यत आहुः **भगवदित्यादि** । गीतस्य देहमोहकत्वे किं मानमत आहुः **गायन्तमित्यादि**। ननु कामनाया मनोधर्मत्वेन मनोमोहकत्वं युक्तम्, न तु देहमोहकत्वमित्यत आहुः **स्त्री तु देह इति** । स्त्रीत्वस्य जीवेन्द्रियप्राणान्तःकरणेषु वक्तुमशक्यत्वात्तस्यैव च कामनायां प्रयोजकत्वात्तथेत्यर्थः। **इन्द्रियाणामित्यादि** । इन्द्रियाणां रूपादिग्राहकत्वेन वेणुद्वारा वामपरावर्तादिरूपेण वेणुविशिष्टस्य रसात्मकस्य स्वरूपस्य विषयत्वे वेणुरपि नाट्य इव रसात्मकतयैव भासत इति अमृतस्य द्रवत्वेनापोमयप्राणपोषकतया, पदानां सूक्ष्मरूपस्य मनोमयतया, एतस्या अव्यक्ताया आनन्दीयत्वेनात्मनि चानन्दस्याव्यक्ततया साजात्येन प्राणान्तःकरणात्ममोहकत्वमिति प्रतिभाति । अत्रैवं बोध्यम्। द्वितीयस्कन्धे सत्त्वरजस्तमसां क्रमेण सच्चिदानन्दमलत्वं प्रतिपादितम् । तत्राविद्या तामसी मलिनसत्त्वरजोयुक्ता तमसा स्वस्वरूपाज्ञानं विधाय रजःसत्त्वाभ्यां देहादिषु विषयेषु च व्यामोहमुत्पादयति । भगवत्सम्बन्धात्तस्या अबाध-

कत्वे लीलायां मोहः स्वरूपविषयक उक्तैरेव स्वरूपधर्मैरुक्तरीत्या सम्पद्यत इति ।
**टिप्पण्याम्** । **अयं मार्ग** इति । प्रवृत्तिरूपः प्रमाणमार्गः । वस्तुविचारासहत्वमुद्घाटयितु-माहुः **न चे**त्यादि । तथा च 'शुद्ध्यशुद्धी विधीयेते समानेष्वपि वस्तुषु' इत्यारभ्य 'गुण-दोषौ विधीयेते नियमार्थं हि कर्मणा'मित्यन्तस्य भगवद्वाक्यस्योपबृंहणतया श्रुत्यर्थनिश्चाय-कत्वेन वस्तुतः सर्वसाम्ये सिद्धे विधिनिषेधयोः कर्मार्थतया न वस्तूत्तमत्वादिनियामकतेति भावः । **एतद्विरोधापरिहारा**दिति । प्रमाणमार्गविरोधापरिहारात् । एतस्योत्तरमग्र इत्यादिग्रन्थं व्याकर्तुमाहुः **नन्वि**त्यादि । **सुबोधिन्याम्** । **तस्मादत्रे**ति । मार्गान्तरवि-रोधस्याप्रादुष्टत्वात् प्रमेयमार्ग इत्यर्थः । कलपदेत्यादिनोक्तमोहकस्य शब्दरूपत्वेन वेद-तुल्यतया मार्गद्वयस्य समबलत्वे प्राप्ते 'श्रवणाद्दर्शनादि'ति भगवद्वाक्यस्य प्रमाणमार्गोपोद्बल-कतया तस्य बलिष्ठतायां तद्विरोधस्य प्रतिबन्धकत्वमाशङ्क्याहुः **किञ्चे**त्यादि । **नाम्ने**ति । शब्देन । त्रैलोक्यमेवेत्येवकारोऽग्रिमपदेन योज्यः । दृष्टान्तानुगुण्यात् । तथा च गीतरूप-शब्दमात्रेण प्राप्तौ मार्गद्वयस्य तुल्यत्वं शंक्येतापि, न त्वत्र तथेति न तस्य प्रतिबन्धकत्व-मिति भावः । अतःपरं प्रमाणविचारस्य फल्गुत्वमभिसन्धाय स्वरूपस्यैव चालकत्वं कैमुति-केन वदन्तीत्यभिप्रायेणाहुः **अस्त्वि**त्यादि । **नेदमाश्चर्यम्** । बलवत्प्रमाणप्रमेयाभ्यां प्रमा-णान्तरबाधस्य औदुम्बर्यधिकरणे 'औदुम्बरीं स्पृष्ट्वोद्गायेत्, सर्वा सा वेष्टयितव्ये'त्यत्र दृष्ट-त्वादियं प्रस्तुता प्रमाणवार्ता प्रमाणबलाबलचर्चा अस्तु, विरमताम् । तत्र हेतुः **दुर्बले**ति । स्वरूपधर्मविचारापेक्षया दुर्बलत्वात् । तर्हि स्वरूपेण कथं चालनमित्यत्राहुः **प्रकारान्तरे-णे**त्यादि, **नाश्चर्यं किञ्चिदत्रे**त्यन्तम् । तथा च स्वरूपं गानं च येषां प्रमेयमर्यादां नाशयति तेषां चलनं, येषां न नाशयति तेषां प्रमेयमर्यादया स्थितिरिति व्यवस्थायां सिद्धायां, येषां प्रमेयमर्यादापि चलनानुगुणा, तत्र 'अधिकं तत्रानुप्रविष्टम्, न तु तद्धानि'रिति न्यायान्नाश्चर्यमित्यर्थः । एतेन सगुणैव चलति, न तु निर्गुणेति मूले .केतिपदमनतिप्रयोजन-मित्यपि निरस्तम् । 'आत्मारामाश्च मुनय' इत्यादिवाक्यानि समर्थितानि ।

१०-२६-४१. **व्यक्तमित्यत्र** । नन्वत्र किं भगवद्वाक्यार्थनिर्धारकरणेन प्रसन्नं भगवन्तं ज्ञात्वा कृपा प्रार्थ्यते, उत सन्देहेपि स्वदैन्येन, उत हेत्वन्तरेण । आद्ये स्वत एव तत्सिद्धेः प्रार्थनाप्रयोजनाभावः । द्वितीयेपि वाक्योक्तिभिरेव तदनङ्गीकार-सूचनान्न तदौचित्यम् । तृतीयं तु न स्पष्टमित्याशंकायां द्वितीयं सूचयन्त्यस्तृतीयं व्यक्ती-कुर्वन्तीत्याशयेनाहुः **नापी**त्यादि । अत्र यद्यपि वासुदेवकार्यं नोक्तमिति प्रकृतं वासुदेव-कार्यमिति भवति, तथापि पूर्वं मुक्तेस्तत्कार्यत्वेन सिद्धत्वाल्लोकवेदातीतपुरुषोत्तमकार्यस्य प्रस्तावादवतारान्तरकार्यपदेन पुरुषोत्तमकार्यमेव तदिति । वासुदेवव्यूहानुक्तिस्तु तस्य व्रजे स्वन्यार्थमाविर्भावेन भगवदैक्येन स्थित्येति प्रतिभाति । **देवो भूत्वे**ति । क्रीडापरो भूत्वा । **तथे**ति । क्रीडार्थमवतीर्ण इत्यर्थः ।

इति **विक्रीडित**मित्यत्र । ननु परार्थेपि रमणे योगेश्वरेश्वरत्वकथनाद्योगिवद्रमणमायाति । ते च संकल्पादेव तथा तथा विदधतीति 'सङ्कल्पादेव च तच्छ्रुते'रित्यत्र सिद्धं मतान्तरे, स च कामजनक इति कामस्यापि सिद्धौ कथमात्मारामत्वं युज्यत इत्याकांक्षायां तदुपपादयितुमाहुः **क्रिया सर्वे**त्यादि । अत्र **कारिकाव्याख्यानं टिप्पणीपुस्तकेषु दृश्यते, तत्पाण्डुलिखने नास्तीति श्रीगोकुलनाथानां तत् प्रतिभाति, लेखरीत्यापि तथेति च ।** क्रिया रमणोपयोगिनी, **सर्वा** रसोद्बोधिका पोषिका पूरिका च । अपिशब्दात्तदवान्तरभेदभिन्ना च । सैव 'रसो वै स'इति श्रुत्या भगवतो रसात्मकत्वेन रसशास्त्रसिद्धैवात्र रमणे, **परं** किन्तु कामो न विद्यते, कामो नास्ति । तथा च न योगिवद्रमणम्, किन्तु यथा योगेऽणिमादिसर्वस्फूर्तिः, तथात्र तदीश्वरत्वेन रमणोपयोगि सर्वमभिध्यागोचरीकृत्य स्वस्वरूपमेवेन्द्रिया(दि)भावेन प्रकटीकृतवानिति । यथा पुरुषविधब्राह्मणे 'स वै नैव रेमे'इत्यादिना रमणादिकथनोत्तरं 'सोनुवीक्ष्य नान्यदात्मनोऽपश्य'दित्युपसंहारात्तत्र कामाभावः, इच्छाया अपि स्वरूपानतिरेकात्, एवमत्रापि, तेन तत्र यथा तत्क्रियासत्त्वेप्यात्मारामत्वम्, एवमत्रापीत्यर्थः । ननु श्रुत्युक्ता लीला स्वाभाविकी स्वार्था च, प्रकृता तु परार्था आगन्तुकी, सा च यदर्था तदनुरूपैव भवित्री, सर्वत्र तथा दर्शनात् । एवं सति यदर्थेयं लीला तास्तु 'त्वत्सुन्दरस्मितनिरीक्षणतीव्रकामतप्तात्मना'मित्यादिवाक्योक्त्या सकामत्वेन निर्णीयन्त इति तत्सम्बन्धालीलायास्तत्कामपूरकतया कामोपाधिकत्वे सिद्धे भगवत आत्मारामत्वं कथं सिध्यतीत्याशंकायामाहुः **तासा**मित्यादि । लीला हि भगवद्धर्मरूपा, भगवांस्तु निष्कामत्वेन सर्वश्रुतिसिद्ध इति तदीयलीलया तत्कामपूर्त्या ता अपि निष्कामाः । श्रुता 'यथाकामयमान'इति प्रतिज्ञाय 'योऽकामो निष्काम आप्तकाम'इति कथनेनाप्तकामस्य निष्कामकोटिनिवेशात् । प्रकृते च 'सन्त्यज्य सर्वविषया'नित्यत्राप्तकामतया तथात्वस्य स्फुटत्वात् भगवता कामपूर्तेः 'सोश्नुते सर्वान् कामा'निति श्रुत्युक्तरीतिकतया तत्कृतावपि भगवतो निष्कामत्वेन तत्सम्बन्धात्ता अपि तथेत्यर्थः । नन्वस्त्वेवम्, तथापि तासां वाक्येषु 'संत्यज्ये'त्यत्राप्तकामत्वस्येव 'त्वत्सुन्दरे'त्यत्र तदतिरिक्तकामवत्त्वस्यापि स्फुटत्वान्न सर्वथा निष्कामत्वविनिगमनेत्याकांक्षायां तदुक्तमभ्युपगम्य कामवत्त्वेपि निष्कामत्वं परिचाययितुमाहुः **कामेने**त्यादि । यथा द्वारकालीलायां मद्दिष्यादिकामः प्रद्युम्नरूपेणामोघरेतसा भगवता कामेन पूरितः, पुत्रादिरूपं संसारं जनयन् प्रकटोऽभूत्, एवमत्र मूलरूपीयकामेन पूरितश्चेत्स स्यात्, अत्रापि तं जनयन् स्फुटः स्यात्, यतो नैवम्, अतो नायं कामेन पूरितः । यतः पूरितः, अतः कामाभावेनैव पूर्णः, अतो निष्कामः, यद्वाविष्टदारुवत् कामस्वरूपादेव

१० - २९ - ४२.

---

१. इदं पाण्डुलिखनं सुरतिपुरे श्रीमद्द्वारकेश्वरप्रभुमन्दिरे शेषायां विराजते । अनेन दृष्टोऽस्य श्रीमदीयस्मनो सुदर्शनार्थिनः ।

निवृत्त इत्यर्थः । ननु महावन्ध्यात्वभावकमेपजमक्षणत्वभावादिनापि संसाराजननस्य दृष्टत्वात्तर्कितो हेतुः साधारण इति शङ्कायां साधारण्यबाधकमत्र मानं स्मारयन्ति **न संशय** इति । 'न मय्यावेशितधियां कामः कामाय कल्पते । भर्जिताः क्वथिता धाना भूयो बीजाय नेशत'इति भगवता भावविरमणबोधनसमय एवोक्तत्वात् । तथा च दग्धपटे पटत्वं यथाकारमात्रेण प्रतीयते, तथात्र क्रियासाम्येनोभयत्र तत्प्रतीतिः, न तु भगवति भक्तेषु वा काम इत्यर्थः । क्वापीत्यनेन रसशास्त्रीया ब्रह्मधर्मीया संगृहीता ज्ञेया । तत्र ब्रह्मधर्मीयाया अभङ्गस्तु साधित एव, रसशास्त्रीयायास्तु स्वधर्मादिप्रवेशेन साम्यसम्पादने 'निरञ्जनः परमं साम्यमुपैती'ति श्रुत्यावधारणीय इति निगूढाशयो बोध्यः । शेषं टिप्पण्यां स्फुटमिति दिक् ।

**ताभिः समेताभिरित्यत्र** । चेष्टिते रसविषयकसौदार्यस्योक्तत्वेन महारसाविर्भावस्य तत एव सिद्धौ हासौदार्ये किंप्रयोजनकमित्यपेक्षायामाहुः **तासामित्यादि** । अतिशयिते निकटसम्बन्धे स्वरूपधर्मज्ञानावश्यंभावान्माहात्म्यस्फूर्त्या भयोत्पत्तौ रसो भज्येतेति तदभावाय मोहस्यावश्यकत्वादुदारेण तेन स्नेहः संवर्धितः । तथा च मोहेन स्नेहसंवर्धनाय तदित्यर्थः । नन्वेवमौपाधिकस्नेहवर्धने निरुपधेस्तस्य न्यग्भावापत्त्या महानेवानय इति शङ्कायां **टिप्पण्यां** तदाशयमाहुः **अत्रायं भाव** इत्यादिना । (१०-२६-४३.)

**नद्या इत्यत्र** । **रेम** इति । अरीरमदिति पूर्वमुक्तत्वात् तदर्थं एतेन परास्पृष्टः । जुष्टमित्यस्य वायुनान्वयः । **तत्तरलानन्दीत्यत्र** तरङ्गसम्बन्धसार्वदिकत्वादानन्दे विशेषाभावेनापुष्टार्थत्वमाशंक्य तदर्थमाहुः **ताभिरिति** । तथा च तस्यास्तरला यत्रेति तत्तरलं तादृशं च तदानन्दि च तरङ्गाणां पूर्वमपि सत्त्वेनार्थात्ताभिरानन्दीत्यर्थः । (१०-२६-४५.)

**तासामित्यत्र** । **पूर्णतेति** । भगवद्धर्मरूपा आप्तकामता । 'सोन्तःकरणसम्बन्धी'ति कारिकायां पूर्वं सूचितं तिरोभावहेतुं स्मारयन्ति **कायिकतिरोभावेत्यादि** । अयं कायिकतिरोभावः 'कस्य रूपमभूद्द्वेधा तत्कायमभिचक्षत' इति कायपदनिरुक्त्या द्वैधीभावहेतुकाभिध्यानकृतं देहे कायत्वमिति प्रकृते स्वरूपद्वैधीभावं विधाय बाह्यं कायं ताभ्यस्तिरोधापितवान् । तत्र हेतुः । प्रथमाधिकारित्वात्सर्वात्मभावारम्भकक्षात्मकाधिकारवत्त्वादिति । तथा च सर्वात्मभावारम्भदशायामेवैवं भावो, न तु पूर्णदशायाम् । तदा चैवं बहिस्तिरोभावेन रसात्मनान्तःस्थितिरिति मर्यादानेन बोधितेत्यर्थः । (१०-२६-४८.)

इति पड्विंशाध्यायसुबोधिनीटिप्पण्योः प्रकाशः ।

**सप्तविंशाध्यायं** विवरिषवः प्रसङ्गरूपां सङ्गतिं बोधयितुं पूर्वाध्यायार्थं सार्धेनानुवदन्ति **स्वानन्देत्यादि** । **स** इति, आनन्दात्मा रसः । प्रसङ्गतावीजं टिप्पण्यां स्फुटम् । **किमुतेति**, सर्वात्मभावाधिकारेऽतः परं किमवशिष्टम्, अपि तु निरोधात्मनः प्रलयस्य जातत्वेन सर्वात्मभावस्य पूर्णोऽधिकारः सम्पन्न इत्यर्थः । तत्र गमकमाहुः **अत एवेत्यादि** । **सुबोधिन्याम्** । **चत्वारोत्रेति** । अत्रेत्यनेन रसपोषिका विप्रयोगावस्था परामृश्यते, न त्वध्यायः । यद्यपि 'गायन्त्य उच्चै'रित्यत्र गानमप्युद्दिष्टम्, तथापि लक्षणफलयोरनुक्त्या तन्नादावित्यादिपदेन च गानस्य पाश्चात्यत्वं बोध्यते, तेन न विरोधः । यद्वा । उद्देशविचारेण 'तद्गुणानेव गायन्त्य' इति समाप्तौ कथनेन चाध्याय एव चत्वारोर्थाः, लक्षणादिविचारेणादौ त्रयः । चतुर्थस्तु न लक्षितः, तथाप्युपक्रमोपसंहारयोस्तद्दर्शनादर्थत्रयेनुस्यूतः समनन्तराध्यायोक्तत्प्रकारादेव बोध्यश्चेत्याशयाद्वा न विरोध इति बोध्यम् । **उद्देशत** इति, उद्देशोत्र न नाममात्रेण कीर्तनम्, किन्तु संक्षेपेण कथनम्, एकदेशेन कथनं वा । 'एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मये'त्यत्र तथा दर्शनाद्व्याख्यानाच्चेति न टिप्पण्यामनुपपत्तिः । अन्वेषणस्य वह्निज्वालावदविनाभूतधर्मत्वात्पददर्शनस्य तत्फलत्वेपि रसासक्तिफलत्वं न विरुध्यत इति बोध्यम् । आद्ये नायकदर्शनाभावजतापरूपेण रसासक्तेः कथनात् । द्वितीये 'तास्ता' इति संक्षेपेण 'रमापतेर्विचेष्टा'इत्येकदेशेन च लीलाकथनात् । तृतीये च 'तदात्मिका'इति भगवदात्मकत्वकथनेनैकदेशतो गर्वाभावस्य कथनात् । एवमर्थत्रयनिरूपणे प्रतिपाद्यानुगमादध्यायार्थमाहुः **सप्तविंश इत्यादि** । तथा च त्रिभिरप्यत्र रसान्तर्गतिकरणमेव प्रतिपाद्यते इति त्रितयनिरूपणेपि नाननुगम इत्यर्थः ।

**अन्तर्हित इत्यस्याभासे** । **तत इति** । विस्तृत इत्यर्थः । **गत्यानुरागेत्यत्र** । **अन्यथैवं सतीत्यादि** । स्मिताभावपूर्वकमीक्षणे सति ईक्षणस्य ज्ञानात्मकत्वात्तथा स्यादित्यर्थः । **तद्धर्मेषु चेत्यत्र चो**वधारणे, तेन धर्मेष्वेव समागता इत्यर्थः । स्मितस्य मोहकत्वात्तैनैकस्वनिष्ठतात्याजनसम्भवे तद्विलासस्य नात्यन्तमुपयोग इत्याकांक्षायां तत्तात्पर्यमाहुः **अनुरागेत्यादि** । तथा च कटाक्षेषु तस्योपयोगात्तदुक्तिरित्यर्थः ।

१०-२७-१-२.

**गतिस्मितेत्यत्र** । तदात्मकत्वे **असाविति** प्रयोगो न युज्यत इत्याशङ्क्य पक्षान्तरमाहुः **अथवेति** ।

१०-२७-३.

**गायन्त्य इत्यत्र** । **एवमित्यादि** । अनेन प्रकारेण तापाद्युद्देशाद्रसासक्त्यादिसम्बन्धमुक्त्वेत्यर्थः । **टिप्पण्याम्** । **एतावत्कालपर्यन्तमिति** । सृष्टिमारभ्य कृष्णावतारकालपर्यन्तमित्यर्थः । अधुनेत्यनेना'प्यथ सर्वगुणोपेत' इत्युक्त एव कालः परामृश्यत इति ज्ञेयम् । **तज्जनितत्वेनेति**। बहिःसंवेदनजनितत्वेन।

१० २७-४.

---

१ एकत्र्यंशं तु पद्यत्रुनुस्यूतमिति तदर्थिकाम् ।

उक्तज्ञानेत्यादि । 'कैवल्यं सात्त्विकं ज्ञान'मिति वाक्यादखण्डाद्वैतमानं जीवधर्मः, जीवश्च चित्प्रधानः । प्रकृतं तु ज्ञानं वरणैकलभ्यम्, स्वामिन्यश्च भगवत्पराः, विषयश्च पूर्वोक्त इति तथेत्यर्थः । एकादशे भगवद्वाक्येषु व्रजरत्नानामेव सर्वोत्कृष्टत्वेन निरूपणात् 'मत्स्वरूपाविदोऽबला'इति च कथनादत्र च 'शुको ही'त्यादिग्रन्थे भक्तापेक्षया शुकस्योत्कर्षप्रतीतेर्मूलविरोधः, पुष्टिप्रवाहमर्यादाग्रन्थे 'शुद्धाः प्रेम्णातिदुर्लभा'इत्युक्तेः 'एतादृशस्तु पुरुषः कोटिष्वपि सुदुर्लभः । यो दारागारपुत्राप्तप्राणान् वित्तमिमं परम् । हित्वा कृष्णे परं भावं गतः प्रेमप्लुतः सदे'ति निबन्धस्य च विरोधः प्रतीयत इति तत्परिहाराय 'शुको ही'त्यादिग्रन्थतात्पर्यमाहुः **अत्रायं भाव** इत्यादिना, **सूच्यत** इति । तथा च यत एतादृशः ज्ञानमिश्रभक्तः, न तु शुद्धप्रेमभक्तः, अत एवं वदतीत्याशयेन कैमुतिकन्यायः 'शुको ही'त्यादिग्रन्थेन सूच्यत इत्यर्थः । अत्र भक्तिपरमकाष्ठाज्ञापनाय कैमुतिकान्तरमाहुः **किञ्चे**त्यादि, **अनेने**त्यन्तम् । तथा च न विरोधलेशोपीति भावः । ननु 'परिनिष्ठितोपि नैर्गुण्य' इत्यत्र शुकेन स्वस्य भगवल्लीलागृहीतचित्ततायाः प्रतिपादितत्वेन तस्मिन्नपि भक्तेरेवोद्रेकात्तस्यापि ज्ञानाभाव एवोचितो, नत्वेवं कथनमित्याकांक्षायां तदधिकारस्वरूपपरिचायनायायं ग्रन्थ इत्याहुः **शुकस्ये**त्यादि। तथा च यदि तस्य न्यग्भूतज्ञानाच्छुद्धभक्तिरेव स्यात्, तदैवंभावेन श्रीभागवतं न प्रचरेदेव । अतस्तदर्थं शुकस्यैतादृक्स्वरूपं शाब्दमेव, न तु भक्तानामिवानुभव इत्येष तदधिकार इति ज्ञानभक्त्युद्रेक इत्यर्थः । इदमेव 'गुणगाने सुखावाप्तिर्गोविन्दस्य प्रजायते । यथा तथा शुकादीनां नैवात्मनी'त्यत्रापि बोध्यम् । पूर्वोक्तमिदं च द्रढयितुं भूतपदतात्पर्यमाहुः **अपरञ्च, सर्वेष्वि**त्यादि, **भवती**त्यन्तम् । तथा च न काल्पनिकमस्मदुक्तम्, अपि तु भूतपदप्रयोगादर्थसिद्धम्, अतो न शङ्कालेश इत्यर्थः । ननु भक्तानां रसज्ञत्वे सर्वदैव कुतो नैवंभाव इत्याकांक्षायां पूर्वोक्तं स्मारयन्ति **एतावानि**त्यादि । ननु भगवतः पुरुषत्वात्स्त्रीत्वावच्छिन्नानामेव रसाभिज्ञानमुचितम्, नत्वेतासामेव, अतो न भूतपदार्थिकमत्र सम्भवदुक्तिकम्, अत आहुः **कात्यायनी**त्यादि । तथा च यत्र प्रसादशक्त्यादिसम्बन्धः, तत्रैव तदभिज्ञानम्, नान्यत्रेत्यतः शङ्कानिवृत्तेरार्थिकं न प्रतिषेद्धुं शक्यमित्यर्थः । एवमाभासव्युत्पादनेनाधिकारतारतम्यं विविच्य व्याख्यानव्युत्पादनेन तद्दृढीकर्तुमाहुः **अपरञ्च, भगवती**त्यादि । **अभावा**दिति । ज्ञानाभावात् । बहिरनुसन्धानं वारयन्ति **परन्त्वि**त्यादि । तथा च 'स एवावस्था'दित्यादिना आनितभावस्य बहिरन्तर्ज्ञानाभावरूपव्यभिचारिभाव एतास्वेव स्फुटो, न शुक इति प्रथमनिक्षेपणादेवावसीयते । तत्र हि 'भूतानां छिद्रदातृत्वं बहिरन्तरमेव चे'ति कापिलेय आकाशलक्षणे आकाशे तथात्वस्य निरूपणाच्छुकेन तद्दृष्टान्तपूर्वकं व्यापकत्वकथनात्स्वस्य तदनुसन्धानं ज्ञाप्यत इति स्फुट एवाधिकारभेद इत्यार्थिकार्थानादरेपि नाधिकारतारतम्यं व्याहन्यत इत्यर्थः । एवं व्याख्यानोक्तं व्युत्पाद्य स्वतन्त्रतया प्रकारान्तरेण पूर्वोक्ताधिकारता-

रतम्यं व्युत्पादयन्ति **यद्वेत्यादि । उचितमिति** । अन्तर्ज्ञानेप्युचितम् । तथा चैवमौपसदन्यायेन भगवद्विचारितादधिकारतारतम्याच्छुकस्य भक्तत्वेपि नैतदधिकार इति तस्य स्वास्थ्यादिकम्, नैतासाम्, अन्तर्ज्ञानं तूभयोस्तुल्यम्, परमेतासामधिकारस्वभावात्प्रतिहन्यते, तस्य तु नेति सर्वमौपसदन्यायादेव समञ्जसम्, न कोपि विरोध इत्यर्थः। प्रकारान्तरेण व्याख्यानं तु 'उपेयप्रतिपत्त्यर्थमुपाया अव्यवस्थिता' इति न्यायात्, नतु पूर्वोक्ते अस्वरसादिति न दोषलेशः।

**दृष्ट** इत्यत्र । वनस्पतिमात्रे वैष्णवत्वस्य तुल्यत्वेपि प्रथममश्वत्थादिषु प्रश्ने हेतुमाहुः **तत्रापीत्यादि** । अत्र प्रश्नोत्तरं नामोक्तेस्तत्सूचितमर्थमाहुः **तथापी-**

१०-२७-५.

**त्यादि** । एवमग्रेपि ज्ञेयम् । नन्वेते महत्त्वात्पृच्छ्यन्ते चेत्, अनुत्तरणेपि दूषणमेतेषु न वक्तव्यम्, अपि तु स्वस्मिन्नेवारोप्यमित्याशङ्कायामाहुः (**अयं हीति**। पावित्र्यं स्नानं तस्य स्मरणात्।) **अग्रे इत्यादि** । तथा च तान्विहाय भगवतोग्रे गमने इदं हेतुत्वेन सम्भाव्य वदन्तीत्यर्थः । **नामाग्रहणं चेति** पक्षान्तरे भवतीभिः स्वमनोरक्षणं कुतो न कृतमित्याभासो ज्ञेय इत्यभिप्रायेणाहुः **अत एवेत्यादि** ।

**कच्चित्कुरवकेत्यत्र। भर्तृनामेत्यादि** । एतेन कुमारीवाक्यत्वं बोधितम् । श्लोकद्वयोक्तेषु दूषणान्तरमाहुः **पूर्वोक्तेत्यादि**। 'यत्राकृतिस्तत्र गुणा वसन्ती'ति-

१०-२७-६.

वत्पुष्पाणां शोभाधायकत्वात्तदभावेन गुणाभावः पूर्वोक्तेषु । एतेषु फलाभावात्प्रश्नस्याप्यफलत्वमिति भावः ।

१०-२७-७. **कच्चित्तुलसीत्यत्र । नानाविधेति** । एतेनान्यसम्बन्धस्तेषूक्तः ।

**अप्येणपत्नीत्यत्र। भीरुत्वादीत्यादिपदेन** स्वासामिव तासामपि भगवद्व्याप्तेर्निर्वृतिः,

१०-२७ ११. भगवता तथा करणं संगृह्यते । **अन्यथेति** । उक्तप्रकारकदर्शनाभावे ।

**बाहुं प्रियांसेत्यत्र। टिप्पण्याम्।अग्रे गमनाभावश्चेति**। देशान्तरे भगवद्गमनाभावः, चोप्यर्थे, ज्ञानविषयतया सम्भवतीति शेषः । एतासामेव वा ।

१०-२७-१२.

**तत्रापीति** । भगवद्भावानुभावेन लीलास्फूर्तावपि । इदं अनवहिता इत्यनेन योज्यम् । ननु तीक्ष्णभावशान्त्यर्थमेव चेत्प्रदर्शनं किमित्यग्रे तत्प्रदर्शनमित्यत आहुः **अग्रे त्वित्यादि । एवमुक्तमिति** । अत्र ज्ञापकान्तरमुक्तम् । **तेनेत्यादि** । यद्येन सामस्त्येन तदपीडया चालिनिवारणसंभवादित्यर्थः । **मर्यादामार्गीयभक्तिरसेति**। कामरहितभक्तिरसेत्यर्थः ।

**इतीत्यस्याभासे । एतदुपमर्दिकेति** । तापोपमर्दिका । **प्रथमस्यापगम इति** । ज्वालापगमेन वह्नेरिव प्रश्नान्वेषणरूपयत्नतिरोधानेन, रसासक्तेस्तु-

१०-२७-१४.

वाग्भ्यां तिरोधान इत्यर्थः । **उक्ताः कृताश्चेति** । प्रमाणादिप्रकरणीयाः

१. ३-३-३३-मक्षसूत्रोपन्यायेन । २. मूले नास्ति ।

फलप्रकरणीयाश्चेत्यर्थः। **आविष्टा** इत्यादि। ननु 'लेभे गतिं धात्र्युचिता'मित्यादिवाक्यैः पूतनादीनां मुक्तिकथनाच्छकटाद्यावेशकथनमत्र कथं सङ्गच्छत इत्याशङ्का तु टिप्पण्यां **सा च भगवत्कृतितत्सम्बन्ध्यात्मिका विशिष्टेति** लीलास्वरूपकथनादपनेया। भगवल्लीलानां नित्यत्वेन तासु भगवद्वीर्यरूपाणामाधिदैविकासुराणां सम्बन्धितया प्रवेशेन मुक्तिवाक्यस्य च तदाविष्टजीवविषयत्वे वा भिन्नविषयत्वेनाविरोधात्।

**कृष्णरामायित** इत्यत्र। ननु वत्सपाललीलायां बालका एव सङ्गे सन्तीति बालायन्त्य इति वक्तव्ये गोपायन्त्य इति कथमुक्तमित्याकांक्षायामाहुः **गोपा** इत्यादि। तत्रोपपतिर्जातीत्यादि। १०-२७-१७.

**बद्धान्येत्यत्र**। ननु पूर्वं भगवता पूतनासुपयःपानम्, ततः शकटभङ्गादिश्च कृत इति तेन क्रमेण पूर्वा लीला उक्त्वा अत्र गोवर्धनोद्धरणादिलीलासु किमिति स क्रमो नोक्त इत्याकांक्षायामाहुः **अत्र क्रम** इत्यादि, **चिरतिरित्यन्तम्**। तथा च अनुक्रियमाणलीलाक्रमे चित्तजानां गुणानामेव प्रयोजकत्वात्तदधिकारानुसारिभावनया तत्तल्लीलाप्रादुर्भावात्तासां च भगवद्वशीकरणमेव फलम्, यतो वशीकृत एव पदानि दर्शितवानिति वक्तुमत्रैवं कथनम्, भगवदिच्छयैवारब्धक्रमत्यागश्चेत्यर्थः। १०-२७-२३.

**एवं कृष्णमित्यस्याभासे**। **वचनमेवेत्यादि**। एतेनात्रत्यः 'पृच्छमाना' इत्यनेनोक्तः कायिकाभिनयः कृतो बोधितः। तेनात्यार्तिर्बोधिता। तादृश्यार्तौ यज्जातं तद्व्याख्यान आहुः **तदा पुनरित्यादिना**। ननु भगवदावेशो मूले वाचनिको नेति स्वयं कथमुच्यत इत्यत आहुः **भगवदित्यादि**। तथा च सर्वज्ञतालक्षणकार्यानुमेयमित्यर्थः। सर्वज्ञतायाः किं ज्ञापकमत आहुः **तेषां चेत्यादि**। सर्वेशानामित्यर्थः। १०-२७-२४.

**तैस्तैरित्यत्र**। **अबला जाता** इति। देहमनुसन्दधाना जाता इत्यर्थः। **एता** इति। पदद्रष्ट्र्य इत्यर्थः। १०-२७-२६.

**पदानीत्यस्याभासे**। **अनयेत्यत्र**। **तामसतामसीति**। 'विद्रावयन्ता विशतां तमोन्धं यथा गज' इति वाक्याद्गजस्तामस इति तद्दृष्टान्तीकरणात्तद्गती स्वामिनी तामसतामसीत्यर्थः। 'नूनं नाराधित' इत्यनेन स्वयमप्याराधितः, परं किञ्चिद्द्वारेति लक्ष्यते। नन्वेवं सद्वारकाराधने तत्क्रतुन्यायेन फलमपि सद्वारकं स्यात्, न तु साक्षात्सम्बन्ध इत्यत आहुः **भगवदित्यादि**। ब्रह्मपुराणसमाप्तौ मायानुकीर्तनाध्यायारम्भे भास्करप्रसादात् शंभोः पूजारुचिमुक्त्वा 'तुष्टे त्रिलोचने तस्य भक्तिर्भवति केशव' इति कथनात्, एकादशे भगवतापि मयबाणयोः शैवत्वेन प्रसिद्धयोरपि 'वृषपर्वा बलिर्बाणो मयश्चाथ विभीषण' इत्यादिना स्वपदप्राप्तिकथनाच्च भगवदनाराधकैः साधनैरपि १०-२७-२८.

तयोक्तत्वान्न साक्षात्सम्बन्धानुपपत्तिरित्यर्थः । एतेनानन्यपूर्वाभिरपि[1] स्वस्य कात्यायनीद्वारकमेवाराधनं स्मृतमिति प्रतिभाति । ननु यद्येवं तर्ह्याराधिते को विशेषो येन तत्र निश्चय उच्यत इत्याकांक्षायामाहुः **आराधित** इत्यादि । ननु यद्येवं तर्हि भगवानाबाल्यादेतद्वश एव 'गोपीभिः स्तोभितोऽनृत्य'दित्यादिनोक्तः, इदानीमप्येतद्वाक्यांगीकाराच्चैतद्वशत्वमेव प्रकटीकृतमिति कथं 'नूनं नाराधित' इत्युच्यत इत्यत आहुः **तत्रापीत्यादि** । साक्षादाराधनेपीत्यर्थः । अन्यथा कथं विहाय गत इति भावः ।

**रेम इत्यत्र** । टिप्पण्यां 'यथा प्राकृत' इत्यारभ्य 'ज्ञेय'मित्यन्तेन तथा च सह रेमे इत्येतदेव व्याख्यातं ज्ञेयम् । एवं सति 'आत्मरत आत्मक्रीड आत्ममिथुन' इति श्रुत्युक्तं भज्येतेति तत्संग्रहाय सुबोधिन्यां चकारं व्याकुर्वते **चकारादित्यादि** । तथा च लक्ष्मीस्ताश्च न स्वतो भिन्ना इति न श्रुत्युक्तस्य भङ्ग इत्यर्थः । ननु तथापि पूर्वोक्तरमणं तु तद्वशकमेवेत्यत आहुः **निष्काम** इत्यादि । ननु पारार्थ्येपि तद्वशो नापैतीत्यत आहुः **अस्यामपीत्यादि** । अर्थस्तु टिप्पण्यां प्रकारान्तरेत्यारभ्य प्रतीत्यन्तेन विवृतः । सुबोधिन्यां रमणं क्रीडेति आरामपदस्यार्थो ज्ञेयः । केशप्रसाधनमित्यारभ्य सात्विकीनां वाक्यानि तन्मध्य इदं सात्विकसात्विक्या इति बोधयितुं टिप्पण्या प्रकारान्तरं संगृह्याहुः **यद्वेत्यादि । सुबोधिन्यामसमीचीनस्यान** इति । 'तृणाङ्कुरैः सिदत्सुजातांघ्रितलामि'त्यनेन सूचित इति ज्ञेयम् । कामुकानुकरणकरणकस्तन्निरोधप्रकारो न स्फुट इति, एतद्वाक्यवक्त्रीष्वपि रसभावजमानस्य भगवद्धर्मत्वेन खेदबीजं न स्फुटमिति तदुभयं व्यक्तीकुर्वन्ति टिप्पण्यामत्रायमर्थ इत्यादिना, किञ्चेत्यादिना च । तथा चोक्तप्रकारकज्ञानेन कामिनिरोधः । स्वस्मिन्नमुख्यतमो रस इति खेदबीजमिति भावः । **यां गोपीमित्यस्य** टिप्पण्याम् । **अधिकारिणो ये** इति यच्छब्दे स्वभावगुणा बोध्याः ।

१०-२७-३४-३५.

**ततो गत्वेत्यस्य** टिप्पण्यां पूर्वं भक्तानां भावस्य भगवद्भावात्मकत्वेन स्थापितत्वात्, अत्र च 'ननु धर्मान्तरेण' त्युक्तौ तदापत्त्या पूर्वस्माद्विरोध इति तन्निवारणाय तत्तात्पर्यमाहुः **दृप्तात्वेत्यादि, भ्रम** इत्यन्तम् । ननु भ्रमस्य सर्वत्र दोषजन्यत्वदर्शनात्कथमेतद्भ्रमजनकभावस्यादोषत्वमित्याकांक्षायां तदुपपादयन्ति यद्येत्यादिना । स **एवेति** । प्रियो मद्वश इत्याकारकः । तथा च यथा लोके रमणस्य दोषत्वेपि भगवदीयस्य तस्य न तथात्वम्, तथैतस्यापि तत्सम्बन्धित्वेन भगवदीयत्वादेव न तथात्वमित्यर्थः । अग्रिमस्य भावतथात्वमुपपादयन्ति **एवं सतीत्यादि, अर्हतीत्यन्तम्** । मध्यमस्य साधयन्ति **दृप्तत्वमित्यादि । इति तद्भावेत्यत्र** । इतिर्हेतौ । तथा च रसमर्यादाविरुद्धेन्द्रायाः हेतोरित्यर्थः । **उक्त इति** । मूले सुबोधिन्यां चोक्त इत्यर्थः । **अत्रापीति** । स्वामिन्यामपि संयोगजनकभावदूरीकरणाय तद्भावजननं दृप्तापदोक्तभावजन-

१०-२७-३७.

---

1 निष्कामत्वमत्रकम् ।

नमित्यर्थः। तथा च सुबोधिन्यां यत्तादृशकृपानधिकारित्वं जाताजीर्णत्वं च यदुक्तं तत्पूर्वापेक्षया सर्वात्मभावाधिक्यज्ञापनार्थम्। तेन यादृश्यन्यासु कृपा तदनधिकारिणी, किन्तु तद्विलक्षणकृपाधिकारिणी प्रसादप्राप्त्या अत्यन्तमुच्छलद्रसेति हृदयं बोध्यम्।

**एवमुक्त इत्यत्र**। सुबोधिन्यां **नटवटुरिति**। वट वेष्टने। कर्तरि उप्रत्ययः। तथा च नटेषु वटुर्वेष्टकः सांगवेष्टनचतुर इत्यर्थः। एषा हि नृत्यमित्यादिग्रन्थस्य तात्पर्यमाहुः **प्रिया त्वित्यादिना**। उभयोरिति[1]। संयोगविप्रयोगावस्थयोः। **स्वतन्त्रे स्वतस्तिरोधानं तथेति**। भगवतः सकाशात्तत्तिरोधानं स्वस्कन्धारोहणतुल्यमित्यर्थः। १०-२७-३८.

**इति सप्तविंशाध्यायसुबोधिनीटिप्पण्योः प्रकाशः।**

**अष्टाविंशाध्यायं** विवरिषवः पूर्वाध्यायसमाप्तावेव कथासङ्गतेरुक्तत्वादर्थमेवाहुः **अष्टाविंश** इत्यादि।

**जयतीत्यत्र**। **अनन्यत्वेनैकत्वादिति**। नित्यः शब्दः शब्दत्वादितिवद्व्रजः सर्वोत्कृष्टः भगवज्जन्मन इत्यस्याप्यसाधारणहेत्वाभासत्वादित्यर्थः। १०-२८-१.

**शरदुदेत्यत्र**। **अपकीर्त्यभावायेति**। प्रसह्य मारयित्वा हरणेपकीर्तिरिति तदभावायेत्यर्थः। १०-२८-२.

**न खल्वित्यत्र**। नन्वयं को वा नियमो यद्गोकुलस्वामिपुत्रत्वाभावेऽधीनो न भवतीति, यतस्तदभावेपि स्नेहवशादधीनत्वदर्शनादित्यत आहुः **तुल्यतायामित्यादि**। हि यतो हेतोर्वशीकरणहेतुरितिशेषः अर्थाज्ज्ञेयः। तथा च 'ययोरात्मसमं वित्त'मित्यत्र भगवता यत्र यत्र तुल्यता, तत्र तत्रैव विद्यायोनिसम्बन्धस्य वशीकरणहेतुतायाः प्रतिपादितत्वाल्लोके तथा दर्शनाच्च तदैव तथा, यत्नेदानीं तथा, तेन ज्ञायते नियत तत्तिरोहितमिवेत्यर्थः। अस्मिन्वाक्ये मूलस्थं भवानितिपदमुद्देश्यसमर्पकमपि भातीति भवानित्यर्थतो विधेयसमर्पकं भवतीति ज्ञेयम्। अग्रे वैकुण्ठाधिपतिः पुरुषोत्तम इति तदर्थविवरणात्। तथा सति तुल्यताया अभावादुपालम्भो न युक्त एवेति भावः। एतावदुक्तौ भगवति सेवकदुःखानवधातृत्वारोपः पर्यवस्यतीति तदभावाय पूर्वं यशोदाधीनत्वसम्पादनेन गोकुलस्वामिपुत्रत्वे सन्देहाभावादिदानीमधीनत्वाभावे स्वस्मिन् तादृशविद्याद्यभाव एव विचार्यताम्, न तूपालम्भ्यतामित्याशयेन वाक्यान्तरं वदन्तीत्याशयेनाहुः **किञ्चेत्यादि**। अनुपालम्भ्यत्वादेव भगवति दोषाभावं विशेषाकारेण समर्थयन्तीत्याशयेनाहुः **आगतश्चेत्यादि**। १०-२८४.

**विरचिताभयमित्यत्र**। ननु भवतीनां संसारभयं क्वास्ति येन संसृतेर्भयादित्युच्यत इत्याकांक्षायां तत्तात्पर्यमाहुः **न हीत्यादि**। **अनेनेति**। संसारनिवर्तकत्वकथनेनेत्यर्थः। तथा चानया प्रार्थनया दुःखनिवृत्तिरेव प्रार्थितेतिभावः। १०-२८५.

---

[1] तुल्यतायां वशीकरणहेतुः।

**व्रजजनेत्यत्र** । **कृष्णो भगवानित्यनेन** योषितां वीरेतिपदसमुदायार्थः संक्षेपेणोक्तः । सम्बोधने फलितमर्थमाहुः **वीरैरित्यादिना** ।

१०-२८-६.

**प्रणतेत्यत्र** । न इति बहुवचनेन कुचेषु बहुत्वमायातीत्यरुच्या पक्षान्तरमाहुः **विरहेणेत्यादि** । संयोगे हि भगवदुपयोगित्वात्तेषु स्वीयत्वेन भानम्, विरहे तु न तथेति भिन्नान्मन्यन्त इत्यर्थः । तथा चास्मासु चेन्न स्थापयसि तदास्मद्भिन्नेषु तेषु त्वत्परेषु स्थापयेति भावः । अत एव 'गणये कुचयो'रिति तद्भावः प्रभुभिरुपवर्णित इति श्रीहरिरायाः । सर्वत्र मनोरथतौल्यादर्शनादयमपि पक्षो न बहुत्वसाधक इत्यरुच्या पक्षान्तरमाहुः **स्त्रीणामित्यादि** । ननु कालियनृत्येनैतच्चरणप्राकट्यमिति वेणुगीते प्रतिपादनादत्र फणिफणार्पितमिति विशेषणं कथं सङ्गच्छत इति चेत् । 'इत्युन्मत्तवचो गोप्य' इति पूर्वाध्याये कथनादत्रापि तदनुस्यूतमित्यतः सङ्गतिरिति केचित् । तन्नोन्मत्तवचनोपसंहारपक्षस्यापि सुबोधिन्यामङ्गीकारात्तत्पक्षेऽसङ्गतितादवस्थ्ये तु 'चेतुर्गोप्यो विचेतस' इति पूर्वाध्यायोपान्त्ये कथनादत्र च तदनुसीवनादिति भाति । वस्तुतस्तु ज्ञानपूर्वकमेवैवं कथनम्, न च पूर्वविरोधः । तत्र यथेत्यादिसुबोधिन्यामेव दोषदूरीकरणार्थतां तस्योक्त्वाग्रेऽम्बुजपदव्याख्यानेन मूले क्रमेणोभयविधचरणस्थापनस्य व्यक्तीकरणान्न तदर्थं प्रयासान्तरं कर्तव्यमिति भाति ।

१०-२८-७.

**मधुरयेत्यत्र** । **इममेवेति** । वाञ्छितोपकाररूपमित्यर्थः । गिरेत्यस्य आप्याययस्वेत्यनेन सम्बन्धः । **पाययतेति** । मिथक्तम इति शेषः ।

१०-२८-८.

**तव कथेत्यत्र** । इत्यप्यसङ्गतमित्यत्रापि 'विधिकरीरिमा' इति संगृह्यते । **परिहरतीति** । अभक्ताः विरहेपि जीवनादिति । जीवनानुमितमभक्तत्वं हेतोरुपहितत्वव्यञ्जनेन परिहरतीत्यर्थः । तथा च यथा यागीया हिंसा अधर्मः, हिंसात्वादित्यत्र निषिद्धत्वमुपाधिः, तथा प्रकृते स्वकृतिसाध्यत्वमुपाधिरिति भावः । तदेतत्प्रदर्शयन्ति **नेदमित्यादिना** । **उच्यत इति** । 'अमृतत्वस्य तु नाशास्ति वित्तेने'त्यादिश्रुतिपूच्यत इत्यर्थः । **सर्वतापनिवर्तकमिति** । अत्र तप्तजीवनमित्यस्य तप्ते अयःपिण्डतैलादौ यथा जीवनं जलं किञ्चित्पतितं सदधिकमेव तापं जनयति, एवं तव कथामृतमपि विप्रयुक्तेऽधिकतापमेव करोतीत्यर्थं इत्याह वैष्णवतोषिणीकारः । तदविचाररमणीयम् । तप्तायःपिण्डे पतितस्य स्वल्पस्यापि जलस्य विद्यमानत्वे स्वानुरूपौष्ण्यनाशकत्वस्य प्रत्यक्षसिद्धत्वात्, अन्यथाभ्यन्तरसंयोगस्येव बहुजलसंयोगस्यापि तापाधिक्यहेतुत्वं स्यात् । तप्ततैलादौ तु तस्योत्तेजकत्वेपि तीव्रवह्निना तन्नाशेनात्र च कथाया विद्यमानतया तद्वैधर्म्यात् । तत्रोत्तेजनस्यापि वह्निर्वह्निक्षेपणेनेतरतापकत्वमेव, न तु जलसंयुक्ततापकत्वमित्यस्यापि तत्र दृष्टत्वाच्च प्रकृतेपि परतापकत्वस्वतापशामकत्वयोरेव सिद्धेश्च । ननु कथायाः सर्वतापनाशकत्वे भगवत्संयोगस्यावश्यकता नायास्यतीति चेत् । न । भगव-

१०-२८-९.

दपेक्षया कथायाः स्वल्पत्वेन सांसारिकसकलतापनिवर्तनमात्रसमर्थतया विरहमहाताप-निवारणे तदसामर्थ्यात्सुखेन भगवत्संयोगावश्यकतोपपत्तेः । अत एव मूले जीवनसम्पादकत्वमेवोक्तम्, न तु विरहतापनिवर्तकत्वमपि । किन्तु तदुक्तार्थाङ्गीकारेऽमृतपदविरोधः । तस्यातापकत्वात् । तथा भूरिदपदविरोधश्च । महातापजनकवाक्यवक्तृस्तुतेस्तादृश-तत्तापतत्कर्तृकत्वायोगात् । तत्र काकुविपरीतलक्षणाद्यङ्गीकारस्तु साहसमेव । तस्मा-त्तापनाशकत्वमेवात्रार्थ इति दिक् । यत्संस्कारेत्यादि । अत्र प्रथमोदाहरणं अप्रजत्वा-दितत्सम्, 'तद्धैक आहुः ऋषयः कावषेयाः, किं प्रजया करिष्यामो, येषां नो एवायमात्मा, नायं लोक' इत्यादिश्रुतेस्तादृशज्ञानादेव तन्नाशात् । द्वितीयोदाहरणं तु जुङ्गितोपगतादितत्सं बोध्यम् । स्मृतौ 'चतस्रस्तु परित्याज्या' इत्यनेन त्यागबोधनात् । इत्यपीत्यपिना सूचितं पाठान्तरं तु 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरिति' इत्येवमामेयादौ दृश्यते । अत्र ईरीत इत्यस्य वाचक ईरित इत्यर्थो ज्ञेयः । पूर्वोक्तधर्मोऽलौकिकसाधकत्वम् ।

**प्रहसितमित्यत्र**। मोहकगुणसद्भावे किं प्रमाणमत आहुः **तदर्थमित्यादि** । **तदर्थ-मिति** । मोहनार्थम् । तथा च तदर्थकतादृशलीलैव मानमित्यर्थः । नन्वे-वमारोपोऽनुचित इत्यत आहुः **स्वस्वभावेत्यादि** । **न** इत्यस्य सर्वत्र सम्बन्धे प्रथमत एव तदुक्तिरुचितेत्यत आहुः **अन्यदित्यादि**। **अत एवमेत इति**। एवं एत इति पदच्छेदो बोध्यः ।

१०-२८-११.

**चलसीत्यत्र** । नलिनपदसूचितमर्थमाहुः **जल एवेत्यादि** । सरस्यादिरूप उत्प-त्तिस्थान एवेति यावत् । तेन चालनायोग्यता सूचिता । तेन व्रज एव स्थापनीयमित्याशयः । यदि चेचालनं क्रियेत, तदापि नीरसे स्थापनं नो-चितमित्याहुः **जलपूर्णे वेति** । शाद्वलेष्वित्यर्थः । अर्थान्तरमाहुः **नलिनादपीत्यादि** ।

१०-२८-११.

## इत्यष्टाविंशाध्यायसुबोधिनीटिप्पण्योः प्रकाशः ।

अथैकोनत्रिंशाध्यायं विवरिषवः कार्यत्वमत्र कथासङ्गतिरिति बोधयन्तोऽध्यायार्थ-माहुः **एकोनत्रिंशक इत्यादि** ।

**तं विलोक्येत्यत्र**। निर्णयज्ञानस्यापि प्रसादकार्यतया पर इति वक्तुमिति । एवं प्रकारकमाश्चर्यं वक्तुम्, अन्यथा दृष्टान्तमेतं न वदेत्, प्रयोजनाभावादि-त्यर्थः । **प्राणे तु सर्वाणि सम्भूयेति** । बृहदारण्यके 'यो ह वै ज्येष्ठं च श्रेष्ठं चे'ति ब्राह्मणे सर्वेन्द्रियाणां शरीरस्थितेश्च मुख्यप्राणाधीनत्वं प्रतिपादितं, प्रत्य-क्षमपि तथेति तथेत्यर्थः । **पञ्चानां भाव्यमिति** । यद्यपि देहस्यैव प्रतीयते, तथापि व्युत्पाद्यमानरीत्या तथेत्यर्थः । तत्र जीवस्य व्युत्पादयन्ति **तत्रेत्यादि** । तथा च 'चित्तेन हृदयं चैत्यः क्षेत्रज्ञः प्राविशद्यदा । विराट् तदैव पुरुषः सलिलादुदतिष्ठते'ति तृतीये

१० २९-३.

तदागमनेनैव पुरुषोत्थानस्योक्तत्वादन्यत्रापि तथेत्यर्थः । ननु पूर्वं जीवाभावे पूर्वाध्यायद्वयोक्तकार्यं कथं निरपद्यतेत्यत आहुः **स त्वित्यादि** । तथा च पूर्वं भगवानन्तःप्रविष्ट इति सुषुप्ताविव सोपि भगवति प्रविष्टः । अत एव 'जगृहुस्तदात्मिका' इत्यारम्भ एवोक्तम् । एवं च सुषुप्तौ प्राज्ञस्य सम्परिष्वङ्गमात्रं, नान्या क्रियेति सुखमात्रं, जीवस्य तमोभिभवादज्ञानं च । प्रकृते तु भगवतो ब्रह्मविष्णुरुद्रभावेन लीला चिकीर्षितेति तमोभिभवाभावात्सर्वं कार्यं निरपद्यतेति न काचिदनुपपत्तिरिति भावः । शेषं स्फुटम् ।

**काचित्कराम्बुजमित्यत्र** । नन्वत्रानुभूतस्यैव तत्र स्फूर्तिनियमात्तत्रैतत्सत्त्वे चन्दनसुगन्धमिति वदेदित्यत आहुः **अत एवेत्यादि** । यतस्तत्रेयमेवातो भगवद्बाहुसम्बन्धी स्वाभाविको धर्मश्चन्दनान्तःस्थस्तथा करिष्यतीति बोधयितुं चन्दनस्यागन्तुकत्वाय तथोक्तमित्यर्थः । अतएव दह्यमानपूतनादेहस्य भगवत्सम्बन्धादपहतपाप्मत्वेन धूमस्यागरुसौरभत्वमुक्तम्, दह्यमानस्य देहस्य धूमश्चागरुसौरभ इत्यतो न कोपि विरोध इति दिक् ।

१०-२९-४.

**एका भ्रुकुटीत्यस्य** टिप्पण्याम् । **अस्य तस्मिन्निति** । हृदयस्य भगवतीत्यर्थः । तस्यातथात्व इति । भावस्य सदोपत्वे ।

१०-२९-६

**अपरेत्यत्र** । ननु विषयसौन्दर्ये सत्यपि प्रतिबन्धके विद्यमाने पानं न सम्भवतीत्यत आहुः **न त्वित्यादि** । असमासेत्यपयोर्व्याकरणान्तरसिद्धत्वेन पक्षान्तरमाहुः **अलुक् समास** इति । 'हृद्द्युभ्यां चे'ति सूत्रेण तथेत्यर्थः ।

१०-२९-७.

**तं काचिदित्यस्य** टिप्पण्याम् । **रसात्मकत्वेन भावात्मकत्वादिति** । इदं यथा तथा विचारितं 'चूतप्रवाले'त्यत्र । **भेदो वाच्य इति** । तथा सति दृष्टिभेदो न दोषायेति भावः । **न काप्यनुपपत्तिरिति** । विषयविषयिणोरभेदादनुपपत्तिर्दृष्टिभेदकृतापराधानुपपत्तिश्च नेत्यर्थः । प्रकारान्तरीयानुपपत्तिं हृदिकृत्याहुः **एतेषामित्यादि** ।

१०-२९-८.

**सर्वास्ता इत्यत्र** । **स्वाप्यय इत्यादि** । स्वाप्ययः सुषुप्तिः, 'स्वमपीतो भवती'ति श्रुतेः । तत्र भगवदाविर्भावः । 'एवमेवायमात्मा प्राज्ञेनात्मना सम्परिष्वक्त' इति श्रुतौ सम्परिष्वङ्गकथनेन बोधित इत्यर्थः । **अधिकारिण इति** । संसाराधिकारिणः । एतस्यैव व्याख्यानं **यत इत्यादि** । नन्वेवं तत्तौल्ये 'तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्देयुः, एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति, सति सम्पद्य न विदुः, सति सम्पद्यामह' इत्यादिश्रुत्या तत्राज्ञानकथनादत्रापि तथा स्यादित्यत आहुः **स्वसम्बन्धेत्यादि** । तथा च तादृशावस्थायामपि यत् ज्ञानं तत्परोक्षमजनदशायामपीदानीमिवाहं स्थितः, परं भवतीभिर्न ज्ञात इति तदानीन्तनस्वसम्बन्धख्यापनार्थमिदानीं प्रकट इति

१०-२९-९.

त्वाज्ञानमित्यर्थः । एतेन दृष्टान्तवैलक्षण्यमपि बोधितम् । तदेव टिप्पण्यां विवृतम् । एतास्तु नेत्यादिना । अतो मुक्ताधिकारवैलक्षण्यमात्र एव दृष्टान्त इति भावः ।

**ताभिर्विधूतेत्यत्र** । ननु भगवतः सर्वदैव रोचमानत्वेन परापेक्षाभावादत्र ताभी रुच्याधिक्यं किमित्युच्यत इत्याकांक्षायामाहुः **तासामित्यादि** । तथा च तासां तथात्वे भगवतः प्राकृतवत् क्षीणरसत्वं शंक्येतेति तन्निवृत्त्यर्थं तयो-

१०-२९-१०.

च्यत इत्यर्थः । ननु तदनिवृत्तौ को दोष इत्यत आहुः **अन्यथेत्यादि** । **स्वार्थमिति** । रमणाभावार्थम् । ननु रसरूपत्वस्य श्रुतिसिद्धत्वात्कथमेतच्छङ्कोदय इत्यत आहुः **स वा** इत्यादि । तथा च सिद्धे रमणाभावे तदिदेवमपि रमणं कादाचित्कं स्यात्, ततश्च पूर्वोशंकापुष्टौ रसरूपत्वमपि तथा स्यात्, 'प्रशमाय प्रसादाये'ति पूर्वोक्तमपि विरुध्येतेति तन्निवृत्त्यभावे दोष इत्यर्थः । तथापि दृष्टान्तस्य किं प्रयोजनमत आहुः **लोकेपीत्यादि** ।

**श्रुतयो यथेत्यत्र** । **तादृशमिति** । अवाङ्मनसगोचरम् । ननु श्रुतीनामवाङ्मनसगोचरप्राप्तिर्न प्रसिद्धेति दृष्टान्तसङ्गतिः कथमित्याशङ्क्य तासां तामुपपादयन्ति **श्रुतयो हीत्यादि** । **प्राप्तवत्य इति** । ज्ञातवत्यः ।

१०-२९-१३.

एवं प्राप्तिं प्रतिज्ञाय तत्र मानमाहुः **यत इत्यादि** । ननु प्रतिपादनमात्रेण कथं प्राप्तिनिश्चय इत्याकांक्षायां तदुपपादयन्ति टिप्पण्याम् **अत्रायं भाव इत्यादिना** । प्रथमांशं निश्चाययन्ति **तत्र स्वेत्यादिना** । **एवं कथन इति** । वाङ्निवृत्त्युत्तरं विद्वत्त्वकथने । स्यादिति । तद्बोधकप्रमाणान्तराभावात्स्यात् । **मन्तव्यमिति** । श्रुतार्थापत्त्या मन्तव्यमित्यर्थः । ननु 'यतो वाच' इत्यत्र निषेधमुखेनैव प्रतिपादनमभिप्रेतम्, न विधिमुखेनेति कथं तत्प्राप्त्यवगम इत्यत आहुः सुबोधिन्याम् **सर्वे चेत्यादि** । तथा चोक्तश्रुतिस्मृतिभ्यां विधिमुखप्रतिपादनं सर्वेरेवाभियुक्तैरङ्गीक्रियते, तेन तथेत्यर्थः । एतदेव टिप्पण्यां विवृण्वन्ति **अपरश्चेत्यादिना** । श्रुत्युक्तभगवद्धर्मः सर्वभावेन भजनम्, 'यो मामेवमसंमूढो जानाति पुरुषोत्तमम् । स सर्वविद्भजति मां सर्वभावेन भारते'ति गीतास्मृतेः । एव **अपरश्चेत्यादि वाच्यमित्यन्तेन** द्वितीयांशो निवृतः । इदमंशद्वयं दार्ष्टान्तिके योजयन्ति **एवं सतीत्यादि** भवतीत्यन्तम् । नन्वभियुक्ताङ्गीकारमात्रेण श्रुत्यर्थो न निर्णेतुं शक्य इत्यतः सुबोधिन्यामाहुः **सर्वे वेदा इत्यादि** । तथा च प्रत्यक्षश्रुत्या व्यासवाक्येन च विधिमुखप्रतिपादनमेव निर्णीयत इत्यभियुक्ताङ्गीकारोपि तदनुसारित्वाच्चेत्यर्थः । ननु विधिमुखप्रतिपादनस्य पदपदार्थसम्बन्धाधीनत्वाद्ब्रह्मणोऽलौकिकत्वेन तत्र पदानां सम्बन्धासम्भवे तद्ग्रहस्याप्यसम्भवात्कथं तथा प्रतिपादनं, कथं वा तन्निश्चायकस्तेषां ताद्व्यो बोधोङ्गीकर्तुं शक्य इत्यत आहुः **अलौकिक इत्यादि** । परानपेक्षप्रामाण्ये वेदे जैमिनिनार्थानुपलब्धावप्यव्यतिरेकाचोदनांशस्य यथाऽलौकिको धर्मोर्थः स्वीकृतः, तथा 'हिरण्यपर्णे प्रविश्ते अर्थे'मित्यादिभिःप्रत्यक्षैर्भगवत्पर्यवजमानर्त्विजां वेदादेव स्वस्वकार्यावगमप्रत्यक्षाद्भगव-

ग्नीनां पञ्चावत्तमित्याद्यनुमानाच्च व्यासपादैर्मन्त्रावंशस्याप्यलौकिकः पुरुषावयवरूपोर्थःस्वीकृतः, शब्दाश्च स्वरादिवैशिष्ट्यादिना स्फुटमेवालौकिकाः, अतो न तेषां लोके संकेतः, तथापि जैमिनीयानुसारेणाकृतौ व्यासचरणोक्तपक्षान्तरानुसारेण प्रवाहे वा शब्दसम्बन्धमवधार्य तच्छ्रवणे लोकाः प्रवर्तन्ते, परं वेदशब्दास्तु पूर्वोक्तश्रुत्या निरन्तरं भगवत्कार्यं कथयन्तीति तच्छ्रवणेन तद्बलेन शुद्धान्तःकरणाः सन्तो यथौत्पत्तिकमनीषया हर्यश्वादयो नारदीयवाक्यार्थमवधारितवन्तः, तथा स्वयमेव पूर्वोक्तेऽलौकिके विषये तेषां सामर्थ्यं मन्यन्त इति तद्ग्रहे सति सुखेन विधिमुखप्रतिपादनं, तथा बोधश्चाङ्गीकर्तुं शक्य इत्यर्थः। शुद्धान्तःकरणैरप्यलौकिकार्थविषयकविधिमुखबोधस्य वाग्रूपवेदशब्दजन्यताया एवाङ्गीकारात् पुनराशंकान्तरं टिप्पण्यामाहुः **नन्वित्यादि** । **एवं कथनमिति** । निरन्तरं भगवत्कार्यं कथयन्तीति कथनम् । **तथात्वस्येति**। कार्योक्तिद्वारा भगवत्स्वरूपे वाग्विषयत्वस्य । **एवमिति** । भगवत्स्वरूपस्य सर्वथा वाङ्मनसागोचरत्वे । **एवं निरूपणमिति** । दृष्टान्ते मनोरथान्तप्राप्तिनिरूपणम् । **तात्पर्यमिति** । ननु पूर्वं सर्वथा वागविषयस्यानन्तरमिच्छया वाग्विषयत्वे । तथा च प्राप्तिमात्रे दृष्टान्त इति व्याख्याय विरन्तव्यम्, न तु मनोरथान्तप्राप्तिं कथञ्चित्प्रकल्प्य तत्र दृष्टान्त इत्यत्र यतनीयमित्यर्थः । समाधानं व्याकुर्वन्ति **प्रतिपादनमित्यादि** । **बोध इति**। वाक्यार्थबोधः । अयमर्थः । सर्वेषां मते वाक्यार्थबोधे पदजन्यपदार्थोपस्थितेस्तत्रत्वात्तस्याश्च पदशक्तिग्रहाधीनत्वात्तस्य च शक्तिग्रहं व्याकरणेतिश्लोकोक्तवाग्विशेषादिरूपकारणाधीनत्वात्तेषां च लोकवर्तिवाचकशब्दसापेक्षत्वादुक्तश्रुत्या वागादिनिवृत्तिकथनेन भगवत्स्वरूपवाचकशब्दाप्रसिद्धौ सिद्धायां तद्विषयकः शक्तिग्रहो न सम्भवतीति तन्मूलकस्तादृशस्वरूपप्रतिपादकवाक्यार्थबोधोपि लौकिकसाधनयुक्त्योरभावान्न सम्भवति । तथापि तस्य यो विधिमुखो बोधः, स केवलं भगवदिच्छयैवेति। ननु स जायत इत्यत्र किं मानमत आहुः **अत एवेत्यादि** । अत्र हि क्षरातीतत्वकथनेन क्षरांशशक्तशब्दरूपाणां वाचां तादृशमनसश्चागोचरत्वं स्वस्य बोधितम्, अक्षरादुत्तमत्वकथनेन 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्य'मित्यादिश्रुत्युक्तपरविद्यारूपवाचां तत्पूर्वरूपमनसश्चागोचरत्वं बोधितम् । तत एताभ्यामेव हेतुभ्यां स्वस्य पुरुषोत्तमत्वेन प्रथितत्वमुक्तम्, तच्च तदगोचरत्वेन बाधितं सत् तदतीतत्वतदुत्तमत्वाभ्यां पुरुषोत्तमत्वेन प्रथितत्वस्येच्छयैव लोकवेदगोचरत्वं बोधयतीति श्रुतार्थापत्तिरेव मानमित्यर्थः । तादृशेच्छायां प्रयोजनमाहुः **मुक्तीत्यादि** । 'मोक्षमिच्छेज्जनार्दना'दितिवाक्यान्मोक्षो भगवत एव । स च 'तमेवं विद्वा'नित्यादिश्रुतेर्ज्ञानादेव । यदीच्छा न स्यात्तदा साधनान्तराभावेन ज्ञानाभावे मुक्त्युच्छेद एव स्यादतस्तदभावाय तथेत्यर्थः । ननु 'शब्दोपि बोधकनिषेधतयात्ममूलमर्थोक्तमाह यदृते न निषेधसिद्धि'रिति दशस्कन्धेपि निषेधमुखेनैव वाग्विषयत्वस्याद्यतत्वात्तदुपगमे को दोष इत्याकांक्षायामाहुः **यद्पीत्यादि** । **येन रूपेणेति** । साधनात्मकेन । **निरूपितवतीति** । यथा वीणावादकस्येच्छादिना तत्तदर्थकशब्दाविर्भावो वीणातः, तथा भगवदिच्छानुसारेण निरूपितवती-

'त्यर्थः । **एवं करणे सन्तुष्ट** इत्यादि **दत्तवानित्यन्तम्** । यथा वैणिकेच्छानुरूपशब्दाविर्भावे वीणोपरि सन्तुष्टः स तां विविधविधाभिर्गोपायति, तथा श्रुतिभ्यो रूपं प्रकटीकृत्यानन्दं दत्तवानित्यर्थः । **एतस्मादिति** । फलरूपवस्त्वनुभवात् । शेषं स्फुटम् । तथा च निषेधमुखेन वाग्विषयत्वोपगमे स्वरूपबोधकस्य पदस्य सम्बन्धषष्ठीपक्षे ब्रह्मणः षष्ठ्याश्च विरोध एव दोष इत्यर्थः । न चैकादशीयवाक्यविरोधः । तत्रापि 'यर्ह्यम्बुजनाभचरणे'त्यग्रिमे 'साक्षाद्यथाऽमलदृशोः सवितृप्रकाश' इतिदृष्टान्तेनात्माविर्भाव एवात्मप्रकाशस्य बोधनादत्रोक्तस्यैव प्रकारस्य सिद्ध्या सर्वथा वागाद्यविषयत्व एव तात्पर्येण निषेधबोधे तात्पर्याभावात् । उक्तरीत्यादरे 'को अद्धा वेदे'ति, 'वेदा अवेदा' इत्यादीनां 'नायमात्मे'त्यादीनां स्वारसिकस्क्रुतिसिद्धेश्चेति । तस्मान्मूले मनोरथान्तप्राप्तिपर्यन्तो दृष्टान्तः, न तु प्राप्तिमात्र इति सुबोधिन्युक्तं सर्वं निःसन्देहमेवेत्यर्थः ।

१०-२९-१६. **भजत इत्यत्र** । **उभयोरित्यादि** । टिप्पण्यां विवृतयोरभजद्भजनकर्तृभजद्भजनकर्त्रोः फलविषयः सन्देहो निवारणीय इत्यर्थः । तेन स्वरूपविषयस्तु सर्वेषां वारणीय इति फलति । तदाहुः **य इत्यादि** । **किं कृतघ्ना इति** । भजनानुसारिभजनोत्तरं पूर्वभजनस्यानुपकारत्वादिकं स्वकृतस्य तत आधिक्यं चानुसन्दधानाः पूर्वकृतं निकर्षन्ति न मन्वत इति तादृशा इत्यर्थः । **धूर्ता इति** । पूर्वकृताद्युपकारत्वानुसन्धानेपि स्वकृतौ तत्साम्यमनुसन्दधानाः पूर्वकृतं नोत्कर्षन्ति वञ्चयन्तीति तादृशा इत्यर्थः । समीचीनत्वं व्युत्पादयन्ति **केनचिदित्यादि** । किं स्वादित्यस्यैव विवरणं **फलार्थेत्यादि निरपेक्षेत्यादि** । पूर्वेण तथाकरणे उत्तरेण प्रत्युपकारस्य निश्चेतुमशक्यत्वात्संदेह इत्यर्थः । तथा च फलदाने तत्करणे सन्दिग्धत्वेन स्वार्सिस्वाङ्गाराङ्गीकारे च समीचीनो इत्यर्थः । सन्देहबीजं तु लोके त्रिविधानां दर्शनमेव । एवं प्रथमपक्षे स्वरूपसन्देहो विवृतः । द्वितीये फलसन्देहं विवृण्वन्ति **अभजत इत्यादि** । ...पोदाहरणं तार्तीयीकं दित्युपाख्यानम् । उपकारोदाहरणं पाद्मर्किमाग्नीध्रोपाख्यानम् । ...होदाहरणं नावमिकमुर्वश्युपाख्यानम् । धर्मोदाहरणं भारतीयं सुदर्शनोपाख्यानम् । पाद्मे ...शाखमाहात्म्ये चित्रोपाख्यानं च । एवं नानाफलस्मरणात् द्वितीयप्रतियोगिफलविषयकः ...न्देहो विवृतः । स्वरूपसन्देहोत्रानुषङ्गिको बोध्यः । अनुयोगिविषयकमाहुः **यो ये-** **...त्यादि** । अर्जुन उर्वशीशापस्य, नारदे जराशापस्य, मार्कण्डेये वरूथिनीप्रत्याचक्षाणे ...ब्राह्मणे धर्मवृद्धेश्च दर्शनेन सन्देहोत्र बोध्यः । अत्रापि कृतनिन्दनाद्यैः पुनर्भजनापेक्षातदनपेक्षाभ्यां च कृत्वा कृतघ्नत्वधूर्तत्वसमीचीनत्वैः स्वरूपसन्देहो बोध्यः । तृतीये

१ पूर्वकृत । २ स्वकृतिसदृशमेव नत्वधिकम् । ३ निरपेक्षभजनकरणे उत्तरेण पुरुषेण । ४ कोटिद्वानं सन्देहः । अयं प्रत्युपकारः कर्तव्यो वाऽयं प्रत्युपकार इति सन्देहः । कस्यकस्याधुना कामभावः । धामद्रेण कृतं चेत् दुःखदम् । ५ भजनानुसारेण न भजन्ति ते त्रिविधाः समीचीनान्ताः ज्ञेयाः । ६ ब्रह्मप्रेरिता. गताः न तु स्वमनीषया । ७ भारते उत्तरो भजति पूर्वोन भजतीत्यर्थं- सुबोधिन्याम् ।

५ रा० पं०

सन्देहमाहुः **ये चेत्यादि । तेषामिति** । भजदभजदभजनकृतामुदासीनानाम् । **उभयविधानामिति** । उक्तोदासीनभजनकर्तृणां तदभजनकर्तृणां चेत्यर्थः । अत्रापि सूर्यस्य किमुदासीनस्य यत् फलं तत्, उत कृतघ्नादेर्यत्तत् । तथोत्तरस्य किं धर्मात्मनां यत् तत्, उत मूर्खाणां यत् तत् । एवं तृतीयस्य किमुदासीनस्य यत्तत्, उत धूर्तस्य यत्तद्वेति । अत्रापि पूर्ववत्स्वरूपसन्देहोपि बोध्यः । साधनविषयकमाहुः **कृतस्येत्यादि । कुत्रेति** । अपूर्वजनने स्नेहे लौकिकप्रशंसायां वेत्यर्थः ।

**मिथ इत्यत्र** । स्वार्थैकान्तोद्यमत्वमुपपादयन्ति **ते हीत्यादि** । मिथःशब्दबोधितायामन्योन्यतायां यौगपद्यस्याशक्यत्वात्पूर्वापरभाव आवश्यकः । तत्रो- १०-२९-१७. त्तरेण क्रियमाणे भजने पूर्वकृतभजनतुल्यतादर्शनेनोत्तरस्य तदनुरूपं ज्ञानमनुमीयते । तदुत्तरं पूर्वेण पुनस्तथा तदकरणात् पूर्वस्यापि तादृशं ज्ञानमनुमीयते । असकृत्कृतौ तूभयोस्तथा ज्ञानं सुस्पष्टानुमानम् । एवं तरतमभावानुवृत्त्या तयोः स्वार्थपरत्वमपि सुस्पष्टानुमानम्, अन्यथा तथा नानुवर्तयेयुः । अनुवृत्त्या काकतालीयता निवारिता । एवञ्च पौनःपुन्ये कृताधिक्यानुसन्धानबाधात्कृतघ्नता, वञ्चनासम्भवाद्धूर्तता च निवारिता । एवं दोषकोटिव्यावृत्तौ उपकारस्नेहधर्मान्यतमसम्भवेन समीचीनता सम्भवति । तत्रोपकारस्य तुल्यतायामुपक्षीणत्वान्न समीचीनतानिर्वाहकत्वमित्यन्याभ्यां समीचीनत्वं नन्वित्यादिनाशंक्य परिहारं व्युत्पादयन्ति **क्षणेनैवेत्यादि** । उदाहरणं तु गजेन्द्रमोक्ष अगस्त्यक्रोधः । ननु धर्मत्वे किं बाधकमत आहुः **नापीत्यादि** । तथा चोक्तवाक्यसूचितमन्योन्यभजनं न धर्मः, अन्योन्यभजनत्वात्, पिशाचभिक्षावदित्यनुमानमेव बाधकमित्यर्थः । ननु यत्र यत्रान्योन्यभजनत्वं न तत्र धर्मत्वमिति व्याप्तिर्गुरुसेवायां व्यभिचरतीत्यसदनुमानत्वान्नास्य बाधकतेत्याशङ्कायां दृष्टार्थायां तस्यामपि न धर्मत्वमित्याहुः **गुरुसेवायामित्यादि । दृष्टार्थेनेति** । वृत्तिप्रतिष्ठाद्यर्थता । तथा च तत्र शास्त्रप्रयुक्त्यभावेन तादृशगुरुसेवायां धर्मत्वस्याशक्यवचनत्वान्मिथो भजनं धर्मो मिथो भजनत्वात्, गुरुसेवावदित्यत्र तादृशी सा न धर्मः दृष्टार्थत्वाद्वाणिज्यवदिति प्रत्यनुमानेन तन्निरासात्स्वार्थार्थैव सेति न सापि धर्म इत्यर्थः । ननु दृष्टार्थतायामपि शिष्यस्य गुरोश्च 'वसन् गुरुकुले दान्तो ब्रह्माधीयीत चाहुतः' 'उपनीय तु यः शिष्य'मित्यादिशास्त्रानुसारित्वे गुरुसेवा धर्मः, विहितत्वाद्यागवदिति शास्त्रसनाथानुमानेन तस्यां धर्मत्वे सिद्धे पूर्वोक्तहेतोः साधारणत्वनिश्चयान्न तस्यानुमानस्य बाधकतेत्यत आहुः **शास्त्रेत्यादि** । तथा च यदि वृत्त्याद्यभिसन्धानं, तदा तदंशे शास्त्राभावाद्दाम्भिकत्वेन पाषण्डत्वादिकमेव तत्रेति न हेतोः साधारणत्वं, यदि च न तादृगभिसन्धानं, तदा तु शास्त्रस्यैव प्रयोजकत्वेन तस्यां मिथो भजनत्वमेव न, किन्तु विहितत्वमेवेति तेन रूपेण व्याप्तेरबाधान्न बाधकत्वहानिरित्यर्थः । ननु दृष्टार्थत्वेन मिथोभजनरूपाया गुरुसेवाया धर्मत्वाभावसाधनमसङ्गतम्, विद्यारूपस्य दृष्टार्थस्य वैद्यसेवायामपि सत्त्वादिसाकांक्षायामाहुः **विद्येत्यादि** । 'तस्माद्गुरुं प्रपद्येत जिज्ञासुः श्रेयमुत्तम'मित्यादौ जिज्ञा-

स्वादिपदानां 'चित्रया यजेत पशुकाम' इत्यादिषु पशुकामादिपदवत्फलबोधकत्वादिच्छाविषयाया विद्याया दृष्टत्वेपि शास्त्र एव प्रवेशेन धर्मत्वाभावसाधकहेतौ वैधभिन्नत्वस्य विशेषणीयत्वान्न दोष इत्यर्थः । ननु धर्मादयः पुरुषार्थनाविषया इति शास्त्रीयत्वेपि स्वार्थत्वस्य तेषु निर्बाधत्वात्स्वार्थार्थत्वेन मिथोभजननिन्दा न युक्ता । तथा 'सहयज्ञाः प्रजाः सृष्ट्वे'ति सन्दर्भे 'देवान्भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथे'ति वाक्येन यज्ञस्य मिथोभजनत्वसिद्धेर्मिथोभजनत्वेन धर्मत्वाभावसाधनमप्ययुक्तमित्यत आहुः **यद्यपीत्यादि** । अत्र हि लौकिकोपयोगि स्वार्थाभिसन्धानपूर्वकं यन्मिथो भजनं तन्निन्द्यते, 'भजतोनुभजन्ती'ति प्रश्नवाक्येन तत्स्वरूपनिश्चयात्, न तु यत्किञ्चित्स्वार्थाभिसन्धानम्, अतो धर्मादीनां स्वार्थत्वेप्यदोषः । न च तेषामन्योन्यभजने सिद्धिः । तथा सति हविर्ग्रहणायात्रागत्य फलं ददतां देवानामपि धर्मापत्तेः । न च तेन तेषां कोपि धर्मः । 'भजन्ति ये यथा देवान्देवा अपि तथैव तान् । छायेव कर्मसचिवाः साधवो दीनवत्सलाः । देवाः स्वार्थानसाधव' इत्यादिनिन्दादर्शनात् । एवं सत्युक्तसन्दर्भस्थं परस्परभावनमपि स्वार्थसाधनत्वेनैव फलति, न तु धर्मसाधकत्वेन, 'श्रेयः परमवाप्स्यथे'ति फलकथनेन अकरणे दोषबोधनेन च तथा निश्चयात् । तदेतदुक्तं **न ते सिध्यन्तीति** । अन्योन्यभजनेनेति तृतीयान्तपक्षेपि तेन ते सिध्यन्ति, न तु तद्रूपा इत्यर्थो बोध्यः । अनुपपत्तेरुक्तत्वात् । एवं 'ये यथा मां प्रपद्यन्त' इत्यत्रापि द्रष्टव्यम् । 'एवं मदर्थे'त्यस्य टिप्पण्यां तस्य भजनस्य प्रावाहिकरूपताया वक्ष्यमाणत्वात् । एवं मिथो भजने धर्माभावं साधयित्वा क्वचित्तदकरणे क्रोधाभावे सौहार्दं तु स्यादेवेति तन्निषेधो नोपपद्यत इत्याकांक्षायां तदभावमभ्युपपादयन्ति **तथेत्यादि** । **हिशब्द इत्यन्तम्** । **दुःखनिवृत्तिरिति** । सेवाकर्तुर्दुःखनिवृत्तिः । शेषं स्पष्टम् । अत्र च 'यस्त आशिष आशास्ते न स भृत्यः स वै वणि'गिति फलितं बोध्यम् ।

**भजन्त्यभजत इत्यत्र** । **पूर्व इति** । भजनकर्ता । **कर्तव्य इति** । अभजता उत्तरेण कर्तव्य इत्यर्थः । **विधेयमिति** । भजनीयेन विधेयम् । तदेव टिप्पण्यां विवृतं **धर्मार्थमित्यादिना** । पातकादीत्यादिपदेन लौकिकानिष्टम् । तथा च 'श्रोत्रियस्य ब्रह्मचारिणो दीक्षितस्य व्रतिनो लिङ्गिनो वामां दृष्ट्वा चानरागस्य मुमूर्षोर्मित्रवाक्यादानृशंस्याच्च गमनं धर्मोऽधर्मो वेति संशय' इति कामसूत्रोपदर्शितादिस्थले भजनीयस्तदर्थं स्वयं प्रायश्चित्तादिकं कुर्यादित्याशयः । उदाहरणं तु पाद्मवैशाखमाहात्म्यप्रथमाध्यायस्थं चित्रोपाख्यानं बोध्यम् । तत्र हि वैश्यजातीयया वेश्याभूतया विचित्रैः सुरतोपचारैरदृष्टबुद्ध्या संसेवितोऽतिथिस्तीर्थान्यटमानो यस्सुदेवनामा विप्रो रेवायां वैशाखस्नानोपदेशं विधाय तया सार्धं तत्र स्नानं कुर्वन् कारयन् दयया तदुपयोगेन धर्मस्तां स्वात्मानं चोद्धृत्य स्वयं पाण्ड्यदेशाधिपो वीरसेनाख्यो जन्मान्तरे जातः । सा च काशिपतेर्वैष्णवतमस्य दिवोदासस्य सुता दिव्यादेवीनाम्नी जातेत्युक्तम् ।

१०-२९-१८.

**पुण्येनैव पापनिवृत्तिरित्यादि** । 'धर्मेण पापमपनुदती'तिश्रुतौ कर्त्रैक्यस्य विवक्षितत्वा-दन्यथातिप्रसङ्गाच्च तथेत्यर्थः । **धर्मंशेपीय** इत्यादि । 'पतिं त्वपतितं भजे'दित्यादि-स्मृतावपतित इत्यादिविशेषणात्तथेति तथा । **दिगिति** । जातेष्टिगयाश्राद्धपुण्यदानादि-शास्त्रेभ्योपीत्यर्थः । अत्र निर्णीयमानोऽभजद्भजनरूपो धर्मः को वेति निष्कृष्टं वद-तीत्याशयेनाहुः **निषेधेत्यादि** । **धर्मापवादेति** । धर्मे अपवादेति समासो बोध्यः । **कर्तव्यत्वेनेति** । 'कार्यमित्येव यत्कर्मे'ति, 'एतान्यपि तु कर्माणि' इत्यादिवाक्यादित्यर्थः । **न चेत्यादि** । कर्मदेवतागवादिषु जडत्वस्वर्गवासित्वाज्ञत्वैर्धर्मानुत्पत्तेस्तस्याविवक्षितत्वं, न तु प्रतियोगिनि भजनशङ्काभावादित्यर्थः । **उक्तेष्वित्यादि** । बहुलाव्याघ्रसंवादादिना इन्द्राश्वमेधकथादिभ्यश्च निमित्तवशात्तत्रापि धर्मोत्पत्त्यवगतेर्न तेन तथा, किन्तूक्तशङ्का-भावादेव तथेत्यर्थः । सुबोधिन्यां **यत्र पुनरित्यादि** । अत्र निरपवादधर्मोदाहरणमानु-शासनिकपर्वस्थं सुदर्शनोपाख्यानं बोध्यम् । तत्र ह्योघवत्या स्वपत्युर्गृहस्थधर्मं रक्षन्त्या स्वा-त्मप्रदानेनातिथिर्ब्राह्मणः पूजित उटजान्निर्गत्य स्वस्वरूपं धर्म इति प्रकटीकृत्य, अग्रे 'एषा हि तपसा स्वेन संवृता ब्रह्मचारिणी । पावनार्थं च लोकस्य सरिच्छ्रेष्ठा भविष्यति । अर्द्धेनौ-घवती नाम त्वामर्द्धेनोपयास्यति । यत्र नावृत्तिमभ्येति शाश्वतांस्तान्सनातनान् । अनेनैव तु देहेन लोकांस्त्वमभिपत्स्यसे' इत्यादि सुदर्शनं प्रत्युवाचेत्याद्युक्त्वा 'धन्यं यशस्यमायुष्यमि-दमाख्यानमुत्तम'मित्यादिना भीष्मेण श्रवणकथनफलकथनात् । नन्वेवं सम्भावितापवादम-प्यभजद्भजनं चेन्निरपवादधर्मात्मकं तर्हि सर्वः प्रवर्त्स्यत इति मर्यादा भंक्ष्यत इत्यत आहुः **अधिकारीत्यादि** । **एकत्रेति** । धर्मजनके तस्मिन् । अत्र सौहृदधर्मानुषङ्गिकमर्थस्व-भावादेवानुपध्यते । **अपरत्रेति** । सौहृदजनके । **अन्यत्रापि दृश्यत इति** । सांसिद्धिककरुणास्नेहरहितेष्वप्यभजद्भजनं दृश्यत इत्यर्थः । अतिदेशप्रयोजनमाहुः **य इत्यादि** । ननु राजधर्मे 'सहार्यो भजमानश्च सहजः कृत्रिमस्तथा । धर्मात्मा पञ्चमो मित्र'मिति पञ्चविधमित्रेषु सहजभजमानौ निरुपधी उक्तावितिं तयोर्भावभेदेन स्नेहेपि भेदात्कथमेक एवात्र दृष्टान्त इत्यत आहुः **सम्बन्ध इत्यादि** । तथा च कर्मणां गहनग-तित्वेन सम्बन्धादेव तथा भाव इति भावभेदेपि निरुपधित्वेनैक्यादेकविधा एवेत्यर्थः । एतेन स्नेहाद्भजने जन्मान्तरीयसम्बन्ध एव प्रयोजक इति न तत्र धर्मसंभावनेति सूचितम् । **एतदुपकारेणेति** । अभजता कृतेन प्रत्युपकारेणेत्यर्थः । एतेन स्नेहाद्भजने पूर्वसम्ब-न्धस्याशक्यज्ञानत्वादपवादोपि सम्भवतीति सूचितम् । एवं व्याख्याय धर्मस्थलं निष्कर्षन्ति **अनेनेत्यादि, क्रियमाणमिति** । प्रत्युपकारं मिथोभजनत्वभिया नाङ्गीकुर्वन्तीत्यर्थः । तथा च 'ब्राह्मणस्य कामपरवशस्य प्राणत्राणार्थं गमनं धर्मो निरनुबन्ध' इति कामसूत्राद्युक्तस-जातीयादिस्थले धर्मानुबन्धधर्मस्थले च धर्मः । तथा 'तस्यैव लोकविद्विष्टस्य मायाविनो वा

१ प्रत्युपकारेण तस्य भजनस्य बाधः नामापवादः ।

स्वायमेव विषय इत्यत्र किं गमकमित्यपेक्षायां तदुपपादयन्ति **अत्र यथेत्यादि,**
**भजनं वेत्यन्तम्।** **कथञ्चिदिति।** 'अकरोः सचिवं दूत'मित्यादाविव लीलयेत्यर्थः।
**अर्थ इति।** तस्मै दीयमानेऽर्थ इत्यर्थः। एवं प्रत्युपकृतिस्वरूपमेतद्भजनस्वरूपं च
निश्चित्य साधारण्यपरिहारायाहुः **यचेत्यादि।** **श्रुत्युक्तरूपाभावादिति।** अनुरूपवस्तु
सत्तायां 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुत्युक्तरूपाभावादित्यर्थः। **न स्यादिति।**
स्वस न स्यादित्यर्थः। **तद्भिन्नतदपेक्षायामिति।** उपकृतिभिन्नप्रत्युपकृत्यपेक्षायामि-
त्यर्थः। **नो चेदिति** सुबोधिनीस्थं प्रतीकम्। **अयमिति।** अशक्यकृत्यशक्तिरूप इत्यर्थः।

**इत्येकोनत्रिंशाध्यायसुबोधिनीटिप्पण्योः प्रकाशः।**

अथ त्रिंशाध्यायं विवरिषवः पूर्ववदेव कथासङ्गतेर्ज्ञातुं शक्यत्वादध्यायार्थमे-
वाहुः **त्रिंशत्तम इत्यादि।** अर्थस्तु टिप्पण्यामेव स्फुटः। 'रसात्मकस्तु यः काम' इत्यादि-
कारिकाद्वयेन यदुक्तं तदाक्षिपन्ति टिप्पण्याम्। **नन्वित्यादिना।** **प्रणयनं हि**
**जीवार्थमिति।** 'तदैतद्ब्रह्मचर्येण परमेण समाधिना। विहितं लोकयात्रार्थं न रागा-
र्थोऽस्य संविधि'रिति शास्त्रसमाप्तौ वात्स्यायनसूत्रादवगम्यते। एवं भरतग्रन्थादपि बोध्यम्।
अध्यायानां शतसहस्रेण ब्रह्मणा चतुर्वर्गप्रणयनकथनाच्चेत्यर्थः। तथा च रसाभिव्य-
ञ्जनार्थकप्रनाड्यङ्गीकारे रसस्य भगवद्रूपत्वहानिः, भगवद्रूपतायां च प्रणाडीवैयर्थ्यान्मूलवि-
रोध इत्युभयतःपाशारज्जुरिति पूर्वपक्षतात्पर्यम्। तत्र समादधते **नैवमित्यादि।**
**अत्रेति।** मूले कारिकायां चेत्यर्थः। अत्रायमर्थः। श्रुतौ हि 'असद्वा इदमग्र आसीत्,
ततो वै सदजायत, तदात्मानं स्वयमकुरुत, तस्मात्तत्सुकृतमुच्यत इति, यद्वैतत्सुकृतम्;
रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवती'त्येवं पूर्वसृष्टेरसाधुत्वं, ततः सृष्ट्यन्तरस्य
साधुत्वम्, साधुत्वे स्वात्मरूपत्वरूपं हेतुः, तस्य सुकृतत्वं, सुकृतस्य रसत्वं, रसस्यानन्द-
रूपता च बोधिता। तत्र यद्युद्बोधकादिप्रनाडी न विवक्षिता स्यात्, आत्मकरणं न वदेत्, यदि
वा सर्वसामान्या स्यात्, पूर्वसृष्टेरसाधुत्वमनेवंरूपतां च वा न वदेत्। यदि च रसस्य
मनोविकारत्वं लौकिकत्वं वा विवक्षितं स्यात्, तदाप्यात्मकरणं आनन्दरूपत्वं च न वदेत्।
अत उद्बोधकादिवैशिष्ट्यं श्रुतिसिद्धम्। तदेतदुक्तं **तत्स्वरूपस्यैव तथात्वादित्यन्तेन।**
तथा च प्रनाड्यङ्गीकारेपि न भगवद्रूपत्वहानिरित्यर्थः। किञ्च, अनुकृत्यधिकरणे सर्वस्य
भगवदनुकारित्वं 'तमेव भान्तमनुभाति विश्व'मिति विषयवाक्येन प्रतिपादितम्, अतः प्रकृतेपि
यदि लौकिको रसः प्रतिपाद्यते, तदापि मूलरसानुकारितयैव तत्स्वरूपं सिध्यतीत्येतद्दृ-
ष्टान्तेन सोपि रसोऽनुमीयताम्। अयं लौकिकः परिच्छिन्नो, मात्रोपजीवनश्रुतेः, स त्वपरि-
च्छिन्नो, भूमत्वात्। तथा च लोकेऽनुकरणमात्रेण तदाभासस्यैव प्राकट्यम्, न तु तस्येति
न जीवस्य, तत्करणेपि न तद्रससम्बन्धलेशः। शास्त्रप्रणयनं तु दूरतस्तस्यैव परिचा-

१ मया गौतमेन रसशास्त्रं कथितम्। २ निर्वाहार्थम्। यात्रार्थमिति रसरूपभगवत्प्राप्त्यर्थम्।
३ भगवद्रसानुसारि। ४ लौकिकः। ५ अलौकिकः। ६ परिमितः। ७ व्यापकत्वात्।

नृणामनित्यचित्तत्वात् । अभजतस्तु प्रायश्चित्तं विधेयं स्वार्थं तदर्थं च । यदि तदर्थं न तत्कुर्यात्तदैतद्धर्मो भजति गच्छेत्ततश्च पापभागी स्यादिति । अभजन्तस्तु यद्यात्मारामा आप्तकामा वा तदा निर्दोषा एव । तत्राद्यप्रतियोगिकं साधनं धर्मे उपयुज्यते । द्वितीयप्रतियोगिकं तु भजतोऽज्ञतां ज्ञापयद्व्यर्थमेव । संभावितापवादे तु निर्बन्धेन प्रवृत्तौ दोषमप्युत्पादयति भजतः । यदि चाभजन्तो नैतादृशास्तदापि उपकाराज्ञाने अज्ञताप्रयुक्तदोषभाजः । ज्ञात्वा प्रत्युपकाराकरणे गुरुद्रोहिण इति ।

**नाहमित्यत्र** । एवं भगवति भजनसामर्थ्यसत्तया भक्तानां धर्मार्थभजनपक्षव्यावृत्तावपि स्नेहाद्भजनस्याव्यावर्तितत्वात्तत्र भक्तानां प्रवेशे शिष्टानां वाक्यानामसङ्गतिरित्यतस्तमपि व्यावर्तयितुमुद्भावयन्ति **नन्वित्यादि** । (१०-२९-२०.)

**निरूपकत्वेनेति** । स्नेहविषयतया भजनप्रयोजकत्वेन । **एषामिति** । आत्मारामादिचतुर्णाम् । तथा च बालादिवदविचार्य एवेत्यर्थः । ननु सामर्थ्यसत्तायां तेपि विचार्या एवेत्यत आहुः **ईश्वरश्चेत्यादि** । अत्र प्रतिभजनशङ्काया एवाभावात् पञ्चमोऽयमिति तथेत्यर्थः । तथा च भजदभजतोरुभयोरप्यविचार्यत्वादेव प्रश्नोत्तरसिद्धावग्रिमवाक्यानां न सङ्गतिरिति शङ्काग्रन्थाशयः । अत्र समादधानाः सङ्गतिं व्युत्पादयन्ति **मैवमित्यादि** । **उपक्षीणा इति** । तावतैव तादृग्भजनसिद्धेर्न विचारार्हा इत्यर्थः । नन्वीश्वरत्वाद्भगवानविचार्य इत्यत आहुः **ईश्वरोपीत्यादि** । **नोचित इति** । कालान्तरेऽपेक्षया नोचितः । **तृतीयपक्ष इति** । अकृतज्ञतादौ । ईश्वराणामित्यादिना द्वितीयापि कोटिर्वारिता । तेन धर्मवद्धर्मसन्देह एव पर्यवसन्न इति तन्निवृत्त्यर्थानि वाक्यानीति नासङ्गतिरित्यर्थः । **तं पक्षमिति** । पूर्वोक्तकोटिपञ्चकम् । 'नतु जीव' इत्यनेनाकृतज्ञत्वादिव्यावृत्तिः । तथाप्यात्मारामत्वादेर्भगवति श्रौतत्वात्कथं तद्व्यावृत्तिरित्याकांक्षायां तद्व्युत्पादयन्ति **तेनेत्यादि** । तथा च शुकादिभिः स्वप्रतिष्ठत्वेन रामत्वाय तथोच्यते, न तु व्यावर्त्यव्यावृत्त्य इति न स पक्ष इत्यर्थः । एवं 'सोऽकामयते'त्यादावभिध्यैवोपदिश्यते, न तु , काम इति । 'नह्मपुत्रः पण्डितपुत्रो भवती'तिन्यायेन सोपि पक्षो निरस्तो बोध्यः । **तत्रेति** । भजनस्येष्टसाधनत्वपक्षे । **पूर्वमुक्तमिति** । अनुपदमेव 'द्वितीये त्वि'त्यादिनोक्तम् ।

**एवं मदर्थेत्यत्र** । **मे विचिकीर्षित इति** । विशिष्टः सर्वाधिकश्चिकीर्षितः । 'यदा पुमांस्त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे' इति वाक्यादित्यर्थः । (१०-२९-२१.)

**न पारये इत्यस्य** टिप्पण्याम् । **उक्तमिति** । जन्तुपददानादुक्तम् । **वृत्त्यर्थमिति** । सिद्ध्यर्थम् । **तथा सतीति** । मर्यादालेशस्थापने सति । **विरोधापत्तिरिति** । 'ये यथा मां प्रपद्यन्त' इति वाक्यात्तथेत्यर्थः । (१०-२९-२२.)

**तदिति** । भजनानुसारेणाभजनम् । **विमुच्ये इति** । निश्चिन्तो भवामि । गीतावाक्य-

१ अभजतः पुरुषस्य प्रायश्चित्तं भजनकर्त्रा विधेयम् ।

स्वायमेव विषय इत्यत्र किं गमकमित्यपेक्षायां तदुपपादयन्ति **अत्र यथेत्यादि, भजनं चेत्यन्तम्** । **कथञ्चिदिति** । 'अकरोः सचिवं दूत'मित्यादाविव लीलयेत्यर्थः । **अर्थ इति** । तस्मै दीयमानेऽर्थे इत्यर्थः । एवं प्रत्युपकृतिस्वरूपमेतद्भजनस्वरूपं च निश्चित्य साधारण्यपरिहारायाहुः **यच्चेत्यादि** । **श्रुत्युक्तरूपाभावादिति** । अनुरूपवस्तु सत्तायां 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति श्रुत्युक्तरूपाभावादित्यर्थः । **न स्यादिति** । स्वस्य न स्यादित्यर्थः । **तद्भिन्नतदपेक्षायामिति** । उपकृतिभिन्नप्रत्युपकृत्यपेक्षायामित्यर्थः । **नो चेदिति** सुबोधिनीस्थं प्रतीकम् । **अयमिति** । अशक्यकृत्यशक्तिरूप इत्यर्थः ।

## इत्येकोनत्रिंशाध्यायसुबोधिनीटिप्पण्योः प्रकाशः ।

अथ त्रिंशाध्यायं विवरिषवः पूर्ववदेव कथासङ्गतेर्ज्ञातुं शक्यत्वादध्यायार्थमेवाहुः **त्रिंशत्तम इत्यादि** । अर्थस्तु टिप्पण्यामेव स्फुटः । 'रसात्मकस्तु यः काम' इत्यादिकारिकाद्वयेन यदुक्तं तदाक्षिपन्ति टिप्पण्याम् । **नन्वित्यादिना** । **प्रणयनं हि जीवार्थमिति** । 'तदेतद्ब्रह्मचर्येण परमेण समाधिना । विहितं लोकयात्रार्थं न रागार्थोऽस्य[१] संविधि'रिति शास्त्रसमाप्तौ वात्स्यायनसूत्रादवगम्यते । एवं भरतग्रन्थादपि बोध्यम् । अध्यायानां शतसहस्रेण ब्रह्मणा चतुर्वर्गप्रणयनकथनाच्चेत्यर्थः । तथा च रसाभिव्यञ्जनार्थकप्रनाड्यङ्गीकारे रसस्य भगवद्रूपत्वहानिः, भगवद्रूपतायां च प्रणाडीवैयर्थ्यान्मूलविरोध इत्युभयतःपाशारज्जुरिति पूर्वपक्षतात्पर्यम् । तत्र समादधते **नैवमित्यादि** । **अत्रेति** । मूले कारिकायां चेत्यर्थः । अत्रायमर्थः । श्रुतौ हि 'असद्वा इदमग्र आसीत्, ततो वै सदजायत, तदात्मानं स्वयमकुरुत, तस्मात्तत्सुकृतमुच्यत इति, यद्वैतत्सुकृतम्, रसो वै सः, रसं ह्येवायं लब्ध्वानन्दी भवती'त्येवं पूर्वसृष्टेरसाधुत्वं, ततः सृष्ट्यन्तरस्य साधुत्वम्, साधुत्वे स्वात्मरूपत्वरूपं हेतुः, तस्य सुकृतत्वं, सुकृतस्य रसत्वं, रसस्यानन्दरूपता च बोधिता । तत्र यद्युद्बोधकादिप्रनाडी न विवक्षिता स्यात्, आत्मकरणं न वदेत्, यदि वा सर्वसामान्या स्यात्, पूर्वसृष्टेरसाधुत्वमनेवंरूपतां च वा न वदेत् । यदि च रसस्य मनोविकारत्वं लौकिकत्वं वा विवक्षितं स्यात्, तदाप्यात्मकरणं आनन्दरूपत्वं च न वदेत् । अत उद्बोधकादिवैशिष्ट्यं श्रुतिसिद्धम् । तदेतदुक्तं **तत्स्वरूपस्यैव तथात्वादित्यन्तेन** । तथा च प्रनाड्यङ्गीकारेऽपि न भगवद्रूपत्वहानिरित्यर्थः । किञ्च, अनुकृत्यधिकरणे सर्वस्य भगवदनुकारित्वं 'तमेव भान्तमनुभाति विश्व'मिति विषयवाक्येन प्रतिपादितम्, अतः प्रकृतेपि यदि लौकिको रसः प्रतिपाद्यते, तदापि मूलरसानुकारितयैव तत्स्वरूपं सिध्यतीत्येतदृष्टान्तेन सोऽपि रसोऽनुमीयताम् । अयं लौकिकः परिच्छिन्नो, मात्रोपजीवनश्रुतेः, स त्वपरिच्छिन्नो, भूमत्वात् । तथा च लोकेऽनुकरणमात्रेण तदाभासस्यैव प्राकट्यम्, न तु तस्येति न जीवस्य, तत्करणेपि न तद्रससम्बन्धलेशः । शास्त्रप्रणयनं तु दूरतस्तस्यैव परिचा-

---

१ मया गौतमेन रसशास्त्रं कथितम् । २ निर्वाहार्थम् । यात्रार्थमिति रसरूपभगवत्प्राप्त्यर्थम् । ३ भगवद्रसानुसारि । ४ लौकिकः । ५ अलौकिकः । ६ परिमितः । ७ व्यापकत्वात् ।

यनायेति तत्रैव स्फुटम् । वस्तुतस्तु पाद्मे पातालखण्डे रामाश्वमेधे शेषवात्स्यायनसंवादादप्येवैष्णवत्वमवगम्यते । एवं भरतस्यापि, नाट्यशास्त्रज्ञातुर्मोक्षकथनात् । किञ्च, आञ्जनेयोपि प्रणेता नाट्यशास्त्रस्य । स च परमभक्तो जनकतनयाप्राणनाथस्य । अतस्तादृशां य एतावान् प्रयासः स न त्रिवर्गोपयोगितया जीवार्थः, अपि तूक्तरीत्या मोक्षसाधनतापर्यन्ततया । किञ्च, वात्स्यायनेन सांप्रयोगिकाधिकरणे 'ऋचां दशतयीनां चतुःषष्टिसंज्ञितत्वादिहापि तदर्थसम्बन्धात्पाञ्चालसम्बन्धाच्च बह्वृचैरेषा पूजार्थं संज्ञा प्रवर्तितेत्येके' इति सूत्रयता संप्रयोगाङ्गचुम्बनादीनामृगर्थत्वं प्रदर्शितम् । 'सर्वे वेदा यत्पदमामनन्ति' 'वेदैश्च सर्वैरहमेव वेद्य' इति श्रुतिस्मृतिभ्यां वेदस्य भगवत्परत्वं सिद्धम् । एवं सत्यस्य शास्त्रस्य तत्सामानाधिकरण्ये वेदवत् परोक्षवादेन लीलासहितभगवत्प्रतिपादकत्वं युक्तमेव । गान्धर्वस्य सामवेदोपवेदतया च । अत एवमर्थाज्ञातॄणां जीवानां भ्रान्तिरित्येतदाद्यभिसन्धायोक्तं **तच्चेत्यादि, बुद्ध्यस्वेत्यन्तम्** । तस्मान्न कोपि शङ्कालेश इति दिक् ।

सुबोधिन्यां **तासां मध्य** इत्यत्र । **अन्यथेति** । षोडशकृष्णपक्षे चतुःकृष्णपक्षे चेत्यर्थः । तत्राद्यपक्षे हेतुमाहुः **कृष्णेत्यादि** । द्वितीये हेतुर्मूलादेव स्फुटतीत्याशयेनाहुः **इममित्यादि** । **इमं** अष्टकृष्णपक्षरूपम् । तथा

१०-३०-३.

च चतुःकृष्णपक्षे अष्टानां सम्बन्धाभावेन मूलं विरुध्येतेत्यष्टकृष्णपक्ष एवादर्तव्य इत्यर्थः । प्रकारान्तरेण रसाभासमाशङ्क्य परिहरन्ति **स्वसंमुखेत्यादि** । ननु भगवदिच्छया दर्शनाभावसमर्थने षोडशपक्षोप्यदुष्ट इत्यत उपपत्त्यन्तरमाहुः **यावतीरित्यादि** । नन्वस्त्वेवं, तथापि भक्तानां प्रत्यक्षस्यापि प्रामाण्याद्वित्वमङ्गलैश्च समसंख्यादर्शनान्नैकान्ततोऽष्टसंख्यानिर्णय इत्यत आहुः **यदित्यादि** । तथा च तद्वाक्ये कालवशेनाधुना पाठभ्रमो वा, तादृशपाठस्य प्रामाणिकत्वे तद्दृष्टं मण्डलमन्यदेव रसपोषोत्तरभावीति निश्चेयमित्यर्थः । ननु मध्ये वेणुनादोक्तिर्नान्यत्वगमिका, रसार्थेपि मण्डले गानस्यापेक्षितत्वादित्यत आहुः **गानार्थमित्यादि** । नन्वत्राप्यग्रे समसंख्यापक्षस्य संभवदुक्तिकत्वान्नैकान्ततः संख्यानिर्णय इत्यत आहुः **मध्ये मणीनामित्यादि** । तथा च यथात्र भगवदिच्छया संमुखस्थितकण्ठालिङ्गितदर्शनाभावः, तथा तत्र देवानां समसंख्यादर्शनं, न तावतान तादृक्संख्यासिद्धिरित्यर्थः । अत्र बीजं 'तासां मध्ये द्वयोर्द्वयोः' 'यावती'रितिवाक्यद्वयार्थापत्तिरेव बोध्येत्याशयेनाहुः **नानुपपन्नं किञ्चिदिति** । नन्वौत्सुक्यस्य भगवद्दर्शने प्रयोजकत्वात्तेन कथमात्मापहार इत्यत आहुः **स्वेत्यादि** ।

**जगुरित्यत्र** । **नटानामिति** । नर्तकीशिक्षकाणामित्यर्थः । **अन्यथाबुद्धिरिति** । मर्यादामार्गादिरीतिमनुसृत्येत्यर्थः । **सस्त्रीका** इति विशेषणेन स्वस्त्रीणामपि दर्शनं भवतु, एताश्चोपयुज्यन्तामिति भावस्तेषां स्फुटतीति भक्तिमार्गीयत्वान्न तथेतिभावः ।

१०-३०-५.

१ हनुमान् । २ हनुमान् । ३ ऋग्वेदार्थत्वम् ।

**काचित्सममित्यस्याभासे** । **उत्पन्नस्य नादस्य अमृतत्वायेति** । अत्रेदं प्रतिभाति । आहतानाहतभेदेन नादो द्विविधः । तत्रानाहतः प्राणघोषात्मा, स न रञ्जकः । आहतस्तु 'आत्मा विवक्षमाणोयं मनः प्रेरयते मनः । देहस्थं वह्निमाहन्ति स प्रेरयति मारुतम् । ब्रह्मग्रन्थिस्थितः सोथ क्रमादूर्ध्वपथे चरन् । नाभिहृत्कण्ठमूर्धास्येष्वाविर्भावयति ध्वनिम् । नादोतिसूक्ष्मः सूक्ष्मश्च पुष्टोऽपुष्टश्च कृत्रिमः । इति पञ्चाभिधा धत्ते पञ्चस्थानस्थितः क्रमात् । व्यवहारे त्वसौ त्रेधा हृदि मन्द्रोभिधीयते । कण्ठे मध्यो मूर्ध्नि तारो द्विगुणश्चोत्तरोत्तरः । तस्य द्वाविंशतिर्भेदाः श्रवणाच्छ्रुतयो मताः' इत्यादिरूपेणोत्पन्नो रञ्जकः। स आसन्यांशो लोकेपि तुल्य इति तस्य नामृतप्राचुर्यम्, स यदा आसन्यात्मा मूलरूपोऽपहतपाप्मा पूर्णो भवति, तदा तथेति । तत्प्रचुरत्वायेत्यर्थः । ननु स्वामिनीगानस्य भगवन्नादेनामृतमयत्वं किमित्याकाङ्क्षायां टिप्पण्यां प्रभवस्तदाशयं स्फुटीकुर्वन्ति **अत्रायं भाव** इत्यादि । कथमेतदवगम्यत इत्याकांक्षायामलौकिकत्वमपूर्वत्वं च कार्यद्वारा परिचाययन्ति **स चे**त्यादि, **तथात्वमि**त्यन्तम् । **मूलकारणत्वादिति**। मूले भगवद्गाने प्रयोजकत्वादित्यर्थः । **इदमिति** । कार्यद्वयजनकत्वम् । **सा चेति** । भगवद्विषयकभावविशेषोत्पत्तिश्चेत्यर्थः । **तथा कृत** इति । मूलासन्यरूपः प्रकटीकृत इत्यर्थः। तथा च कार्यात्तस्य तथात्वमवगन्तव्यम् । यदि सामान्यः स्यात्, भगवता न पोष्येतेति तर्काच्च । नन्वेवं भगवन्नादस्यैवैतत्कार्ये प्राधान्यमायातीति नैवं स्वामिनीगानस्य तथात्वसिद्धिरित्याकांक्षायां तस्य तथात्वं विशदीकर्तुमाहुः **अपरश्चे**त्यादि, **रूपत्वादि**त्यन्तम् । तथा चैवं स्वामिनीनादप्राधान्यात्तस्यैव तत्कार्यमित्यर्थः । तर्हि प्रभुगानस्य किं मुख्यं कार्यमित्याकांक्षायां तदाहुः **एवं सती**त्यादि । **तदर्थमिति** । सुबोधिनीप्रतीकम् । जगत्पूरणार्थमित्यर्थः । **षड्जाद्य** इत्यादि । 'स्यातां निषादगान्धारौ द्विश्रुती धैवतर्षभौ । त्रिश्रुती चेदश्रुतयः षड्जमध्यमपञ्चमाः । मयूरचातकच्छागक्रौञ्चकोकिलदर्दुराः । गजश्च सप्त षड्जादीन् क्रमादुच्चारयन्त्यमी'त्यादिषु बोधिता इत्यर्थः ।

१०-३०-१०.

**तदेवे**त्यत्र । 'गानक्रिया वर्णसंज्ञया सङ्गीते व्यवह्रियते । गानक्रियोच्यते वर्णः स चतुर्धा निरूपितः । स्थाय्यारोह्यवरोही च संचारीत्यथ लक्षणम् । स्थित्वा स्थित्वा प्रयोगः स्यादेकैकस्य स्वरस्य यः । स्थायी वर्णः स विज्ञेय' इति तस्य लक्षणान्तरात्प्रकृते को वा स्थायी विवक्षित इति सन्देहानपायात्पक्षान्तरमाहुः **भगवन्नाद एव चे**त्यादि । 'चतुर्विधाः स्वरा वादी संवादी च विवाद्यपि । अनुवादीति वादी तु प्रयोगे बहुलः स्वरः । श्रुतयो द्वादशाष्टौ च ययोरन्तरगोचराः । मिथः संवादिनौ तौ स्तो निगावन्यविवादिनौ । रिधयोरेव वा स्यातां तौ तयोर्वा रिधावपि । शेषाणामनुवादित्वं वादी राजात्र गीयते । संवादी त्वनुसारित्वादस्यामात्योभिधीयत' इति सङ्गीते निरूपणाद्भगवन्नादो वादी । स एव राजत्वात् ध्रुव इति तस्मिन्नेव संवादिनादं स्वामिनी

१०-३०-१०.

योजितवतीत्यर्थः । तत्र हेतुमाहुः **भगवता तथैव गीतम**िति । यादृशे नादे स्वामिनीनादयोजनं भवति, तथा गीतमित्यर्थः । **न विचारक्षमम**िति । तावतः कार्यस्य सुकरतया तादृक्संमाननप्रयोजकत्वासंभवेन 'तस्यै मानं च बह्वदा'दिति ग्रन्थासङ्गतेस्तथेत्यर्थः ।

**काचिद्रासपरिश्रान्ते**त्यत्र । ननु श्रान्तत्वे स्थिरे भगवति स्वभारनिक्षेपादिकमेव श्रमाभावाय वक्तव्यम्, न तु स्कन्धग्रहणमात्रमित्यत आहुः **अधिके**त्यादि । नन्वयं रसाधिक्यजन्य एव श्रम इत्यत्र किं गमकमत आहुः **अन्यथा रसार्थ**मित्यादि । परिश्रमस्य देहक्लेशजनितत्वे उपवेशनादिरेव स्यात्, न तु स्कन्धग्रहणमित्यर्थः । ननु स्कन्धग्रहणे हस्तपरित्यागेन मण्डलभङ्गे रासभङ्ग इत्यत आहुः **मण्डले**त्यादि । **हस्तग्रहण**मिति । स्वामिन्यन्तरस्येत्यर्थः । रसार्थप्रवृत्तौ गमकमाहुः **पार्श्वभागे**त्यादि । एतस्यार्थस्य मूलाभिप्रेतत्वं प्रकटयितुं तुरीयपादं व्याकुर्वन्त आहुः **भगवते**त्यादि । **आसता च प्रदर्शिते**ति । शुकेन स्वस्य यथा दृष्टार्थवादित्वं चैतेन दर्शितमित्यर्थः ।

१० ३०-११.

**कस्याश्चिदि**त्यत्र । **आभासे** । इयं स्वामिनी पूर्वाध्याये 'काचिदञ्जलिने'ति श्लोकोक्तेति ज्ञापयितुमाहुः **गृहीत**मिति । अन्यथा मूले 'प्रादा'दिति पदेन विरोधापत्तेः । **इत्याहे**ति । इतीदं दानकथनमुखेनाहेत्यर्थः । अत्रैतद्बोध्यम् । द्वितीयस्कन्धे निरोधलक्षणे द्वासप्ततिर्नाडीरूपा देहशक्तयः स्वस्य द्वादशश्रियादयः शयनं जाग्रत्स्वप्नसुषुप्तभेदेन त्रिविधमिति स्कन्धस्याध्यायसंख्याबीजमुक्तम् । तच्च स्थूलतया । 'अत्रैतदेकशतं नाडीनां तासां शतं शतं एकैकस्यां द्वासप्तति प्रतिशाखानाडीसहस्राणी'ति प्रश्नश्रुतेः । अत्रापि वाक्यप्रकरणादिप्रतिपाद्यविचारेणानन्त्यात् । एवं 'परास्य शक्तिर्विविधैवे'ति श्रुतौ स्वशक्तेर्विविधत्वेन श्रावणादत्रापि गुणधर्मादिभेदेन नानात्वात् । सर्वास्त्वन्तरङ्गास्तु धर्मरूपा एव, भगवत्त्वनिर्वाहकत्वात् । तत्र प्रकृतलीलास्थास्ता एवेति संख्याबलान्निश्चीयते । तत्रैश्वर्यादिचतूरूपाणां निगमनं तत्तत्कार्यैरेव[11] जायत इति तत्र विशेषो न स्पष्टीकृतः । प्रकृतस्वामिन्यास्तु ज्ञानरूपतागर्भैकं[12] कार्यमत्राग्रे च न स्फुटमिति योग्यतैव च स्फुटेति योग्यताबलात्तथात्वं[13] स्फुटीकर्तव्यम् । यथा 'अञ्जलिना सक्तून् प्रदाव्ये जुहुया'दित्यत्र सक्तुस्थितियोग्यताबलादञ्जलेर्व्याकोशत्वम् । तत्र भगवद्धर्मा ऐश्वर्यादयो भगवति नित्याः, इतरत्रागन्तुका इति 'युक्तं भगैः स्वैरितरत्र चाध्रुवै'रित्यत्र स्थितम् । अत एव प्रकृते रसस्वरूपान्तःपातितया धर्मरूपतया चैतासां भगवदभेदेऽप्यवतारेण भेदात्तत्रागन्तुकमेव तदिति कार्यद्वारापि परिचायितम् । तथा सति ज्ञानमपि तथेति[16] तद्दाने संप्रदानस्य[17] साधनतः

१०-३०-१२.

१ निरोधोऽस्यानुशयनमित्यादि । २ दशमस्कन्धे । ३ 'शतं चैका च हृदयस्य नाड्य' इति श्रुतेः । ४ अनन्तानि । ५ निरोधस्कन्धेपि । ६ भक्ताना निरोधेपि । ७ भगवत. । ८ भक्तेषु । ९ भगवद्रूपत्वज्ञान । १० अत्रैव पूर्वोक्तानां । ११ काचित्रासमित्यादि । १२ प्रमाणकम् । १३ ज्ञानत्वम् । १४ विशालस्वरूपम् । १५ ऐश्वर्यादि । १६ आगन्तुकम् । १७ प्रादात्साम्यूलेपि ।

स्वरूपतश्च योग्यतादानकारणीभूतः प्रसादश्च मूले सूचित इति ताभ्यां देयस्वरूपं स्फुटीकरिष्यन्तो व्याख्यानमुखेन तौ प्रदर्शयन्ति **नाम्ये** इत्यादि । तत्र भगवत्कुण्डलयोः सांख्ययोगात्मकत्वादत्रापि तदभेदेनैतत्कुण्डलयोरपि तथात्वात्स्वामिन्याश्च वामदक्षिणपार्श्वस्थत्वयोरेकतरनिर्णायकस्यात्राभावात्पक्षद्वयेन वदिष्यन्तः प्रथमं सांख्यपक्षेणाहुः **कुण्डले ज्ञानेत्यादि** । अभ्यास आवृत्तिरिति पूर्वोत्तरतंत्रयोः[3] स्थितम् । तथा च सांख्यपक्षे ज्ञानपूर्वकभगवद्विचारितरीतिककर्मात्यावृत्त्या योग्यतेत्यर्थः । योगपक्षे आहुः **योगेत्यादि** । 'योगः कर्मसु कौशल'मितिवाक्यात् कौशलेन कृतानि शमादीनि विक्षेप इत्यर्थः । तथा च योगपक्षे तादृशसाधनसमुदायेन योग्यतेत्यर्थः । तादृशं च कर्म ज्ञानपर्यवसायि ज्ञानं च प्रकाशकं तदत्राहुः **तस्येत्यादि** । रूक्षं तु तदक्षरपर्यवसायि । प्रकृते तु भक्त्यङ्गं विवक्षितं सन्धानकथनादिति तदाहुः **तेनेत्यादि** । एवमत्र योग्यतायाः काष्ठा निरूपिता । एतादृशी योग्यता प्रसादे कारणमिति तत्फलभूतप्रसादकाष्ठामाहुः **यथेत्यादि** । ईदृश्यपीयं भक्तिर्न फलरूपा, किन्तु 'चेतस्तत्प्रवणं सेवे'त्युक्तसाध्यरूपैवेति वदनैकदेशबोधकगण्डपदेनोभयनिष्ठोच्यत इत्याशयेनाहुः **तत्रापीत्यादि** । तत्रापीति । सम्बन्धेपि । तथा चेदृशत्वेपि ज्ञानोपक्षीणत्वात्साध्यरूपैव, न तु फलकाष्ठारूपेत्यर्थः । एवं मूलव्याख्यानेन योग्यताप्रसादौ स्फुटीकृत्य ताभ्यां देयस्वरूपनिश्चायनप्रकारमाहुः **तामित्यादि** । भगवत्स्वरूपज्ञत्वं तदुपदेष्टृत्वं कूर्मपुराणादौ लक्ष्म्याः सिद्धम् । अत्र च साधनप्रकरणीयब्रह्मानन्दमग्नोद्धरणकथयैतासु योग्यताबोधनेन लक्ष्मीत्वं सिद्धम् । 'वृत्तिरूपं ज्ञानं मनोधर्म' इति 'हीर्धीर्भी'रित्यत्र श्रावितं विद्यात्मकं ज्ञानं च तथेति प्रकृते तदभिप्रेतम् । प्रतिर्लक्षणे कर्मप्रवचनीय इति तद्योगे द्वितीया। तथा च तां पूर्वोक्तरीत्या लक्ष्मीं प्रति लक्षीकृत्य मूलपर्यटनं निधामूलस्य भगवन्मनसः परित आवृत्तिरिति, मूले धात्रूपोपणर्थ इत्याभीक्ष्ण्यसिद्ध्या लक्ष्मीवन्तं धर्मिणं लक्षीकृत्य पुनः पुनरावर्तते, सन्धानायोद्युज्यत इति ज्ञानताम्बूलयोः उक्तरीतिकयोग्यतायां देययोस्तुल्यता । तथा च यथा सादृश्येन व्रीहिस्थले नीवारग्रहणं तद्व्यैकदेशभाक्तया, तथात्रापि तयोः सिद्धायां तुल्यतायां तादृशज्ञानांशभाक्तया तद्दानमिति भावः । एतदेवाभिप्रेत्य टिप्पण्यामुक्तं **तथा सर्ववेदान्तेत्यादि** । तथा सरस्वतीताम्बूलचर्वितग्रहणेन ग्रहीतुः कवित्वशक्त्यादिकं लोकेपि प्रसिद्धमित्युपदेष्टृत्वेपि न संदेह इति सर्वमसन्दिग्धमिति दिक् ।

नृत्यतीत्यत्र । टिप्पण्यां वैराग्यात्मकत्व उपपत्तिं स्फुटीकुर्वन्ति **तापनिवर्तकत्वमित्यादिना** । तथा च तत्सम्बन्धेनोपदेशसाहाय्यरूपभक्तकार्यद्वारा वैराग्यरूपत्वं श्रीहस्ते निश्चेयमित्यर्थः । किञ्च, शक्तिवाणाग्रभागे फल-

१०-३०-१४.

---

१ क्रियाज्ञानरूपौ । २ एतस्यैव पर्यायः आवृत्तिः । ३ पूर्वमीमांसायां उत्तरमीमांसायां चेत्यर्थः । ४ पुरुषोत्तमगोपीनिष्ठोच्यते । ५ हीर्धीरिति श्रुतिव्याख्याने वृत्तिरूपं ज्ञानं मनोधर्म इति श्रावितम् । ६ श्रीमद्विट्ठलनाथस्वाम्यूलचर्वितदानेन गोपालदासेषु कवित्वं प्रदर्शितम् ।

व्यवहारो लोके दृश्यते । हस्तश्च क्रियाशक्त्यात्मकस्य बाहोरग्रभागः, वैराग्यं च कर्मणां फलम्, अतोपि तथा । अच्छिद्रत्वमप्यग्रभागत्वादेव । ग्रान्त एवाच्छिद्रकरणादिति बोध्यम् । ननु वैराग्यलक्षणं तत्काष्ठा च पतञ्जलिना 'दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्, तत्परं पुरुषख्यातेर्गुणवैतृष्ण्य'मिति सूत्राभ्यां दर्शिता। तदर्थश्च भाष्ये व्यासपादैरेवं प्रदर्शितः। 'स्त्र्यन्नपानैश्वर्यादिरूपे दृष्टविषये स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तिरूप आनुश्रविकविषये वितृष्णस्य तद्दोषदर्शिनः पुरुषस्य दिव्यादिव्यविषयसंप्रयोगेपि चित्तस्य वशीकारसंज्ञा उपेक्षाबुद्धिः कषायेषु रागादिरूपेषु पक्वेषु इन्द्रियाणां विषयेष्वप्रवृत्त्या चित्ते औत्सुक्यरूपेणापि रागाद्यस्थित्या या एकाग्रता सा वैराग्यम् । इतोप्युत्कृष्टं तु गुणवैतृष्ण्यम्, तच्च विविक्तात्मज्ञानवतो भवतीति ज्ञानपरमकाष्ठारूपं कैवल्यमेतदविनाभूत'मिति । एवं सति गुणपर्यन्तेषु यावद्विषयेषूपेक्षापूर्विका चित्तस्यात्मैकतानता वैराग्यमिति फलति । अत्र च भगवति परस्परं च रागस्य मात्सर्यस्य चोक्तत्वेनात्मैकतानत्वाभावान्न मुमुक्षुसाधारणं वैराग्यम् । न च यतमानसंज्ञादिरेवात्रेति शङ्क्यम् । तल्लक्षणस्याप्यत्राभावात् । किन्तु 'सन्त्यज्य सर्वविषयान्' 'यत्पत्यपत्य' 'कुर्वन्ति ही'त्येतेषु यावद्विषयवैतृष्ण्यस्य सिद्धत्वात्तदेव वैराग्यत्वेन वक्तव्यम् । किञ्च, विप्रयोगे आत्मानमप्यनिच्छतीनां भगवदेकतानतेत्येवमात्मैकतानत्वेपि पूर्वोक्तवैराग्याद्विशेषः । तदुभयमत्र सर्वसाधारणमिति किमत्र वैराग्यं विवक्षितमिति चेत् । अत्रैवं प्रतिभाति। नवमस्कन्धे 'नाहमात्मानमाशास' इत्यादिवाक्येषु भगवतो भक्तेषु कृपा, तदतिरिक्ते रागाभाव इत्याकारकं तत्सिद्धम् । तथा वेणुगीते 'उत्कर्षश्चापि वैराग्य' इति कारिकया भक्त्या भगवत्क्लेशहारकसेवारूपो वैराग्योत्कर्ष उक्तः । एवं सति स्वसमानानां भगवद्विप्रयोगसामयिकनवमाद्यवस्थानिवृत्त्यभावे भगवतः क्लेशसंभवात्तादृशक्लेशं स्वयं सोढ्वापि सखीनां तन्निवारणरूपा या सेवा तदात्मको यो वैराग्योत्कर्षः स उक्तरूपभगवद्वैराग्यं विना न सम्भवतीति तदेवात्र विवक्षितम् । भक्तेषु कृपायास्तदितरेषु रागाभावस्य चात्र स्फुटत्वादिति । तदेतत्सर्वं हृदि कृत्वा प्रभुचरणैरुक्तं अत्रायं भाव इत्यारभ्य, सूच्यते इत्यन्तमिति न किञ्चिदनुपपन्नम् । सुबोधिन्याम् । वैराग्याधिकारबोधनाय स्वामिनीविशेषणानां तात्पर्यमाहुः शान्दमित्यादि । अन्यथा न वदेत्, नृत्यादेः सर्वसाधारणत्वादिति भावः । ननु पूर्वक्रियापरित्यागो वैराग्यबोधकः, स चात्रोक्त एवेति किमवशिष्टं वैराग्य इत्यत आहुः स्वस्या इत्यादि । तथा चान्ततः स्वक्रियात्यागो भगवत्क्रियाशक्त्यैवाग्रे भाव्य इतीदानीमन्तस्तत्सत्त्वैवावशिष्टेत्यर्थः ।

कर्णोत्पलेत्यत्र । टिप्पण्यां अतःपरमित्यादिप्रतीकेन प्रकृतनृत्ये उभयोस्तौल्यमेव विशेष इति बोधितम्। तेन उभयतौल्यविशिष्टं पूर्वनृत्यमेवेदमित्यर्थः ।

१०-३०-१६.

ननु फले विशेषाभावे साधननिष्ठविशेषाङ्गीकारो न युक्त इति पुनर्नृत्योक्तिरनुपपन्नेत्यरुच्या पक्षान्तरमाहुः अथवेत्यादि । तथा चोक्तविहारजनकरसाविर्भावः

पूर्वनृत्यफलं, प्रकृतस्य त्वपूर्वरसाविर्भाव इति फलभेदात्प्रकारभेदाच्च नृत्यान्तरत्वबोधनाय पुनस्तदुक्तिरिति नानुपपत्तिरित्यर्थः । सुबोधिन्याम् । ननु यदीदमुभयनिरूपितं, तदा 'गोप्य' इति बहुवचनस्य कथं सङ्गतिरित्यत आहुः **गोष्ठीमात्र**मिति । तथा च टिप्पण्युक्तरीत्या सिद्धे नृत्यान्तरत्वे अत्र प्रत्येकं पर्यायेण नृत्यमित्यन्यासां द्रष्टृतया सभ्यत्वबोधनाय बहुवचनमिति भावः । ननु पूर्वं सामान्यनृत्ये 'किंकिणीनां च योषिता'मित्यनेनोक्तत्वाद्गाढनृत्ये तस्य कथनावश्यकत्वमिति कुतस्तदनुक्तिरित्यत आहुः **घोषेत्या**दि । तथा च 'उच्चैर्घुष्टं तु घोषणे'ति कोशाद्घोषशब्दस्योच्चैःशब्दवाचकतया तेनैव तस्यापि संग्रहान्न पृथक्तदुक्तिरित्यर्थः । वाद्यपदमजहत्स्वार्थया वाद्यशब्दबोधकमित्याशयेनाहुः **वाद्यशब्दा** इति । उद्बुद्धरसात्मकस्य नानुभावकापेक्षेत्यरुच्या पक्षान्तरमाहुः **स्वतो** वेत्यादि । टिप्पण्यां **श्रमाभावे**त्यादि । तथा 'चोत्तरस्यादिना पूर्वस्यावसान'मिति न्यायोऽत्रापि बोध्यते, तेन स्वत इत्यस्यार्थादेवेत्यर्थो बोध्य इत्यर्थः । न्यायस्य पूर्वं सूचितत्वेनापुष्टार्थमिदमित्यरुच्या पक्षान्तरमाहुः **अथवे**ति । अस्मिन्पक्षे स्वत इत्यस्य स्वामिनीशक्त्येत्यर्थो बोध्यः ।

**एवं परी**त्यत्र । मूलस्यातिदेशः प्रयोजनांशे एव, न तु प्रकारांशे इत्याशयेनाहुः **एवमेव रसोद्गमार्थ**मिति । नन्वेवं सर्वभावेन रमणे रसोद्गम उभयोस्तुल्यतायामेव भवति, न तु न्यूनाधिकभावे, प्रकृते च 'न तत्सम' इत्यादिश्रुत्या भगवत्तुल्यस्याभावात्कथं रसोद्गम इत्याशङ्कां हृदिकृत्वाहुः **ननु प्राकृतीभि**रित्यादि । प्राकृतशरीरत्वमन्तर्गृहस्थितास्वेव, न तु रासमण्डलमण्डलायमानास्वपीति 'उक्तं पुरस्ता'दित्यस्य स्वतन्त्रे एतत्कथोपक्षेपार्थापत्त्या प्रभुचरणैः स्थापितम्, न तु मूले पांक्तम्, न वा श्रीमदाचार्यैरुक्तम्, अतो न तथा तत्राशयः । अत्र सिद्धवत्प्राकृतीत्वकथनाच्चेत्याशङ्कायां तदुभयगोचरत्वं बोधयितुं प्राकृतीत्वोक्तितात्पर्यं प्रभवष्टिप्पण्यामाहुः **अत्राप्राकृती**त्यादि । अप्राकृतीत्वं मूले कुतः सिद्धमित्याकांक्षायां तत्सिद्धिप्रकारं वदन्त आहुः **सिद्धान्त** इत्यादि । तथा चासाधारणस्वभावपरिचायका'द्रेमे रमेश' इति समभिव्याहारादेव सिद्धमित्यर्थः । नन्वयमेव श्रीमदाचार्याशय इति कथं विनिगन्तव्यमित्याकांक्षायामाहुः **किञ्चे**त्यादि, **आज्ञयेती**त्यन्तम् । तथा चोक्तवाक्येन बोधिते रमाविशेषे भगवदाज्ञाया हेतुत्वकथनाद्विनिगन्तव्यमित्यर्थः । ननु यद्येवं तदा 'अधिष्ठानयोग्या' इत्यनेन रमापेक्षया निकर्ष इव किमिति बोध्यते इति शङ्कायां नात्र निकर्षबोधनमपि तूत्कर्षार्थमेवैतदित्याहुः **अपर**श्चेत्यादि । तथा च यदि निकर्षाभिप्रायेणात्र योग्यता बोध्या स्यात्, तदा मूले व्रजपदं न वदेत्, किन्तु किल सुन्दरीभिरित्येव वदेत् । अतो मूले व्रजपदात् श्रीमदाचार्याणामपि तथैवाशय इत्यर्थः । एवं च 'न तत्सम' इत्यादिभिर्यद्यपि साम्यं निषिद्धम्, तथापि 'निरञ्जनः परमं साम्यमुपैती'ति भगवद्वरणेनानञ्जनत्वे तस्यापि श्रावणादत्र तथात्वस्य सिद्धत्वान्न रसोद्गमानुपपत्तिरिति भावः । नन्वेवं रसोद्गमविचारे रमणस्य पारार्थ्यमायाति, तादृशं तु पाङ्क्ति एव, 'अरीरम'दिति णिजन्तेन बोधितम्, प्रकृते तु 'रेमे' इति कर्तृसमवेतक्रियाफलबोधकात्मने-

'१०-३०-१७.

पदेन रमणस्य स्वार्थता लभ्यते इत्यात्मारामत्वभङ्गमाशङ्क्य मूले दृष्टान्तेन तन्निरस्यत इत्याशयेन 'नन्वि'त्यादिना दृष्टान्तमवतार्य 'एताभि'रिति पदेन साम्येपि भिन्नाभी रमणमात्मारामत्वभ-ञ्जकमिति 'कथं रेमे' इत्यनेनाशङ्क्य लक्ष्मीवद्धर्मरूपत्वेन तादात्म्याददोष इति समाधाने ब्रह्मा-नन्दरूपत्वाभावेन तदभावं लक्ष्म्यावेशेन समाधाने ब्रह्मभावाभावेनावेशदौर्घट्यं च दोष बो-धयित्वा तेन लक्ष्म्यामेतासु च रमणस्य भिन्नविधत्वसूचनेन पूर्वपक्षं दृढीकृत्य 'ततो बालको ही'त्यादिना व्याख्यानेन सामर्थ्यादिभिरेव रमणान्नात्मारामत्वभङ्ग इति समाहितम् । तथा सति धर्मात्मकव्यतिरिक्तासु न रमणमित्यायातीति श्रीमदाचार्याणां कथं तथाशयोवगन्तुं शक्य इत्याकांक्षायां 'रेमे तया चात्मरत' इत्यत्र 'साधारत्वाय तस्यामात्मानं स्थापितवा'निति यदुक्तं तदनुसन्धाय मूलस्य दृष्टान्तद्वयगर्भत्वस्फुटीकरणाद्वितीयदृष्टान्तावतारिकायामात्मारामत्व-निर्वाहकरमणसाधकसिद्धान्ताक्षेपात्तत्र तादृशसिद्धान्तावतारिकाक्षेपस्यार्थतो लाभाच्चावगन्तव्य इत्याशयेन पूर्वदृष्टान्तं द्वितीयावतारिकां च विवरीतुं पूर्वदृष्टान्ताक्षेपं पूर्वं तत्र स्फुटीकुर्वन्ति **नन्वेतद्रसेत्यादि । सेति । आज्ञा । तत्सम्पादनमनुचितमिति** । आज्ञया तासु रमानि-वेशसम्पादनमनुचितम् । रमणस्य स्वार्थताबोधनात्तादृशरमणविघटकत्वेनानुचितम् । ननु मूलवाक्यात्तदावेशे सिद्धे आज्ञायां को दोष इत्याकांक्षायां तमप्याक्षिपन्ति **किञ्चेत्यादि** । तथा च रसात्मत्वेनैतासु रमणौचित्येपि भगवत आत्मारामत्वेनाप्येवं रमणस्य सहविधे उक्तत्वात्तदभङ्गेन कथं रेमे । न च लक्ष्मीवत् । तस्याः ब्रह्मानन्दरूपतया ब्रह्माभिन्नत्वेन तथा रमणौचित्येप्येतासु ब्रह्मानन्दरूपत्वाभावेनाभेदस्य दुर्वचत्वात् । एतल्लक्ष्मीवद्रमणम् । अपिशब्देन रमावेशकृतभेदाभेदात्पूर्वदृष्टान्तप्रतिपादितं रमणं च ब्रह्मभावाभावेनावेशस्याशक्य-वचनत्वादनुचितमित्येव पूर्वोक्तावतिरिक्तायास्तत्सिद्धान्तस्य चार्थोऽऽक्षिप्तो बोध्योऽतोऽत्र न त्वदभिमतोर्थ इत्यर्थः । नन्वेवं पूर्वावतारिकार्थस्तदा स्याद्यदि पूर्वदृष्टान्तव्याख्याने तदनुसारी समाधिर्दृश्येत, तत्र त्वर्भकदृष्टान्तेन समाधानान्न तथार्थ इत्याशङ्कायां तदाशयमाहुः **अत्रे-त्यादि । अत्रेति** । उक्ताशङ्कायाम् । **अयमिति** । वक्ष्यमाणः । कथमित्याकांक्षायां तथात्व-मुपपादयन्ति **यथेत्यादि** । नन्वेवं सति रमेशपदबोधितरमावेशो व्यर्थः स्यादित्याशङ्कायां तन्निरासायाहुः **रमाया** इत्यादि । तथा च रमार्थं रमावेशोऽतो न व्यर्थ इत्यर्थः । नन्वस्त्वेवम्, तथाप्यावेशे स्वस्मिन् रमात्वानुसन्धानात्पूर्वरसविच्छेद इत्यत आहुः **एतेने-त्यादि** । नन्वस्त्वेतासामज्ञानम्, तथापि प्रभोः सर्वज्ञत्वेन तदनुपपन्नम्, ताम्बूलग्रहणादिना एतासामपि तथेत्याशङ्कायां द्वयोस्तदनुसन्धानेप्यक्षतिरित्याहुः **अपिचेत्यादि, उचिततरे-त्यन्तम्** । तथा चावेशस्योक्तनितयार्थत्वेऽन्यतरार्थत्वे वा क्षत्यभावान्नाज्ञायामनौचित्यग्रास इत्यर्थः । नन्वस्त्वाज्ञाया उचितत्वम्, तथापि रमायाः ब्रह्मानन्दरूपत्वस्य पूर्वं स्थापि-तत्वात्सर्वत्र तथा प्रसिद्धेश्च तस्याः ब्रह्मानन्दरूपत्वमविवादम्, अत्र च धर्मात्मकव्य-तिरिक्तासु तयात्मारामः स्फुट इति तमादाय या न्यूनता तामनुसन्धायैव श्रीमदाचार्यैरा-वेशाभावपूर्वपक्षे ब्रह्मभावाभावो हेतुत्वेनोक्त इति तद्विरोधो नापैतीति कथं तथाशय इत्या-

शङ्कायां तमनूद्य विरोधं परिहरन्ति **यच्चेत्यादि, तत्रोच्यत** इत्यादि च । अयमर्थः । एतासु न्यूनत्वमापादयता भवता रमास्वरूपं कीदृक् प्रतिपन्नम्, किं 'ब्रह्मभूतः प्रसन्नात्मे' त्यादिप्रतिपादितब्रह्मभावात्मकसाधनीयफलात्मकब्रह्मानन्दरूपम्, उत पुरुषोत्तमाभिन्नानन्दरूपम् । तत्राद्यस्तु न युक्तो, न हीत्यादिनोक्तदोषात् । अतो द्वितीय एवाङ्गीकार्यः । तथा सति पुरुषोत्तमस्वरूपं पूर्वं विचारणीयम् । तच्च रसरूपमिति पूर्वं निर्णीतम् । अतो रमायास्तदभेदेपि दाम्पत्यस्य प्रसिद्धत्वात्सिद्धे शक्तिशक्तिमद्भावे सोऽभेदस्तादात्म्ये पर्यवसन् रमायास्तदानन्दैकदेशतां व्यवस्थापयतीत्येतादृशं रमास्वरूपं शास्त्रविचारेण सिद्धम् । तथा सति न ब्रह्मानन्दभावहेतुकरमावेशाभावशङ्कायां श्रीमदाचार्याभिप्रायः, किन्तु ब्रह्मानन्दपदेनात्रान्यदुच्यत इति तदादायात्र शङ्केति न त्वदुक्तरीतिकः श्रीमदाचार्योक्तिविरोध इत्याशयेन रमास्वरूपं निर्धारयन्ति **किन्त्वित्यादि** । रमास्वरूपनिर्धारेण यत्सिद्धं तदाहुः **तथा चैतादृश्या इत्यारभ्योच्यत** इत्यन्तम् । अत्र प्रथमपक्षे तस्याः मूर्तरूपेण न स्थापनम्, किन्त्वमूर्तस्वसामर्थ्यात्मना रूपात्मना वा, तेनाननुसन्धानपक्षसंग्रहः । अनुसन्धानसंग्राहके द्वितीयपक्षे च मुख्यरसं तत्पोषकं चाविर्भावयित्वा रेम इत्यर्थो भवति । तथा सति तत्पूर्वपक्षे रमायास्तादृशरसभावाभावाच्चदावेश एतास्वनुचित इत्यर्थोऽभिप्रेत इति न विरोधगन्धोपीति पूर्वोक्त एवाशयः । एवं सति 'स भगवः कस्मिन् प्रतिष्ठित' इति प्रश्ने 'स्वे महिम्नी'ति 'अन्यो ह्यन्यस्मिन्प्रतिष्ठित' इतिवच्छ्रावितस्योत्तरस्य विचारे स्वमहिमात्मकशक्तिरूपत्वमेतास्वपि निर्बाधमिति शक्तिशक्तिमद्भावस्य रमायामिवैतास्वपि तौल्यात्स एवात्रापि समाधिरिति रसरूपत्वादिकमात्मारामत्वं चैवमविरुद्धम्, न तु तथेत्यर्थः । एवं पूर्वदृष्टान्तव्याख्यानतात्पर्यं स्फुटीकृत्य द्वितीयं व्याख्यानं स्फुटीकर्तुं तदवतारिकासूचितामरुचिं स्फुटीकुर्वन्तस्तामवतारयन्ति **ननु स्वेत्यादिना** । इदमिति । पूर्वोक्तरीतिकव्याख्यानम् । नन्वावश्यकत्वे क्लिष्टकरणमप्यदुष्टम्, यथा 'महद्भयं वज्रमुद्यत'मित्यादावित्याकांक्षायां तद्वैधर्म्यं बोधयितुं वदन्तीत्याशयेनाहुः **पक्षान्तरेत्यादि** । अत्राभासार्थकथनेन तद्वैलक्षण्यं बोध्यते, तस्य नियमनायावश्यकत्वात्, अत्र तदभावादिति । **इयमिति** । अनावश्यकत्वबोधिका । यथा नियमनार्थं तदावश्यकम्, एवं रमाया अपि भक्तत्वेन तदभिलापपूर्तिरप्यावश्यकीति तथा करणम् । न च क्लेशः मुख्यरसपोषार्थत्वादित्युक्तमित्याशयेन दृष्टान्तार्थं स्युत्पादयन्ति **तथा हीत्यादि** । एवं व्याख्यानयोरनुपपत्तिं परिहृत्य मूलग्रन्थं स्फुटीकुर्वन्ति **तथाचेत्यादि** । **द्वितीये** इति । लौकिकार्थैकसम्बन्धी । **एवं सतीति** । उक्तरीत्यापि रमावेशे स्वीकृते सतीत्यर्थः । (सुबोधिन्याम्) । नन्वस्मिन्पक्षे आत्मारामत्वस्य कथं समर्थनमित्याकांक्षायामाहुः **एतेनेत्यादि** । तथा च पूर्वोक्तश्रुत्या रसात्मकत्वरसवत्त्वाभ्यां न स्वरूपभेदः, एवं ताभिरपि न भेदः, तासामपि रसस्वरूपान्तःपातित्वात्, तेजःस्थले किरणप्रवेशेनैव प्रतिबिम्बात् । अतोत्रापि दृष्टान्तेनैव पूर्वोक्तरीत्या तत्समर्थनमित्यर्थः । पूर्वत्र रमास्थापनम्, अत्र तु स्वस्थापनमिति विशेषः, अतो न किञ्चिदनुपपन्नम् ।

१०-३०-२१. **प्रामृजदित्यत्र । क्लेश एव निवर्तते** इति । क्लेशो निवर्तत एवेत्येवं योजना ।

**सोम्भसीत्यत्र । पूर्वं तासामित्यादि** । अत्र श्रीहरिरायाः । अयं भावः । अध्यायचतुष्टयलीलायां यद्यपि भगवत्स्पर्शोस्ति, तथा'प्यात्मारामोप्यरी-

१०-३०-२४.

रमत्' 'रेमे तया चात्मरत आत्मारामोपि' 'तासामाविरभूत्' 'काचित्क-राम्बुज'मित्यादिवाक्यैस्तासामिच्छयैव भगवता रमणं कृतं, न स्वार्थं स्वयावत्सामर्थ्य प्रकटनेन । अत एव 'त्रैलोक्यलक्ष्म्येकपद'मिति तत्र न निरूपितं, किन्त्वेतल्लिलोपक्रा एव निरूपितम् । अत एवाचार्यैरेतदध्यायारम्भे 'स्वानन्दार्थमितीर्यत' इत्युक्तम् । तथ च पूर्वाध्यायेषु रमणसत्त्वेपि श्रमलीला नाविरभूत् । इह तु स्वेच्छया सर्वं कृतमि लौकिकसजातीयकामभावः सुरतान्तश्च जातः । तथा च लौकिकसरूपभावे जा यथात्मारामत्वादिमर्यादा मग्ना, तथा देशकालमर्यादापि मग्ना, देशो रसानुभवदेशः, काल रसावष्टम्भकालः । अत एव तथाभूतः सन् जलक्रीडार्थं जले प्रविष्ट इत्यर्थ इति ।

मम तु प्रतिभाति । गजदृष्टान्तभिन्नसेतुत्वयोरितः पूर्वलीलायामनुक्तत्वात्तत्रात्मारा स्वभक्तविक्लवयोरनुसन्धानपूर्वकमेव तत्करणम् । अव्यवहितपूर्वायां तु दृष्टान्तविशेषणाभ्य तदभावो बोध्यते । तत एव लोकतौल्यप्राप्त्या राज्ञोपि धर्मसेतुभङ्गसन्देहादत्र प्रश्नः वस्तुतस्त्वत्र दृष्टान्तेन पूर्वं लीलयेति प्रयोगाच्च ब्रह्मधर्मादिभञ्जनेप्यायासाभावो बोध्यते अक्लिष्टकर्मत्वाय । अत एव भङ्गेप्यभङ्गश्च । ततश्च निरङ्कुशमात्मतन्त्रत्वं समर्थ्यते, अन्यः स्वधर्माधीनस्वातन्त्र्यं भज्येत । देशकालाभ्यां रसस्यानुभवेऽवष्टम्भे च तदधीनता ब्रह्मरूपत्वं तस्य भज्येत । अतस्तदुभयनिवृत्त्यर्थं देशकालमर्यादाभङ्गः । तेन मर्य दान्तरङ्गमाहुः **अत** इत्यादि ।

**एवं शशाङ्केत्यत्र । सर्वथा रतास्वित्यादि** । अत्र प्रथमाः कुमार्यः । द्विती नित्यलीलास्थाः श्रुतिसिद्धा अन्तर्गृहगताश्च । तृतीया द्वारकालीलास्थाः

१०-३०-२६.

तुरीया गोपगृहसम्बन्धिन्यो बोध्याः । एतासूक्तविशेषणकत्वान्नात्माराम भङ्गप्रयोजकता । इतोऽतिरिक्ता यद्यप्यत्र स्फुटं नोक्ताः, तथापि भिन्नसेतुत्वाद्युक्तिबला बन्धोक्तरीत्या ज्ञातव्याः । एतदेव पूर्वश्लोकेप्युक्तम् । मर्यादामार्गो लौकिकश्चान्यथा इत्यनेनेति । तदेतदभिसन्धायाहुः **अत्र इत्यारभ्य, प्रापयिष्यत्येवेत्यन्तम्** । ते वेति । निशादिकथान्तेष्वेव । अर्थान्तरमाहुः **शरदित्यादिना** । तथा च लौकिककाव्येष्व सरस्वती भगवदीयमेव वदति, लौकिका एव त्वन्यथाभिमन्यन्त इति भावः । अत लौकिकासु गाथास्वपि जीवनाम दूरीकृत्य भगवन्नाम तत्र निक्षिप्य ताः प्राच्यो गापयाञ्चक्रु

**संस्थापनायेत्यत्र** । ननु दैत्यनाशभूभारहरणयोरप्यवतार(कार्य)त्वात्तद्वदिदमप्य कार्यमित्यत आहुः दैत्यादीति । तथा चास्य तदनुपयोगित्वान्न ताद

०-३०-२७.

मिति नावतारगौणकार्यत्वमपीत्यर्थः । **तस्य साधनमिति** । धर्मो

भगशब्दवाच्यान्तर्गत इति तद्रक्षणावश्यकतया रक्षणसाधनं भगवत्त्वमित्यर्थः । **एता-भ्यामिति** । धर्मस्थापनाधर्मनिवृत्तिभ्याम् ।

**आप्तकाम** इत्यत्र । **उभयोरिति** । धर्माधर्मयोः । ननु 'द्वयं तथा ब्रह्मणि कर्म नर्च्छती'ति न्यायादुभयग्रहणे को दोष इत्याकांक्षायामाहुः **प्रयोजनं वक्तव्यमिति** । ननु गोपिकाकामपूर्तिरेव प्रयोजनमिति चेत्तत्राहुः **अन्तर्यामिण ईश्वरस्येति** । तथा च तास्तथैव प्रेरयेत्, उद्वहेद्वेत्यर्थः ।

१०-३०-२९.

**धर्मव्यतिक्रम** इत्यत्र । द्वितीयपक्षं दूषयन्ति **नहीत्यादि** । तत्र हेतुः । **न ह्यन्यार्थमित्यादि** । यथा मृगयार्थं निःसृतो राजा उपवने विहरति, विहरन्नपि सेवकादीन् शास्ति तथेत्यर्थः । न च तासां बन्धसम्भव त्याहुः **प्रकाशनार्थमित्यादि** । तथा च 'नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृपे'त्यव-तारकार्यं प्रागुक्तम् । तच्चैवमप्युपपन्नमेव । धर्मस्थापनाऽधर्मप्रशमावप्येतदर्थाविति प्रका-रान्तरेण तत्सिद्धौ न तयोरावश्यकत्वम् । अतो नावतारविरुद्धमित्यर्थः । लोकप्रमेय-विरोधं परिहरन्ति **अत इति** । साधनविरुद्धफलदानादित्यर्थः । इदमेव 'न मय्यावे-शितधिया'मित्यत्र सिद्धम् । तथा च वेदस्यापि नियामकोयम्, न तु तन्नियम्य इति बोधयतीत्याहुः **ईश्वरधर्मोऽयमिति** । न **भवेदिति** । स्वस्य न भवेत् । वेदविरोधं परिहरन्ति **विधीत्यादि** । तथा च नियोज्यत्वाभावान्न वेदविरोधीत्यर्थः ।

१०-३०-३०.

**ईश्वराणामित्यत्र** । **न त्वाचरितमिति** । उक्तं चरित्रं न लोकसंग्रहार्थम्, किन्तु निरङ्कुशैश्वर्यबोधनार्थम्, तेन तत्प्रतीयमानरूपेण न तथ्यमित्यर्थः । वचस्तथ्यमित्यत्रोपपत्तिं वदन्ति **ते हीत्यादि** ।

१० ३०-३२.

**यत्पादेत्यत्र** । **मार्गत्रयमिति** । हेतुरिति शेषः । **विस्मारितदृष्टेत्यादि** । एतेनाताद्दशा इदानीं ये मार्गप्रवेशमात्रेण स्वैरमाचरन्ति, ते दुष्टा बोध्याः । नापि कर्ममार्गविचारेण कर्मप्राधान्यपक्षे दोषः शङ्कनीय इति यदाभासे उक्तं तदुपपादयन्ति **कर्म हीत्यादिना** । **प्रतिनियतमिति** । नियतं नियतं प्रति लक्षी-कृत्येत्यर्थः । **तत्रेति** । वपुषि । **तेनेति** । वपुषा बन्धो वेति वाशब्दः कर्मणान्वेति । **यथान्नेत्यादि** । अन्नं पृथिवी, 'यत्कृष्ण तदन्नस्ये'त्यादिश्रुत्या तथा सिद्धत्वात् । तथा च लौकिके देहे वृद्धिविपरिणामादिदर्शनेन पार्थिवांशानां समवायव्यवायसन्देहभेदेनापि यथा सन्तत्यैक्यादवच्छेदैक्याद्वैकदेहव्यवहारः, तथात्र पृथिव्यात्मकसद्यदेशैक्यादवच्छेदैक्याद्वा एकदेहव्यवहार इत्यर्थः । तदेव व्युत्पादयन्ति **भगवत इत्यादि** । ननु भगवतः सर्वतः-पाणिपादान्तत्वेनैतत्समाधानमात्रवपुःपदाद्विरुध्यत इत्यस्वरसात्प्रकारान्तरेण समादधते **स्वामिनीनामित्यादि** । तथा च व्यवस्थापकाभावान्न कर्मणात्र बन्ध इति प्रमाणविचा-

१०-३०-३५

रेण समाधिरुक्तः । **तत्राहेति** । तादृशाशङ्कायां तेषां भ्रान्तत्वमाहेत्यर्थः । **क्रीडनेनेत्या-**दिना भ्रान्तौ हेतुर्विशदीकृतः ।

१०-३०-३८. **नासूयन्नित्यत्र** । अज्ञानादनारोपे तेषामनङ्गीकृतत्वमायातीत्यरुच्या पक्षान्तरमाहुः **सर्वथाङ्गीकृता इति वेति** । अस्मिन्पक्षे मायापदं बुद्धिवाचकम्, 'स्यात् माया शाम्बरी क्रिया दम्भो बुद्धिश्चे'त्यनेकार्थकोशात् तथा च तस्य मायया भगवत्सम्बन्धिन्योत्कृष्टत्वबुद्ध्या मोहिताः अतिस्नेहकलायुता सन्तो नासूयन्, खलु प्रसिद्धौ, स्वपार्श्वस्थास्तान्मन्यमानाः संमानितवन्त इत्यर्थो बोध्यः । एतदेव विशदीकुर्वन्ति बुद्धिरेवेत्यादि । अत्र पक्षद्वयनिरूपणाद्ये गोपाला रात्रिगानपरास्तेषां द्वितीयपक्षे निवेशः, अन्येषां च पूर्वस्मिन्निति ज्ञेयम् ।

१०-३०-३९. **ब्रह्मरात्र इत्यत्र** । पूर्वश्लोके दारपदादत्रान्यपूर्वाणामेव गृहगमनम्, न कुमारिकाणामिति शङ्कानिरासोपि टिप्पण्यां 'दिवा विप्रयोगे'त्यादिनैव कृतो बोध्यः ।

**इति श्रीपीताम्बरकृतः श्रीसुबोधिनीटिप्पण्योः प्रकाशः तामसफलप्रकरणीयः ।**



# मुद्रितपुस्तकानि ।

| क्र. | पुस्तकम् | मूल्यम् |
|---|---|---|
| १ | सेवाफलम् । द्वादशविवरणसमेतम् । | रु. |
| २ | निरोधलक्षणम् । षड्विवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. |
| ३ | संन्यासनिर्णयः । अष्टविवरणसमेतः । गुर्जरानुवादसमेतश्च । | रु. |
| ४ | जलभेदः । चतुर्विवरणसमेतः । पञ्चपद्यानि । विवरणद्वयसमेतानि । सेवाफलम् । विवरणत्रयम् । | रु. |
| ५ | भक्तिवर्धिनी । चतुर्दशटीकासमेता । | रु. |
| ६ | सिद्धान्तमुक्तावली । अष्टविवृतिसमेता । गुर्जरानुवादसमेता च । | रु. १[illegible] |
| ७ | सिद्धान्तरहस्यम् । एकादशविवरणसमेतम् । गुर्जरानुवादसमेतं च । | रु. [illegible] |
| ८ | पुष्टिप्रवाहमर्यादा चतुर्विवरणसमेता । | रु. १[illegible] |
| ९ | नवरत्नम्-पञ्चविवृतिसमेतम् । गुर्जरभाषानुवादसमेतं च । | रु. १[illegible] |
| १० | श्रीसुबोधिनी । दशम-पूर्वार्ध-तामस-फलप्रकरणम् । | रु. |
| ११ | श्रीसुबोधिनी । दशम-उत्तरार्ध-राजस-साधनप्रकरणम् । | रु. [illegible] |
| १२ | श्रीसुबोधिनी दशमोत्तरार्धराजसफलप्रकरणम् । | रु. |
| १३ | श्रीसुबोधिनी-दशमोत्तरार्धसात्त्विकप्रमेयप्रकरणम् | रु. [illegible] |
| १४ | श्रीमती टिप्पणी । श्रीमद्विठ्ठलेश्वरप्रणीता । | रु. |
| १५ | रासपञ्चाध्यायीप्रकाशः । श्रीपीताम्बरप्रणीतः । | रु. [illegible] |
| १६ | दशमतामसफलयोजना । श्रीलालूभट्टकृता । | रु. |
| १७ | वेदान्ताधिकरणमाला । श्रीमत्पुरुषोत्तमप्रणीता । | रु. १-०-० |
| १८ | भावप्रकाशिका । ब्रह्मसूत्रवृत्तिः प्रथमाध्यायः । श्रीकृष्णचन्द्रकृता । | रु. १-०-० |
| १९ | भावप्रकाशिका । द्वितीयाध्यायः । | रु. ०-८-० |
| २० | तैत्तिरीयोपनिषद्भाष्यम् । श्रीजयगोपालभट्टकृतम् । गुर्जरानुवादयुतम् । | रु. १-०-० |
| २१ | भागवतार्थनिबन्धः । प्रकाशावरणभङ्गसमेतः । आद्यस्कन्धद्वयम् । | रु. १-०-० |
| २२ | शृङ्गाररसमण्डनम् । श्रीविठ्ठलेश्वरप्रकटितम् । गुर्जरानुवादसमेतम् । | रु. २-८-० |
| २३ | श्रीमधुराष्टकम् । षड्विवरणसमेतम् । | अमूल्यम् । |
| २४ | प्रेमामृतम् । श्रीविठ्ठलेश्वरकृतविवृतिसमेतम् । पारवृढाष्टकम् । श्रीगोपेश्वरकृतटीकासमेतम् । | रु. ०-८-० |
| २५ | रसाब्धिमहाकाव्यम् । श्रीदेवकीनन्दनकृतम् । | रु. १-०-० |
| २६ | मनोदूतम्-हृदयदूतं च । गुर्जरानुवादसमेतम् । | रु. ०-८-० |
| २७ | त्रिविधनामावली । टीकासमेता । | रु. १-४-० |
| २८ | श्रीपुरुषोत्तमनामसहस्रम् । नामचन्द्रिकायुतम् । | रु. ०-१०-० |
| २९ | पत्रावलम्बनम् | रु. ०-४-० |
| ३० | श्रीमदणुभाष्य-प्रकाश-रश्मि तृतीयाध्यायप्रथमपादः । | रु. १-०-० |
| ३१ | श्रुतिरहस्यम्-प्रकाशसमेतम्-गुर्जरानुवादयुतम् । | रु. १-०-० |
| 32 | Discuss how far Sankaracharya truly represents the view of the author of the Brahma-Sutras | Rs. 1-0-0 |

**१. पंडित गट्टूलालजीनी पाठशाळा, केथिड्रलस्ट्रीट मूळेश्वर, मुंबई.**

Printed by Manilal Itcharam Desai at the "Gujarati News" Printing Press
Nos 20–24 Bake House Lane, Fort, Bombay

Published by Mulchandra Tulsidas Telivala B. A., LL. B., Vakil, High Court,
Bhaskar Buildings, [illegible] P Tank Road, Girgaon, Bombay.

श्रीकृष्णाय नमः ।

# दशमतामसफलप्रकरणयोजना ।

घागरोदीश्रीभाणेजभट्टसुतदीक्षितश्रीलालूभट्टकृता ।

श्रीगिरिधारी करोतु कुशलानि ।

फलप्रकरणार्थोक्तौ ब्रह्मानन्दात्समुद्धृत्येत्यादि । ब्रह्मानन्दादित्यादिसा-
र्धपञ्चकारिकाणामर्थष्टिप्पण्यां स्फुटः । एतावता यद्ब्रह्मानन्दानुभवरूपं मर्यादाभक्तौ
फलम्, तदत्र पुष्टिभक्तानां भजनानन्दाख्यफलप्राप्तौ साधनमिति मर्यादाभक्तितः पुष्टि-
भक्तेः परमोत्कर्षः सिद्ध इति बोद्धव्यम् । इह पञ्चाध्यायीसुबोधिन्या अर्थः स्फुटतया
विस्तारेण च टिप्पण्यां निरूपित इति मया योजनायां ताः फक्किका न विव्रियन्ते, किन्तु
टिप्पण्यां या फक्किका न विवृताः, ता एव योज्यन्त इत्याकलनीयम् । आत्मना प्रथमा
लीलेति । अत्र पक्षद्वयं टिप्पण्याम् । तत्र प्रथमपक्षे आत्मना प्रथमाध्याये लीला, मनसा
द्वितीये, वाक्प्राणैस्तृतीये, इन्द्रियैः चतुर्थे, शरीरेण पञ्चमे । एवं पञ्चस्वध्यायेषु एकैकेन
लीला, एकैकस्याध्यायस्यार्थः । द्वितीयपक्षे तु आत्मादिभिः पञ्चापि लीलाः पञ्चस्व-
ध्यायेषु सर्वत्रोच्यन्त इति । तत्र यद्यपि पुरुषोत्तमस्य 'स यथा सैन्धवघन' इतिश्रुतेः
सैन्धवघनवदानन्दैकरूपत्वेनैकरसत्वात् करचरणादीनामानन्दमयत्वेन साकारस्य प्रतीय-
मानस्यैवात्मरूपत्वम्, नतु प्रतीयमाने पुरुषोत्तमदेहे जीववदात्मस्थितिः, तथापि 'पश्यन्
चक्षुर्वदन् वाक्' इति श्रुतेस्तत्तदिन्द्रियकार्यं कुर्वन् भगवानेवेन्द्रियरूपः, तथा आत्मकार्यं
कुर्वन् आत्मशब्दव्यवहार्यो भवतीति भावः । अतएव श्रीमत्प्रभुचरणैष्टिप्पण्यां 'यथे-
न्द्रियादिरूपत्वं शुद्धस्य ब्रह्मणस्तथा । आत्मत्वादिस्वरूपत्वं मन्तव्यं श्रुतिवाक्यत'
इत्यनेनात्मरूपता ब्रह्मणो निरूपिता । आत्मकार्यं तु पुरञ्जनोपाख्याने स्पष्टम् । तत्र हि
केवलस्यात्मनो लिङ्गशरीरसंबन्धकरणं स्थूलदेहवासकरणं च वर्ण्यते । अतः प्रथमतः
सर्ववस्तुसम्पादनं आत्मकार्यम् । एवमत्रापि 'रन्तुं मनश्चक्र' इत्यादिषु वाक्येषु नूतनाया
मनआदिसर्वसामग्र्याः करणं निरूपितम् । अत आत्मकार्यमस्मिन्नध्याये वर्णितं बोद्ध-
व्यम् । अग्रे कारिकाणामर्थष्टिप्पण्यां स्फुटः ।

१०–२६–१ भगवानपीत्यस्याभासे । स्त्रीषु स्वानन्दः स्थापनीय इतीति ।
प्राकृते लोके हि भोगादिना आनन्दलेश उत्पाद्यते, सोपि न चिरस्थायी । इह तु स्वरू-

पात्मक आनन्दो रमणेन व्रजसुन्दरीषु स्थाप्यते । स तु स्वरूपात्मकत्वान्न ध्वंसप्रतियोगीत्यप्राकृतत्वमेव स्फुटीभवति । तत्र सर्वासु संकल्प इत्यादि । स्वस्मिन् वर्तमानो यो व्रजस्त्रीरमणसंकल्पः स सर्वास्वपि व्रजस्त्रीषु बोधनीय इत्यर्थः । सर्वासु व्रजस्त्रीषु कथं बोधनीय इत्याकांक्षायां वेणुना बोधनीय इत्याहुः तत्र वेणुरपि सहायतां प्राप्स्यतीति ।

१०–२६–२ स चर्षणीनामुदगादित्यत्र । शक्तिसहितानामेव परमानन्दानुभवस्य वक्तव्यत्वादिति । मर्यादाभक्तिमार्गे हि मुक्तितः पूर्वमेव चर्षणीशक्तीनां निवर्तनम्, मुक्तस्य परिभ्रमणाभावेन चर्षणीनामनुपयोगात् । प्रकृते तु चर्षणीशक्तीनां परिभ्रमणहेतुभूतानां रासक्रीडायां नृत्यादौ भ्रमणे उपयोगान्न शक्तीनां निवृत्तिः, किन्तु परिभ्रमणशक्तिसहितानां व्रजवधूनां रासे परमानन्दानुभवो भावीति ज्ञानेन तासां शोकहानिः । तदेतदुक्तं शक्तिसहितानामेव परमानन्दानुभवस्य वक्तव्यत्वादिति ।

१०–२६–३ दृष्ट्वा कुमुद्वन्तमित्यत्र । कुमुद्वांश्चन्द्र इति । कुमुद्वत्पदनिरुक्तिमाहुः पृथिव्यां सर्वत्रैव मुदं कृतवानिति । अर्थप्रदर्शनमेतत् । तथा च कौ पृथिव्यां मुत् कुमुत् कुमुद्विद्यते कार्यत्वेन यस्य स कुमुद्वानिति शब्दसिद्धिः । तत्फलितार्थ उक्तः 'पृथिव्यां सर्वत्रैव मुदं कृतवा'निति ।

१०–२६–४ निशम्य गीतं तदनंगवर्धनमित्यस्य विवृतौ । अङ्गं तु नाशयत्येवेति । भक्तानां प्रपञ्चाभावो निरोध इति द्वितीयस्कन्धसुबोधिन्यामुक्तत्वात् दशमसुबोधिन्यां 'एवं सर्वगतो विष्णुः प्रकटश्चेन्न तद्विशेत् । तावन्न लीयते सर्वमिति कृष्णसमुद्यम' इत्यत्रापि प्रपञ्चलयस्योक्तत्वात् 'लौकिकेषु तु भावेषु यत्रैव हरिवेशनम् निवर्तते तदेवात्र वह्नेर्दाहमयं यथे'त्यत्रापि प्रपञ्चलयस्योक्तत्वाद्भक्तानां पूर्वदेहादिप्रपञ्चलयः फलात्मको निरोध इति मया पूर्वं निरोधपदार्थविचारे उपपादितम् । तथा देहादिलयकर्ता वेणुनाद इत्युक्तं 'अङ्गं तु नाशयती'त्यनेन । एवं सत्यलौकिकदेहादिप्रपञ्चसम्पादनं वेणुनादकार्यमिति फलितम् ।

१०–२६–५ दुहन्त्योभिययुरित्यत्र । दुग्धस्योत्पत्तीरयारभ्य प्रथममुदीरिता इत्यन्तम् । राजसीत्रिके दुहन्त्यो दुग्धोत्पत्तिं कुर्वन्त्यो राजस्यो राजसराजस इत्यर्थः । पयोधिश्रित्यनेनोक्ताः स्थितिं कुर्वन्त्यः सात्त्विक्यः सात्त्विकराजस्य इत्यर्थः संयावमनुद्वास्येति निरूपिताः दुग्धस्य प्रलयकर्त्र्यस्तामस्यः तामसराजस्य इत्यर्थः

१०–२६–६ परिवेषयन्त्य इत्यस्याभासे । सात्त्विकीराहेति । सात्त्विकीनां त्रिकमाहेत्यर्थः । तत्र परिवेषणकर्त्र्यः सात्त्विकीषु राजस्यः राजससात्त्विक्य

इत्यर्थः । तासां राजसीत्वं व्युत्पादयन्ति परिवेषणं च सृष्टिरेव रेतस उत्पादकत्वादिति । परिवेषणं भोजने कारणम्, भोजनेन रेतस उत्पत्तिः, एवं परिवेषणस्योत्पत्तिसाधकत्वात्तत्कर्त्र्यो राजससात्त्विक्यः । 'पाययन्त्यः शिशून्पय' इत्यनेनोक्ताः सात्त्विक्यः सात्त्विकसात्त्विक्य इत्यर्थः । तासां सात्त्विकीत्वमुपपादयन्ति स्तनदानं पालनमिति । 'शुश्रूषन्त्यः पतीं' नित्यनेनोक्तास्तामस्यः तामससात्त्विक्य इत्यर्थः । तासां तामसीत्वमुपपादयन्ति शिष्टमन्यदिति । शिष्टं तामसीत्वं अन्यत्पतिशुश्रूषणं तामसमित्यर्थः । पतिशुश्रूषणस्य भोगप्राधान्येन पारमार्थिकबुद्धिनाशकत्वात् । नाशस्य तमोगुणकार्यत्वात् । एवं राजसतामससात्त्विकत्रिकमुक्त्वा राजसत्वं तामसत्वं सात्त्विकत्वं च कथमित्याकांक्षायामुपपादयन्ति शरीरसेवातः गोसेवा मुख्या, ततः पतिसेवेतीति । एवं सति शरीरसेवा तामसधर्मः 'अश्नन्त्योऽपास्य भोजन'मित्यनेनोक्ते त्रिकेऽस्तीति बोध्यम् । गोसेवा हि शरीरसेवातः उत्तमा । तथा च गोसेवा राजसधर्मः, सा 'दुहन्त्योऽभिययु'रित्यनेनोक्ते त्रिके वर्तते । गोसेवातः पतिसेवा उत्तमा, सा पतिसेवा का? 'परिवेषयन्त्य' इत्युक्ते त्रिकेऽस्ति । सा सात्त्विकीति बोध्यम् ।

१०–२६–१० ध्यानप्राप्ताच्युतेत्यस्य विवरणे । ननु समागतोपि जारत्वेनेति । यद्यप्येतासां जारबुद्धिमत्त्वेन जारत्वेनैव भगवान् ध्यातः, तथापि ध्याने प्राविर्भूतो भगवान् जारत्वेन न समागतः, किंत्वच्युतत्वेन, ध्यानप्राप्ताच्युताश्लेषेत्यत्राच्युतपदात् । 'समागत' इतिपदेन ध्यानप्राप्तेति प्राप्तपदस्यार्थ उक्तः ।

१०–२६–१२ गुणप्रवाहोपरम इत्यस्य विवृतौ । ननु कृष्णं ब्रह्मत्वेन न विदुरेतावता किं बाधकम्, बहवोपि श्रीकृष्णं ब्रह्मत्वेन न जानन्ति, अथापि येषां वेदान्तश्रवणादिना ब्रह्मज्ञानमस्ति, ते मुच्यन्त एव, तथैता अपि मुक्तिं प्राप्स्यन्तीत्याशङ्क्याहुः वैदिकः पक्षस्त्वसंभावित एव । 'ब्रह्म वेद ब्रह्मैव भवती'त्याद्युपनिषन्निरूपितो ब्रह्मभावस्त्वसंभावित एव, वेदान्तश्रवणमननाद्यभावादित्यर्थः ।

१०–२६–१४ नृणां निःश्रेयसार्थायेत्यत्र । नृपेति सम्बोधनं कश्चिद्राजा कथञ्चिद्गच्छतीत्यादि । अयमर्थः । राजा ह्यन्यैरेव सर्वं कार्यं कारयति, स्वयं तु कदाचिदेव क्रीडाविशेषार्थं गच्छति, तद्वद्भगवानपि भूभारहरणादिरूपं व्यूहैः कारयति, निःश्रेयसशब्दवाच्यमुद्धाररूपकार्यं स्वयमेव करोतीति भावः ।

१०–२६–१५ नित्यं हरौ विदधत इत्यस्य विवृतौ । दृष्टिः कामेनानुरक्तेति किं पुनः स्वात्मेति । कामादिभिः षड्भिरपि यत्र भगवत्प्राप्तिः, तत्र गोपवधूनां दृष्टिः कामेन अनुरक्ता इति हेतोः जगदेव तदा तदात्मकं स्फुरति, किं पुनः स्वस्य,

जीवस्य संघाते यः आत्मा प्रविष्टः सः भगवत्त्वेन स्फुरेदिति । तदात्मका एव भवन्ति, सर्वत्र भगवदावेशादिति । सर्वत्रेत्यस्यार्थे स्वयमेव स्फुरति । जीवेऽन्तःकरणे चैवेत्यादि । पुत्रादिषु हरिर्यत इति । पुत्रादिषु यतो हेतोः हरिः आविष्ट इति शेषः तथा च यतो हरिराविष्टः, अतः सः कामक्रोधादिभिः'स्तादृशीं भावनां कुर्या'दित्युत्तरेण श्लोकेनान्वयः । तादृशीं '-आसीनः संविशंस्तिष्ठन् भुञ्जानः पर्यटन्महीं'मित्यत्रोक्तां कंसकृतभावनासदृशीमित्यर्थः । कामक्रोधादिभिरिति । कामक्रोधादयस्तादृशभावनायां हेतव इत्यर्थः । भावनायां सत्यां- किं स्यादित्याकाङ्क्षायामाहुः पूर्वप्रपञ्चेत्यादि । यथा ज्ञाने प्रपञ्चलयः, तथा कामक्रोधादिभिरपि भवेदित्यर्थः । कामं क्रोधमित्यस्य द्वितीये व्याख्याने । सगुणेनापि भावेन भजते भगवान् स्वानुरूपमेवेत्यादि । स्वानुरूपं मुक्तिरूपं फलमित्यर्थः । सगुणभावेन भजतो ' यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ' इतिवाक्येन भक्त्यभावाल्लौकिकं फलमेव तत्र दातुमुचितं यद्यपि, तथापि स्वस्वरूपं विचार्य मुक्तिमेव ददातीत्यर्थः ।

१०–२६–१८ व्रजस्यानामयमित्यत्र । यज्ज्ञापयितुं तेषां समागमनमिति । तेषां भवत्पित्रादीनामित्यर्थः । भगवन्निकटे समागता व्रजसुन्दरीः प्रतीयं भगवदुक्तिः । तथा च व्रजोपद्रवसूचनाय भवत्पित्रादीनां पुरुषाणामागमनं सम्भावितं तत्तेषामनागमनं भवतीनामागमनं महान्तमुपद्रवं सूचयति, स वक्तव्य इति भावः ।

१०–२६–१९ रजन्येषेत्यस्य विवृतौ । एषा रजनी, नतु दिनमिति । अयमर्थः । एतासां रात्रीणामलौकिकत्वाद्दिवापि सत्त्वेन हैमन्ततौ प्रातःसमये ' मयेमा रंस्यथ क्षपा ' इत्युक्त्वा रात्रयः प्रदर्शिताः, परन्तु साधनप्रकरणत्वाद्दिवा प्रदर्शनम्, तेन रमणं नाभूत् । यतो लौकिकरात्रावेवालौकिकरात्र्यारोपे रमणं भवति । तदत्र लौकिकरात्रावेवालौकिकरात्रीणां सत्त्वाद्रमणं भविष्यत्यतोऽत्रैव स्थातव्यम्, गृहे न गन्तव्यम्, एवं स्थितिपक्षः पोषितः । तदेतदुक्तं एषा रजनी, नतु दिनमिति । एषाधिकरणरूपा लौकिकी रजनी, एतस्यामलौकिक्या आरोपः । अत एव ' घोरसत्त्वनिषेवित'ेति विशेषणम् । वस्त्रहरणप्रसंगे तु अधिकरणभूतं दिनं स्थितमिति अलौकिकरात्रीणां विद्यमानत्वेपि रमणं नाभूत् । साम्प्रतं तु रात्रावेवालौकिकरात्रीणां विद्यमानत्वाद्रमणं भविष्यतीति भगवदाशयः । अयं चन्द्रः, न तु सूर्य इतीति । भवतीनां मत्संगमार्तिवशादसंतापकत्वेन दिवाकरवत्प्रतीयमानोपि चन्द्र एवेति भावः ।

१०–२६–२० मातरः पितरः पुत्रा इत्यस्य विवरणे । न च वक्तव्यं ता अपि तथेति । ताः अस्मन्मातरोपि तथा मुरलीनादमोहिताः, आगता अपि चेत्, न

किञ्चिद्बाधकमित्यर्थः । स्त्रीत्वाद्वा नागमिष्यन्तीतीति । मातरस्तु स्त्रीत्वान्नागमिष्यन्त्यतो वा न किञ्चिद्बाधकमित्यर्थः ।

१०-२६-२१ दृष्टं वनं कुसुमितमित्यस्य विवृतौ । इदानीं पुष्पाण्येव जातानीत्यादि । इदानीमुद्दीपनसामग्री जाता मद्दर्शनं जातमिति रमणपूर्वसम्पत्तिः सर्वापि सिद्धेति पुष्पाणि जातानि । फलं तु रमणे सति भविष्यतीति रमणात्मकफलाप्तये अत्रैव स्थेयमिति भावः । वनं तामसमिति । यद्यपि वृन्दावनं गुणातीतम्, 'मुनयश्चापि पक्षिण' इति वेणुगीताध्यायसुबोधिन्यां गुणातीतत्वमुक्तम्, तथापि अधुना भोगेकोपयोगितया तामसत्वमेव । एवं सति ये कृतार्था भवितुमुद्युक्ता भक्तास्तान्प्रति गुणातीतत्वम्, भगवदेकपरतासाधकत्वात्, ये पुनः कृतार्था लीलासृष्टिस्था भगवता सह रन्तुकामास्तान्प्रति ताहृग्भावजनकत्वेन तामसत्वमेवेति व्यवस्थयोभयमपि ।

१०-२६-२३ अथवा मदभिस्नेहादित्यत्र । निरुक्तो भावो गुणात्मको दोषात्मको वा न फलं प्रयच्छतीति । गुणात्मक इति । दानादिरूपो धर्मः स्वमुखेन कथितश्चेत् फलदानसमर्थो न भवति । अत एव भगवतोद्धवं प्रत्युक्तं 'कृतस्यापरिकीर्तन'मिति । 'धर्मः क्षरति कीर्तना'दितिवाक्यात् फलदत्वं तस्य नश्यति । एवं दुष्कर्मापि कृतं पुनः कथ्यते तदा क्षीणं भवति । पूर्वोक्ताः पक्षा भवतीनामागमने मया कल्पिताः, वस्तुतस्तु मद्दर्शनार्थमेवागतं भवतीभिः, परन्तु क्षरणभयाद्भवतीभिर्न कथ्यत इति भावः ।

१०-२६-२७ श्रवणाद्दर्शनादित्यत्र । भगवत्साक्षात्कारो वा भगवत्कार्यार्थ इति । भगवद्विषयककामोत्पादनार्थं भगवद्दत्तः साक्षात्कारो दर्शनशब्दवाच्य इत्यर्थः । तत्र दृष्टान्तः । नारदादेरिवेति । नारदस्य भगवता स्वदर्शनं सम्पादितम्, स्वविषयककामोत्पत्त्यर्थम् । 'सकृद्दर्शितं रूपमेतत्कामाय तेनघे'तिवाक्यात्तद्वदित्यर्थः ।

१०-२६-३१ देवो यथादिपुरुष इत्यत्र । पुरुषान्तरभजनेपि प्रथमभर्ता विवाहितः अभजनीयो भवतीति । नहीति पूर्वोक्तेनान्वयः । परपुरुषभजनेपि विवाहितस्य पत्युर्भजनं कर्तव्यमेव । तथाच परपुरुषस्थानीयाः गोपाः, तेषां भजनेपि विवाहितपतिस्थानीयो भगवांस्तस्य भजनं तु कर्तव्यमेवेति फलति । एतच्च मूले आदिपुरुषपदेनोक्तम् । आदिपुरुषः प्रथमभर्तेत्यर्थः । अनङ्गीकारस्त्वचित इति । जारस्त्वङ्गीकृतः सन् पतिसादृश्यं लभते, नतु विधिवशात् । एवं चाङ्गीकारस्य स्वकृतत्वात्तस्य जारस्य अनङ्गीकारोपि स्वकृतो भवेचेदुचित एवेत्यर्थः । पतिस्तु विधिवशात्स्वामित्वं प्राप्तः, अतो वेदकृतत्वान्न दूरीकर्तुं शक्यः । अतस्तस्य कदाचिदप्यभजनं न कर्तव्यम् । तदेतदाहुः

न त्वभजनमिति । विवाहितपतेरभजनं नोचितमित्यर्थः । प्रकृते भगवतो विवाहितपतिस्थानीयत्वम्, सार्वदिकपतित्वादादिपुरुषत्वेन । गोपानां देहसम्बन्धित्वेन नित्यपतित्वाभावात्तेषामनङ्गीकारस्योचितत्वेपि भगवतो नित्यपतेरभजनं न युक्तमितिहार्दम् ।

१०–२६–३३–३४ कुर्वन्ति हीत्यत्र । जन्मवद्दिनस्यापीति । एतदर्थष्टिप्पण्यां स्फुटः । चित्तं सुखेन भवतेत्यत्र । भवता वा आनन्दरूपेणापहृतमिति । अस्मिन् पक्षे सुखेन भवतेत्यत्राभेदेनान्वयः । सुखरूपेण भवतेत्यर्थः । 'यो वै भूमा तत्सुख'मिति श्रुतौ ब्रह्मणः सुखरूपताकथनात् ।

१०–२६–३५ नो चेद्वयं विरहजाग्न्युपभुक्तेत्यस्य विवृतौ । हरेणैव दग्ध इत्यारभ्य विरहत्वमित्यन्तम् । एतस्यार्थष्टिप्पण्यां स्फुटः ।

१०–२६–३९ वीक्ष्यालकावृतमित्यत्र । लोके हि पुरुषार्थत्रयमित्यादि । तत्र चतुर्विधो मोक्ष एकः पुरुषार्थः । इन्द्राद्यैश्वर्यभावेन स्वर्गप्राप्तिर्द्वितीयः पुरुषार्थः । इहलोके परमा लक्ष्मीस्तृतीयः । भगवत्प्रमाणावलम्बिनी इति । 'कर्णौ दिशः श्रोत्रममुष्य शब्द' इतिवाक्याद्भगवच्छ्रोत्रस्य शब्दरूपत्वात् प्रमाणरूपत्वम्, तादृशप्रमाणरूपश्रोत्रावलम्बिनी कुण्डले इत्यर्थः । तथा च भगवत्प्रमाणपङ्क्तिप्रतिपादकं शास्त्रं भागवतभगवद्गीतारूपं तदवलम्बित्वं कुण्डलात्मकयोगसांख्यशास्त्रयोरतो भक्तेरेव सर्वत्र मुख्यत्वमित्यर्थः । कुण्डलश्रीयुक्तं गण्डस्थलमित्यस्मिन्पक्षेपीति । तथा च 'वीक्ष्यालकावृतमुखं तवे'तिश्लोके कुण्डलश्रीगण्डस्थलाधरसुधमित्येकं समस्तं पदम् । सामीप्याद्भक्ताविति । सांख्ययोगशास्त्रात्मककुण्डलसामीप्याद्भक्तिरूपे गण्डस्थले शास्त्रीयो रसोधिको निरूपित इत्यर्थः । 'यज्ञादिना हविरपि प्रयच्छती'त्युक्तम्, तत्प्रयोजनमाहुः यथाग्रे इन्द्रस्याधिकारसमाप्ताविति । इन्द्रस्याधिकारसमाप्तौ यथा इन्द्रो मुक्तो भवेत्, तदर्थं मुक्तिप्राप्तिसाधनीभूतशुद्धिसम्पादकं वैदिकविधिसिद्धं हविरिन्द्राय प्रयच्छतीत्यर्थः । चकाराद्धर्मस्यापीति । 'धर्मस्तनोधर्मपथोस्य पृष्ठ' इतिवाक्याद्धर्मस्य तत्र स्थानात् । अत्र श्लोके सुबोधिन्यामयं गूढाशयः । चतुर्विधपुरुषार्थाभिलाषो व्रजवधूभिर्दूषितः । तत्र यद्यपि सारूप्यमुक्तौ अधिकारिणां मुखदर्शनादिना परमानन्दानुभवो भवति, तादृशो दास्ये नानन्दानुभवः, तथा च किमर्थं मोक्षानङ्गीकार इत्याशङ्का प्राप्नोति, तथापि स्वरूपान्तःपाते सत्यल्पकैर्मुखानन्दानुभवः क्रियेत, तथा सति न सकलस्वरूपसुखानुभव इत्येतदर्थं सारूप्यमुक्तेरनङ्गीकारः । एवं सामीप्यादावपि ज्ञेयम् । स्वरूपान्तःपातापेक्षया लीलान्तःपातस्यैवोत्तमत्वात् । चतुर्भुजादिरूपं प्राप्तानां वैकुण्ठस्थानां पार्षदादीनां भगवत्सारूप्यं यादृशं तादृशमिदं न भवति, किन्तु भगवत्स्वरूपे सायुज्यं प्राप्य पुनः श्यामम्पतारूपमलकानां सारूप्यमिति बोद्धव्यम् ।

१०–२६–४० का स्वयंग त इति श्लोकविवरणे । आर्याः प्रमाणबलविवेकिनः इति । अस्यार्थष्टिप्पण्यां स्फुटः । प्रमाणे ह्रीन्द्रमहेन्द्रयोरपि भेदस्वीकार इति । यद्यपि महांश्चासाविन्द्रश्च महेन्द्र इति निर्वचने इन्द्र एव महेन्द्र पदवाच्यः, तथापि यागविषये प्रमाणबलादिन्द्रमहेन्द्रयोरपि भेदस्वीकारः । तत्रान्यथानुपपत्तिं प्रमाणयन्ति अन्यथा इन्द्रयाजिन इत्यारभ्य, प्रमाणबले विरुध्यत इत्यन्तेन । एवं सति आत्मत्वेनैक्येऽपि गुणादिकृतं भेदमादाय देवतान्तरत्वं महेन्द्रस्य कल्प्यते । गुणादयस्तु देहधर्मा इति देहस्य प्राधान्यं प्रमाणमार्गे । तथा च सिद्धमेतत् । प्रमाणमार्गे देहनिष्ठं पतित्वमंगीक्रियते इति गोपा एव पतयो गोपीनाम् । वस्तुतस्तु भगवानेव पतिरतो विवाहितपतिभजनं त्यक्त्वा भगवद्भजनं कर्तव्यमित्येव हार्दमुपनिषदाम् । तथा च भजनमेव आर्यमार्ग इति तत्करणे आर्यमार्गात् का स्त्री न चलेदित्युक्तिरेव न संभवति यद्यपि, तथापि इह आर्यशब्देन प्रमाणबलविवेकिनो ग्राह्याः । ते च वस्तुविचारमकुर्वन्तः प्रमाणबलेन देहस्यैव प्राधान्यमंगीकुर्वन्ति । देहप्राधान्ये तु विवाहितपतिभजनं मुख्यम्, तस्यैव पतित्वात्, न तु भगवद्भजनम्, अतो विवाहितपतिभजनत्यागेन वस्तुतो यः पतिर्भगवांस्तस्य भजनमार्यमार्गाच्चलनमेवेति तथोक्तिर्मूले । वस्तुविचारस्तु प्रमेयबलमाश्रित्येति । प्रमेयस्य भगवतः सर्वात्मत्वात्सर्वरूपत्वाच्च तद्बलमाश्रित्य ' गोपीनां तत्पतीनां च'त्यादिना भगवति परपुरुषत्वादिखण्डनविचारः इत्यर्थः । तथा च वस्तुतो भगवान्पतिरेवेति तद्भजनमार्यमार्ग एवेत्याशयः । अन्यथा विधिनिषेधविषय इत्यादि । प्रमाणबले वस्तुविचारो नास्ति । अन्यथा यदि वस्तुविचारः स्यात्, तदात्मधर्माणामेव मुख्यता स्यात् । तथा सति देहं पुरस्कृत्य प्रवृत्ता विधिनिषेधाः व्यर्थाः स्युरित्यर्थः । यदुक्तमत्र वक्ष्यति एकादश इति । वस्तुविचारेणात्मधर्मपुरस्कारात्तत्प्रमेयबलं एकादशस्कन्धे उद्धवं प्रति भगवान् वक्ष्यति, ' तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदनाम् । प्रवृत्तिं निवृत्तिं च श्रोतव्यं श्रुतमेव च । मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन मया स्या ह्यकुतोभय ' इत्यादिनेत्यर्थः ।

स्वरूपभूतान् कृत्वा धर्मिरूपेण तिरोभावलीलया विप्रलम्भात्मकशृंगाररूपेण रेमे, तद्र-मणं 'तत्रैवान्तरधीयत' इत्यनेन निरूप्यत इत्यर्थः । एवं सप्तभिः श्लोकैः सिद्धमर्थमनुवदन्ति शृङ्गारो द्विविधोपि निरूपित इति । सामान्यरमणं पूर्वमिति । 'इति विक्लवितं तासा'मितिश्लोकेन सामान्यरमणं निरूपितमित्यर्थः । विशेषे मेलनं पुरेति । विशेषे रमणे विशेषरमणार्थं पुरा पूर्वं मेलनं सङ्गमः । 'स ताभिः समेताभिरुदार-चेष्टित' इत्यनेन श्लोकेन निरूपितः । 'व्यरोचतैणांक इवोडुभिर्वृत' इति वाक्यात् । विशेषरमणं द्विविधमित्याहुः बाह्येन रमणं पश्चादान्तरं चेति । बाह्येन रमणमिति । साक्षादंगस्पर्शनादेः सकाशाद्बाह्येन विलासपूर्वकगत्यादिरूपेणेत्यादि । तद्रमणं 'उपगीयमान उद्गाय'न्नित्यनेन निरूपितम् । आन्तरं च ततः परमिति । साक्षादंगस्पर्शादिरूपं आन्तरं रमणं 'नद्याः पुलिनमाविश्ये'त्यनेन श्लोकेन निरूपितं वन्यादिप्रकारेण । ततो नानाविलासेन जातकेलिविभेदत इति । जातकेलिविभेदतः नानाविलासेन रमण-मित्यन्वयः । तन्नानाविलासेन रमणं 'बाहुप्रसारे'तिश्लोकेन निरूपितम् । विप्रलम्भस्य सिद्ध्यर्थमिति । 'एवं भगवतः कृष्णा'दिति श्लोकेन 'मानमुदीर्यते' तस्य प्रयोजनमाहुः विप्रलम्भस्य सिद्ध्यर्थमिति । 'तासां तत्सौभगमद'मिति श्लोकस्यार्थमाहुः तिरो-भावस्ततश्चापीत्यादिना । नायं लौकिककामुक इति । एतस्यार्थष्टिप्पण्यां स्फुटः ।

इति विक्लवितमित्यस्य विवरणे । ननु निरिन्द्रियः कथं रेमे इति । भगवतः इन्द्रियाणि न सन्ति । परिदृश्यमाने साकारे ब्रह्मणि गोलकेषु प्रत्यक्षतो दृश्यमानेषु इन्द्रियाण्यंगीकर्तव्यानि स्युः, तथा सति परिदृश्यमानात्साकाराद्ब्रह्मणः सकाशादतिरिक्तं वस्तु ब्रह्मण्यायात् । तथा सति स्वगतद्वैतं स्यात्, तत्तत्रूपत्रयोरिव । तच्च सिद्धान्ते ब्रह्मणि नास्ति, 'सजातीयविजातीयस्वगतद्वैतवर्जित'मिति वाक्यात् । एवं सति यद्गोलकत्वेन प्रतीयते, तद्ब्रह्मैव, न तत्र पार्थक्येन चक्षुरादीन्द्रियाणामंगीकारः, न वा सूर्यादि-देवानाम्, किन्तु ब्रह्मैव दर्शनरूपं कार्यं कुर्वच्चक्षुरादिशब्दवाच्यं भवति । 'पश्यन् चक्षुर्वदन् वा'गित्यादिश्रुतेः । इत्यमेव तृतीयाध्यायभाष्ये स्फुटमुपपादितम् । अलौकिकान्यपी-न्द्रियाणि नांगीकृतानीति । अत एवात्राप्येवमाहुः स्वरूपमेवेन्द्रियादिभावेन प्रकटी-कृतवानिति । इन्द्रियादिभावेन प्रकटीभूतं व्रजसुन्दरीप्रेमफलदानार्थं तादृशभाववि-शिष्टेन्द्रियादिरूपेण स्वरूपं प्रकटितवानित्यर्थः । ननु 'बाहुप्रसारपरिरंभकरालकोरुनी-वीस्तनालभने'त्यादिना लौकिकक्रियासदृशी क्रिया प्रतीयते, सा च कामं विनानुपपन्नेति कामोप्यंगीकर्तव्यः, तथा सति प्राकृतत्वमेवायातीत्याशंक्य समाधिमाहुः क्रिया सर्वापि सैवात्रेत्यादिकारिकाभिः । 'बाहुप्रसारे'त्यादिना या क्रिया उक्ता, सा सर्वत्र वर्तते,

परन्तु तस्या अलौकिकत्वात्तया न लौकिकः काम आक्षिप्यते । तदाहुः परं कामो न विद्यते । लौकिकः कामो न विद्यत इत्यर्थः । तत्र गमकमाहुः कामेन पुरितः कामः संसारं जनयेत् स्फुटमिति । लौकिककामेन चेत् व्रजसुन्दरीणां कामः पुरितः स्यात्, तदा संसारं पुत्रादिरूपं जनयेदित्यर्थः । एतल्लीलाश्रवणकीर्तनादिफलत्वेन कामाभावस्योक्तत्वादपि नेयं कामलीलेत्याहुः अत एतच्छ्रुतौ लोको निष्कामः सर्वथा भवेदिति । ततः शुकवचः स्फुटमिति । एतल्लीलाश्रवणकीर्तनफलत्वेन लौकिककामनिवृत्तिबोधकं 'कामं हृद्रोगमाश्वपहिनोत्यचिरेण धीर', इति शुकवचः स्फुटमित्यर्थः ।

१०–२६–४३–४४ उदारहासद्विजकुन्ददीधितिरित्यस्य विवृतौ । कुन्दत्वं स्नेहस्येत्यादेरर्थष्टिप्पण्यां स्फुटः । वनिताशतयूथप इत्यस्य विवृतौ । यूथपदतात्पर्यमाहुः तेषामत्र रक्षणं दूरादेवाश्वासनेन चेति । दूरादाश्वासनं ललितगतिवल्गुवाक्यमन्दस्मितकटाक्षमक्षेपादिरूपम् । रक्षणं दूरादपि भवतीति तथोक्तम् ।

१०–२६–४८ –तत्रैवान्तरधीयतेत्यस्य विवृतौ । गोपिकासु यूथमध्ये वेति । गोपिकासु गोपिकाहृदयेषु लीलासहितस्य प्रभोः क्रीडा सा ह्यलौकिकी लीला । यूथमध्ये वेति तु लौकिकप्रकारेण निलीय स्थितिः । एवं पक्षद्वयेपि तत्रैवान्तरधीयतेत्यत्र तत्रपदं प्रमाणमिति बोद्धव्यम् । किञ्च, व्यापिवैकुण्ठे गमनम्, लक्ष्म्या सहैव तावत्समयपर्यन्तं रमणमिति तृतीयः पक्षः । तत्र मानं तु चतुर्थाध्यायसुबोधिनीयोजनायां वक्ष्यते । एवं तिरोधाने त्रयः पक्षाः । तत्रैवान्तरधीयतेत्यत्र केशवशब्दे कश्च ईशश्च केशौ, तयोर्वे मोक्षाख्यं सुखं यस्मात् केशव इति निरुक्तिर्ज्ञेया । मानं च निवार्य मुक्तिं दातुमिति । मुक्तिशब्देनेह विप्रयोगानुभव उच्यते । 'वासुदेवानुमोदिता' इत्यस्य सुबोधिन्यास्तथाशयात् । 'वासुदेवानुमोदिता' इत्यस्य टिप्पण्यां विप्रलम्भशृङ्गाररसानुभवस्य मोक्षपदार्थत्वेनोक्तत्वात् । इहापि मुक्तिपदेन तदेव ग्राह्यम् । तथा च एतासां मदं मानं च निवार्य विप्रलम्भशृङ्गाररसानुभवं दातुं तथा कृतवान् तिरोधानं कृतवानित्यर्थः । प्रथमाधिकारित्वादिति । तामसत्वादित्यर्थः । तथा च गोपीनां तामसत्वात्स्वरूपमात्रनिष्ठत्वेन वाक्तिरोधाने मानसिकतिरोधाने वा नैतासां दुःखमिति न वियोगानुभवः, किन्तु कायिकतिरोधाने एवामूषां दुःखमिति तदैव विरहानुभवो भवेत्, अतो विरहानुभवकारणार्थं स्वरूपतस्तिरोभूत इत्यर्थः । इति श्रीमद्गोवर्धनधरश्रीवल्लभाचार्यवरश्रीविट्ठलेश्वरचरणानुचरसेवकेन लालूभट्टोपनामदीक्षितवालकृष्णेन कृता दशमस्कन्धषड्विंशाध्यायसुबोधिनीयोजना संपूर्णा ।

१०–२७–० श्रीगिरिधारी जयति । सप्तविंशाध्यायार्थोक्तौ । स्वानन्दस्थापनार्थायेत्यादि । भगवता कामलीला कृता, सा स्वानन्दस्य स्वरूपात्मकानन्दस्य

व्रजवधूटीषु स्थापनार्थम् । स्वानन्दस्थापनार्थरूपो योऽर्थस्तस्मै इति कारिकार्थः । अत्रेदमाकूतम् । लौकिके हि कामजन्यानन्दः समयविशेषावच्छेदेनोत्पद्यते, स्वल्पकालं तिष्ठति, ततो नश्यति च, विकृतत्वात् । प्रकृते तु कामलीलया प्रादुर्भवन्नानन्दोपि स्वरूपात्मक एव । स्वरूपस्याविकृतत्वादविकृत एवोद्भवति । अतएव सर्वदैव तिष्ठति, न तु कदाचिदपि नश्यति । तत्र संयोगावस्थायां बहिःप्राकट्यम्, विप्रलम्भेऽन्तःप्राकट्यम् । एवं प्रकारद्वयेन तिष्ठतीत्याहुः स्वानन्दस्थापनार्थायेत्यादिना । चत्वारोत्र निरूप्यार्था इति । रसासक्तिरेकोर्थः । हरेः क्रिया द्वितीयोर्थः । गर्वाभावश्च तृतीयः । गुणगानं चतुर्थ इति टिप्पण्यां स्वीकृतम् । उद्देशतो लक्षणतः फलतश्चेति । अस्यार्थष्टिप्पण्यां स्फुटः ।

१०–२७–१　सन्ति च सिंहा इति । बहवः सिंहाः सन्ति, अतो गजमचक्षाणां सिंहभयात् करिण्यस्त्रसन्तीत्यर्थः । तथात्र काल इति । अवतारसमाप्तिकाल इत्यर्थ इति श्रीमट्टिप्पणीकाराः ।

१०–२७–२　गत्यानुरागेत्यस्याभासे । यदा पुनस्तापः अन्तः प्रवेष्टुमैच्छदिति । तापस्य भगवद्रूपात्मकत्वेन सच्चिदानन्दरूपत्वात्प्रवेष्टुमैच्छदिति चेतनः धर्मः सम्भवति । तस्य विलासः स्वनिष्ठतात्याजनार्थमिति । स्मितस्य विलासो भक्तानां भगवद्भजननिष्ठतां त्याजयति । स्मितस्य मायारूपत्वात् । भजननिष्ठां त्याजयित्वा केवलं प्रमदाभावसम्पादनेन मानादिकमुत्पादयतीति भावः । न बहिर्गता नान्तः स्थिता इति । बहिरनुसंधाने केवलं विरहज्ञानात् क्लेशमेव प्राप्नुयुः, अन्तःस्थितौ तु लीलासहितस्य भगवतः स्वहृदि प्रवेशज्ञानात्केवलं सुखमेव प्राप्नुयुः । एतास्तु क्षणक्षणविलक्षणभावाः विरहज्ञाने दुःखं पुरुषोत्तमान्तःसम्बन्धेन सुखं च प्राप्नुवन्तीति न सर्वथा बहिः स्फूर्तिः, नवा सर्वथान्तर्निष्ठतेतिज्ञेयम् । भगवति मध्ये स्फुरित इति । बाह्यानुसंधानान्तर्निष्ठयोरुत्कवितुमुत्सुकयोर्मध्ये हृदये भगवान् स्फुरितस्तद्धर्मान् स्वयं कृतवत्य इत्यर्थः । यथोत्तानके ग्राम्यादय इति । बन्धविशेषे ग्राम्यादयो यथा विलासं प्राप्नुवन्ति, तद्वदित्यर्थः ।

१०–२७–३　गतिस्मितेत्यत्र । स्वधर्मानारोपितवत्य इति । स्वगतौ प्रियभावना जातेत्यादिना टिप्पण्यां स्फुट एतदर्थः । भगवद्धर्मेषु स्वमूर्तिरारोपितेति । भगवद्धर्मस्य रमणस्यानुकरणं कुर्वाणाः भगवानेव रमते इति मन्यमानाः पुनः पुनस्तथैव रमन्त इति भगवद्धर्मे रमणे स्वमूर्तिः स्वदेहस्यारोपणं तदेकपरतेति यावत् । तादृगेव रमणं कुर्वन्त्यः स्थिता इति हार्दम् ।

१०–२७–४　गायन्त्य उच्चैरमुमेव संहता इत्यत्र । प्रथमतो मिश्रभावादिति । शब्दो हि धूमवल्लोक इत्याद्यः मार्यास्तिस्रः कारिकाः । एतदर्थष्टिप्पण्यां

स्फुटः । कस्याश्चित् पूतनायन्त्या इत्यादिलीलानुकृतितात्पर्यकथने भक्त्यातिमत्तासद्भावमित्यादिकारिकास्तासामर्थष्टिप्पण्यां स्फुटः ।

१०-२७-१६ रिङ्गयामास काप्यंघ्री इत्यस्य विवृतौ । पूर्वश्लोके चतस्र उक्ता लीलाद्वये इति । 'कस्याश्चित्पूतनायन्त्या' इति श्लोके चतस्रो गोपिका उक्ताः । पूतनायन्ती कृष्णायन्ती तोकायन्ती शकटायन्ती चेति । लीलाद्वये इति । पूतनामारणशकटभंजनाख्ये लीलाद्वय इत्यर्थः । अत्र तिस्र एवेति । दैत्यायित्वेतिश्लोके दैत्यायन्ती कृष्णार्भभावना च रिंगणकर्त्री चेति तिस्र एवेत्यर्थः । अथवा युगलास्तिस्रो निरूपिता इति । पूतनायन्ती कृष्णायन्ती चेत्येकं युगलम् । तोकायन्ती शकटायन्ती चेत्येकं युगलम् । दैत्यायन्ती कृष्णार्भभावना चेत्येकं युगलमेवं युगलत्रयं वर्तते यासां तास्तिस्रो युगलाः । युगलशब्दादर्शआद्यच् । तथा च युगलास्तिस्रः सगुणा इत्यर्थः । गुणातीता त्वेकेति। रिंगणकर्त्री गुणातीतेत्यर्थः । पुनः प्रकारान्तरेण बाह्य इत्यारभ्य बहुरूपा जाता इत्यन्तम् । एकभावमापन्ना इति । गोपालकरूपा बह्व्यो जाता इत्यर्थः । प्रधानगुणभावं कृष्णबलदेवभावं गोपिके द्वे प्राप्ते । रजसा अनेकधा विक्षिप्ता बहुरूपा जाता इति । शृङ्गाररससम्बन्धिना रजोगुणाख्येन भावविशेषेण विक्षिप्ता बहुरूपा गोपालकरूपेषु बहुरूपा जाताः श्रीकृष्णरूपबलदेवरूपगोपबालकरूपभेदेन गोपरूपेषु बहुत्वात् ।

१०-२७-१९ कस्यांचित्स्वभुजं न्यस्येत्यस्य व्याख्याने । अत्रापि पूर्ववत् युगलास्तिस्र इति । अत्रापीति । कृष्णरामायित इत्यारभ्य ललितामिति तन्मना इत्यन्तेन वृन्दावनलीलाकथनप्रसंग इत्यर्थः । पूर्ववत् युगलास्तिस्र इति । 'कस्याश्चित्पूतनायन्त्या' इत्यादिना निरूपितयुगलवत् युगलास्तिस्र इत्यर्थः । तत्र कृष्णरामायितंस्यनेन श्रीकृष्णबलदेवौ निरूप्य 'वत्सायतीं घ्नती चान्या तत्रैका तु बकायती'मित्यनेन श्रीकृष्णकृतबकमारणलीलाबलरामकृतवत्समारणलीलोक्ता । अतः श्रीकृष्णरूपा एका, अपरा बकरूपेत्येकं युगलम् । बलरामरूपा एका, अपरा वत्सरूपेत्येकं युगलम् । इत्थं युगलद्वयम् । तदाहुः 'कृष्णरामायिते द्वे युगले' इति । 'आहूय दूरगा यद्व'दिति श्लोके दूरगगवाह्वानवेणुक्वणनक्रीडनकर्त्री कृष्णरूपा एका साध्वाशंसनकर्त्री एकेत्येकं युगलम्, इत्थं तिस्रो युगलाः । युगलं विद्यमानं यासां ता युगला इत्यत्र अर्शआद्यच् । यद्यपि 'आहूय दूरगा' इति श्लोके गोरूपकृष्णरूपगोपरूपेण त्रित्वं वक्तुमुचितम्, तथापि गवाह्वानलीलाकर्तृत्वेन एको भगवान् विवक्षितस्तन्मध्ये गोपरूपाणामभिनिवेशादित्यर्थः । साध्वाशंसनसहिता वेणुवादनपरा च तृतीयेति । वेणुवादनपरा गोपी श्रीकृष्णरूप-

धारिणी साध्वाशंसनकर्त्रीभिर्गोपरूपाभिः सहिता तृतीया । तृतीययुगलसाधिकेत्यर्थः । एषा त्विति । कस्यांचित्स्वभुजमित्यत्रोक्ता कृष्णरूपा गुणातीतेत्यर्थः । यद्वान्यया सर्जेत्यत्र भगवद्वशीकरणान्ता च लीलेति । साधनानां परमकाष्ठा तु तदैव सिध्यति, यदा भगवान् स्ववशे भवतीति पुष्टिभक्तिमार्गव्यवस्था । सा चास्य लीलायां सिद्धेति, नातः परं किञ्चित्कर्तव्यमतो लीलानां तिरोभावः । साधनत्वेनाविर्भूय, कृतार्थीभूताः । अतः प्रयोजनाभावात्तिरोभूता इत्यर्थः । एतावता भगवति वशीभूते पुष्टिभक्तिस्वरूपं सिद्धम् । 'कृष्णाधीना तु मर्यादा स्वाधीना पुष्टिरुच्यते' इति निरूपणात् । यथा दामोदरलीलायां सा पुष्टिरिति व्याख्यानाच्च ।

१०-२६-२५ पदानि व्यक्तमेतानीत्यत्र । महान् वा ब्रह्मरूप इति । अस्मिन्पक्षे कर्मधारयो ज्ञेयः । महांश्चासावात्मा चेति विग्रहे महापदस्यार्थमाहुः । ब्रह्मरूप इति ।

१०-२७-३६ सा च मेने तदात्मानमित्यस्याभासे । स्वयं त्वयुक्तकरणादिति कारिका । एतस्यार्थष्टिप्पण्यां स्फुटः ।

१०-२७-३८ स्कन्धमारुह्यतामितीत्यस्य विवरणे । एषा हि नृत्यं कर्तुं वाञ्छति स्वान्तर्गतं रसमभिनेतुमिति । अयमर्थः । भगवता सह रमणे यो रसोनुभूतः सोन्तस्तिष्ठति । तस्याभिनयो नृत्येन कर्तव्यः । अभिनयस्य नृत्यसाध्यत्वात् । अतोभिनयं चिकीर्षुर्नृत्यं कर्तुं वाञ्छतीत्यर्थः । तद्भूमौ पदस्थापने ऊर्द्ध्वभावाभावात् रसः च्युतो भवेदिति । भूमौ पदस्थापने इति । भगवता सह चरणाभ्यां चलने इत्यर्थः । रसश्च्युतो भवेदिति । अभिनीयमानः शृङ्गाररसश्च्युतो भवेत्, बोधविषयो न भवेदित्यर्थः । स एवेत्यारभ्य नरीनर्तीत्यन्तम् । सङ्गीतशास्त्रे नृत्यविशेषे स्वस्कन्धारोहणमुक्तम् । तदतिकठिनम्, अतो यो नर्तकः स्वस्कन्धमारुह्य नरीनर्ति, स अत्यन्तनटश्रेष्ठ इत्यर्थः । नन्वत्र भगवत्स्कन्धारोहणमेव भगवताज्ञप्तमित्येव कुतो नोच्यत इति चेत्, न । 'सत्यं देवानामनृतं मनुष्याणा'मिति श्रुतौ मृषा भाषणस्य मनुष्यासाधारणधर्मत्वान्मनुष्यासाधारणधर्माणां 'मायामनुष्यस्य वदस्व विद्व'न्नित्यादिवाक्यैर्भगवत्यभावात् । तदेतदाहुः भगवांस्तु नान्यथा वदतीति न स्वस्कन्धसम्भावनेति । 'सा वधूरन्वतप्यते'त्यस्य विवरणे अनन्यपूर्वा व्रतमध्यस्था तत्रापि गुणातीतेति । वधूपदस्य अननुभूतशृङ्गाररसाया नवोढाया 'वरवध्वोः सुमङ्गलं' 'वधूमनेशः खलु मङ्गलमद' इत्यादिवाक्यैः शक्त्यन्वस्य निर्धारात् । इयं अनन्यपूर्वेत्युक्तम्, 'सा वधूरन्वतप्यते'तिवधूपदात् । सेति तच्छब्देन पूर्वोक्तपरामर्शिना व्रतस्था ग्राह्या । पूर्वं व्रतस्थानामेव रासक्रीडायां निरूपित-

स्यात्। अन्वतप्यतेत्यनुतापकथनाद्गुणातीतत्वम्। अन्यथा रोषादिकं कुर्यात्, नत्वनुतापम्। अतो गुणातीतत्वम्।

अन्यायविवृतिसमाप्तौ कारिकाद्वयम्। श्रीकृष्णगोपीकास्तत्रेत्यादि। द्विविधा इति। श्रुतिरूपाग्निकुमारभेदेनेत्यर्थः। नवधेति। सात्विकादित्रिकभेदेनेत्यर्थः। समुदायेन भिन्ना वेति। समुदायेन यूथेन नवधेत्यर्थः। पूर्वस्मिन् पक्षे गोपिकाः प्रत्येकं सात्विक्यः राजस्यस्तामस्यश्चेति। अस्मिन् पक्षे तु समुदायेन तामसत्वं राजसत्वं सात्विकत्वं च। तथा च कश्चिद्यूथः सात्विकीनाम्, कश्चिद्राजसीनाम्, कश्चित्तामसीनाम्। तत्रापि सात्विकीनां त्रिकं राजसीनां त्रिकं तामसीनां त्रिकं चेति नवप्रकारा यूथा इति फलितम्।

इति श्रीमन्निरोधस्कन्धसप्तविंशाध्यायसुबोधिनीयोजना सम्पूर्णा।

१०–२८–०। श्रीगिरिधारी जयति। अष्टाविंशाध्यायार्थोक्तौ। स्वभावादपराधत इत्यादेरर्थष्टिप्पण्या स्फुटः। 'राजसी तामसी चैव सात्विकी निर्गुणा तथा। एवं चतुर्विधा गोप्यः पतिमत्यो निरूपिता' इत्यादिकाः। पतिमत्यः श्रुतिरूपाः, गोपाना स्त्रियश्चतुर्षु श्लोकेषु स्तुतिकर्त्र्यो निरूपिता इत्यर्थः। ततश्चत्वारः श्लोकाः अनन्यपूर्वाणामित्याहुः तथैवेत्यारभ्य, राजसी तथेत्यन्तेन। ततः पुनरपि त्रयः श्लोकाः अनन्यपूर्वाणामेवेत्याहुः अनन्यपूर्विका इत्यारभ्य विश्रुता इत्यन्तेन। ततः श्रुतिरूपाणा त्रयः श्लोकाः इत्याहुः सपूर्वा इत्यारभ्य परेत्यन्तेन। पराशब्देन सात्त्विकी गृह्यते। ततः श्रुतिरूपा एव त्रिपु श्लोकेपु वक्त्र्य इत्याहुः पुनस्ता एवेत्यारभ्य विभेदत इत्यन्तेन। ततः श्लोकद्वयमग्निकुमाररूपाणामित्याहुः अनन्यपूर्वा द्विविधेति। एवमेकोनविंशतिश्लोकाः। पक्षान्तरमाहुः अथवा प्रार्थनाख्या याः ससेति। प्रथमद्वितीयतृतीयपञ्चमषष्ठसप्तमाष्टमश्लोकैः कृताः प्रार्थनाः। अन्ते द्विविधा पुनः। अन्ते त्रयोदशचतुर्दशाभ्यां प्रार्थनाः कृताः। एवं नव श्लोकाः प्रार्थनायास्ते कुमारिकाणाम्। चतुर्थ्यस्तु समा इति चतुर्थ्यो 'न खलु गोपिकानन्दन' इति चतुर्थश्लोकनिरूपकाः समा गुणातीता इत्यर्थः। एव दश श्लोकाः। नवमदशमैकादशद्वादशपञ्चदशषोडशसप्तदशाष्टादशैकोनविंशश्लोकाः प्रौढानाम्। इत्थमेकोनविंशतिश्लोका इति बोध्यम्।

१०–२८–१ जयति तेऽधिकमित्यस्य विवृतौ। अन्यथा क्रियामादौ न प्रयुञ्ज्यादिति। जयतीतिक्रियापदं पूर्वे न प्रयुञ्ज्यात्, किन्तु कर्तृवाचकव्रजपदमुक्त्वा जयतीति प्रयुञ्ज्यादित्यर्थः। वाक्यार्थो वा कर्मेति। 'तावकास्त्वयि धृतासवस्त्वा विचिन्वत' इति अग्रे वक्ष्यमाणः वाक्यार्थो दृश्यतामिति क्रियायाः कर्मेत्यर्थः। दिक्षु त्वदीयास्त्वयि सतीति महद्दैन्यमिति। त्वदीया इति तु तावका इति

पदस्यार्थ उक्तः । अस्मिन्पक्षे त्वयीति सति सप्तमी ज्ञेया । तथा च त्वयि सति त्वयि व्रजे विराजमाने सति तावकास्त्वां विचिन्वते इति महद्दैन्यमित्यर्थः ।

१०-२८-२ वरद निघ्नतो नेह किं वध इत्यस्य विवृतौ । अनेन भगवद्दृष्टिः सर्वघातुकेत्यादि । यद्यपि भगवतः पुरुषोत्तमस्य दृष्टिरानन्दमयीति परमानन्दमेव प्रयच्छति, न तु हन्ति, तथापि विरहे स्मर्यमाणा परमक्लेशं जनयतीति एतस्यामानन्दमय्यामेव दृष्टौ घातुकत्वभानात् । भगवतः कालादिरूपे या सर्वघातुका दृष्टिः सात्रानन्दमये निरूपितेति भावः । अशक्यचौर्यादपि पुरुषात्तदुदरवर्तिसर्वस्वनेतेति । चौरविशेषणमेतत् । अत एव नेतेति पुल्लिङ्गनिर्देशः । चौर्यं हि क्रियते बलिष्ठेन अपकीर्त्यभावायेति । ये बलिष्ठा राजादयस्ते स्वापेक्षितं परकीयं वस्तु मूल्येन न ददाति चेत्, चौर्येण गृह्णन्ति, न तु बलात्कारेण लुण्टन्ति । तथा सत्यपि अपकीर्तिर्भवेदतोऽपकीर्त्यभावाय चौर्येण गृह्णन्तीत्यर्थः । तदत्र तु न भविष्यतीत्युक्तमिति । तदपकीर्त्यभावरूपं विचारितमत्र न भविष्यति, किन्त्वपकीर्तिर्भविष्यतीत्यर्थः ।

१०-२८-३ विषजलाप्ययादित्यत्र । व्यालाः कालियसुदर्शनादय इति । इह आदिशब्देन कालियपरिकरभूताः सर्पा ग्राह्याः, कालियनिःसारणे तेषामपि निःसारणात् । ' सकलत्रसुहृत्पुत्रो द्वीपमब्जे जगाम हे'ति वाक्यात् ।

१०-२८-४ न खलु गोपिकानन्दन इत्यत्र । यशोदानन्दनत्वनिराकरणं तु लौकिकभावकृतपुत्रभावपरम् । ' जयति जननिवासो देवकीजन्मवाद ' इत्यत्र देवकीनन्दनत्वनिराकरणवत् । अत एव ' न माता न पिता तस्ये'त्यादि सङ्गच्छते । तथा च पुरुषोत्तमस्य जन्माभावेऽपि पुत्रभावेन प्रादुर्भावाद्यशोदानन्दनत्वं वर्तत एवेत्युपपादितं पुरस्तात् । अथवा । व्रजसुन्दरीणां शृङ्गाररसभाववत्त्वात्कटाक्षोक्त्या यशोदानन्दनत्वनिराकरणं ज्ञेयम् ।

१०-२८-६ व्रजजनार्तिहन्नित्यत्र । अत एव लोके दातारः कीर्तिमन्तो भवन्ति वीरेभ्य इति । वीरा हि मारणीयं स्वरूपतो मारयन्ति । दातारस्तु दीनगृहं समृद्ध्या पूरयित्वा दारिद्र्यं दूरीकुर्वन्ति । तद्गृहे लक्ष्म्याः पूर्त्या दारिद्र्यस्यावकाशाभावात्ततो दारिद्र्यमपसरतीति हार्दम् ।

१०-२८-७ फणिफणार्पितमित्यस्याभासे । ननु कर्कशेषु स्तनेषु कथं कोमलचरणस्थापनम्, अयुक्तमिति चेदिति । इह कथं कोमलचरणस्थापनमित्युक्त्वा अयुक्तमित्यनेन प्रश्ने उपपत्तिरुक्ता । तथा च यतः अयुक्तं अतः कथं कोमलचरणस्थापनमित्यन्वयो ज्ञेयः । अथवा । अयुक्तं यत्कोमलचरणधारणं तत्कथमिति प्रश्नान्वयः । श्रीनिकेतनमित्यस्य विवरणे । अन्यासु कः सन्देह इति । सर्वासां स्त्रीणां लक्ष्म्यंशत्वाल्लक्ष्म्याः स्पर्शयोग्यतायां तदंशभूतानां योग्यत्वे कः सन्देह इत्यर्थः ।

१०–२८–८ मधुरया गिरेत्यत्र । हस्तेन च स्वरूपेणेति कारिकाः । हस्तेनोपकारः, 'करसरोरुहं कान्तकामद'मित्यत्रोक्तः । स्वरूपेणोपकारः, 'व्रजजनार्तिह'-मित्यनेनोक्तः । पदोपकारः, 'प्रणतदेहिना' मित्यनेनोक्तः । मुखेनोपकारः, 'मधुरया गिरे'त्यनेनोक्तः । मधुरया गिरेत्यत्र । वक्तव्या द्रष्टव्याः पाययितव्या इति । 'मधुरया गिरे'त्यस्य 'वक्तव्या' इति विवरणम्, 'पुष्करेक्षणे'तिसम्बोधनस्य 'द्रष्टव्या' इति विवरणम् , 'अधरसीधुने'त्यस्य 'पाययितव्या' इति ।

१०–२८–९ तव कथामृतमित्यत्र । ज्ञानं वैराग्यं च तापनाशके भवन इति । 'तप्तजीवन'मित्यनेन वैराग्यं ज्ञानं वा ग्राह्यम् । तापनाशकत्वस्य ज्ञाने वैराग्ये च सत्त्वात् । तथा च उभयोर्मध्ये एको धर्मोऽनेन विशेषणेन सिद्धः । कविभिरीडितमित्यस्य विवृतौ । ज्ञानं वैराग्यं चेति । अनेनापि विशेषणेन ज्ञानं वैराग्यं वा ग्राह्यम् । कवीडितत्वस्य ज्ञाने वैराग्ये च विद्यमानत्वात् । तथा च उभयोर्मध्ये एको धर्मोऽनेन सिद्धः । तत्र यदा तप्तजीवनमिति विशेषणेन ज्ञानं गृह्यते, तदा कविभिरीडितमित्यनेन वैराग्यं ग्राह्यम् । यदि पूर्वेण वैराग्यम्, तदा कविभिरीडितमित्यनेन ज्ञानं ग्राह्यम् । एवमेकेन विशेषणेनैकं ग्राह्यम् । इत्थं द्वाभ्यां विशेषणाभ्यां ज्ञानवैराग्यसिद्धिः । 'कल्मषापह'मित्यनेन धर्माख्यो धर्मः सिध्यति । कल्मषनाशकत्वस्य धर्मे स्फुटत्वात् । ऐश्वर्यादिषु षट्सु धर्मेषु पाठान्तरेण धर्मस्य संग्रहात् । तदेतदाहुः धर्मस्येत्यपि क्वचित्पाठ इति । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णा भग इतीरणा' इतिवाक्ये वीर्यस्येत्यस्य स्थाने धर्मस्येति पाठ इत्यर्थः । वीर्यस्येति पाठेपि 'कल्मषापह'मित्यनेनैव विशेषणेन वीर्यमपि ग्राह्यमित्यत्रोपपत्तिमाहुः अलौकिकसाधकत्वं च वीर्यं महत्त्वद्धर्मरूपमेव भवतीति। अनेन वीर्यधर्मयोरैक्यमुक्तम् । 'श्रवणमङ्गल' मित्यनेन यशो गृह्यते। 'श्रीम'दित्यनेन श्रीर्ग्राह्या। 'आतत'मित्यनेन ऐश्वर्यम् । एवं षड्गुणाः कथायामिति भगवत्कथा भगवत्तुल्यति सिद्धान्तितम् । युक्तं चैतत् । 'नामरूप व्याकरवाणी'तिश्रुतौ नामरूपयोस्तौल्यनिरूपणात् । अत एव 'आच्छिद्य कीर्तिं सुश्लोका वितत्ये'त्युक्त्वा 'तमोऽनया तरिष्यन्तीत्यगात्स्व पदमीश्वर'इत्यनेन स्वकीर्त्या भगवता स्वभारः स्थापित इत्युक्तमेकादशस्कन्धे । 'कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह । कलौ नष्टदृशामेष पुराणार्कोऽधुनोदित'इत्यनेन नामात्मके श्रीभागवते कृष्णतौल्य प्रथमस्कन्धे उक्तम् ।

१०–२८–१० प्रहसितं प्रिय प्रेमवीक्षणमित्यत्र । प्रेमवीक्षणस्य क्षोभकत्वं नेमा व्युत्पादयन्ति स्मृतं सदित्यादिना । स्वविषयक यत्प्रेमवीक्षण संयोगे, तद्वि-

प्रलम्भदशायां स्मृतं सत्क्षोभं जनयति । **अन्यविषयकं वेति** । अन्यनायिकाविषयक प्रेमवीक्षणं क्षोभजनकमित्यर्थः । **मनस उत्तोलकं वेति** । प्रेमवीक्षणमस्य मनस उत्तोलकं परीक्षकमित्यर्थः । अतोपि क्षोभजनकं सर्वथा प्रेमवता ज्ञातप्रेमकाणा परीक्षाकरणस्य क्षोभजनकत्वं स्फुटमतः सुस्थम् ।

१०-२८-११ **चलसि यद्व्रजादित्यस्य विवृतौ । पाल्यानां चर्म च न परिधेयमिति** । पाल्याना चर्म परिधेयं च नेत्यन्वयः । भूम्यादीनामनुग्रहार्थं चरणयोश्चर्म न परिधेयम्, चर्म परिधेयं च न भवतीति हेतुद्वयं चर्मापरिधाने, पादुकयोरधारणे तु एक एव हेतुरित्यर्थः । **जल एव स्थातुं योग्यं जलपूर्णे वा** । नलिनं जलजत्वाज्जले स्थातुं योग्यमित्यर्थः । उद्धृतजले स्थापितमपि तथा न शोभत इति पक्षान्तरमाहुः **जलपूर्णे वेति** । जलेन पूर्णे सरसि स्थातुं योग्यं सरोजत्वादित्यर्थः । **अनन्यपूर्वाणां तु नित्य एव काम इति** । या अनन्यपूर्वा अविवाहितास्तासां पतिकृतप्रतिबन्धाभावाद्दिवा वने गमनाद्रात्रौ भगवदन्तिके गमनादहर्निशं रमणं सम्भवतीति तद्धेतुभूतः कामोपि नित्य एव दिवा रात्रावपि इत्यर्थः ।

१०-२७-१३ **प्रणतकामदमित्यस्य विवृतौ** । कीर्तिरूपतामाह **धरणिमण्डनमिति** । **धरण्या मण्डनमलंकरणरूपं श्रीरूपं वेति** । धरणिमण्डनमिति विशेषणेन यशो ग्राह्यम् । श्रीर्वेत्युक्तम् । **आपदि ध्येयम्, श्रीरूपं कीर्तिरूपं वेति** । 'ध्येयमापदी'तिविशेषणेन श्रीर्यशो वा ग्राह्यम् । तथा च यदि 'धरणिमण्डन'मित्यनेन श्रीर्गृह्यते, तदा 'ध्येयमापदी'त्यनेन कीर्तिर्ग्राह्या । यदा तु पूर्वेण कीर्तिर्गृह्यते, तदा 'ध्येयमापदी'त्यनेन श्रीर्ग्राह्या । एवं विशेषणद्वयेन धर्मद्वयं ग्राह्यम् । 'शंतम'मितिविशेषणेन ज्ञानरूपतोक्ता । 'आर्तिह'मित्यनेन वैराग्यमुक्तम् । 'चरणपङ्कज'मितिविशेष्यनिर्देशे पङ्कजत्वोक्त्या स्वरूपस्य धर्मिण उत्कर्ष उक्तः ।

१०-२८-१४ **सुरतवर्धनमित्यस्य विवरणे । पूर्वेण प्रमाणबलमिति** । 'इतररागविस्मारण' मित्यस्मात्पूर्वेण 'स्वरितवेणुना सुष्ठु चुम्बित' मित्यनेन प्रमाणबलमुक्तम् । वेणुनादस्य वेदात्मकत्वात् । न च वेणोर्वेदात्मकत्वे प्रमाणाभाव इति वाच्यम् । 'वंशस्तु भगवान् रुद्र' इति कृष्णोपनिषत्सु वेणोः शिवत्वकथनात् 'वेदः शिवः शिवो वेद' इति श्रुत्या शिवस्य वेदरूपतया वेणोरपि वेदत्वात् । **नृणामस्माकमनधिकारिणामिति** । नृशब्देन साधारणवाचिना अनधिकारित्वं सूचितम् । अतो निःसाधनाना परमपुरुषार्थप्रदत्वादधिक उत्कर्ष उक्तः । **दुर्लभपुरुषार्थानां वेति** । नृशब्देन पुंजीवाः उक्ताः । अतोऽन्यैर्दुर्लभपुरुषार्थानामित्यर्थो भवति । यदिदमधरामृतमस्माकं नृशब्दवाच्यानाम्य तदस्मदितरैर्न प्राप्यत इति भावः ।

१०-२८-१६ पतिसुतान्वयभ्रातृबान्धवानित्यस्य विवरणे। कितवानां वा वयं सम्बन्धिन्य इति। अस्मिन्पक्षे 'कितवयोषित' इति समस्तमेकं पदम्। सम्बन्धिन्य इति। कितवानां सम्बन्धिन्यो, न तु नार्यः, भगवदेकभोग्यत्वात्। गोपानां तु भर्तृत्वाभिमानमात्रम्। 'मन्यमानाः स्वपार्श्वस्था'निति वाक्याद्रासस मये यथा योगमायामोहितगोपैः स्वस्वस्त्रियो भगवन्निकटे स्थिता अपि स्वनिकटेऽस्थिता अपि स्वनिकटे ज्ञाताः, एवं सर्वदैवाभिमानमात्रम्, नतु तत्कर्तृको भोगः, योगमायामोहितत्वात्। पुत्राद्युत्पत्तिस्त्वलौकिकप्रकारेण भगवतः सकाशादेव। इदं सप्तदशाध्यायटिप्पण्यां स्फुटम्। गोपानां पतित्वाभावेपि पतित्वेनांगीकारो रसपोषार्थः। 'रसस्तु परकीयायामेवे'ति वात्स्यायनराद्धान्तात्। अतो वस्तुतो भगवदेकभोग्या इति निष्कर्षः। अत एवाग्रे आहुः अतोऽस्माकं तेषु न प्रवेश इति।

१०-२८-१७ रहसि संविदमित्यस्य विवृतौ। तत्र कारणत्रयं गुणत्रयसहितमिति। भगवद्वचनं हास्यसहिताननं भगवदुरश्चेतिकारणत्रयम्। 'हृच्छयोदयं' 'प्रेमवीक्षणं' 'श्रियो धामे'ति प्रत्येकं गुणत्रयं ज्ञेयम्। कारणत्रयं विवृण्वन्ति वाक्यं हास्यमुरश्चैवेत्यादिना। भगवद्रूपस्य वा षड्गुणत्वमुच्यत इति। 'रहसि संविद'मित्यादिपद्भुणा भगवत एवोच्यन्ते। अस्मिन् पक्षे 'रहसि संविद'मित्यादिषु चतुर्षु बहुव्रीहिसमासो ज्ञेय इत्याहुः रहसि संविदो यस्मादिति एतादृशं त्वामित्यादिना। तथा च रहसि संविदं त्वां, हृच्छयोदयं त्वां, महसिताननं त्वां प्रेमवीक्षणं त्वां वीक्ष्य, ते बृहदुरः श्रियो धाम च वीक्ष्येत्यन्वयो ज्ञातव्यः। प्रमाणादिबलरूपतेत्यादिना। 'रहसि संविद'मित्यनेन वाक्यमुक्तम्। भगवद्वाक्यस्य च प्रमाणरूपता स्पष्टा। 'हृच्छयोदय'मित्यनेन प्रमेयबलम्। तादृशवाक्यैः शृङ्गाररसम्बधिभिः प्रमाणेहृच्छयोदयस्यैव प्रमेयत्वात्। 'महसिताननं'मित्यनेन साधनम्। तादृशहाससहितश्रीमुखस्य सर्वफलसाधकत्वात्। प्रेमवीक्षणमित्यनेन फलम्। प्रेमपूर्वकावलोकनस्य साध्यत्वात्। वक्षसि च स्वस्थित्यर्थं यश इति। स्वशब्देन वक्त्र्यो ग्राह्याः। समयविशेषे वक्षसि स्वस्थित्यर्थं बृहत्त्वेन उरसः यशो निरूपितमित्यर्थः। पूर्वस्थित्यभाव इति। महसिताननदर्शनात्पूर्वं या मानादिना स्थितिस्तस्या अभावः महसिताननदर्शनाद्भवतीत्यर्थः। महसितयुतश्रीमुखसुषमावलोकनजन्यपरमोत्कण्ठाप्रादुर्भावात्मानः स्थापयितुं न शक्नुम इति भावः। 'ततः काम' इत्यारभ्य, 'स्वयोग्यते'त्यन्तम्। हृच्छयोदयमित्यनेन कामः। अस्मिन्पक्षे महसिताननमित्यस्य हृच्छयोदयमिति विशेषणम्। अत एव ततः काम इत्युक्तम्। ततः महसिताननरूपविशेष्यदर्शनानन्तरं कामो भवति। महसिताननस्य

कृच्छ्योदयत्वात्। मेघवीक्षणेन च तस्य स्थिरीकरणमिति स्पष्टम्। ततः स्वयोग्यतेति। 'वृहदुरः श्रियो धामे'त्यनेन तत्र वृहदुरसि स्वस्थितियोग्यता निरूपितेत्यर्थः। ततो भोगचातुर्यं प्रथमविशेषणेनेति। 'रहसि संविद'मिति विशेषणेन एकान्ते याः रससम्बन्धिसंविदस्ताभिर्भोगचातुर्यं भवतीति भावः।

१०-२८-१८ व्रजवनौकसां व्यक्तिरित्यस्य विवरणे। एतादृशीं मनाक् त्यजेति। त्यज स्थापयेत्यर्थः। इह स्थापनस्य त्यागपदार्थत्वात्। तथा चैतादृशीमानन्दमयीं भवद्व्यक्तिं अस्मासु स्थापयेत्यर्थो भवति।

१०-२८-१९ यत्ते सुजातमित्यत्र। पुनर्यदायातीति तेन सन्देह इति। कूर्पादिभिर्व्यथायाः प्रसिद्धत्वाद्व्यथत इति ज्ञानं, पुनर्वने यद् आयाति तेन न व्यथत इति ज्ञानम्। अन्यथा यदि व्यथा स्यात्, तर्हि वनागमनं न स्यात्। एवमुभयकोट्यवगाहि ज्ञानं संशय उत्पद्यत इत्यर्थः। पूर्वं तु खेदेनेत्यादि। 'शिलतृणाङ्कुरैः सीदती'त्यनेन पूर्वं भगवच्चरणारविन्दविषयकखेदज्ञानेन स्वमनःपीडा निरूपिता। "कलिलतां मनः कान्त गच्छती'तिवाक्यादित्यर्थः। इदानीं तु मूर्च्छेति। 'यत्ते सुजाते'त्यनेन तु मूर्च्छा निरूपिता। 'भ्रमति धी'रिति वाक्यात्। उभयत्र चरणखेदस्य स्वतज्जन्यस्वदुःखतौल्येप्येतावान् विशेषः। तत्र पीडोक्ता, अत्र मूर्च्छेति। अन्तःस्थितिरिति। मूर्च्छाया नवमावस्थात्वात्तदग्रिमावस्थाया अभावान्मूर्च्छैव अन्तःस्थितिपर्यवसानमित्यर्थः। इति श्रीदशमस्कन्धाष्टाविंशाध्यायसुबोधिनीयोजना सम्पूर्णा।

१०-२९-० एकोनत्रिंशाध्यायार्थोक्तौ। प्रसादं भगवत्कृतमिति। आविर्भूय करस्पर्शदानादिरूपं प्रसादमित्यर्थः। रोदनात्प्राप्येति। रोदनं कृत्वा प्राप्येति ल्यप् लोपे पञ्चमी। रोदनं निःसाधनत्वे भवतीति निःसाधनत्वेन केवलदैन्याविर्भावे भगवान् प्रसादं कृतवानिति ज्ञेयम्। निर्णयज्ञा इति। जाता इति शेषः। 'भजतोनु भजन्त्येक' इति पृष्ट्वा 'मिथो भजन्ति ये सख्य' इत्याद्युत्तरवाक्यश्रवणे निर्णयज्ञा जाता इति हार्दम्। अतो निर्णयवाक्यानीत्यादि। यतः सन्तुष्टः सर्वदुःखानि नाशयत्यतो 'मिथो भजन्ती' त्यारभ्य 'तद्वः प्रतियातु साधुने'त्यन्तानि वाक्यान्युक्तवान्। अन्यथा अस्मानेतावत्पर्यन्तं विहाय दुःखिताः कृत्वा भगवान् गत इति दुःखं व्रजवरवधूहृदयसरसीरुहान्न गच्छेदित्यर्थः।

१०-२९-२ तासामाविरभूदित्यस्याभासे। ततो भगवान् ब्रह्मा विष्णू रुद्रश्च मूर्त्वेत्यादि। एतदर्थष्टिप्पण्यां स्फुटः। स्मयमानमुखाम्बुज इत्यस्य विवरणे। स्मयमानाभ्यां वा सहितमिति। अस्मिन्पक्षे स्मयो मानश्चेति द्वन्द्वं कृत्वा मुखाम्बुज-

पदेन समासः। अर्थस्तु टिप्पण्यां स्फुटः। भक्तानां दोषो भक्तेभ्यो निर्गत इति। एतदर्थस्तु टिप्पण्यां स्फुटः। पीताम्बरधर इत्यस्य विवृतौ। हास्यसंकोचार्थं हस्ते धृत्वा तिष्ठतीति'। अयमर्थः 'पीताम्बरधर' इत्युक्त्या लब्धः। अन्यथा पीताम्बर एतावदुक्त्या चारितार्थ्ये धर इति न वदेत्। अथवेति। पूर्वस्मिन् पक्षे मायाजवनिकां दूरीकृत्य प्रकटो जात इत्युक्तम्। तत्रागमनं नास्ति, तथा 'तं विलोक्यागतम्' इत्यनेनोक्तमागमनं बाध्येत, अतः पक्षान्तरमाहुः अथवेति। व्यापिवैकुण्ठरूपेणेत्यादि। अयमाशयः। 'तं विलोक्यागत'मित्यनेनागमनमुक्तम्। तच्च गमनं विना न सम्भवत्यतो गमनं वक्तव्यम्। कुत्र गमनमित्यपेक्षायां गमनस्थलस्यानुक्तत्वाद्विशेषानुक्तौ सामान्यं ग्राह्यमितिन्यायेन सामान्यस्थलस्य ग्राह्यत्वाद्व्यापिवैकुण्ठं च भगवतो नित्यनिवासत्वेन सामान्यं स्थलमतस्तदेव ग्राह्यमित्याशयेनाहुः व्यापिवैकुण्ठरूपेणेत्यादि। मध्ये ब्रह्मादिपूजां वेति। ब्रह्मणा कृतायां पूजायां माला समर्पिता तां परिधाय समागत इति स्रग्वीत्युक्तम्। ब्रह्मा हि यत्र यत्रावतारस्तत्र तत्र दर्शनार्थं गच्छति। अतोऽत्राप्यवतारादर्शनार्थं गतो भगवन्तं पूजितवान्। अत्राप्यवतारोऽस्ति व्यापिवैकुण्ठादवतरणात्। अवतारो नाम व्यापिवैकुण्ठाद्भगवतः प्रपञ्चे समागमनमित्यवतारलक्षणात्। अतएव'तासामाविरभूच्छौरिः' इत्यनेनाविर्भावः उक्तः। 'पीताम्बरधरः स्रग्वी'तिविशेषणद्वयस्य तात्पर्यान्तरमाहुः यद्वेति। इदानीमनाविर्भावे तु न रसो न वा कीर्तिरिति। यदि प्रभुर्नाविर्भवेत्, तदा व्रजसुन्दरीणां तिरोभावो भवेत्, तदा रसो न स्यात्, कीर्तिश्च न स्यादित्यर्थः। भगवतस्तु रसापेक्षा। अतः प्रादुर्भाव एव कृतः रसापेक्षासूचकः, आच्छादकं पीताम्बरं हि, 'गुप्तो हि रसो रसत्वमाप्यते' इति शास्त्रात्। कीर्त्यपेक्षासूचिका वनमाला। अतो रसकीर्त्योरुभयोरपेक्षितत्वात् प्रादुर्भूतः। अतः पीताम्बरधरः स्रग्वी च। भक्तानां स्वरूपतिरोधाने उक्तोभयाभाव इति। रसकीर्त्योरुभयोरभाव इत्यर्थः। साक्षान्मन्मथमन्मथ इत्यस्याभासे। ननु कन्दर्पेणेति। एतस्यार्थष्टिप्पण्यां स्फुटः।

१०-२९-३ तं विलोक्यागतं प्रेष्ठमित्यस्य विवृतौ। जीवस्य अन्याधीनसुत्थानमिति। लीलासहिते हृदयस्थिते भगवति जीवस्य स्थितत्वाद्भगवदुन्याधीनमुत्थानमित्यर्थः। अन्तःकरणोत्थाने भगवन्निष्ठं प्रेष्ठत्वं हेतुः। अतः 'प्रेष्ठ'मिति विशेषणम्। इन्द्रियाणामुत्थाने प्रीतिर्हेतुः। अतः 'प्रीत्युत्फुल्लदृश' इत्युक्तम्। दृष्टान्तेनैव प्राणानामुत्थानमिति। तच्च 'प्राणमिवागत'मिति दृष्टान्तेन प्राणानामुत्थानमुक्तम्। शरीरोत्थाने पूर्वोक्ताभिलषितपदार्थता हेतुः। अतस्तमिति विशेष्यमुक्तम्।

१०-२९-४ काचित्करामुजमित्यत्र। [illegible] अंसे [illegible]। एतस्यार्थष्टिप्पण्यां स्फुटः। अंसे [illegible] गोन्यमानां च कृत्वं

प्रदर्शितमिति । देवोत्तमानां ब्रह्मादीनां पूजारूपं यद्भगवति कृत्यं तत्तासां व्रजसुन्दरीणां प्रदर्शितम् । व्रजसुन्दरीभ्यः प्रदर्शितमित्यर्थः । पूजायां स्थापितस्य चन्दनादेर्व्रजसुन्दरीभिर्बाहुधारणे प्रत्यक्षीकरणात् । ताम्बूलयोग्यतामाह तन्वीति । कोमलांगीति । कोमलांगीत्वाच्चर्वितताम्बूलं कण्ठे प्रतिफलत्यतः परमसौन्दर्यं सूच्यते । इयमेव ताम्बूलयोग्यता नाम । तादृशभावस्य कालनियमनार्थमित्यारभ्य लौकिकी भक्तिरित्यन्तम् । एतस्यार्थष्टिप्पण्यां स्फुटः ।

१०–२९–७ अपरानिमिषद्दृग्भ्यामित्यत्र । प्रीतिसेवनमत्राभिप्रेतमिति । जुषाणा तन्मुखाम्बुजमित्यत्र जुषी प्रीतिसेवनयोरिति जुषधातुना यद्यपि कुत्रचित्प्रीतिरुच्यते, कुत्रचित्सेवोच्यते, तथाप्यत्र प्रीत्यर्थकधात्वन्तरं सेवनार्थकधात्वन्तरं विहाय जुषधातोः प्रयोगः कृतोऽतो ज्ञायते प्रीतिसेवनमत्राभिप्रेतमिति । मुखाम्बुजस्य प्रीतिसेवनं नाम तन्निष्ठलावण्यामृतपानम् । अत एवापीतमतः स्वाधीनं जातमिति । आपीतमित्याङः प्रयोगात् आसमन्ताद्धर्मसहितं पीतमतः स्वाधीनं जातमित्यर्थः । तस्य स्वाधीनत्वस्य स्वरूपमाहुः यद्वेच्छतीत्यादिना ।

१०–२९–८ तं काचिदित्यत्र । एतदर्थष्टिप्पण्यां स्फुटः । स्वकीयो वा भाग इति । एतदर्थष्टिप्पण्यां स्फुटः । केवलानन्देन पुलके गोपीत्वं नेति । योगिनो हि अन्तर्भगवदाविर्भावे आनन्देन पुलकिताङ्गा भवन्ति, तद्वद्धेयम्, किन्तु उपगूहनं कृतवतीति कामभावोऽस्या मुख्य इति गोपीत्वमेव प्रधानम्, न तु योगरीतिरितिहार्दम् ।

१०–२९–९ सर्वास्ताः केशवालोकेत्यत्र । केशवपदतात्पर्यमाहुः बलिष्ठरजस्तमोभ्यामित्यादिना । बलिष्ठरजस्तमोभ्यां व्याप्तयोर्ब्रह्मशिवयोरित्यर्थः । फलसम्पादको मोक्षसम्पादक इत्यर्थः । कश्च ईशश्च केशौ केशयोर्वै मोक्षात्मकं सुखं यस्मादिति केशवपदव्युत्पत्तेः । तस्य क्षुद्रगुणक्षोभयुक्तानामिति । एतदर्थष्टिप्पण्यां स्फुटः ।

१०–२९–१२ शरच्चन्द्रांशुसन्दोहेत्यस्य विवृतौ । परितश्च निकृष्टाः पदार्था नोपर्यधश्चेति । परितः उपरि अधश्च निकृष्टाः पदार्था नेत्यन्वयः । सर्वत्रैवोत्कृष्टाः पदार्थाः सन्तीति भावः ।

१०–२९–१३ तद्दर्शनाह्लादविधुतहृद्रुज इत्यस्य विवृतौ । तत्प्रतिपादिकाः श्रुतयो जाता इति। सर्वे च मन्यन्त इति । वेदैर्ब्रह्म प्रतिपाद्यते इति लोका मन्यन्ते इत्यर्थः । लोका वेदानां ब्रह्मप्रतिपादकत्वं मन्यन्ते तत्र किं मानमित्याकांक्षाया श्रुतिभगवद्गीतावाक्यश्रुतीरुपन्यस्यन्ति। 'तं त्वौपनिषदं पुरुषं पृच्छामि'। 'अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः' 'सर्वे वेदाः यत्पदमामनन्ति'। 'तं त्वौप-

निषद्' मित्यत्र प्रश्नकर्त्र्या औपनिषदत्वं ब्रह्मण उच्यते । अत उपदेशात्पूर्वमेव मधुरे-
तावज्ज्ञानमस्ति यत् उपनिषत्प्रतिपाद्यं ब्रह्मेति । अतो वेदप्रतिपाद्यत्वं ब्रह्मणो लोका
मन्यन्ते इति यदुक्तं तत्सत्यमेव । भगवतापि गीतासु 'वेदे च प्रथितः पुरुषोत्तम'
इत्यनेन वेदप्रतिपाद्यत्वमुक्तम् । सर्वे वेदाः पद्रूपं पद्यते प्राप्यत इति पदं प्राप्यं
यद्ब्रह्म आमनन्ति अभ्यस्यन्तीत्यर्थात् वेदप्रतिपाद्यत्वमुक्तम् । अतो वेदैर्ब्रह्म प्रतिपा-
दितमिति मनोरथान्तप्राप्तिः श्रुतीनाम् । सा च भगवदनुग्रहेणैव । अन्यथा 'यतो वाचो
निवर्तन्ते अप्राप्य मनसा सहे'ति श्रुतेर्मनोवागप्राप्यस्य प्रतिपादनं कथं स्यात् । अतो
मनोरथस्यापि यत्र गतिर्नास्ति तादृशं ब्रह्म श्रुतयो निरूपयन्ति । तद्भगवतोऽनुग्रहविशेष-
सा॒ध्यम् । तथा व्रजसुन्दरीणां मनोरथान्तप्राप्तिः । अत्र भौतिक्य शब्दात्मिकाः श्रुतयो
दृष्टान्तरूपाः, आधिदैविक्यो व्रजसुन्दरीसंज्ञकाः श्रुतयो दार्ष्टान्तिकाः । अतो दृष्टान्त-
दार्ष्टान्तिकभावः श्रुत्योरेव । व्रजवरवधुटीनामपि श्रुतिरूपत्वात् । 'न स्त्रियो व्रजसुन्दर्यः
पुत्र ताः श्रुतयः किले'ति भृगुं प्रति बृहद्वामनपुराणे ब्रह्मवाक्यात् । 'गोप्यो गावस्तृण-
स्तस्ये'ति कृष्णोपनिषद्भिर्गोपिकानां श्रुतिरूपताकथनात् । अलौकिका वेदशब्दा
इति । वेदे येऽग्निवाय्विन्द्रादिशब्दा दध्यादिशब्दास्ते सर्वे न लौकिकाः । अत एव
'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः, तावन्ति हरिनामानि कीर्तितानि न
संशयः' इत्यनेन वेदाक्षराणां हरिनामत्वमुक्तम् । यत्र हरिनामत्वेनाक्षराणामलौकि-
कत्वम्, तत्र तादृशाक्षरसमुद्भूतशब्दानामलौकिकत्वं किं वाच्यमित्यर्थः । 'निःश्वसितमस्य
वेदा' इति श्रुतेर्वेदस्य भगवन्निःश्वासरूपत्वमुक्तम् । वेदाश्च 'इषे त्वोर्जे त्वा वायव स्थो-
पायव' इत्यादिशब्दरूपाः । अतः शब्दानामलौकिकत्वेन, 'वेदो नारायणः साक्षा'दिति
वाक्याच्च' । लोके च न संकेत इति । एतेषां शब्दानामलौकिकत्वादेषां लोके संकेतो
नास्ति । लौकिकशब्दसादृश्यं दृष्ट्वा लौकिकसंकेतबलेनार्थकल्पनायां तु वेदार्थो यः
कल्प्यते, न स वेदार्थः । अतो वेदानां संकेताभावादर्थज्ञानं दुर्लभमिति कृष्णानुग्रहैक-
लभ्यो वेदार्थ इति भावः । तथापि निरन्तरमित्यारभ्य, मन्यन्त इत्यन्तम् । वेदाः
भगवद्यशो गायन्ति, अतो वेदश्रवणेन शुद्धान्तःकरणाः पुरुषाः वेदस्य स्वयमेवालौकिक-
विषये भगवत्स्वरूपविषये प्रतिपादनं मन्यन्त इत्यर्थः । श्रुतिश्च तत्प्रनिपादिकेत्यारभ्य,
युक्तिः वेत्यन्तस्यार्थष्टिप्पण्यां स्फुटः ।

स्वैरुत्तरीयैरित्यस्याभासे । आधारधर्मसम्बन्धात् हृदयस्य कृतार्थता न
भविष्यतीनीति । यदि भगवते आसनार्थं स्वकीयवस्त्राणि न दद्युः, तदा भगवान्
स्वसम्बन्धातिरिक्तवस्तुन्युपविशेत्, तदा तावन्मात्रे कृतार्थत्वापातो भवेत् । पुष्टिमार्गे हि

कृतात्मनिवेदनानां यस्मिन्क्षणे येन वस्तुना येनेन्द्रियेण वा भगवत्सेवोपयोगो न स्यात्, तस्मिन्नेव क्षणे तस्य वस्तुनस्तदिन्द्रियस्य कृतार्थता नास्तीति सिद्धान्तो निरुद्धानाम्। तथा च निरुद्धानां भक्तानां सर्वत्र सर्वेषु पदार्थेषु भगवत्सम्बन्धोऽभिलषितः, तत्सत्त्वे कृतार्थत्वम्, तदसत्त्वे ह्यकृतार्थत्वम्, अत आधारसम्बन्धाभावेप्यकृतार्थता स्यात्, अतः आसनं ददुरित्यर्थः।

१०–२९–१६ भजतोनुभजन्त्येक इत्यस्य विवरणे। त्रयः पक्षाः सन्दिग्धाः फलतः स्वरूपतः भजनाभजनाभ्यामिति। तत्र भजनकर्तॄन् भजन्तीत्येकः पक्षः। तदाहुः तत्रैके ये यथा भजन्ति ते तथा तानपि भजन्तीति। द्वितीयं पक्षमाहुः एके पुनरभजतोपि भजन्तीति। 'एक एतद्विपर्यय'मिति मूले पठितस्यार्थ उक्तः। एवं भजने प्रकारद्वयम्। तृतीयमभजनपक्षमाहुः अन्ये तूभयानपि न भजन्तीति। उभयानपीति। भजतः अभजतश्चेत्यर्थः। एवं भजनाभजनाभ्यां त्रयः पक्षाः भवन्ति। उभयोरपि प्रतियोगिनोरिति। 'एक एतद्विपर्यय' मित्यनेनोक्तस्य अभजद्भजनकर्तुः अभजनकर्ता प्रतियोगी एकः। 'नोभयांश्च भजन्त्यन्ये' इत्यनेनोक्तस्य भजदभजनकर्तुः भजनकर्ता प्रतियोगी द्वितीयः। तस्य भजनस्यावश्यं फलं वाच्यम्। ये भजनानुसारेण भजन्ति ते किं कृतघ्ना इति। भजनरूपोपकारमपत्वा भजनस्य फलं दातुमवाञ्छन्तो भजनमेव कुर्वन्ति, नतु प्रत्युपकारम्, अतः कृतघ्नत्वं सम्भाव्यते। प्रत्युपकारसामर्थ्यस्य विद्यमानत्वात्। आहोस्विद्धूर्ता इति। अयं अस्मान् भजति धनाप्तये, एतस्मै धनं तु न देयम्, एतस्यापि भजनमस्माभिः कर्तव्यमिति बुद्ध्या भजन्ते, तत्र धूर्तत्वं सम्भवति। धनार्थिने तदर्थमेव भजनं कुर्वते धने विद्यमानेपि धनादानात्। द्वितीयपक्षे अभजद्भजनरूपे कश्चिद्दोषमाहुः अभजतो भजन इत्यादिना।

१०–२९–१७ मिथो भजन्तीत्यस्य विवरणे। स्वार्थ एव एकान्तः एकं फलमुद्यमो यस्येति। स्वार्थ एकान्तो यस्येति बहुव्रीहिं कृत्वा स्वार्थैकान्त उद्यमो यस्येति पुनर्बहुव्रीहिः। तथा च स्वार्थ एव एकान्तः फलं यस्य तादृश उद्यमो यस्येति फलितम्। शास्त्रानुसारी चेदिति। मिथः स्वस्मै भोजनं दत्तवते ब्राह्मणाय भोजनं ददाति। परन्तु ब्राह्मणसेवा भोजनादिरूपातिशयपुण्यजनिका इति ज्ञात्वा ब्राह्मणभोजनादि कारयति, स धर्मभाग्भवत्येव, धर्मबुद्ध्या क्रियमाणत्वात्। तत्र न मिथो भजनमित्यर्थः। तथा च न स्वार्थैकान्तोद्यमत्वं तत्रेति ज्ञेयम्। ननु शिष्यः सेवते, तादृशाय गुरुर्विद्यां ददाति। तत्र पुण्यं गुरोर्भवतीति श्रूयते, पूर्वोक्तविचारे तु सेवाकृतायैव पाठयतीति मिथो भजनमापतत्यतः स्वार्थपरतैव भवतीत्याशंक्याहुः विद्या तु फलरूपेति। विद्या-

स्वफलाप्त्यर्थं सेवाकरणे विद्या तु देयैव, यो यदर्थं यतते, तस्मै तद्दाने धर्मो भवत्येव, न
तत्र मियो भजनमितिभावः । तथा सौहार्दमपि यद्यन्यमपेक्षेतेति । भोजनवसनादिदा-
नेन सौहार्दमिव कुर्वन्नपि यद्ययं ममेष्टं साधयतीत्यपेक्षया कर्ता न सौहार्दवान् भवतीत्यर्थः ।

१०–२९–१८ भजन्त्यभजतो ये वा इत्यस्य विवृतौ । धर्मश्चोपश्चे-
दित्यस्य तदीय एव धर्म इत्यस्यार्थष्टिप्पण्यां स्फुटः । तत्र धर्मे यत्र कर्म
प्रधानं, यत्र वा देवतेत्यादेरर्थष्टिप्पण्यां स्फुटः ।

१०–२९–१९ भजतोपि न वै केचिदित्यस्य विवृतौ । ये दयाधर्मा-
धिकारिणस्ते अधमा इति । अस्यार्थष्टिप्पण्यां स्फुटः । आत्मारामा ह्याप्तकामा
इत्यस्य विवरणे । एकत्राप्रवृत्तिरिति । भुक्तवन्तं प्रति भुंक्ष्वेति कथने अस्य भुक्तवतः
भोजने प्रवृत्तिर्न स्यादित्यर्थः । सिद्धसाधनत्वेनानुवाद इति । भुक्तवन्तं प्रति भुंक्ष्वेत्युक्ते
अनुवाद एव । तस्य कृतभोजनस्य भोजनेच्छाभावाद्भोजनं न करिष्यत्येव, अतो भोज-
नाभावकथनमनुवाद एवेत्यर्थः । उभयथापि वैयर्थ्यमिति । भुक्तवन्तं प्रति भुंक्ष्वेत्यु-
क्तावपि भोजनाभावदर्शनाद्वैयर्थ्यम्, अर्थो भोजनं भोजनप्रेरयितुः अपेक्षितत्वात् ।
तादृशस्य भोजनस्याभावाद्वैयर्थ्यमित्यर्थः । भुक्तवन्तं प्रति मा भुंक्ष्वेत्युक्तौ अनुवाद एव ।
तस्य भुक्तवत्त्वाद्भोजनेच्छाया अभावादेव भोजनाभावे सिद्धे मा भुंक्ष्वेति कथनस्य
वैयर्थ्यम् । एवमुभयथापि वैयर्थ्यमिति हार्दम् । तस्याप्तकामत्वात् । आप्तकामे भुंक्ष्वेति
कथनं न फलसाधकम्, यतस्तस्य तृप्तत्वान्न भुंक्ते, मा भुंक्ष्वेति कथनमपि फलसाधकं न,
तृप्तत्वादेव भोजनाभावस्य सिद्धत्वाद्भोजनाभावविधानमकिञ्चित्करमेवेत्युभयथा वैय-
र्थ्यम् । प्रवर्तमानस्य धर्म इति । यः भुंक्ष्वेति भोजनार्थं प्रेरयति कारुण्याद्यधीनस्तस्य
धर्मः सेत्स्यति, परोपकारार्थं प्रवृत्तत्वात् । अज्ञानं चेति । अयं तु कृतभोजन एवं
भोजनार्थं कथं प्रेरयामीत्याद्याकारकज्ञानाभाव इत्यर्थः । ननु द्वितीयपक्षे इति ।
'भजतोनुभजन्त्येक एतद्विपर्यय'मिति प्रश्ने द्वितीयो यः अभजद्भजनकर्ता तत्कर्तृकभजन-
पक्ष इत्यर्थे । गोपिकानां भजन इति । गोपिकाकर्तृकभगवद्भजन इत्यर्थः । स्नेहाद्भ-
जनमस्तु इति । गोपिकाकर्तृकं भजनं स्नेहभजनमस्त्वित्यर्थः । गोपिका भोग्या
इत्यारभ्य उपक्षीणा इत्यन्तम् । गोपिकाभिर्भजनं यत्कृतं तद्गोपिकानां भोग्यत्वाद्भो-
ग्यसमर्पकत्वे उपक्षीणम् । भोग्यत्वसिद्धये देहादीनां भगवदुपयोगः कृतः, कृतात्मनिवे-
दित्वात् । एतावतैवोपक्षीणाः । प्रतिभजनावश्यकत्वानर्हा इत्यर्थः । ईश्वरोपीत्यारभ्य
न विचार्य इत्यन्तम् । फलार्थं सेव्यमानादीश्वरात् फलं प्राप्तव्यम्, नतु तत्कर्तृकभजन-
नापेक्षेति भजनाभजनयोस्तदीययोर्न विचारः कर्तव्य इत्यर्थः । व्यवहारे दृष्टार्थश्चे-

दित्यारभ्य विचार्य एवेत्यन्तम्। भजनकर्ता दृष्टमेव पश्वादिरूपं फलं अर्थो यस्य एतादृशश्चेत्तदा दृष्टं फलं चेन्न प्राप्तं तदा भजनविषय ईश्वरः विचार्यः, किमस्माभिः कृतायां पूजायां अर्पितान् गन्धाद्युपचारानीश्वरो गृहीतवान्नवेति, यदि गन्धाद्युपचारा गृहीताः स्युस्तदास्मन्मनोभिलषितं स्यात्। तस्मान्न गृहीतवानित्येका कोटिः। शास्त्रोक्तयथावदुक्तमर्यादया कृतत्वाद्गृहीतवानेवेति द्वितीया कोटिः। एवं कोटिद्वयोपस्थितौ निर्णयसिद्ध्यर्थमीश्वरो विचार्य एव। ननु भगवानात्मारामः, तस्य प्रयोजनाभावाद्भवतीनां भजने प्रतिभजनं न कुर्यादेवेति किमर्थमत्र भजनाभजनविचार इत्याशङ्क्याहुः पूर्वं गृहीतत्वान्नात्मारामता, नापि पूर्णकामतेति। अस्मत्समर्पितस्य देहादेः पूर्वं गृहीतत्वात् अङ्गीकृतत्वान्नात्मारामता, किन्तु व्रजसुन्दरीगणविहारैकतानतेत्यर्थः। अत एव पूर्णकामतापि नास्तीतिभावः। ननु मास्त्वात्मारामता, पूर्णकामता वा, तथापि पूर्वरमणस्य कृतत्वात्तृप्तो भगवान्न रमते, किमत्र दूषणमित्याशङ्क्याहुः प्रथमप्रवृत्त्या तृप्तावपि परित्यागोऽनुचित इति। पूर्वकृतेन रमणेन तृप्तिरास्तां नाम, परन्त्वस्माकं परित्यागस्त्वनुचित एवेतिभावः।

१०-२९-२० नाहं तु सख्य इत्यस्य विवृतौ। ननु ईश्वरोपि प्रतिभजनं फलदानादिना करोत्येवेति वयमपि प्रतिभजनं प्रतीक्षामह इत्याशङ्क्याहुः नापीश्वरभजनपक्ष इत्यादि। तत्र हेतुः। सख्य इति। यतो भवतीभिः फलमुद्दिश्य भजनं न कृतम्, किन्तु शुद्धपुष्टिरीत्या कृतम्, अतः फलदानादि मयापि न कृतम्। अपि च, भगवतीनां मयीश्वरबुद्ध्यभावात्सख्यमात्रेण रमणं कृतमिति न तत्र प्रतिभजनापेक्षेति भावः। नत्वात्मारामः, ममात्मव्यतिरिक्तपदार्थाभावान्न व्यावर्त्यमस्तीति। आत्मारामपदे आत्मशब्देनात्मन्येव रमते, नान्यत्रेत्युच्यते, तथा चात्मशब्दस्यान्यव्यावर्तकत्वमस्ति, अतः आत्मारामत्वं भगवति नास्ति। 'आत्मैवेदं सर्वं, स सर्वं भवती'त्यादिश्रुतेर्भगवतः सर्वरूपत्वेनात्मव्यतिरिक्तपदार्थाभावात्। आत्मन्येव रमते, नान्यत्रेति व्युत्पत्तेः। असम्भवादित्यर्थः। चतुर्धा हि भगवदुपयोग इति। भोग्यत्वे द्वेधा, भोक्तृत्वेन च द्वेधेत्येवं चतुर्धेत्यर्थः। तत्र भोग्यत्वे प्रकारद्वयम्। कामनापूरकत्वेन स्वातन्त्र्येण चेति। भोक्तृत्वे प्रकारद्वयम्। भक्त्या भक्तदत्तपदार्थस्वीकारेण विषयत्वेन भोगेन चेति। एवं चतुर्धा। आद्ये भजनं नश्यतेति। कामनापूरकत्वेन भोग्यत्वपक्षे इत्यर्थः। कामनापूरकत्वेन यदि भगवान् भोग्यः स्यात्तदातीवकामनायाः अल्पत्वात्तावत्कामनापूर्तौ अग्रे प्रयोजनाभावाद्भजनं न स्यादित्यर्थः। अतो भजनं नश्यतेत्यर्थः। तत्र हेतुमाहुः अल्पफलदानादिति। अल्पफलं प्राप्य कामनाया निवृत्तौ भजनानुवृत्तिर्न स्यादि-

त्यर्थः । ननु भगवतस्त्वगणितानन्दत्वात्कामनापूर्त्यर्थमपि भगवत्सम्बन्धे पूर्णानन्दानुभव एव भविष्यतीति किं बाधकं कामनापूरकत्वेन भोग्यत्व इत्याशङ्क्याहुः स्वरूपतो महत्त्वेपि कालपरिच्छेदात् । भगवतः स्वरूपतो महत्त्वं पूर्णानन्दत्वं यद्यप्यस्ति, तथापि कालपरिच्छेदात् । कालेन कामनाविषयस्य रमणस्य परिच्छेदात्तावता रमणेन मनोरथपूर्तौ अग्रे भजनानुवृत्तिर्न स्यादित्यर्थः । द्वितीये त्विति । द्वितीये पक्षे स्वतन्त्रत्वेन भोग्यत्वपक्षे इत्यर्थः । अतिभजनेन भवतीति । अहर्निशं विप्रयोगसंयोगभेदेन चेदतिभजनं कुर्युः, तदा स्वतन्त्रत्वेन फलरूपतया भोग्यत्वं भगवतो भवतीत्यर्थः । अनो विप्रयोगदानार्थं भगवता तिरोहितमिति भगवतः सरणिरन्यैव, नतु आत्मारामादिषु चतुर्ष्वन्तर्भाव इति भावः । अतः परं विषयन्यायेन भोक्तृत्वेन उपयोगं दूषयन्ति अपेक्षाभावादित्यादिना । भक्त्यर्थं त्विति । भक्त्या दत्तस्य पदार्थस्य भोक्ता भवतीति पक्षे तु भक्त्यर्थं निरन्तरभक्तिसिद्ध्यर्थमभजनं भगवता कृतमतो यदा निरन्तरं भक्तिर्भविष्यति, तदा भोक्ता भगवान् भविष्यतीतिभावः । आद्ये त्यागोऽनिष्टहेतुरिति । वृथा त्यागो विध्यभावात्स्याज्यानां दुःखसम्पादकत्वाच्चानिष्टहेतुरित्यर्थः । द्वितीयेन मम भार इति । द्वितीयेन मदर्थत्यागेनेत्यर्थः । मदर्थत्यागेन हेतुना ममोपरि भवतीनां भारः मयि ऋणित्वमित्यर्थः । तथा च ऋणित्वपरिहारार्थं परोक्षभजनं कुर्वता मया तिरोहितमित्यर्थः । वस्तुतस्तु भवतीनामृणी भवाम्येवेत्यग्रिमश्लोके वक्ष्यते ।

१०–२९–२२ , न पारयेहमित्यस्याभासे । भक्तिमार्गविरोधमिति । एतदर्थंटिप्पण्यां स्फुटः । इति श्रीमद्गोवर्धनधरश्रीवल्लभाचार्यवरश्रीविट्ठलेश्वरचरणानुचरसेवकेन लालूभट्टोपनामदीक्षितबालकृष्णेन कृतायां दशमस्कन्धैकोनत्रिंशाध्यायसुबोधिनीयोजना सम्पूर्णा ॥

१०–३०–० त्रिंशत्तमाध्यायविवरणारम्भे । रसात्मकस्तु यः कामः सोत्यन्तं गूढ एव हीति । त्रिषु लोकेषु रसात्मकः कामो गूढ एव । देवादयोपि कामेन रसमुपपाद्यानुभवन्ति, न तु तेषां रसात्मकः कामः । तत्रापि रसलेश एवानुभूयते, न तु रसः । रसशब्देनानन्दो बोध्यः । 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती'ति श्रुतेः । अतो भगवता कीदृशो रसोनुभूयते इति जिज्ञासायां तादृशरसस्य सर्वत्रैवाभावान्निरुपमत्वेन बोधयितुं न शक्यते, अतो भगवता भुज्यमानस्य रसस्यात्यन्तं गूढत्वम् । 'रसो वै स' इति श्रुतेः स्वरूपाभिन्नानन्दरूपत्वात् । तद्रसस्य गूढस्य बोधनार्थं वात्स्यायनभरतयोः प्रवृत्तिरित्याहुः अतः शास्त्रं प्रवृत्तं हि तृतीयं भारतं तथेति । तृतीयं कामशास्त्रं वात्स्यायनप्रणीतम् । भारतं भरतकृतसूत्राणि । तस्यालौकि-

कस्यानन्दरूपस्य सर्वाङ्गेषु स्थितस्य गुप्तत्वात्तत्प्रकटनार्थं भगवान् नृत्यं करोति कारयति चेत्याहुः अतोत्र भगवांश्चक्रे नृत्यमित्यारभ्य व्रजेदित्यन्तम् । 'जलं वायुश्च साम-ग्री'त्यादेः 'अत्रैव लोके प्रकट'मित्यादेरर्थष्टिप्पण्यां स्फुटः । प्रमाणेन प्रमेयेन दुःखं दूरीकृतवानिति । प्रमाणेनेति । 'नाहं तु सख्य' इत्यारभ्य 'तद्वः प्रतियातु साधुने'त्यन्तेन भगवद्वाक्येनेत्यर्थः । प्रमेयेन स्वरूपेणाविर्भूतेनेत्यर्थः ।

१०–३०–१ इत्थं भगवत इत्यत्र । प्रमादेवास्माकं विरहो जात इतीति । ननु विरहस्य शृङ्गाररसद्वितीयदलात्मकस्य भगवद्रूपत्वाद्भ्रमजन्यत्वं कथं सम्भवतीति चेत् । सत्यम् । यस्य विरहस्य भगवदात्मकत्वं स भिन्न एव, न तस्य निवृत्तिः । स रसरूपः । यत्र तु भगवान् अस्मान् विहाय गतः । अतो नास्माकं भग-वत्सम्बन्ध इति बुद्धिः, नत्वन्तर्भगवत्स्फूर्तिः, भगवद्रमणं वा, लीलास्फूर्तिर्वा सम्भवति, किन्तु यत्कृतभ्रमत्वबुद्ध्या प्रकटीभूतेपि भगवति सम्यक्त्वेन न सुखानुभवः, सोज्ञानजन्मा विरहः, स भगवद्वचोभिर्नाश्यते । एतासां तु विरहद्वयमप्यस्ति । तत्र भगवदात्मकस्य विरहस्य त्वाविर्भूते भगवति तिरोभावः । द्वितीयस्य तु भगवद्वाक्यैर्निवृत्तिरिति बोध्यम् । अतएव द्वितीयविरहस्याज्ञानजन्यत्वेन वास्तवत्वाभावात् 'भवतीनां वियोगो मे न हि सर्वात्मना क्वचि'दित्यनेन तदभावो भगवता बोधितः । मनसि विचिकित्सायामे-वेति । अस्यार्थष्टिप्पण्यां स्फुटः ।

१०–३०–२ तत्रारभतेत्यस्य विवृतौ । अतोऽसाधारणो भोगश्च तस्यावश्यक इति चेति । एतासामङ्गीकारस्य कृतत्वात्फलदानार्थं रासक्रीडा कर्तव्या । गोविन्दपदेनेन्द्रत्वनिरूपणात् 'इदि परमैश्वर्ये' इति धातुना परमैश्वर्यकथनादसाधारणो भोग आवश्यक इत्यर्थः । गोविन्द इति चाभ्यधादित्यत्र चकारेण गोपेन्द्रो व्रजेन्द्रो गोकुलेन्द्र इत्यादिनामानि प्रकटीभूतान्यतो गोकुलेन्द्रत्वात्तत्सम्बन्ध्यसाधारणो भोगो भगवता कर्तव्य इति भावः । बहुनर्तकीयुक्तो नृत्यविशेषो रास इति । रूढिसिद्धमिदं लक्षणम् । 'रसानां समूहो रास' इति यौगिकी व्युत्पत्तिः । क्रीडायां मनसो रस-स्योद्गमः, नृत्ये देहस्येति । मानसिकस्यानन्दस्य क्रीडायामाविर्भावः । नृत्ये दैहिका-नन्दस्याविर्भावः । नृत्यं तु रासपदवाच्यमतो रासे दैहिकानन्दस्याविर्भाव इति क्रीडाया रासस्य च भेदो ज्ञेयः । अतएव रासे क्रीडा इति पूर्वं रासक्रीडयोर्भेदेन व्याख्यानम् । यद्यपि रसशब्दवाच्यस्यानन्दस्याविर्भावो मनस्येव, तथापि भगवत्परिकरस्यालौ-किकत्वेन सच्चिदानन्दरूपतया सर्वत्रानन्दस्य विद्यमानत्वाद्देहेप्यानन्दाविर्भावो युक्त एवेति बोध्यम् । अनुव्रतैरित्यस्य विवृतौ । अनुव्रतपदतात्पर्यमाहुः तासामपि

रसोत्पादनमावश्यकमितीति । यथा भगवतो रमणोत्कण्ठया रसोत्पादनमावश्यकम्, तया तासामपि रसोत्पादनं आवश्यकम्, रिरंसाधिक्यादतोऽनुव्रतात्वमित्यर्थः । अथवा तासां अनुव्रतानामुपरि परमानुग्रहाद्रसोत्पादनं भगवता कर्तव्यमेवेतिभावः । अनुव्रत-पदस्यार्थान्तरमाहुः **यादृशो भगवतोभिप्रेतस्तादृश एवेति** चेति । ताभिरभि-व्यक्तीक्रियत इति शेषः । तासामनुव्रतात्वेन भगवदभिप्रायानुकूल एव रसोभिव्यक्ती-क्रियत इति भावः । **स्त्रीरत्नैरित्यत्र** । स्वासाधारणधर्मैरित्यादि । **असाधारणधर्मै-रित्यादि** । असाधारणधर्मैः कृशाङ्गीत्वमृगनयनीत्वचन्द्रमुखीत्वादिरूपैः स्त्रीरत्नत्वप्र-काशका इत्यर्थः ।

१०-३०-३ **गोपीमण्डलमण्डित इत्यत्र** । उत्तरोत्तरमण्डलैः पूर्व-पूर्वरसः पोष्यत इतीति । एतदर्थष्टिप्पण्यां स्फुटः । **तासां मध्ये द्वयोर्द्वयोरित्यस्य** विवृतौ । **तासां द्वयं द्वयं भिन्नतया भावनीयमिति** । गोपिकाद्वयं भावयित्वा श्रीकृष्णभावना कार्या, ततः पुनः गोपिकाद्वयं भावनीयम्, पुनः श्रीकृष्णो भावनीयः । एवं सति सर्वासां एकस्मिन् पार्श्वे भगवान्, तेन सह क्रीडा, भगवतस्तु वामपार्श्वे व्रजसुन्दरी, तया सह क्रीडा, दक्षिणपार्श्वे चैका, तया सह क्रीडा इत्येकस्य भगवत्स्वरूपस्योभाभ्यां गोपिकाभ्यां क्रीडेति बोध्यम् । **द्वित्वद्वयस्य नैकाधिकरणता भाव्येति** । गोपिका-द्वित्वद्वयस्य एकाधिकरणता न भाव्या । गोपिकाचतुष्टयमेकभगवत्स्वरूपमवलम्ब्य तिष्ठतीति न भावनीयम्, किन्तु गोपिकाद्वयमेकं भगवन्तमवलम्ब्य तिष्ठतीति भावनीयम् । तत्राप्येकस्या वामभागे भगवान्, अन्यस्या दक्षिणभागे हरिरिति ज्ञेयम् । इह द्वित्वद्वयं भिन्नभिन्नतया भावनीयमिति श्रीमदाचार्यैर्भावनायां कृत्यप्रत्ययस्योक्तत्वादवश्यं जपादि-समये सर्वदैवैतादृशं रूपं स्मर्तव्यम् । एवं **षोडशगोपिकानामष्टकृष्णा भवन्तीति** । षोडश गोपिकानामेकं मण्डलम् । एवं नानामण्डलानि । तत्र षोडशगोपिका भगवतः कलारूपाः, ताभिः कलारूपाभिः सहितः श्रीवृन्दावनचन्द्रो भगवान् बोधितः । अत एव षोडशैव गोपिकाः गणिताः । तावतीनामेव मण्डलं निरूपितम् । अनेन प्रमाणप्रकरणे एकादशाध्याये वृन्दावनगमनप्रसङ्गे 'गोपवृद्धा महोत्पातानुभूय बृहद्वने' इत्यारभ्य 'रामगाधवयोर्नृपे'त्यन्तैः षोडशभिः श्लोकैः षोडशसंख्यातात्पर्येण सूचितं श्रीकृष्णस्य चन्द्रत्वं फलप्रकरणे स्फुटीकृतं षोडशगोपिकामण्डलकथनेन । **अन्यथा रसाभासः स्यादिति** । यदि एकामेकां गोपिकां प्रति एकं एकं कृष्णस्वरूपं स्यात्, तदा मण्डलमध्ये एकस्या एकस्या गोपिकायाः पार्श्वद्वये भगवान् स्यात् । तदा भगवत्स्वरूपद्वयेन एकैकस्याः सम्बन्धे रसाभासः स्यादित्यर्थः । तदेवाहुः **कृष्णद्वैविध्यप्रतीतेरिति** । मध्ये मणीनां

हैमानामित्यत्र त्विति । 'हैमानां मणीनां मध्ये महामारकतो यथे'त्युक्ते एको भगवान् वह्वीषु नृत्यतीति प्रतीयते, तच्च पूर्वोक्तविरुद्धम्, पूर्वं तासां मध्ये द्वयोर्द्वयोः प्रविष्टेनेत्युक्तत्वादित्याशंक्य समादधते । 'मध्ये मणीनां हैमाना'मित्यत्र तु दर्शनार्थमुक्तत्वाद्गोपिकानां देवानां च दर्शनं तथैवेत्यनेन । पूर्वं यथा भगवान् मण्डलमध्ये रूपाणि कृत्वा प्रविष्टः, तथा वर्णितं भगवतो बहुरूपत्वं शुकेन । 'मध्ये मणीना'मित्यत्र तु यथा देवानां दर्शनं जातं वह्वीषु गोपिकास्वेको भगवानिति तथैव शुकेन वर्णितमित्यविरोधः । गोपिकानां देवानां चेति सुबोधिनीफक्किकायां गोपिकानां दर्शनं गोपिकाकर्तृकं दर्शनमित्यर्थो बोध्यः । देवानां चेति तु देवकर्तृकं दर्शनमित्यर्थो बोध्यः । तथा च देवानां भगवद्दर्शने एको भगवान् नृत्यति मध्ये इति दर्शनम्, गोपिकानां तु वह्वीनां तु दर्शनं मारकतमणेः परितो योजितानां हैममणीनामिवेत्यर्थो भवति । एवं सति गोपिकानां परितः स्थितानामेव देवैर्दर्शनं कृतम्, न तु गोपिकासम्बन्धिनी काचिदन्तरङ्गा लीला दृष्टेति फलितम् ।

१०–३०–६ जगुर्गन्धर्वपतय इत्यत्र । अन्यथा भगवद्धस्तेत्यादि । अस्यार्थष्टिप्पण्यां स्फुटः । सस्त्रीकास्तद्यशोमलमित्यस्य विवरणे । वैषयिकदोषव्यावृत्त्यर्थमाहेति । देवानां भगवल्लीलादर्शने भगवत्परिकरविषयकदोषोत्पत्त्यभावेपि स्वभोग्यस्त्रीषु कामोद्बोधः स्यात्तन्निवृत्तये यशो जगुः । तद्यशःस्वरूपमाहुः अमलं तद्यश इति । न मलं यस्मादिति पञ्चम्यन्ते अन्यपदार्थे बहुव्रीहिणा मलनिवर्तकं यश इत्यर्थः सिध्यति । तदाहुः तद्धि मलनिवर्तकमिति । अतो न तासां तेषां वेत्यादि । तासां देवस्त्रीणामित्यर्थः । तत्कालोपयोगिपदार्थादतिरिक्त इति । स्वस्वपुरुषविषयकः कामभाव इत्यर्थः । तेषां वेति । तेषां देवानां भगवत्परिकरविषयकः स्वस्वस्त्रीविषयकश्च कामभावो नोत्पद्यत इति भावः ।

१०–३०–७ तत्रातिशुशुभे इत्यस्य विवरणे । तदुक्तं शक्तिभिः सहितोधिकां शोभां प्राप्नोतीति । 'व्यरोचताधिकं तात पुरुषः शक्तिभिर्यथे'त्यत्रोक्तमित्यर्थः ।

१०–३०–८ पादन्यासैरित्यस्य विवृतौ । एकेनावयवेनेत्यादि । चारीकरणरूपपादन्यासादिसमये सङ्गीतशास्त्रोक्तप्रकारेण यादृशी भुजविधुतिरपेक्षिता, तादृश्येव जायते, तस्मिन्नेव चारीकरणभुजकम्पनादिव्यापारे यादृशो नेत्रव्यापार उचितो, यादृशो भ्रूव्यापारस्तादृशः कर्तुं शक्यते । भगवदीयपरिकरस्य परमालौकिकत्वात् । तथा चैकेन नृत्यव्यापारितहस्ताद्यवयवेन सह शिष्टावयवा भ्रूचरणादिरूपास्तया संवि-

नयुक्ता यथोचितविधानकरणशीला इति फक्किकार्थः। ननु पादन्यासभुजविधुत्यादि-
समये यथोचिता भ्रूप्रभृतिव्यापाराः कथं जायन्त इत्याकांक्षायामाहुः तत्तद्रसे हृदया-
विष्ट इत्यादि। अयमाशयः। नृत्ये हि संयोगशृङ्गारस्याभिनयः क्रियते, स च संयोगस्फूर्तिं
विना न सम्भवत्यतः स्मर्यमाणो यादृशसंयोगरसस्तस्मिन् क्षणे हृदये आविष्टो भवति,
तादृगेव व्यापारो भवतीत्येतासां हृदये भगवत्संयोग आविष्टोस्ति, स च सर्वगुणयुक्त
इति तस्मिन् आविष्टे सर्व एवावयवा यथोचितविधानयुक्ता भवन्तीति भावः। रस एकी-
भवतीति। नृत्ये सर्वेषामवयवानां श्रमाधिक्यात्सर्वत्रावयवेषु सच्चिदानन्दरूपेषु स्थितः
आनन्द एकीभवतीत्यर्थः। विद्युतामिवेति। भगवद्गण्डेषु व्रजसुन्दरीकुण्डलसम्बन्धे
श्यामगौरप्रभामेलनाद्गण्डेषु विद्युच्छविरिव शोभा भवतीति भावः। गण्डलोलैरित्यस्य
विवरणे। सर्वा कान्तिस्तत्रैवेति। गण्डेषु सम्बन्धं प्राप्य कुण्डलानां सौन्दर्यगर्वो
गच्छति। अत एव गण्डं प्राप्य कुण्डलानां लोलत्वं भवति। युक्तं चैतत्। यो यस्माद्गुण-
न्यूनः स तस्याग्रे लोलतामापद्यत इति। गण्डे हि केवलो रस इति। सर्वस्नेहवद्भोग्य-
तात्सर्वसाधारण इत्यर्थः। न तत्र शृङ्गाररसवत्येकभोग्यताधरवत्। अत एव बाल्यभाव-
वतीभिरपि गण्डचुम्बनं क्रियते, अतः साधारणत्वम्। तत्र गण्डे स्थित्वा कुण्डलैरधरे
पेयो रसः प्रकाश्यत इत्याहुः पेयो रस इत्यारभ्य अभिव्यक्त्यर्थमित्यन्तेन। रसेन
सर्वावयवस्थेनेत्यादि। रसेन आनन्देनेत्यर्थः। एतासां देहस्य सच्चिदानन्दात्मकत्वात्
सर्वदेहे आनन्दोस्ति स आनन्दः एकत्रागतस्तदा तदितरत्र कार्श्यं भवति। तदा पूर्वं
स्थौल्यानुसारेण कृता ग्रन्थिः पश्चात् शिथिला भवतीति भावः। उपभोक्तृत्य इति।
उपभोक्तृत्वं पुंधर्मः, स च रसाधिक्यादेतास्वागतः, अत उपभोगे श्रमो भवतीति युक्तम्।
एतच्च कृष्णवध्व इति मूलस्यस्य पदस्यार्थ उक्तः। उत्पन्नस्य नादस्यामृतमयत्वा-
येति। एतदर्थष्टिप्पण्यां स्फुटः।

१०–३०–१० काचित्समितित्यत्र। मोक्षदानार्थमिति। अयमर्थः। 'यत्र
हि द्वैतमिव भवति तदितर इतरं पश्यति, यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये-
त्तत्केन कं विजानीया'दितिश्रुतेर्मोक्षे ब्रह्ममात्रैकस्फूर्तिस्तथा स्वमात्रविषयकासक्ति-
सम्पादनेन केवलं शृङ्गाररसात्मककृष्णाद्वैतस्फूर्तिर्व्रजसुन्दरीणां यथा भवेत्तथोपायो भग-
वन्श्चिकीर्षितः। स च तादृशनादो भवति। नादेन हि परमाह्लादोत्पत्त्या तदितर-
विस्मृतिर्लोके प्रसिद्धा। एवं सति शृङ्गाररसात्मककृष्णाद्वैतस्फूर्तिर्मोक्षपदवाच्या। ततश्च
मोक्षदानार्थमित्यस्य शृङ्गाररसात्मककृष्णाद्वैतस्फूर्त्यर्थमित्यर्थो भवति। उपनिषदि
स्वनादं पूरितवानिति। व्रजसीमन्तिनीकृतनादोत्रोपनिषत्पदवाच्यः। स्वामिनीनादस्य

लक्ष्मीत्युक्तम् । ततश्च तां प्रति मूलचर्वितं मूलस्य स्नेहरूपगण्डस्य चर्वितं पुनः पुनर्धारणं प्रादात् । यथा तया स्वगण्डं स्थापयित्वा स्नेहः प्रदर्शितः, तथा भगवतापि स्वगण्डं स्थापयित्वा तद्विषयकस्वस्नेहः प्रदर्शित इति सिद्धम् । युक्तं चैतत् । चर्विततांम्बूलदानं परमप्रेम्णैव भवतीति । अनेन 'ये यथा मां प्रपद्यन्त' इति भगवत्प्रतिज्ञापि सिद्धेति ज्ञेयम् । ताम्बूलशब्दे तामितिद्वितीयान्तं कृत्वा मूलशब्दस्य व्याख्या कृता । तत्र यद्यपि बूल इति बकारोस्ति, न तु मकारः, तथाप्यार्षे एतावानाग्रहो न रक्षणीय इति बकारस्थाने मकारकथनेप्यदोषः । किञ्च, ताम्बूलपदे वापदान्तस्येति परसवर्णेन मकारोप्यस्तीति मूलपदोक्तिरप्यविरुद्धा । वस्तुतस्तु नैरुक्तीयं व्युत्पत्तिरिति वर्णसाम्येन शब्दार्थौ वक्तव्य इति नात्यन्तं साधुत्वासाधुत्वविचारः । 'अप्यक्षरवर्णसाम्येन निर्ब्रूयान्न संस्कारमाद्रियेते'त्यनुशासनात् । लक्ष्मीवन्तं प्रति पुनः पुनरावर्तत इति ज्ञानताम्बूलयोस्तुल्यतेति । लक्ष्मीवन्तं भगवन्तं प्रति गोपिकागण्डं पुनः पुनरावर्तते, स्नेहेन सा गोपिका पुनः पुनर्भगवद्गण्डे गण्डं धारयति, यथा ज्ञानोपदेष्टुः सकाशाज्ज्ञानं प्राप्य यादृशं बुध्यते, तादृशं ज्ञानं पुनरुपदेष्टुरग्रे निवेद्यते, संशयशमनाय पुनः पुनरावृत्तिः क्रियते, एवं पुनः पुनर्लक्ष्मीवन्तं भगवन्तं प्रति गण्डधारणं क्रियत इति ज्ञानताम्बूलयोस्तुल्यतेत्यर्थः । यथा ज्ञानवतः सकाशादुपदेशद्वारा ज्ञानं गृह्यते, तथा लक्ष्मीवतः पुरुषोत्तमाद्भगवतः सकाशाद्गण्डस्थापनेन चर्विततांम्बूलं गृहीत्वा ज्ञानं गृह्यते, भगवान्मय्यत्यन्तमनुरक्त इति रसिकशिरोमणिरिति च । एवमस्यां ज्ञानं निरूपितम् ।

१०–३०–१४ नृत्यती गायती काचिदित्यस्याभासे । वैराग्यात्मकक्रियारूपमच्छिद्रमिति । एतस्यार्थष्टिप्पण्यां स्फुटः । नृत्यती गायतीत्यस्य विवृतौ । शाब्दं ज्ञानं तदर्थानुष्ठानं च तस्याः वर्तत इति । इहैकस्या एव गानं नृत्यं चोच्यते, तथा च गायतीत्युक्त्या शाब्दं ज्ञानं तस्या वर्णितम् । यादृशं गीयमाने प्रबन्धे नृत्यस्वरूपमुक्तं तादृशं जानातीति। अतो ज्ञात्वा गायतीत्युक्तम्। यादृशं स्वगीयमानप्रबन्धे नृत्यस्वरूपं वर्णितम्, तादृशमेव नृत्यं करोतीति नृत्यतीत्यनेनोक्तम् । तदेतदाहुः तदर्थानुष्ठानं चेत्यादिना । तदर्थस्य गीयमानप्रबन्धार्थभूतस्य नृत्यस्यानुष्ठानं करणमित्यर्थः । क्रियाशक्तेरक्षयत्वेत्यादि । नृत्यरूपक्रियाशक्तेरक्षयत्वसूचनायाच्युतपदमित्यर्थः । अग्रे सम्बन्धस्यापीति । सम्बन्धस्य मुख्यरमणस्य करिष्यमाणतया तत्र न्यूनतादिदोषपरिहारायाच्युतपदमित्यर्थः ।

१०–३०–१५ गोप्यो लब्ध्वाच्युतमित्यस्य विवरणे । कण्ठे क्रियायाः स्थापितत्वादिति । 'गृहीतकण्ठ्यस्तद्दोर्भ्यां' इति वाक्यात्कण्ठे भगवत्क्रिया स्थापिता ।

अतः कर्मेन्द्रियरूपवाग्व्यापारो गानं सम्पन्नम्, कण्ठाधीनत्वाद्गानस्य । क्रियायाः स्थापितत्वाद्विजह्रिरे इतिवाक्यसिद्धा विहाररूपा क्रिया च सम्पन्नेत्यर्थः ।

१०–३०–१६ कर्णोत्पललालकेत्यस्य विवरणे । रासार्थमेवैतदपीति । उभयोर्नृत्यं रासार्थमित्यर्थः । रसानां समूहो रास इति व्युत्पत्त्या रससमूहोत्पादनार्थं प्रतियुवतिभेदेन प्रकटीभूत इति भावः । अतो भगवता सममिति । समशब्दोऽस्मिन् पक्षे तुल्यपर्यायः । तथा च भगवता समं भगवता तुल्यं ननृतुरित्यर्थः ।

१०–३०–१९ कृष्णविक्रीडितमित्यस्य विवृतौ । लौकिकोपि चन्द्रो दृष्टवान् सोमात्मकत्वाद्देहस्येति । शशाङ्कपदेन लौकिकश्चन्द्र एवायातीति तेन चन्द्रेण दर्शनं कृतमित्यर्थः । ननु रासक्रीडायां समागतानां रमणीनां दर्शने सोमस्य दोष उत्पद्यते, तत्कथं दृष्टवानित्याशङ्क्य दोषाभावे कारणमाहुः सोमात्मकत्वाद्देहस्येति । 'अग्निषोमात्मकं जगदि'ति श्रुतिसम्मतत्वाद्देहस्य सोमात्मकत्वेन स्वाभिन्नत्वात्तद्दर्शनं न दोषजनकमित्यर्थः । ननु व्रजसुन्दरीणां देहस्यालौकिकत्वात्कथं सोमात्मकत्वमित्याशङ्क्य समादधते साधारण्यश्च स्त्रिय इति । चकारोऽपिशब्दार्थः । गोपिकाभ्यो भिन्नाः साधारण्योपि स्त्रियः रासे समागता इत्यर्थः । इह भगवदेकभोग्याः कृष्णवध्वो व्रजरमण्य एव रासे समागताः रासक्रीडारूपपूर्णफलसिद्ध्यर्थम् । रासदर्शनार्थं तु बह्वयोऽङ्गनाः साधारण्योपि समागताः । अतएव ब्रह्मवैवर्ते रासक्रीडायां बह्वीनां गोपिकेतरवधूटीनां समागमनं निरूपितमतः साधारणीनां गोपवधूनां दर्शनं चन्द्रस्य न दोषावहम् । तासां देहस्य लौकिकत्वेन सोमात्मकत्वात् । निसर्गोत्सुखमितिपक्ष इति । 'सिषेवात्मन्यवरुद्धसौरत' इति वक्ष्यमाणवाक्योक्तपक्षे त्वलौकिक्येव रीतिः, न तु लोकानुसारिणी । निसर्गात्सुखमिति लोकानुसारिणि पक्षे चन्द्रस्य भगवद्धेतोरूपत्वाच्चन्द्रस्य भगवति प्रवेशे निसर्गपक्षे उपपत्तिरुक्तेत्यर्थः ।

१०–३०–२२ गोप्यः स्फुरत्पुरटकुण्डलेत्यस्य विवृतौ । उज्ज्वला गण्डश्रीः पीता वेति । व्रजसीमन्तिनीषु काश्चित्ताडिङ्कौर्यस्तासां गण्डश्रीः उज्ज्वला । काश्चिच्चम्पककोरकवत्पीतास्तासां गण्डश्रीः पीतेत्यर्थः । उज्ज्वला नीला चेतरे इति । कुण्डलश्रीरुज्ज्वला कुन्तलश्रीर्नीलेत्यर्थः । मूलभूत गुणकार्यमिति । सर्वस्य कार्यमात्रस्य मूलभूता मुख्यकारणभूता ये भगवद्गुणा भगवच्चातुर्यादयस्तेषां कार्यभूतमित्यर्थः । इदं कान्तित्रयं भगवता स्वचातुर्येणैव निर्मितम्, नत्वस्यान्यः कोपि कर्तेतिभावः ।

१०–३०–२३ ताभिर्युत इत्यस्य विवृतौ । भगवतापि ब्रह्ममर्यादा आत्मारामत्वरूपेति । ब्रह्ममर्यादा अविकृतत्वरूपमर्यादेत्यर्थः । शृङ्गाररसात्मकानेकविकाराणां भगवत्याविर्भावाद्ब्रह्ममर्यादा निवृत्ता तिरोहितेत्यर्थः । आत्मारामत्वरूपेति । यावद्रसेत्यन्तपुष्टत्वं न जातं, तावद्भगवता व्रजवामलोचनाः स्वाभिन्नत्वेनैव ज्ञाताः, ताभिः

क्रीडा च कृतेति आत्मारामत्वमेव स्थितम् । यदा पुनरत्यन्तपोषः शृङ्गाररसस्याभूत्, तदा ज्ञानांशस्य तिरोभावात्केवलानन्दांशस्यैवाविर्भावादात्मत्वस्फूर्तिरपि व्रजसुन्दरीषु नाभूत्किन्तु नायिकाभावस्फूर्तिरेवेत्यात्मारामत्वमर्यादापि निवृत्ता तिरोहितेत्यर्थः। देशकालमर्यादा चेति । देशशब्देन स्वामिनीनामवयवाः । रसशास्त्रे सर्वत्र तत्र तत्र स्पर्शादयो वर्णिताः, तन्मर्यादा निवर्तिता, यथेच्छं स्पर्शादिविधानात् । अस्मिन् प्रहरे एवं इयं नायिका तोषणीयेति कालमर्यादापि दूरीकृता । यथेच्छं क्रीडायाः कृतत्वादित्यर्थः । ननु देवैः कथं न निषिध्यत इति । एतदाशङ्क्य सर्वे देवा अभिनन्दनमेव कुर्वन्तीति समाहितम् । एतदाशङ्कासमाधानयोरर्थष्टिप्पण्यां स्फुटः । युवत्य इत्यविचारे इति । 'सोम्भस्यलं युवतिभि'रित्यनेन युवत्य उक्तास्तत्तात्पर्यमुक्तम् । यतो युवत्यः अतः शृङ्गारकौतुकाविष्टा अविचारेण परितः सेचनं कुर्वन्तीति भावः । यथा मदच्युद्विरद इत्यस्य तात्पर्योक्तौ । ततः अविचारेण रमणमितीति । एतस्यार्थष्टिप्पण्यां स्फुटः।

१०-३०-२६ एवं शशाङ्कांशुविराजिता निशा इत्यस्य विवृतौ । यो मोक्षपर्यवसायी स कामो भगवन्तं प्रापयिष्यत्येवेति । इह मोक्षपदेन नित्यलीलाप्रवेश उच्यते । तृतीयाध्याये सूत्रभाष्ये नित्यलीलाप्रवेशरूपा पुष्टिमार्गीयाणां मुक्तिरिति बहुशो व्यवस्थापितत्वात् ।

१०-३०-२८ परदाराभिमर्शनमित्यस्याभासे । ये पञ्चपदार्था उक्ता इति । 'संस्थापनाय धर्मस्य प्रशमायेतरस्य चे'त्यस्य चेत्यत्र अधर्मस्थापनार्थमधर्मप्रशमनार्थं भगवदवतारमुक्त्वा 'प्रतीपमाचर'दित्यनेन धर्मो नष्टः अधर्मः स्थापित इति द्वयमुक्तम् । 'वक्ता कर्ताभिरक्षिते'त्युक्त्वा प्रतीपमाचरदित्यनेन अधर्मः कृतः उक्तः रक्षितश्चेति त्रयमुक्तम् । एवं पञ्च पदार्थाः निरूपिताः ।

१०-३०-२९ आप्तकामो यदुपतिरित्यस्य विवरणे । तथा गोपिकानामपीति । गोपिकानामपि मर्यादैव हितकारिणीति पूर्वेणैवान्वयः । ननु किं कर्तव्यं गोपिकानां भक्तत्वात्तासां मनोरथपूर्तिरावश्यकीति तथा करणमित्याशङ्क्याहुः अन्तर्यामिणः न किञ्चिदसाध्यमिति । अन्तर्यामित्वादन्यथैव गोपीः प्रेरयित्वा मनोरथान्तरमेव कुतो नोत्पादितवानिति भावः ।

१०-३०-३२ तेषां स्वच्छन्दचरितमित्यस्य विवरणे । तत्रैश्वर्यज्ञानवैराग्यैर्यत्करोति तत्स्वच्छन्दचरितमित्युच्यत इति । 'कुशलाचरितेनैषा'मित्यग्रिमश्लोके निरहंकारिणामित्युक्त्या ज्ञानं वैराग्यं चोक्तम् । 'किमुताखिलसत्त्वाना'मिति श्लोके ईशितुरित्युक्त्या ऐश्वर्यं निरूपितम् । तथा चैश्वर्यज्ञानवैराग्यवतां न किञ्चिद्बाधकमतो भगवता यदैश्वर्यज्ञानवैराग्यैः क्रियमाणं स्वच्छन्दचरितं बुद्धिमानन्यो नाचरेदितिभावः।

१०-३०-३५ यत्पादपङ्कजेत्यस्य विवरणे । नहि सर्वेषामेव जीवानां

समानकर्मणा समानं फलमुपलभ्यते इति। निषिद्धं कर्म कृत्वा यदि प्रायश्चित्तं कुर्यात् तस्य नानिष्टं भवति । यदि ज्ञानी योगी वा निषिद्धं कर्म कुर्याद्भगवद्भक्तो वा कुर्यात्तस्य निषिद्धेनापि कर्मणानिष्टं न भवत्यतः समानकर्मणा समानं फलं नास्तीति यदुक्तम्, तद्युक्तमेव । अन्यथेति । यदि साधारणजनानामिव प्रायश्चित्तं कुर्वतामपि ज्ञानियोगिभगवद्भक्तानामनिष्टं फलं स्यात्तदा प्रायश्चित्तशास्त्रस्य 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'त्यादिशास्त्रस्य 'योगेनैव दहेदंहः' इति शास्त्रस्य 'नाम्नोस्ति यावती शक्तिः पापनिर्दहने मम, तावत्कर्तुं न शक्नोति पातकं पातकी जन' इत्यादिशास्त्रस्य वैफल्यं स्यादिति भावः । तस्येच्छयात्तवपुष इत्यत्र । आत्तानि प्रकटीकृतानीत्यभिप्रायः सुबोधिन्या इति टिप्पण्यामुक्तम् । यो हि तावद्रूप इत्यारभ्य भवेदित्यन्तम् । येन रूपेण कर्म कृतवान् तद्रूपस्य कर्मणश्चाच्छादनं तिरोधानमेव, नतूत्पत्तिनाशौ, एवं सर्वेषां भगवत्कर्मणां नित्यत्वादुचितानुचितकर्मणोः सर्वदा विराजमानत्वात्केन कर्मणा बन्धो भवेत् । मोचककर्मणामपि विद्यमानत्वात । मोचककर्मव्यधिकरणमेव बन्धकं कर्म प्राणिनं बध्नाति । मोचककर्मसमानाधिकरणेन बन्धककर्मणा न बन्धो भवत्यतो न भगवति बन्धसम्भावनेतिभावः । तदेतदाहुः यो हि तावद्रूप इत्यारभ्य आच्छादयतीत्यन्तेन । आच्छादयति तिरोभावयतीत्यर्थः । तिरोभावेन कर्मणां सर्वेषां नित्यत्वं सूचितम् । तेन सर्वेषां बन्धकमोचककर्मणां सर्वदा विद्यमानत्वाच्च भगवतो बन्धो न वा मोक्ष इति भावः । कर्म हि प्रतिनियतमिति । प्रतिजीवं कर्म व्यवस्थितम् । ब्राह्मणेनेदं कर्म अस्मिन् समये कर्तव्यम् । यथा वसन्ते ब्राह्मणोऽग्नीनादधीत, राजन्येनेदं अस्मिन् काले कर्तव्यमस्मिन्काले अनेनाधिकारिणा इदं न कर्तव्यमित्यादिप्रकारेण कर्म नियतं व्यवस्थितमित्यर्थः । तत्र यदि भिन्नो भिन्नो जीवः स्यादिति । यदि ब्राह्मणक्षत्रियादिप्रकारेण जीवो भिन्नो भिन्नो भवेत्तदा तस्य तस्य जीवस्य तेन तेन कर्मणा बन्धो भवेत् । इह तु रूपबहुत्वेपि जीवाभावात्तस्य तस्य रूपस्यैवात्मत्वाद्ब्राह्मणक्षत्रियादिभावाभावाद्भगवतो न किञ्चित्कर्म विहितम् , न वा निषिद्धमिति न बन्ध इति भावः ।

१०-३०-३६ योऽन्तश्चरतीत्यत्र । जीवो वेति । पूर्वस्मिन्पक्षे अपरितोषात्जीवो वेत्युक्तम् । अतोऽयमेव पक्ष उत्तमः । अतो भगवतो गोपीजीवरूपत्वाद्गोपीदेहो भगवद्देह एवेति न कश्चिद्दोष इत्यर्थः । अतएव पूर्वमुक्तम् 'नहि स्वस्पर्शः स्वस्य क्वापि निषिद्ध' इति । अनुग्रहाय भक्तानामित्यत्र । तत्तद्धर्मप्रवेशव्यतिरेकेणेति । एतस्यार्थ टिप्पण्यां स्फुटः ।

१०-३०-३८ नासूयन्खल्वित्यस्य विवृतौ । प्रथमप्रवृत्तिं ज्ञात्वेत्यादि । 'न न्यवर्तन्त मोहिता' इति वाक्यान्निषेधेपि भगवन्निकटे तासां प्रवृत्तिं ज्ञात्वापि नासूयन् । तत्र हेतुमाहुः भगवन्मायामोहिता नासूयन्निति । अग्रे तु स्वपार्श्वस्थानित्यादि । भगवन्निकटगमनादारभ्य पुनः स्वगृहागमनपर्यन्तं तु स्वपार्श्वस्थाभिमानादसूयासम्भावनैव नास्तीति हार्दम् । बुद्धिरेव तेषां भ्रमादित्यादि । भ्रमान्मायामोहजन्याद्या बुद्धिरेता

अस्मन्निकट एव वर्तन्ते, भगवन्निकटे सर्वथा न गता' इत्याकारिका, सा तु तेषां गोपानां सम्बन्धिनी । शिष्टं सर्वं देहेन्द्रियप्राणान्तःकरणजीवात्मगेहादिकं भगवत एव भगवदीयमेवेत्यर्थः । गोपीनां सर्वं भगवदीयमेवेति तन्मध्ये भर्तृत्वेन प्रसिद्धानां गोपानामपि निवेदितत्वादेतेषां भगवति दोषस्फूर्तिरेव महान् दोषः, स च 'मन्यमानाः स्वपार्श्वस्था' नित्यनेन दोषारोपाभावोक्तेर्गतः । अतः सर्वदोषपरिहार इत्यर्थः । अनेन तास्वपीति । गोपानां निर्दोषत्वे निर्दुष्टसङ्गादेतासामपि दोषो निवारित इत्यर्थः । अन्यथा तत्संसर्गजदोषस्य तास्वपि संक्रमः स्यात् ।

१०–३०–३९ ब्रह्मरात्र उपावृत्त इत्यस्य विवृतौ । मोक्षाधिकारिण्यो भविष्यन्तीति । मोक्षपदार्थष्टिप्पण्यां विवृतः ।

१०–३०–४० विक्रीडितमित्यस्य विवृतौ । किन्तु यः कथन शृणुयात् वर्णयेद् वा, स उक्तं फलं प्राप्नोतीत्यर्थः । भगवतो माहात्म्यश्रवणादेवमपि मोचयतीतीति । एवमपि श्रवणमात्रेण वर्णनमात्रेणापि गुणान्तरराहित्येपि भगवान् मोचयतीत्यर्थः । शीघ्रमेव च बाधकत्वेति । इह 'हृद्रोगमाश्वपहिनोती'ति वाक्ये आशु हृद्रोगमित्याशुशब्दस्य पूर्वेण हृद्रोगपदेनान्वयं कृत्वा व्याख्यातं शीघ्रमेव च बाधकत्वेति । तमाश्वेव दूरीकरोतीति । हृद्रोगमाश्वपहिनोतीति वाक्ये आश्वपहिनोतीत्याशुपदस्य परेणापहिनोतीति पदेनान्वयं कृत्वा व्याख्यातम् । एवमाशुपदस्य देहलीदीपन्यायेनोभयत्रान्वयः कृत इति बोद्धव्यम् ।

शृङ्गाररस्थायिभावत्वाद्बालकृष्णस्वरूपवान् ।
स एव रसतां प्राप्तो गोवर्धनधरः प्रभुः ॥ १ ॥

इतिश्रीमद्गोवर्धनधरश्रीवल्लभाचार्यवरश्रीविट्ठलेश्वरचरणानुचरसेवकेन दीक्षितलालूभट्टेन कृता दशमस्कन्धत्रिंशाध्यायसुबोधिनीयोजना सम्पूर्णा ।

१०–३१–१ श्रीगिरिधारी करोतु कुशलानि । एकत्रिंशाध्यायार्थोक्तौ । प्रमाणानन्दसिद्धये इति । प्रमाणस्य वेदरूपस्य बलदेवस्य सम्बन्धी य आनन्दस्तस्य सिद्धये इदं रमणं प्रभुश्चक्र इत्यन्वयः । युक्तं चैतत् । प्रमाणप्रधानतया पुरुषोत्तमं भजन्तीभ्यः श्रुतिरूपाभ्यो गोपिकाभ्यः प्रमाणरूपबलदेवसहितपुरुषोत्तमरमणानन्दानुभव एव दातव्य इति तथैव बलदेवसहितो भगवान् रेमे इत्यर्थः । बलभद्रेण सहितो वेदरूपेणेति । 'शब्दब्रह्म परं ब्रह्म ममोभे शाश्वती तनू' इति वाक्यात् वेदरूपताक्षरब्रह्मरूपता च ज्ञातव्या । 'जगद्गुरुं सात्वतशास्त्रविग्रह'मितिवाक्येऽपि वेदरूपताया उक्तत्वात् । सात्वतशास्त्रस्य वेदादेर्विग्रहत्वेन कथनात् ।

१०–३१–२ गाय इत्यत्र । सोपि रुद्र इति । अग्निरपि रुद्र एवेत्यर्थः । 'यदरोदीत्तद्रुद्रस्य रुद्रत्व'मिति तैत्तिरीयाणां प्रथमाष्टके रोदनाद्धेतोरग्ने रुद्रत्वकथनात् ।

१०-३१-१६ प्रपन्नोस्मीत्यस्य विवृतौ। तत्र नैते पित्रादय इत्यस्य तात्पर्यं टिप्पण्यां स्फुटम्।

१०-३१-२० कदाचिदथ गोविन्द इत्यत्र। इयं हि लीलेत्यादि। इह हि परोक्षवादेन शास्त्रार्थः शिक्ष्यते। अध्यात्मरीत्येति बोध्यम्। वेदात्मकबलदेवसाहित्येन कृताया लीलायाः कालप्रधानत्वम्, 'उदिते जुहोती'त्यादिविधीनां कालाधीनत्वात्। अतोत्रेत्यादि। यतो वेदलीला कालाधीना, अतः कालोपासकानां दैत्यानां तत्रागमनम्, अतः शंखचूडस्यागमनम्। अतएव दैत्यावेशसम्भावनया कर्मणि रक्षोघ्नादिमन्त्राणामुपयोगः। भगवत्सामर्थ्येनेत्यादि। वेदोक्तमन्त्रादिपठनेन स्वाज्ञारूपवेदसत्यत्वबोधनाय भगवान्दैत्यान् निवार्य वेदोक्तानि कर्माणि निर्विघ्नानि करोति, तद्दैत्यनिवारणाय प्रकटीकृतं यत्सामर्थ्यं तेन दैत्यनिवारणे कृते शब्दस्य वेदोक्तमन्त्रस्यैव माहात्म्यं लोके प्रकटीभवति। तथा च स्वसामर्थ्येन सर्वं कृत्वापि यशो वेदायैव ददातीत्यर्थः। प्रकृतेपि शंखचूडं निहत्य मणिर्बलदेवे स्थापित इति मणिं दृष्ट्वा लोका बलदेवमाहात्म्यमेव गायन्तीति वेदरूपाय बलदेवाय यशो दत्तमिति हार्दम्। लौकिकालौकिकमाहात्म्ये ज्ञात इत्यादि। वेदोक्तकर्मणा लौकिके पुत्रादिरूपे फले प्राप्ते लौकिकं माहात्म्यं वेदस्य ज्ञातं भवति। 'वेदैश्च सर्वैरहमेव वेद्य' इत्यादिवाक्यै'र्वन्दिनस्तत्पराक्रमै'रित्यादिवाक्यैश्च भगवद्गुणगानपरतां वेदस्यावगत्य परमार्थप्रापका वेदा इत्यलौकिकं माहात्म्यं ज्ञातं भवति। एवमुभयविधे माहात्म्ये ज्ञाते वेदानां स्वतःप्रामाण्यं सिध्यति। प्रामाण्यं ज्ञानविषयो भवतीत्यर्थः। अन्यथेत्यादि। आधुनिका मीमांसका वेदोक्ते प्रमेये युक्तिविरोधं यत्र पश्यन्ति, तत्रोत्प्रेक्षामात्रं मन्यमाना वेदार्थमन्यथा ब्रुवन्ति। ये तु वेदमहिमानमवगच्छन्ति, ते तु विलक्षणसामर्थ्यं स्वीकृत्य युक्त्यगोचरतां मन्यमाना यथाश्रुतं लापयन्ति। तथा यदि महिमज्ञानं न स्यात्तदा स्वतःप्रामाण्यज्ञानाभावादुत्प्रेक्षादिदोषसम्बन्धं स्वीकुर्युरित्यर्थः। अतो वेदमहिमावश्य बोधनीयः। प्रकृतेपि अग्रजाय मणिदानेन श्रीबलदेवस्य ज्येष्ठभ्रातृत्वहेतुकपूज्यत्वरूपो लौकिको महिमा दर्शितः। श्रीबलदेवेन दैत्यं हत्वा मणिरानीत इत्ययं देवेभ्योप्यधिकबलवानित्यलौकिकोपि महिमा प्रदर्शित इति ज्ञेयम्।

पूर्वोक्तगोपिकाव्यतिरिक्ताभिरिति। पञ्चाध्याय्यां निरूपिताभ्यो भगवदेकभोग्यगोपिकाभ्यो व्यतिरिक्ताभिरित्यर्थः। याः पूर्वं शास्त्रपरा इत्यारभ्य बलभद्रेण सह रमणार्थमिच्छा जातेत्यन्तम्। याः शास्त्रपराः शास्त्रे स्वविवाहितेतरभजनं निषिद्धमिति ज्ञात्वा भगवतोपि भजनं न कृतवत्यः, या वा लौकिकधर्मपरा लोके पतिपुत्रादिभ्यो विवाहितेतरभजने भयं भवतीति विमृश्य भगवतोपि भजनं न कुर्वन्ति, तादृश्यः स्थितास्ता अपि एतावता समयेन भगवतोनुभावं दृष्ट्वा सर्वं भगवदधीनमिति भगवद्भजने वैदिकं लौकिकं वा भयं चेद्भविष्यति, तदा भगवान् सर्वानिष्टं दूरीकरिष्यतीति निश्चयेन भग-

वता सह बलदेवेन च सह रिंरसवो जाता इति भावः। तासामपीन्द्र इति। क्रियाशक्तिप्रधान इति। एतदर्थष्टिप्पण्यां स्फुटः। अनेनेति। वेदात्मकबलदेवसहितभगवद्रमणकथनेनेत्यर्थः। मध्यमाधिकारिणां वेदपरत्वमिति। प्रमाणपुरःसरं पुरुषोत्तमपराणां वेदपरत्वं न दोषाय, किन्तूचितमेव। तेषां तथैव निरोधसिद्धेः। केवलार्थपराणामितीति। एतदर्थष्टिप्पण्यां स्फुटः। अन्यथेति। एतदर्थष्टिप्पण्यां स्फुटः। वेदे वेत्यस्याप्यर्थः।

१०-३१-२१ विरजाम्बरावित्यत्र। शुद्धा माया चेति। एतदर्थष्टिप्पण्यां विस्तृतः। कर्मणां रात्रिरेवेत्यारभ्य सन्माननमित्यन्तम्। महारात्रे बुद्धा 'ब्रह्मणा सहाचान्तोध्वर्युः अग्ने नयेत्याग्नीध्रमभिमृशती'त्यादिवाक्यात् कर्मसु रात्रिरेव प्रधाना। किञ्च। अग्निहोत्रकरणानन्तरं सायं दोहं दोहयतीत्यमावस्यायां रात्रौ दोह इतोपि रात्रेः प्राधान्यम्। सन्ध्यायां चाग्निहोत्रम्, अतः सन्ध्याया अप्यादरणीयत्वम्। एवं रात्रे सन्ध्यायाश्च प्राधान्यं वक्तुं निशामुखपदम्। तथा च निशाया निशामुखस्य च सन्मानं फलितम्। अन्यथा सन्ध्यां मानयन्तावित्येव वदेत्।

१०-३१-२२ उदितोडुपतारकमित्यस्य विवृतौ। पर्वसूचक इति। पूर्णिमासूचक इत्यर्थः। 'निशामुखं मानयन्ता'वित्युक्त्वा चन्द्रोदयकथनान्निशामुखे चन्द्रोदयस्य पूर्णिमायामेव सत्वादित्यर्थः। प्रमाणं चन्द्र इति। फलं नक्षत्राण्यपीति। एतदर्थष्टिप्पण्यां स्फुटः। अनेनाङ्गेपि फलश्रुतिरिति। 'तादृशं कालं मानयन्तौ' इत्यनेन कर्माङ्गभूतस्य कालस्य प्रशंसाबोधनेपि या पूर्वकाण्डे फलश्रुतिः, सा युक्तैवेत्यर्थः। भगवतापि कालसन्मानस्य कृतत्वात्।

१०-३१-२३ तौ कल्पयन्तावित्यत्र। द्वयोरेकमुखतेति। द्वयोर्वेदवेदप्रतिपाद्ययोर्बलदेवश्रीकृष्णचन्द्रयोरेकमुखता युगपत् स्वरसमूहमूर्च्छनाकल्पनेत्यर्थः।

१०-३१-२५ शङ्खचूड इति ख्यात इत्यस्य विवृतौ। सर्वा एव श्रुतयं लौकिकाः कर्तव्या इति पाषण्डिनां बुद्धिरिति। यथा पाषण्डिनो भगवत्परान् वेदान् लौकिकपरत्वेन व्याकुर्वन्ति, तथायं शंखचूडोपि भगवत्पराः श्रुतिरूपाः गोपिकाः अन्यत्र नेतुं वाञ्छतीति पाषण्डी भवतीत्यर्थः। तथा च लोभक्रोधादयो दैत्या इति कृष्णोपनिषत्सु भगवद्ध्यानां लोभादिदोषरूपता वर्णितेति तेषु दोषेषु अयं पाषण्डरूपः शंखचूड इति तात्पर्यम्। विशेषपराश्चेदित्यादि। वेदवेदार्थरूपबलदेवश्रीकृष्णचन्द्रोभयपराः, अतो दैत्येन नीता गता विशेषपराः पञ्चाध्यायीस्थगोपिकावत् पुरुषोत्तमैकपराश्चेत्स्युः, तदा न गच्छेयुरित्यर्थः। मणिग्रहणेन मणिगता देवतेत्यादेरर्थष्टिप्पण्यां स्फुटः। देवताया अप्ययं भाग इति। मणिगतदेवताया बलदेवकर्तृको भोग इत्यर्थः।

इतिश्रीमद्गोवर्धनधरश्रीवल्लभाचार्यचरश्रीविट्ठलेश्वरचरणानुचरदीक्षितलाल्लुभट्टेन कृता दशमस्कन्धैकत्रिंशाध्यायसुबोधिनी समाप्ता।

## योजनायाः शोधपत्रम् ।



| अशुद्धम् | शुद्धम् | पृ. पं. | अशुद्धम् | शुद्धम् | पृ. पं. |
|---|---|---|---|---|---|
| का | हि | ३–१२ | इत्यर्थ | इत्यर्थः | २३–२३ |
| दष्टं | दृष्टं | ५–३ | अर्पितान् | ह्यर्पितान् | २४–३ |
| प्रमाणवद्धि | प्रमाणवद्धक्ति | ६–१३ | पूर्वे | पूर्वं | २४–८ |
| धर्म | धर्मः | ६–२२ | उपपाद्य | उत्पाद्य | २५–२३ |
| यदुतरत्र | तदुतरत्र | ७–१९ | चक्रे | चक्रे | २६–२ |
| त्यनेन | इत्यनेन | ११–२१ | मितिति | मितीति | २७–१ |
| साथा–तृतीयेति | cap. | ११–३० | रिरिंसा | रिरंसा | २७–२ |
| १०–२६–२९ | १०–२७-२९ | १२–९ | ज्ञेयम् | ध्येयम् | २७–१८ |
| चतुर्थ्यस्तु तमा | cap. | १३–२१ | कर्तृकं | कर्मकं | २८–७ |
| सन्यपि | सति | १४–१० | दैवानां | देवानां | २८–१८ |
| चेनि | वंति | १५–१० | भ्रूचरण | भ्रूचरण | २८–२९ |
| स्व | स्व | १५–२१ | स | स स | २९–१७ |
| स्थित्रि | स्थितिः | १८–१६ | क्रिया | क्रिया- | ३०–२१ |
| वाक्याच्च' | वाक्याच्च | २१–२० | ग्राह्यम् | ग्राह्यः | ३०–२३ |
| एतद्विपर्ययम् | एकः एतद्वि- | २३–२२ | | | |

## अस्मन्मुद्रितनामफलश्रीसुबोधिनीशोधपत्रम् ।



| अशुद्धं | शुद्धं | पृष्ठं | पङ्क्तिः |
|---|---|---|---|
| कुलवनी स्त्रीओने | हे कुलवधूओ | २८ | २८ |
| काङ्क्षिताः | काङ्क्षया | ८२ | १३ |
| भजन्त्येक | भजन्त्यन्ये | ११९ | ७ |
| भजनानुरुणावृत्त्यर्थम् | भजनानुवृत्त्यर्थम् | १२४ | १६ |
| त्यागवृत्त्यर्थम् | त्यागरूपावृत्त्यर्थम् | १२४ | १५ |
| शृङ्खल | शृङ्खला | १२५ | १३ |
| मारत. | मारस्तः | १३४ | ७ |
| अदान् | प्रादान् | १४० | ८ |
| पट्टिता | पट्टिका | १४६ | १४ |
| अत्र | आत्त | १५२ | ७ |
| यत्स्वतन्त्रोपुक्तं बुद्धिमांस्तन् । | स्वच्छन्दचरितं बुद्धिमान् । | १५८ | ३ |
| गुणगणार्णत्रम् | गुणगणार्णम् | १९९ | १९ |

श्रीकृष्णाय नमः ।

# निवेदनम् ।



श्रीमद्भागवत-दशम-पूर्वार्ध-तामस-फल-प्रकरण-श्रीसुबोधिनी-मुद्रणं त्वितः पूर्वमस्माभिः कृतमेव । तत्साधनेषु टिप्पणीप्रकाशलेखाश्चापि प्रकटिताः । तत्रावशिष्टा बागरोदीदीक्षितश्रीलालूभट्टकृता योजनाधुना प्रकाश्यते । श्रीभाणेजभट्टसुतेत्यनेन लालूभट्टा न गोस्वामिजामातरः, अपि तु तत्पुत्रा इति कल्याणशास्त्रिणः । दशमतामसफलश्रीसुबोधिनीयोजनापुस्तकं निजवाचनार्थं संपादितमतीवस्वच्छाक्षरैर्लिखितं मोहमयीस्थश्रीमद्गोस्वामिश्रीगोकुलनाथमहाराजचरणैर्दत्तम् । एतत्पुस्तकं ग्रन्थप्रणेतुर्मूलग्रन्थतो लिपीकृतम् । अस्माभिरपि 'प्रेसकॉपि'पुस्तकमेतत्पुस्तकत एव लिपीकृतम् । पण्डितवर्यबलभद्रशर्मकृपया च तदीयमूलपुस्तकेन पूर्वं मुद्रणावसरे च संवादितम् । एतन्मुद्रणव्ययोऽस्मत्सुहृद्वरेण 'वाडीलाल नगीनदास शाह बी. ए. एल् एल्. बी. वकील हाइकोर्ट' इत्यनेन दत्तः । इदं मूलपुस्तकं संवत् १८०२ श्रावणवदी नवम्यां लिखितम् । अस्यां योजनायां बहुषु स्थलेषु 'इति टिप्पण्यां स्पष्ट'मिति लिखितमिति । तत्रास्मन्मुद्रिता श्रीमती टिप्पणी द्रष्टव्या विशेषजिज्ञासुभिरिति । द्वात्रिंशाध्याययोजना तु नोपलब्धास्माभिरिति । 'प्रेसकॉपि' पुस्तकं 'द्वारकादास वल्लभदास' इत्यनेन लिखितम् । योजनापि तामसफलश्रीसुबोधिन्या अवगाहने किमपि सौकर्यं कस्यचिदपि भगवदीयस्य संपादयिष्यतीति विचारेण परमप्रेम्णा शोधितमेतत्पुस्तकं श्रीमत्प्रभुचरणकमलेषु समर्पयाम इति ।

श्रीरामजयन्ती १९८१.<br>मुम्बई.

मूलचन्द्र तेलीवाला ।